


## सूर्यवंश.

३. हा ब्रह्मदेवाचा मानसिक पुत्र.

६. याची कन्या इला तिचाच विष्णुकृपेनें सुद्युम्न पुत्र झाला. त्याला पुढें पुन्हा स्त्रीत्व प्राप्त झालें तेव्हां तिचेठिकाणीं बुधापासून पुरूरवा (सोमवंशप्रवर्तक) पुत्र झाला. (याची कथा नवमस्कंधांत आहे)

+ (तिची कथा नवमस्कंधांत आहे)

✠ निमि हा विदेही असून पुढें याच्या वंशांत जनक वगैरे जे राजे झाले ते सर्व विदेही व याज्ञवल्क्याच्या कृपेनें तत्त्वज्ञानी झाले.

९. याचीं नांवें 'इंद्रवाह' व 'ककुत्स्थ' अशीं आहेत. इंद्र त्याचें वाहन बैल झाला होता तेव्हां त्याच्या कोळ्यावर बसून त्यानें इंद्राच्या शत्रूंस जिंकिलें म्हणून त्याचीं तीं नांवें पडलीं.

३१. याला विश्वामित्रानें शरीरासह स्वर्गावर पाठविला असतां देवांनीं याला खालीं लोटून दिलें, तेव्हां विश्वामित्रानें याचें स्तंभन केलें, तो त्रिशंकु अजून नक्षत्ररूपानें आकाशांत दिसतो.

५४. याच्या आई (मदयंती) नें दगडानें आपलें पोट ठेंचलें होतें.

५५. परशुरामानें निक्षत्रिय पृथ्वी केली तेव्हां याला स्त्रियांनीं स्त्रीचा वेष देऊन रक्षण केलें होतें म्हणून (नारीकवच) व पुढें क्षत्रियवंशास हा मूळ झाला म्हणून (मूलक) अशीं याचीं नांवें पडलीं.

८५. तो योगसाधनानें मृत्यूला जिंकून कलाप यामामध्यें राहिला आहे. तो कली-च्या शेवटीं नष्ट झालेल्या सूर्यवंशाला पुन्हा प्रवृत्त करील.

१२३ सुमित्र राजापुढें हा सूर्यवंश कलियुगांत संपेल.

॥ श्रीगणेशाय नमः ॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितम् । श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत ॥ १ ॥ कृता नवतिरध्याया दशमे कृष्णकीतये ॥ तत्र तु प्रथमे कंसः स्वमृत्युं देवकीसुतात् । श्रुत्वा भीतोऽवधीत्तस्याः षड्गर्भानिति वर्ण्यते ॥२॥ राजोवाच ॥ हे शुकाचार्य, भवता सोमसूर्ययोर्वंशविस्तारः कथितः । उभयवंशोद्भूतानां राज्ञां परमाद्भुतं चरित्रं च कथितम् ॥१॥ अधुना धर्मशीलस्य यदोर्वंशेऽवतीर्णस्य विष्णोश्चरित्राणि नः कथय ॥२॥ यदुवंशेऽवतीर्य भगवान यानि कर्माणि कृतवान् तानि नो विस्तराद्वद ॥३॥ हे शुक, मुक्तैर्मुमुक्षुभिर्विषयिभिश्च सेव्यमानाद्धरिगुणानुवादात् एकमात्मघातिनं विना कः पुमान् विरक्तो भवेत् न कोऽपि ॥४॥ किंच ॥ मम पितामहाः पांडवा भीष्मादिरूपैर्जलचरैर्दुस्तरं कौरवसैन्यसमुद्रं वत्सपदमिवात्यल्पं कृत्वा कृष्णरूपनौकयाऽतरन् ॥५॥ किंच । अश्वत्थाम्नो ब्रह्मास्त्रेण दग्धं मे शरीरं, शरणं गताया मे मातुः कुक्षिं गतः सन् चक्रं

ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ कथितो वंशविस्तारो भवता सोमसूर्ययोः ॥ राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥१॥ यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ॥ तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥ २ ॥ अवतीर्य यदोर्वंशे भगवान्भूतभावनः ॥ कृतवान्यानि विश्वात्मा तानि नो वद विस्तरात् ॥ ३ ॥ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् ॥ क उत्तमश्लोकगुणानुवादात्पुमान्विरज्येत विना पशुघ्नात् ॥४॥ पितामहा मे समरेऽमरंजयैर्देवव्रताद्यातिरथैस्तिमिंगिलैः ॥ दुरत्ययं कौरवसैन्यसागरं कृत्वाऽतरन्वत्सपदं स्म यत्प्लवाः ॥५॥ द्रौण्यस्त्रविप्लुष्टमिदं मदंगं संतानबीजं कुरुपांडवानाम् ॥ जुगोप कुक्षिंगत आत्तचक्रो मातुश्च मे यः शरणं गतायाः ॥६॥ वीर्याणि तस्याखिलदेहभाजामंतर्बहिः पूरुषकालरूपैः ॥ प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन् ॥७॥ रोहिण्यास्तनयः प्रोक्तो रामः संकर्षणस्त्वया ॥ देवक्या गर्भसंबंधः कुतो देहांतरं विना ॥८॥ कस्मान्मुकुंदो भगवान्पितुर्गेहाद्व्रजं गतः ॥ क्व वासं ज्ञातिभिः सार्धं कृतवान्सात्वतां पतिः ॥९॥ व्रजे वसन्किमकरोन्मधुपुर्यां च केशवः ॥ भ्रातरं चावधीत्कंसं मातुरद्धाऽतदर्हणम् ॥१०॥ देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः ॥ यदुपुर्यां सहावात्सीत्पत्न्यः कत्यभवन्प्रभोः ॥११॥ एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् ॥ वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥१२॥

गृहीत्वा यो ररक्ष ॥६॥ सर्वप्राणिनामंतः पुरुषरूपेण बहिश्च कालरूपेण मुक्तिं संसारं च ददतस्तस्य हरेश्चरित्राणि वद ॥७॥ किंच । त्वया नवमस्कंधे रामो रोहिणीपुत्रः प्रोक्तः । तस्यैव च पुनर्देवक्या गर्भसंबंधः प्रोक्तः । स देहांतरं विना कुतो घटते ॥८॥ मुकुंदः पितुर्गृहं त्यक्त्वा गोकुलं कुतो गतः । तथा नंदादिगोपैः सह क्व वासं कृतवान् ॥९॥ गोकुले मथुरायां च वसन् किमकरोत् । मातुर्भ्रातरं कंसं साक्षात्कथं जघान ॥१०॥ हरिर्मनुष्यदेहमाश्रित्य कति वर्षाणि द्वारकायामवात्सीत् । तस्य कति पत्न्यो बभूवुः ॥११॥ अन्यच्च सर्वं कृष्णचरितं त्वं श्रद्धापूर्वकं श्रवणेच्छोर्मे वक्तुमर्हसि ॥१२॥ ॥ ॥ ॥ ॥ ॥

१ बलं गदं सारणं चेत्यत्र । २ सकर्षण महीश्वरमित्यत्र ।

हे शुक, एषा क्षुधा उदकमपि त्यक्तवंतं मां न बाधते । यतस्त्वत्तो हरिकथामृतं पिबामि ॥१३॥ सूत उवाच ॥ हे शौनक, एवं प्रश्नं श्रुत्वा शुको राज्ञः संमानं कृत्वा श्रीकृष्णचरित्रं वक्तुं प्रारंभं कृतवान् ॥१४॥ श्रीशुक उवाच ॥ हे राजन्, तव बुद्धिः सम्यक् निश्चिता । यतो वासुदेवकथायां ते निष्ठायुक्ता प्रीतिर्जाता ॥१५॥ वासुदेवकथाप्रश्नो वक्तारं पृच्छकं श्रोतृंश्च पुनाति ॥१६॥ हे नृप, इयं भूमिर्गर्विष्ठानां नृपरूपदैत्यानां यानि बहूनि सैन्यानि तेषां बहुना भारेण पीडिता सती अश्रुमुखी गौर्भूत्वा ब्रह्माणं शरणं गत्वा तस्मै स्वकीयं दुःखं जगाद ॥१७॥१८॥ ब्रह्मा तच्छ्रुत्वा तया, देवैः शंकरेण च सह क्षीरसमुद्रतीरं ययौ ॥१९॥ तत्र गत्वा समाहितः सन् जगन्नाथं पुरुषं पुरुषसूक्तेन तुष्टाव ॥ २० ॥

नैषाऽतिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते ॥ पिबंतं त्वन्मुखांभोजच्युतं हरिकथामृतम् ॥१३॥ सूत उवाच ॥ एवं निशम्य भृगुनंदन साधुवादं वैयासकिः स भगवानथ विष्णुरातम् ॥ प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः ॥१४॥ श्रीशुक उवाच ॥ सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम ॥ वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥१५॥ वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि ॥ वक्तारं पृच्छकं श्रोतृंस्तत्पादसलिलं यथा ॥१६॥ भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ॥ आक्रांता भूरिभारेण ब्रह्माणं शरणं ययौ ॥१७॥ गौर्भूत्वाऽश्रुमुखी खिन्ना क्रंदंती करुणं विभोः ॥ उपस्थितांऽतिके तस्मै व्यसनं स्वमवोचत ॥१८॥ ब्रह्मा तदुपधार्याथ सह देवैस्तया सह ॥ जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥१९॥ तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ॥ पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥ २० ॥ गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह ॥ गां पौरुषीं मे श्रृणुतामराः पुनर्विधीयतामाशु तथैव मा चिरम् ॥२१॥ पुरैव पुंसाऽवधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् ॥ स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि ॥२२॥ वसुदेवगृहे साक्षाद्भगवान्पुरुषः परः ॥ जनिष्यते तत्प्रियार्थं संभवंतु सुरस्त्रियः ॥२३॥ ( ऋषयोऽपि तदादेशात् कल्पंतां पशुरूपिणः ॥ पयोदानमुखेनापि कृष्णं तर्पयितुं सुराः ॥१॥) वासुदेवकलानंतः सहस्रवदनः स्वराट् ॥ अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ २४ ॥ विष्णोर्माया भगवती यया संमोहितं जगत् ॥ आदिष्टा प्रभुणांऽशेन कार्यार्थे संभविष्यति ॥२५॥ ॥ ॥ ॥ ॥ ॥

ततो ब्रह्मा समाधावाकाशवाणीं श्रुत्वा समाधिं विसर्ज्य देवानुवाच । हे देवाः, यूयं मया समाधौ श्रुतामीश्वरस्य वाणीं श्रृणुत । तथैव शीघ्रं क्रियताम् ॥२१॥ ईश्वरेणास्मत्प्रार्थनात्पूर्वमेव भूमेर्दुःखं ज्ञातम् । भवद्भिर्यादवेषु स्वांशैरुपजन्यताम् ॥२२॥ भगवान् वसुदेवगृहे जनिष्यते । तस्य प्रियं कर्तुं युष्माकं स्त्रियोऽपि संभवंतु ॥२३॥ ( ऋषयोऽपि दुग्धदानमिषेण कृष्णं तर्पयितुं गवादिरूपिणः कल्पंताम् ॥१॥ ) किंच । सहस्रमुखः शेषो हरेः प्रियं कर्तुमादौ भविष्यति ॥२४॥ तथा विष्णोर्मायाऽपि भगवदाज्ञया कार्यार्थे यशो-

१ देवकीगर्भसंकर्षण—यशोदामोहनादिकार्यार्थे ।

दायां संभविष्यति ॥२५॥ श्रीशुक उवाच ॥ एवं ब्रह्मा देवानाज्ञाप्य पृथिवीं च समाश्वास्य सत्यलोकं जगाम ॥२६॥ हे नृप, पुरा यदुपतिः शूरसेनो मथुरायां नगर्यां वसन् माथुरान् शूरसेनांश्च देशान् पालयामास ॥२७॥ ततः सा मथुरा राजधानी बभूव । यत्र हरिर्नित्यं सांनिध्यं प्राप्नोति ॥२८॥ तस्यां कदाचित्कृतोद्वाहो वसुदेवो देवक्या भार्यया सह स्वगृहप्रवेशार्थं रथमारुरोह ॥२९॥ तदा कंसो भगिन्याः प्रियं कर्तुं हयानां रश्मीन् जग्राह ॥३०॥ तदा देवको देवक्यै प्रयाणसमये गजानां चतुःशतं ४०० अश्वानां पंचदशसहस्रं १५००० रथानामष्टादशशतं १८०० दासीनां शतद्वयं २०० च पारिबर्हं ददौ ॥३१॥३२॥ तदा वरवध्वोर्मंगलकारकाणि शंखतूर्यमृदंगादिवाद्यानि नेदुः ॥३३॥ ततो मार्गे हयर-

॥ श्रीशुक उवाच ॥ इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः ॥ आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥२६॥ शूरसेनो यदुपतिर्मथुरामावसन्पुरीम् ॥ माथुरान् शूरसेनांश्च विषयान्बुभुजे पुरा ॥२७॥ राजधानी ततः साऽभूत्सर्वयादवभूभुजाम् ॥ मथुरा भगवान्यत्र नित्यं संनिहितो हरिः ॥२८॥ तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ॥ देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥ उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ॥ रश्मीन्हयानां जग्राह रौक्मै रथशतैर्वृतः ॥३०॥ चतुःशतं पारिबर्हं गजानां हेममालिनाम् ॥ अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम् ॥३१॥ दासीनां सुकुमारीणां द्वे शते समलंकृते ॥ दुहित्रे देवकः प्रादाद्याने दुहितृवत्सलः ॥३२॥ शंखतूर्यमृदंगाश्च नेदुर्दुंदुभयः समम् ॥ प्रयाणप्रक्रमे तावद्वरवध्वोः सुमंगलम् ॥३३॥ पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक् ॥ अस्यास्त्वामष्टमो गर्भो हंता यां वहसेऽबुध ॥३४॥ इत्युक्तः स खलः पापो भोजानां कुलपांसनः ॥ भगिनीं हंतुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥३५॥ तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम् ॥ वसुदेवो महाभाग उवाच परिसांत्वयन् ॥३६॥ वसुदेव उवाच ॥ श्लाघनीयगुणः शूरैर्भवान्भोजयशस्करः ॥ स कथं भगिनीं हन्यात्स्त्रियमुद्वाहपर्वणि ॥३७॥ मृत्युर्जन्मवतां वीर देहेन सह जायते ॥ अद्य वाऽब्दशतांते वा मृत्युर्वै प्राणिनां ध्रुवः ॥३८॥ देहे पंचत्वमापन्ने देही कर्मानुगोऽवशः ॥ देहांतरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥३९॥ ॥ ॥ ॥

श्मिग्राहिणं कंसं रे रे कंसेति संबोध्याकाशवाणी जगाद । हे मूर्ख, त्वं यां भगिनीं वहसे अस्या अष्टमो गर्भस्त्वां हनिष्यति ॥३४॥ इत्युक्तः स दुष्टः खड्गं गृहीत्वा भगिनीं हंतुं केशबंधे जग्राह ॥३५॥ तदा वसुदेवः क्रूरं निर्लज्जं तं कंसं सांत्वयन् जगाद ॥३६॥ वसुदेव उवाच । हे कंस, त्वं शूरैर्वर्णनीयगुणोऽसि । अतो भवान् विवाहपर्वणि भगिनीं कथं हन्यात् ॥३७॥ मरणभयेन हन्मीति चेत्तर्हि हे वीर, देहधारिणां देहेन सह मृत्युरुत्पद्यते । सोऽद्य वा वर्षशतांते वा निश्चयेन भवति । अतस्तन्निवृत्तये पापाचरणं न योग्यम् ॥३८॥ देहे मरणोन्मुखे जाते सति जीवः कर्मवशात्प्रथमं देहांतरं प्राप्य पश्चात्पूर्वदेहं त्यजति ॥३९॥ ॥ ॥ ॥ ॥

१ स्तुत्या कृपाविषयत्वेन साममार्गेण च संबोधयन् ।

यथा तृणजलूका स्वदेहस्य पुरोभागेन तृणांतरं धृत्वा पश्चात्पूर्वं तृणं त्यजति तथा जीवोऽपि ॥४०॥ यथा मनोरथाविष्टचित्तो मनुष्यो दृष्टश्रुताभ्यां जनितसंस्कारेण मनसा, स्वप्ने जाग्रद्दृष्टश्रुतसदृशं मनुष्यादिदेहं पश्यति क्षणांतरे च तदेवाहमिति मन्यते । ततश्च जाग्रद्देहाद्गतस्मृतिर्भवति । तथा जीवो देहांतरं प्राप्य प्राक्तनशरीरे नष्टस्मृतिर्भवति ॥ ४१ ॥ कर्मणा प्रेरितं जीवस्य मनो मायया रचितेषु देवमनुष्यादिदेहेषु यं यं देहं चिंतयति तत्र तत्रासौ जीवः तमेवाहमिति मन्यमानस्तेन सह जायते ॥४२॥ हे कंस, यथा घटेषु प्रतिबिंबितं चंद्रादिज्योतिर्वायुवेगेन कंपादियुक्तं दृश्यते तथा मायारचितेषु देहेष्वसौ पुरुषः प्रेम्णा प्रविष्टः सन् तत्तदभिमानं करोति ॥४३॥ अत आत्मनः कल्याणमिच्छन् कस्यचिदपि द्रोहं नाचरेत् ॥४४॥ हे कंस, एषा तव भगिनी देवकी काष्ठमयी स्त्रीव स्वरक्षणं कर्तुमसमर्थाऽस्ति । त्वं च दीनवत्सलोऽसि । अत इमां हंतुं नार्हसि ॥४५॥ श्रीशुक उवाच ॥

व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति ॥ यथा तृणजलूकैवं देही कर्मगतिं गतः ॥ ४० ॥ स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः ॥ दृष्टश्रुताभ्यां मनसाऽनुचिंतयन्प्रपद्यते तत्किमपि ह्यपस्मृतिः ॥४१॥ यतो यतो धावति दैवचोदितं मनो विकारात्मकमाप पंचसु ॥ गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥४२॥ ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते ॥ एवं स्वमायारचितेष्वसौ पुमान्गुणेषु रागानुगतो विमुह्यति ॥४३॥ तस्मान्न कस्यचिद्द्रोहमाचरेत्स तथाविधः ॥ आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वै परतो भयम् ॥४४॥ एषा तवानुजा बाला कृपणा पुत्रिकोपमा ॥ हंतुं नार्हसि कल्याणीमिमां त्वं दीनवत्सलः ॥४५॥ श्रीशुक उवाच ॥ एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः ॥ न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ॥४६॥ निर्बंधं तस्य तं ज्ञात्वा विचिंत्यानकदुंदुभिः ॥ प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत ॥४७॥ मृत्युर्बुद्धिमतापोह्यो यावद्बुद्धिबलोदयम् ॥ यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥४८॥ प्रदाय मृत्यवे पुत्रान्मोचये कृपणामिमाम् ॥ सुता मे यदि जायेरन्मृत्युर्वा न म्रियेत चेत् ॥४९॥ विपर्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया ॥ उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥५०॥ अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति ॥ एवं हि जंतोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः ॥ ५१ ॥

एवमुपदिश्यमानोऽपि कंसः स्वयं दारुणान् राक्षसाननुसृतः सन् स्वसुर्वधान्न निवृत्तः ॥४६॥ तदा वसुदेवस्तस्याग्रहं ज्ञात्वा देवक्या मृत्युं वंचयितुमिदं निश्चितवान् ॥४७॥ यावद्बुद्धिबलोदयस्तावद्बुद्धिमता पुरुषेण मृत्युर्दूरीकर्तव्यः । यदि न निवर्तेत तर्हि देहिनोऽपराधो नास्ति ॥४८॥ अत एवं करिष्यामि । मृत्युरूपिणे कंसाय पुत्रसमर्पणं कृत्वेमां मोचये । यदि च मे सुता जायेरन् तदा यद्भावि तद्भवतु । तावत्पर्यंतं यद्ययं म्रियेत तदा न किंचिदन्याय्यम् ॥४९॥ मत्पुत्रादेवास्य मरणमिति विपर्ययो वा किं न स्यात् । दैवस्य गतिरतर्क्याऽस्ति ॥५०॥ यथाग्नेः काष्ठवियोगसंयोगयोरदृष्टतोऽन्यन्निमित्तं नास्ति । एवं जंतोर्जन्मरणयोरपि हेतुरतर्क्योऽस्ति ॥५१॥ ॥ ॥ ॥

१ अन्योन्यधर्माध्यासाद्यथा देहादिधर्माः कार्श्यादय आत्मनि प्रतीयंते एवमात्मधर्माः प्रेमास्पदत्वादयोऽपि देहादिषु प्रतीयंते । राजसूकरदेहयोर्विशेषाभावाद्यर्थो मृत्युप्रतीकारः ।

श्रीशुक उवाच ॥ वसुदेव एवं विचार्य बहुमानपुरःसरं तं सत्कृत्य ॥५२॥ तस्य विश्वासार्थं प्रसन्नमुखकमलो भूत्वा विहसन् तमिदमब्रवीत् ॥५३॥ वसुदेव उवाच । हे कंस, तवाकाशवाण्या यथोक्तं तथैव मया निश्चयः कृतोऽस्ति । अस्याः सकाशात्तु ते भयं नास्त्येव । अस्याः पुत्रेभ्यो भयमुत्थितं तानस्याः सर्वानपि पुत्रांस्तेऽहं समर्पयिष्यामि ॥५४॥ श्रीशुक उवाच ॥ ततः कंसो वसुदेववाक्यस्थां युक्तिं जानन् भगिनीवधान्निवृत्तः । वसुदेवोऽपि कंसं प्रशस्य स्वगृहं विवेश ॥५५॥ अथ प्रसूतिकाले प्राप्ते सति देवकी, प्रतिवत्सरमेकैकमित्यष्टौ पुत्रान् सुषुवे ॥५६॥ तत्र प्रथमजं कीर्तिमंतं गृहीत्वा सत्याद्भीतो वसुदेवो दुःखेन कंसाय ददौ ॥५७॥ हे नृप, सत्यप्रतिज्ञानां साधूनां दुःसहं किम् । तथा भगवानेव तत्त्वं

एवं विमृश्य तं पापं यावदात्मनिदर्शनम् ॥ पूजयामास वै शौरिर्बहुमानपुरःसरम् ॥५२॥ प्रसन्नवदनांभोजो नृशंसं निरपत्रपम् ॥ मनसा दूयमानेन विहसन्निदमब्रवीत् ॥५३॥ वसुदेव उवाच ॥ नह्यस्यास्ते भयं सौम्य यद्वि साऽऽहाशरीरवाक् ॥ पुत्रान्समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥५४॥ श्रीशुक उवाच ॥ स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् ॥ वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद्गृहम् ॥५५॥ अथ काल उपावृत्ते देवकी सर्वदेवता ॥ पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ ५६ ॥ कीर्तिमंतं प्रथमजं कंसायानकदुंदुभिः ॥ अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥५७॥ किं दुःसहं नु साधूनां विदुषां किमपेक्षितम् ॥ किमकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनाम् ॥५८॥ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् ॥ कंसस्तुष्टमना राजन्प्रहसन्निदमब्रवीत् ॥५९॥ प्रतियातु कुमारोऽयं नह्यस्मादस्ति मे भयम् ॥ अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल ॥६०॥ तथेति सुतमादाय ययावानकदुंदुभिः ॥ नाभ्यनंदत तद्वाक्यमसतोऽविजितात्मनः ॥६१॥ नंदाद्या ये व्रजे गोपा याश्चामीषां च योषितः ॥ वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ ६२ ॥ सर्वे वै देवताप्राया उभयोरपि भारत ॥ ज्ञातयो बंधुसुहृदो ये च कंसमनुव्रताः ॥६३॥ एतत्कंसाय भगवान् शशंसाभ्येत्य नारदः ॥ भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥६४॥ ऋषेर्विनिर्गमे कंसो यदून्मत्वा सुरानिति ॥ देवक्या गर्भसंभूतं विष्णुं च स्ववधं प्रति ॥६५॥ ॥ ॥ ॥

नान्यदिति जानतां ज्ञानिनां पुत्रलालनसुखादिकं किमपेक्षितम् ॥५८॥ कंसस्तदा वसुदेवस्य तत्पुत्रानयनं सुखदुःखयोः समत्वं च दृष्ट्वा तुष्टः सन्निदं जगाद ॥५९॥ हे वसुदेव, अयं ते कुमारः प्रतिगच्छतु । अस्मान्मे भयं नास्ति । युवयोरष्टमाद्गर्भान्मे मृत्युराकाशवाण्या कथितोऽस्ति ॥६०॥ तदा तथेत्युक्त्वा सुतं गृहीत्वा वसुदेवो ययौ । तथापि तद्वचः सत्यमिति न मेने ॥६१॥ तस्मिन् समये नारदः सभायामेत्य कंसमेकांते जगाद । हे कंस, गोकुले ये नंदाद्या गोपास्तथा यशोदाद्यास्तत्स्त्रियः तथा मथुरायां वसुदेवाद्या ये वृष्णयो देवक्याद्यास्तत्स्त्रियश्च ॥६२॥ ते सर्वे देवताप्रायाः संति ॥६३॥ तैर्देवैश्च भूमेर्भारायमाणानां दैत्यानां वधोद्योगः कृतोऽस्ति । एवं श्रावयित्वा नारदो ययौ ॥६४॥ ततः कंसो यदून्

१ ब्रह्मदेवद्वारा भगवत्प्रार्थनां कारयित्वेत्यर्थः ।

देवान् मत्वा तथा देवक्या गर्भसंभूतं विष्णुं स्ववधार्थं जातं मत्वा ॥६५॥ वसुदेवं देवकीं च गृहे शृंखलैर्बद्ध्वा तयोर्जातं जातं पुत्रं जघान ॥६६॥ हे राजन्, प्राणपोषका राजानो मातृ-पितृ-भ्रातृ-सुहृदादीनपि घ्नंति । अन्येषां का कथा ॥६७॥ किंच । पूर्वं विष्णुना हतं कालनेमिरूपं आत्मानं जानन् स कंसो यदुभिः सह विरोधं चकार ॥६८॥ ततः स्वपितरमप्युग्रसेनं स्वयं निगृह्य शूरसेनदेशानां राज्यं बुभुजे ॥६९॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे प्रथमोऽध्यायः ॥१॥ ॥ द्वितीये कंसघाताय देवक्या गर्भगो हरिः । ब्रह्मादिभिः स्तुतः सा च सांत्वितेति निरूप्यते ॥१॥ श्रीशुक उवाच ॥ हे राजन्, जरासंधाश्रयवान् कंसः, प्रलंब-बक-चाणूर-तृणावर्ता-घासुर-मुष्टिकारिष्ट-द्विविद-पूतना-केशि-धेनु-

देवकीं वसुदेवं च निगृह्य निगडैर्गृहे ॥ जातं जातमहन्पुत्रं तयोरजनशंकया ॥६६॥ मातरं पितरं भ्रातृन्सर्वांश्च सुहृदस्तथा ॥ घ्नंति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवि ॥६७॥ आत्मानमिह संजातं जानन्प्राग्विष्णुना हतम् ॥ महासुरं कालनेमिं यदुभिः स व्यरुध्यत ॥६८॥ उग्रसेनं च पितरं यदुभोजांधकाधिपम् ॥ स्वयं निगृह्य बुभुजे शूरसेनान्महाबलः ॥६९॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे श्रीकृष्णावतारोपक्रमे प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ प्रलंबबकचाणूरतृणावर्तमहाशनैः ॥ मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥१॥ अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः ॥ यदूनां कदनं चक्रे बली मागधसंश्रयः ॥२॥ ते पीडिता निविविशुः कुरुपांचालकेकयान् ॥ शाल्वान्विदर्भान्निषधान्विदेहान्कोसलानपि ॥३॥ एके तमनुरुंधाना ज्ञातयः पर्युपासते ॥ हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥४॥ सप्तमो वैष्णवं धाम यमनंतं प्रचक्षते ॥ गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥५॥ भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ॥ यदूनां निजनाथानां योगमायां समादिशत् ॥६॥ गच्छ देवि व्रजं भद्रे गोपगोभिरलंकृतम् ॥ रोहिणी वसुदेवस्य भार्याऽऽस्ते नंदगोकुले ॥ अन्याश्च कंससंविग्ना विवरेषु वसंति हि ॥७॥ देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ॥ तत्संनिकृष्य रोहिण्या उदरे संनिवेशय ॥८॥ अथाहमंशभागेन देवक्याः पुत्रतां शुभे ॥ प्राप्स्यामि त्वं यशोदायां नंदपत्न्यां भविष्यसि ॥९॥ ॥ ॥ ॥ ॥ ॥

कैर्बाणभौमादिभिश्च सह यादवानां दुःखं ददौ ॥१॥२॥ तदा ते यादवाः पीडिताः संतः कुरु-पांचाल-कैकय-शाल्व-विदर्भ-निषधादीन् देशान् विविशुः ॥३॥ केचिदक्रूरादयो बांधवाः कंसाज्ञामनुसरंतः संतः सेवकधर्मेण स्थिताः । एवं देवक्याः षट्सु बालेषु हतेषु सत्सु ॥४॥ यच्छेषनामकं विष्णोस्तेजस्तद्देवक्या हर्षशोकप्रदः सप्तमो गर्भो बभूव ॥५॥ भगवानपि यादवानां कंसजं भयं ज्ञात्वा योगमायामाज्ञापितवान् ॥६॥ हे देवि, त्वं गोकुलं गच्छ । तत्र वसुदेवस्त्री रोहिणी वसति ॥७॥ तस्या उदरे देवकीजठरस्थितं मे शेषाख्यं तेजः स्थापय ॥८॥ ततोऽहं परिपूर्णरूपेण देवक्याः पुत्रतां प्राप्स्यामि । त्वं च नंदस्त्रियां यशोदायां भविष्यसि ॥९॥ ॥ ॥ ॥

१ आनंदरूपस्यावतीर्णत्वाद्धर्षः पूर्वगर्भसाधारणदृष्ट्या शोक इति ।

एवं मदाज्ञापालने कृते सति सर्वमनोरथपूरणकर्त्रीं त्वां मनुष्या भूमौ धूप-दीप-नैवेद्यादिभिः पूजयिष्यंति ॥१०॥ तथा ते देवालयानि बध्नंति। दुर्गा भद्रकाली विजया वैष्णवी॥११॥ कुमुदा चंडिका कृष्णा नारायणीत्यादीनि ते नामानि च प्रसिद्धानि कुर्वंति ॥१२॥ तथा त्वया देवकीगर्भाकर्षणात्तं संकर्षणमिति लोकरमणाद्राममिति बलाधिक्याद्बलमिति च वदंति ॥१३॥ एवं हरिणाऽऽज्ञापिता सा माया तामाज्ञामंगीकृत्य तं प्रदक्षिणीकृत्य गोकुलं गत्वा तथा चकार ॥१४॥ एवं योगमायया देवक्या गर्भे रोहिण्या उदरंप्रति नीते सति पुरवासिनो जना अहो देवक्या गर्भो विस्रस्त इति विचुक्रुशुः ॥१५॥ अथ भक्तानामभयदो भगवानानंदरूपेण वसुदेवमनस्याविर्बभूव ॥१६॥ ततो वसुदेवो भगवतः श्रीमूर्तिं धार-

अर्चिष्यंति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ॥ धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥ १० ॥ नामधेयानि कुर्वंति स्थानानि च नरा भुवि ॥ दुर्गेति भद्रकालीति विजया वैष्णवीति च ॥११॥ कुमुदा चंडिका कृष्णा माधवी कन्यकेति च ॥ माया नारायणीशानी शारदेत्यंबिकेति च ॥१२॥ गर्भसंकर्षणात्तं वै प्राहुः संकर्षणं भुवि ॥ रामेति लोकरमणाद्बलं बलवदुच्छ्रयात् ॥१३॥ संदिष्टैवं भगवता तथेत्योमिति तद्वचः ॥ प्रतिगृह्य परिक्रम्य गां गता तत्तथाऽकरोत् ॥१४॥ गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया ॥ अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः ॥१५॥ भगवानपि विश्वात्मा भक्तानामभयंकरः ॥ आविवेशांशभागेन मन आनकदुंदुभेः ॥१६॥ स बिभ्रत्पौरुषं धाम भ्राजमानो यथा रविः ॥ दुरासदोऽतिदुर्धर्षो भूतानां संबभूव ह ॥१७॥ ततो जगन्मंगलमच्युतांशं समाहितं शूरसुतेन देवी ॥ दधार सर्वात्मकमात्मभूतं काष्ठा यथाऽऽनंदकरं मनस्तः ॥१८॥ सा देवकी सर्वजगन्निवासनिवासभूता नितरां न रेजे ॥ भोजेंद्रगेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती ॥१९॥ तां वीक्ष्य कंसः प्रभया जितांतरां विरोचयंतीं भवनं शुचिस्मिताम् ॥ आहैष मे प्राणहरो हरिर्गुहां ध्रुवं श्रितो यन्न पुरेयमीदृशी ॥ २० ॥ किमद्य तस्मिन्करणीयमाशु मे यदर्थतंत्रो न विहंति विक्रमम् ॥ स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं यशः श्रियं हंत्यनुकालमायुः ॥ २१ ॥ स एष जीवन्खलु संपरेतो वर्तेत योऽत्यंतनृशंसितेन ॥ देहे मृते तं मनुजाः शपंति गंता तमोऽधं तनुमानिनो ध्रुवम् ॥२२॥ ॥ ॥

यन् सूर्य इव तेजस्वी कंसादीनां पराभवितुमशक्यश्च बभूव ॥१७॥ ततः शुद्धसत्वा देवकी वसुदेवेन वैधदीक्षयार्पितं सर्वात्मकं भगवत्तेजो मनसैव दधार । पूर्वदिशा चंद्रमिव ॥१८॥ तदा सा देवकी सर्वजगन्निवासस्य श्रीहरेर्निवासभूता सत्यप्यत्यंतं न रेजे । यतः कंसगृहे रुद्धा । यथा घटादिषु रुद्धा दीपज्वाला न शोभते तद्वत् ॥१९॥ तदा स्वकांत्या गृहं प्रकाशयंतीं तां दृष्ट्वा कंस आह । अहो मे प्राणहरो यो हरिः स ध्रुवमस्याः कुक्षौ स्थितोऽस्ति । यत इयं पूर्वमेवं कांतिमती नासीत् ॥ २० ॥ स मम वधे पराक्रमं करिष्यत्येव । अतस्तस्मिन्नद्य मया किं करणीयम् । इयं हन्यतामिति चेत्तर्हि भगिन्या गर्भिण्याः स्त्रिया वधो यशः संपत्तिमायुष्यं च नाशयति ॥२१॥ किं च । अतिक्रूरतया यो वर्तते स जीवन्नपि

१ न तु तद्योगमायाकृत्यं विदुरित्यर्थः । २ जीवानामिव भगवतो न धातुसंबंध इत्यर्थः । ३ यथा कूर्मः स्वापत्यानां ध्यानमात्रेण पोषणं करोति तथा त्वं ध्यानमात्रेण परमेश्वरं भजस्वेत्युपदेशो वैधदीक्षेति कुलार्णवे प्रसिद्धम् ।

मृतः स्यात् । किं च । तं जीवंतमेव मनुजाः शपंति । स च मरणानंतरं नरकं गच्छति ॥२२॥ एवं विचार्य कंसोऽतिभयंकराद्देवकीवधसंकल्पान्निवृत्य हरेर्जन्म प्रतीक्षन्नास्ते स्म ॥२३॥ किंच । आसीनः शयानो भुंजानो भूमौ पर्यटंश्च एवं सर्वावस्थासु हरिं चिंतयानः स कंसः सर्वमपि जगत्तन्मयं ददर्श ॥२४॥ एकदा ब्रह्मा शिवश्च देवैर्ऋषिभिश्च सह कंसबंदिगृहे आगत्य देवकीगर्भस्थं भगवंतं तुष्टुवुः ॥२५॥ हे हरे, सत्यसंकल्प भूत-भविष्य-वतमान-कालत्रयेऽपि सत्यरूपं त्वां वयं शरणं प्रपन्नाः स्मः ॥२६॥ किंच । हे कृष्ण, अस्य संसारवृक्षस्य प्रकृतिराश्रयः । सुखदुःखे द्वे फले । सत्वरजस्तमांसि त्रीणि मूलानि । धर्मार्थकाममोक्षाश्चत्वारो रसाः । त्वक्चर्म-मांस-रुधिर-मेदो-मज्जास्थिरूपाः सप्त धातवस्त्वचः । पंचभूत-मनो-बुद्ध्यहंकाराख्या अष्ट शाखाः । नव द्वाराणि छिद्राणि । दश प्राणाः पर्णानि च संति । अस्मिन् वृक्षे जीवेश्वरौ द्वौ पक्षिणौ स्तः ॥२७॥ एवंभूतवृक्षस्योत्पत्ति-पालन-नाश-कर्ता

इति घोरतमाद्भावात्सन्निवृत्तः स्वयं प्रभुः ॥ आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबंधकृत् ॥ २३ ॥ आसीनः संविशंस्तिष्ठन्भुंजानः पर्यटन्महीम् ॥ चिंतयानो हृषीकेशमपश्यत्तन्मयं जगत् ॥२४॥ ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः ॥ देवैः सानुचरैः साकं गीर्भिर्वृषणमैडयन् ॥ २५ ॥ सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये ॥ सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥२६॥ एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पंचविधः षडात्मा ॥ सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥२७॥ त्वमेक एवास्य सतः प्रसूतिस्त्वं संनिधानं त्वमनुग्रहश्च ॥ त्वन्मायया संवृतचेतसस्त्वां पश्यंति नाना न विपश्चितो ये ॥२८॥ बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य ॥ सत्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम् ॥२९॥ त्वय्यंबुजाक्षाखिलसत्वधाम्नि समाधिनावेशितचेतसैके ॥ त्वत्पादपोतेन महत्कृतेन कुर्वंति गोवत्सपदं भवाब्धिम् ॥३०॥ स्वयं समुत्तीर्य सुदुस्तरं द्युमन्भवार्णवं भीममदभ्रसौहृदाः ॥ भवत्पदांभोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥३१॥ येन्येऽरविंदाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ॥ आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यधोऽनादृतयुष्मदंघ्रयः ॥३२॥ तथा न ते माधव तावकाः क्वचिद्भ्रश्यंति मार्गात्त्वयि बद्धसौहृदाः ॥ त्वयाऽभिगुप्ता विचरंति निर्भया विनायकानीकपमूर्धसु प्रभो ॥३३॥

त्वमेवासि । त्वन्मायया मोहितचित्तास्त्वामेव ब्रह्मादिरूपेण नानाविधं पश्यंति ॥२८॥ एवंभूतस्त्वं सर्वलोकानां क्षेमाय साधूनां सुखकराणि खलानां नाशकराणि च सात्विकानि रूपाणि बिभर्षि ॥२९॥ हे कमलनेत्र, त्वयि सत्वमूर्तौ समाधिना चित्तं स्थापयित्वा विवेकिनः पुरुषास्त्वत्पादनौकाश्रयणेन भवसमुद्रं वत्सपदतुल्यं कुर्वंति ॥३०॥ हे स्वप्रकाश, तव भक्ता भवसमुद्रं स्वयमुत्तीर्य त्वद्भक्तिमार्गसंप्रदायरूपां नौकां लोकतरणार्थमत्र स्थापयित्वा पारं याताः ॥३१॥ हे हरे, ये पुरुषा मुक्ता वयमित्यभिमानवंतस्त्वत्पादसेवां न कुर्वंति ते बहुजन्मतपसा मोक्षसन्निहितं पदमारुह्यापि ततोऽधः पतंति ॥३२॥ तव भक्तास्तु विघ्नानां मूर्धसु पदं दत्वा निर्भयाः संतो जीवन्मुक्तस्थित्या विचरंति ॥३३॥ ॥

१ दुर्वाक्यैर्धिक्कुर्वंति । २ सत्कुलजन्म-तपः-श्रुतादि प्राप्यापीत्यर्थः । ३ विघ्नैः पराभूयंते । ४ विघ्नान् जित्वेत्यर्थः ।

हे प्रभो, जगतः पालनार्थं जीवानां कर्मफलदानार्थं च त्वं शुद्धसत्वात्मकं शरीरं धारयसि । तेन जनो ब्रह्मचारिगृहस्थाद्याश्रमाणां वेदाध्ययनादिधर्मैस्त्वाराधनं करोति ॥३४॥ हे पालक, इदं तव वपुर्न भवेच्चेत्तर्ह्यज्ञाननिवर्तकमपरोक्षज्ञानं न भवेत्। यतो बुद्ध्यादीनां प्रकाशकैर्लक्षणैर्भवान् सर्वसाक्षी केवलमनुमीयते न तु साक्षात्क्रियते। शुद्धसत्ववपुषि त्वयि सेव्यमाने तु त्वत्प्रसादेन स्वरूपसाक्षात्कारो भवति ॥३५॥ हे देव, सर्वसाक्षिणस्तव नामरूपे गुण-जन्म-कर्मभिर्निरूपणयोग्ये न भवतः। अथापि भक्ता उपासनादिलक्षणे कर्मणि त्वां साक्षात्पश्यंति ॥३६॥ हे कृष्ण, तव नामानि रूपाणि च शृण्वन् उच्चारयन् चिंतयंश्च सन् यस्त्वच्चरणकमलयोश्चित्तं स्थापयति स पुनः संसाराय योग्यो न भवति ॥३७॥

सत्वं विशुद्धं श्रयते भवान्स्थितौ शरीरिणां श्रेय उपायनं वपुः ॥ वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ॥३४॥ सत्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम् ॥ गुणप्रकाशैरनुमीयते भवान्प्रकाशते यस्य च येन वा गुणः ॥३५॥ न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः ॥ मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियंत्यथापि हि ॥३६॥ शृण्वन्गृणन्संस्मरयंश्च चिंतयन्नामानि रूपाणि च मंगलानि ते ॥ क्रियासु यस्त्वच्चरणारविंदयोराविष्टचेता न भवाय कल्पते ॥३७॥ दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः ॥ दिष्ट्यांऽकितां त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकंपिताम् ॥३८॥ न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ॥ भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥३९॥ मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ॥ त्वं पासि नस्त्रिभुवनं च यथाऽधुनेश भारं भुवो हर यदूत्तम वंदनं ते ॥४०॥ दिष्ट्यांऽब ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान्भवाय नः ॥ माभूद्भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ॥ ४१ ॥ श्रीशुक उवाच ॥ इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा ॥ ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ॥४२॥ इति श्रीम० भ० दश० गर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

हे हरे, अस्या भूमेर्भारस्तव जन्मनैव दूरीकृतप्राय एवास्ति एतद्दिष्ट्या। किंच। तव वज्रांकुशादिचिह्नयुक्तैः कोमलैः पदैश्चिह्नितां पृथ्वीं वयं द्रक्ष्यामः ॥३८॥ हे कृष्ण, जन्मरहितस्य ते जन्मनः कारणं क्रीडां विना न तर्कयामः ॥३९॥ हे ईश, मत्स्य-कूर्म-नृसिंह-वराहादियोनिषु त्वमवतारं धृत्वा त्रैलोक्यमस्मांश्च यथा पासि तथाऽधुनापि पाहि । पृथिव्या भारं च हर। हे यादवश्रेष्ठ, तुभ्यं वंदनं कुर्मः ॥४०॥ अथ देवकीं वदंति। हे मातः, षड्गुणैश्वर्यसंपन्नो भगवान् परमेश्वर एवास्माकमुत्कर्षार्थं ते कुक्षिं प्राप्तोऽस्ति। अतो मुमूर्षोः कंसात्ते भयं मा भूत्। तव पुत्रो यादवानां रक्षणकर्ता भविष्यति ॥४१॥ श्रीशुक उवाच ॥ हे राजन्, एवं स्तुत्वा देवा ब्रह्मशंकरौ पुरस्कृत्य स्वर्गं ययुः ॥४२॥ इति श्रीम० दश०

१ गुणा भक्तवात्सल्यादयः। जन्मानि रामकृष्णादीनि। कर्माणि रावणवधादीनि तैः। २ साक्षिणस्तव मनोवचसोरगोचरत्वादित्यर्थः।

पूर्वार्धे द्वितीयोऽध्यायः ॥२॥ ॥ तृतीये निजरूपेण संभूतस्तु हरिः स्वयम् । पितृभ्यां संस्तुतो नीतः पित्रा भीतेन गोकुलम् ॥१॥ श्रीशुक उवाच । अथ यदा सर्वगुणोपेतः कालो बभूव । यस्मिन् काले ग्रहाद्यानुकूल्ययुक्तं रोहिणीनक्षत्रमासीत् ॥१॥ यदा च दिशः प्रसेदुः । निर्मलनक्षत्रोदयं चाकाशमासीत् । पुत्रोत्साहादिसहितनगरग्रामादियुक्ता पृथ्वी जाता ॥२॥ प्रसन्नजला नद्यः कमलशोभिनो ह्रदाश्च तथा पक्षिभिर्भ्रमरैश्च नादिता वनपंक्तय आसन् ॥ ३ ॥ सुखस्पर्शो वायुर्ववौ । विप्राणां शांता अग्नयः प्रदीप्ता बभूवुः ॥४॥ यदा च साधूनां मनांसि प्रसन्नानि जातानि । यस्मिंश्चासन्नप्रसवे काले प्राप्ते सति दिवि दुंदुभयो नेदुः ॥५॥ किन्नरगंधर्वा जगुः । सिद्धचारणास्तुष्टुवुः । विद्याधर्योऽप्सरसश्च ननृतुः ॥६॥

॥ श्रीशुक उवाच ॥ अथ सर्वगुणोपेतः कालः परमशोभनः ॥ यर्ह्येवाजनजन्मर्क्षं शांतर्क्षग्रहतारकम् ॥१॥ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ॥ मही मंगलभूयिष्ठपुरग्रामव्रजाकरा ॥२॥ नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः ॥ द्विजालिकुलसंनादस्तबका वनराजयः ॥ ३ ॥ ववौ वायुः सुखस्पर्शः पुण्यगंधवहः शुचिः ॥ अग्नयश्च द्विजातीनां शांतास्तत्र समिंधत ॥४॥ मनांस्यासन्प्रसन्नानि साधूनामसुरद्रुहाम् ॥ जायमानेऽजने तस्मिन्नेदुर्दुंदुभयो दिवि ॥५॥ जगुः किन्नरगंधर्वास्तुष्टुवुः सिद्धचारणाः ॥ विद्याधर्यश्च ननृतुरप्सरोभिः समं तदा ॥६॥ मुमुचुर्मुनयो देवाः सुमनांसि मुदाऽन्विताः ॥ मंदं मंदं जलधरा जगर्जुरनुसागरम् ॥७॥ निशीथे तमउद्भूते जायमाने जनार्दने ॥ देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ॥ आविरासीद्यथा प्राच्यां दिशींदुरिव पुष्कलः ॥ ८ ॥ तमद्भुतं बालकमंबुजेक्षणं चतुर्भुजं शंखगदार्युदायुधम् ॥ श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीतांबरं सांद्रपयोदसौभगम् ॥९॥ महार्हवैदूर्यकिरीटकुंडलत्विषा परिष्वक्तसहस्रकुंतलम् ॥ उद्दामकांच्यंगदकंकणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥१०॥ स विस्मयोत्फुलविलोचनो हरिं सुतं विलोक्यानकदुंदुभिस्तदा ॥ कृष्णावतारोत्सवसंभ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥११॥ अथैनमस्तौदवधार्य पूरुषं परं नतांगः कृतधीः कृतांजलिः ॥ स्वरोचिषा भारत सूतिकागृहं विरोचयंतं गतभीः प्रभाववित् ॥१२॥ वसुदेव उवाच ॥ विदितोऽसि भवान्साक्षात्पुरुषः प्रकृतेः परः॥ केवलानुभवानंदस्वरूपः सर्वबुद्धिदृक् ॥ १३ ॥

मुनयो देवाश्च पुष्पाणि ववृषुः । मेघाः समुद्रगर्जनामनु मंदं मंदं जगर्जुः ॥७॥ तदा निबिडतमोयुक्ते मध्यरात्रिसमये प्राच्यां दिशि पूर्णचंद्र इव देवक्यां सर्वात्मा विष्णुः प्रादुर्बभूव ॥८॥ तं कमलनेत्रं चतुर्भुजं शंखचक्रगदाधरं श्रीवत्सलांछनं कौस्तुभकंठं पीतांबरं मेघवच्छ्यामवर्णम् ॥९॥ किरीटकुंडलकांत्या स्फुरत्केशं कटिसूत्र-बाहुभूषण-कंकणादिभिर्विरोचमानमद्भुतं बालकं वसुदेवो ददर्श ॥१०॥ तदा श्रीहरिर्मे पुत्रो जात इति विस्मयेन प्रफुल्लितनेत्रो वसुदेवो हर्षयुक्तः सन् द्विजेभ्यो मनसा दशसहस्रं गा दत्तवान् ॥११॥ ततः स वसुदेवः स्वतेजसा सूतिकागृहं प्रकाशयंतं तं बालकमयं परमेश्वर इति निश्चित्य कृतांजलिर्भूत्वा तुष्टाव ॥१२॥ वसुदेव उवाच ॥ हे ईश, भवान् प्रकृतेः परः केवलानुभवानंदस्वरूपः

१ कंसनिगृहीतस्य प्रत्यक्षदानासंभवात् ।

सर्वबुद्धिद्रष्टाऽपि मया प्रत्यक्षतो ज्ञातोऽसि ॥१३॥ स सच्चिदानंदरूप एव त्वं स्वमाययेदं सृष्ट्वा तस्मिन्नप्रविष्टोऽपि प्रविष्ट इव भाव्यसे ॥१४॥ यथा महत्तत्वादीनि तत्त्वानि षोडश विकारैः सहैकत्र मिलित्वा ब्रह्मांडमुत्पाद्य ॥१५॥ तत्र प्रविष्टानीव दृश्यंते । न पुनः प्रविष्टानि । प्रागेव विद्यमानत्वात् ॥१६॥ एवं त्वं शब्दादिविषयैः सह वर्तमानोऽपि सर्वद्रष्टाऽसि । अत इंद्रियैर्न गृह्यसे । स त्वं मया विदितोऽसीति मे भाग्यम् ॥१७॥ यः पुमानात्मव्यतिरिक्तं देहादिकमेव वस्तुबुद्ध्या स्वीकरोति स मूढः ॥१८॥ हे विभो, निर्गुणादेव त्वत्तो जगत उत्पत्तिस्थितिसंहारान् वदंति । एतत्त्वयि न विरुद्धम् । यतस्त्वदाश्रितैर्गुणैः कुर्वद्भिः सद्भिस्त्वयि सृष्ट्यादिकर्तृत्वमुपचर्यते । यथा भृत्यकृत्यं राजनीति ॥१९॥ एवंभूत-

स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम् ॥ तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥१४॥ यथेमेऽविकृता भावास्तथा ते विकृतैः सह ॥ नानावीर्याः पृथग्भूता विराजं जनयंति हि ॥१५॥ संनिपत्य समुत्पाद्य दृश्यंतेऽनुगता इव ॥ प्रागेव विद्यमानत्वान्न तेषामिह संभवः ॥ १६ ॥ एवं भवान्बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः ॥ अनावृतत्वाद्बहिरंतरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥१७॥ य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः ॥ विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत्पुमान् ॥१८॥ त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो वदंत्यनीहादगुणादविक्रियात् ॥ त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः ॥१९॥ स त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः ॥ सर्गाय रक्तं रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये ॥ २० ॥ त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर ॥ राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥२१॥ अयं त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाग्रजांस्ते न्यवधीत्सुरेश्वर ॥ स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाऽधुनैवाभिसरत्युदायुधः ॥२२॥ श्रीशुक उवाच ॥ अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम् ॥ देवकी तमुपाधावत्कंसाद्भीता शुचिस्मिता ॥ २३ ॥ देवक्युवाच ॥ रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्मज्योतिर्निर्गुणं निर्विकारम् ॥ सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपः ॥२४॥ ॥ ॥ ॥ ॥ ॥

स्त्वं त्रैलोक्यपालनार्थं मायया शुक्लवर्णं बिभर्षि । तथोत्पत्तये रक्तवर्णं नाशाय कृष्णवर्णं च बिभर्षि ॥२०॥ अपि च ॥ हे विभो, अधुना त्वमस्य लोकस्य रक्षणार्थं मम गृहेऽवतीर्णोऽसि । स त्वं नृपसंज्ञकैर्दैत्यैरितस्ततश्चाल्यमानाः सेनाः संहरिष्यसि ॥२१॥ एवं सत्यपि त्वया सावधेन भाव्यम् । यतः स खलः कंस आवयोर्गृहे भावि त्वज्जन्म श्रुत्वा तव षट् अग्रजानवधीत् । स सेवकैः कथितं तवावतारं श्रुत्वा हस्ते शस्त्रं गृहीत्वाऽधुनैवागमिष्यति ॥२२॥ श्रीशुक उवाच ॥ हे नृप, अथ देवकी चतुर्भुजादिलक्षणयुक्तं पुत्रं दृष्ट्वा कंसाद्भीता सती तं तुष्टाव ॥२३॥ देवक्युवाच । हे भगवन्, वेदा यं निर्गुणं वस्तु वदंति स एव बुद्ध्यादीनां प्रकाशकः साक्षाद्विष्णुस्त्वमसि ॥२४॥ ॥ ॥

१ यथा चक्षुषा फलादिगते रूपे गृहीते सत्यपि तद्गतस्य रसादेर्ग्रहणं नास्ति एवमिंद्रियैर्विषयग्रहणेऽपि त्वद्ग्रहणं नास्तीति ।

महाप्रलयकालेऽस्मिन् लोके नष्टे सति यस्त्वमेक एवावशिष्यसे। एवंभूतस्य तव भयशंका नास्ति ॥२५॥ हे प्रकृतिप्रवर्तक, एवं प्रलयहेतुर्योऽयं निमेषादिः संवत्सरांतः काल एनं प्रलयावधिभूतस्य तव लीलामाहुः। तं त्वां निर्भयस्थानमहं शरणं व्रजामि ॥२६॥ हे आद्य, अयं मर्त्यो मृत्युसर्पाद्भीतः सन् कुत्रापि निर्भयं स्थानं न प्राप। ततः केनापि भाग्योदयेन गरुडारूढस्य तव चरणकमलं प्राप्य स्वस्थः शेते। मृत्युसर्पश्चास्मादपैति ॥२७॥ स त्वं कंसाद्भीतानस्मान् रक्ष। इदं तव ध्यानास्पदमैश्वरं स्वरूपं मांसदृष्टीनां प्रत्यक्षं मा कृथाः ॥२८॥ हे कृष्ण, असौ पापः कंसो मयि तव जन्म जातमिति मा जानीयात्। यतस्तस्मादहं बिभेमि ॥२९॥ हे विश्वात्मन्, त्वं शंखचक्रगदापद्मयुक्तमिदं चतुर्भुजं रूपमुप-

नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु ॥ व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः ॥ २५ ॥ योऽयं कालस्तस्य तेऽव्यक्तबंधो चेष्टामाहुश्चेष्टते येन विश्वम् ॥ निमेषादिर्वत्सरांतो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥२६॥ मर्त्यो मृत्युव्यालभीतः पलायन्लोकान्सर्वान्निर्भयं नाध्यगच्छत् ॥ त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति ॥२७॥ स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान्भृत्यवित्रासहाऽसि ॥ रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥२८॥ जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ॥ समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥२९॥ उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ॥ शंखचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥३०॥ विश्वं यदेतत्स्वतनौ निशांते यथावकाशं पुरुषः परो भवान् ॥ बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडंबनं हि तत् ॥३१॥ श्रीभगवानुवाच ॥ त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायंभुवे सति ॥ तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥ ३२ ॥ युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः ॥ संनियम्येंद्रियग्रामं तेपाथे परमं तपः ॥३३॥ वर्षवातातपहिमघर्मकालगुणाननु ॥ सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥३४॥ शीर्णपर्णानिलाहारावुपशांतेन चेतसा ॥ मत्तः कामानभीप्संतौ मदाराधनमीहतुः ॥ ३५ ॥ एवं वां तप्यतोस्तीव्रं तपः परमदुष्करम् ॥ दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ॥३६॥ तदा वां परितुष्टोऽहममुना वपुषाऽनघे ॥ तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥३७॥ ॥ ॥

संहर ॥३०॥ किंच। हे ईश, यस्त्वं प्रलयांते इदं विश्वं यथावकाशं स्वशरीरे बिभर्षि। स एव त्वं मे गर्भगोऽभूः। इदं मनुष्यलोकस्योपहासास्पदं स्यादत इदं रूपमुपसंहर ॥ ३१ ॥ अथ चतुर्भुजरूपेण प्राकट्ये कारणं श्रीभगवानुवाच। हे मातः, स्वायंभुवमन्वंतरे इतः पूर्वं तृतीये जन्मनि त्वं पृश्निर्नाम आसीः। तदाऽयं वसुदेवः सुतपानामासीत् ॥३२॥ तदा युवां ब्रह्माज्ञया सृष्ट्यर्थं परमं तपः कृतवंतौ ॥३३॥ तदा वृष्टिवातोष्णादिकालधर्मान् सहमानौ गतमनोमलौ ॥ ३४ ॥ गलितपर्ण-वायु-भोजनौ मत्तो मनोरथपूरणेच्छया मदाराधनं कृतवंतौ ॥३५॥ एवं तीव्रं तपो युवयोः कुर्वतोः सतोर्दिव्यमानेन द्वादशसहस्रवर्षाणि व्यतीयुः ॥३६॥ तदा युवयोः परितुष्टोऽहममुना चतुर्भुजेन शरीरेण प्रादुर्भूतोऽस्मि ॥ ३७ ॥

ततो वरो व्रियतामिति मयोक्ते युवाभ्यां मत्सदृशः पुत्रो वरो वृतः ॥३८॥ तदा विषयभोगरहितौ युवां देवमायया मोहितौ भूत्वा मत्तो मोक्षं न वव्राथे ॥३९॥ तदा तथाऽस्त्वित्यु-क्त्वा मयि गते सति युवां प्राप्तमनोरथौ भूत्वा ग्राम्यान् विषयान् भुक्तवंतौ ॥४०॥ लोके मत्सदृशमन्यमदृष्ट्वाऽहमेव पृश्निगर्भ इति नाम्ना युवयोः पुत्रोऽभवम् ॥४१॥ ततोऽन्यज-न्मनि तयोरेव युवयोरदितिकश्यपरूपेण जातयोः सतोरहं वामनरूपेण युवयोः पुत्र आसम् ॥४२॥ अधुना युवयोस्तृतीये जन्मन्यपि तेनैव चतुर्भुजरूपेणाहं जातोऽस्मि । हे सति, एवं मे वचः सत्यं जातम् ॥४३॥ किंच । पूर्वजन्मस्मरणायेदं रूपं मया दर्शितम् । अन्यथा मनुष्यशरीरेण मद्विषयं ज्ञानं नोत्पद्यते । अतः परं त्वदिच्छया बालकोऽपि भविष्यामि ॥४४॥ हे पितरौ, युवां पुत्रभावेन ब्रह्मभावेन वा मां चिंतयंतौ संतौ मद्गतिं यास्यथः ॥४५॥ हे वसुदेव, यदि त्वं कंसाद्बिभेषि तर्हि मां गोकुलं नय । यशोदागर्भसंभवां मन्मायां

प्रादुरासं वरदराड् युवयोः कामदित्सया ॥ व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥ ३८ ॥ अजुष्टग्राम्यविषयावनपत्यौ च दंपती ॥ न वव्राथेऽपवर्गं मे मोहितौ देवमायया ॥३९॥ गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम् ॥ ग्राम्यान्भोगानभुंजाथां युवां प्राप्तमनोरथौ ॥४०॥ अदृष्ट्वाऽन्यतमं लोके शीलौदार्यगुणैः समम् ॥ अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥ ४१ ॥ तयोर्वां पुनरेवाहमदित्यामास कश्यपात् ॥ उपेंद्र इति विख्यातो वामनत्वाच्च वामनः ॥४२॥ तृतीयेऽस्मिन्भवेऽहं वै तेनैव वपुषाऽथ वाम् ॥ जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥४३॥ एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ॥ नान्यथा मद्भवं ज्ञानं मर्त्यलिंगेन जायते ॥४४॥ युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् ॥ चिंतयंतौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥४५॥ ( यदि कंसाद्बिभेषि त्वं तर्हि मां गोकुलं नय ॥ मन्मायामानयाशु त्वं यशोदागर्भसंभवाम् ॥४६॥ श्रीशुक उवाच ॥ इत्युक्त्वाऽसीद्धरिस्तूष्णीं भगवानात्ममायया ॥ पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥४७॥ ततश्च शौरि-र्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात् ॥ यदा बहिर्गंतुमियेष तर्ह्यजा या योगमायाऽजनि नंदजायया ॥४८॥ तया हृतप्रत्ययसर्व-वृत्तिषु द्वाःस्थेषु पौरेष्वपि शायितेष्वथ ॥ द्वारस्तु सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकीलशृंखलैः ॥४९॥ ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्यंत यथा तमो रवेः ॥ ववर्ष पर्जन्य उपांशुगर्जितः शेषोऽन्वगाद्वारि निवारयन्फणैः ॥५०॥ ॥ ॥

चात्र शीघ्रमानय ॥४६॥ श्रीशुक उवाच । एवं हरिरुक्त्वा तयोः पित्रोः पश्यतोः सतोः सद्यो योगमायया प्राकृतः शिशुर्बभूव ॥४७॥ ततो वसुदेवो भगवदाज्ञया सुतं गृहीत्वा यदा बहिर्गंतुमिच्छितवान् तदैव योगमाया, यशोदायाः कन्यारूपेणोत्पन्ना बभूव ॥४८॥ तया जाग्रतामपि द्वारपालानामिंद्रियवृत्तीराकृष्य तेषु चित्रवत्स्थापितेषु सत्सु तथा पुरवा-सिषु जनेषु शायितेषु सत्सु महद्भिः कपाटैर्लोहकीलकशृंखलैश्चोद्धाटयितुमशक्या अपि सर्वा द्वारः ॥४९॥ कृष्णवाहे वसुदेवे प्राप्ते सति स्वत एव विवृताः । तदैव मंदगर्जितः पर्जन्यो ववर्ष । तदैव शेषः फणाभिर्जलं निवारयन् वसुदेवपृष्ठतो जगाम ॥५०॥ ॥ ॥ ॥ ॥ ॥

तदेंद्रे वर्षति सति यमुना गंभीर-जल-पूर-वेगोत्थिताभिर्लहरीभिः फेनव्याप्ता तथाऽतिभयंकरावर्तशतैर्व्याप्तापि श्रीरामस्य समुद्र इव मार्गं ददौ ॥५१॥ ततो वसुदेवो गोकुलं गत्वा मायया सुप्तान् गोपान् ज्ञात्वा यशोदाशयने सुतं निधाय तत्सुतां गृहीत्वा पुनः स्वगृहान् ययौ ॥५२॥ ततस्तां कन्यां देवकीशयने निधाय पादयोर्निगडं बद्ध्वा पूर्ववत्तस्थौ ॥ ५३ ॥ नंदपत्नी यशोदा च निद्रया गतस्मृतिः सती किंचिदपत्यं जातमिति बुबुधे । न खलु कन्या पुत्रो वा जात इति बुबुधे । यतो योगमायया सा मोहिताऽभवत् ॥५४॥ इति श्रीम० चूर्णिकायां दशमस्कंधे पूर्वार्धे तृतीयोऽध्यायः ॥३॥ ॥ चतुर्थे चंडिकावाक्यमाकर्ण्यातिभयाकुलः । दुर्मंत्रिभिर्हितं मेने कंसो बालादिहिंसनम् ॥१॥ श्रीशुक उवाच ॥ ततो नगरस्य बहिरंतर्द्वारः शृंखलादिना पूर्ववदावृताः । ततो द्वारपाला बालध्वनिं श्रुत्वोत्थिताः संतः ॥१॥ ते तूर्णं राजमंदिरे गत्वा कंसाय तद्देवक्या अष्टमगर्भस्य जन्म कथयामासुः

मघोनि वर्षत्यसकृद्यमानुजा गंभीरतोयौघजवोर्मिफेनिला ॥ भयानकावर्तशताकुला नदी मार्गं ददौ सिंधुरिव श्रियः पतेः ॥५१॥ नंदव्रजं शौरिरुपेत्य तत्र तान् गोपान्प्रसुप्तानुपलभ्य निद्रया ॥ सुतं यशोदाशयने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ॥५२॥ देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ॥ प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥५३॥ यशोदा नंदपत्नी च जातं परमबुध्यत ॥ न तल्लिंगं परिश्रांता निद्रयापगतस्मृतिः ॥५४॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे कृष्णजन्मनि तृतीयोऽध्यायः ॥३॥ श्रीशुक उवाच ॥ बहिरंतः पुरद्वारः सर्वाः पूर्ववदावृताः ॥ ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥१॥ ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ॥ आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥२॥ स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः ॥ सूतीगृहमगात्तूर्णं प्रस्खलन्मुक्तमूर्धजः ॥३॥ तमाह भ्रातरं देवी कृपणा करुणं सती ॥ स्नुषेयं तव कल्याण स्त्रियं मा हंतुमर्हसि ॥४॥ बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ॥ त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥५॥ नन्वहं ते ह्यवरजा दीना हतसुता प्रभो ॥ दातुमर्हसि मंदाया अंगेमां चरमां प्रजाम् ॥६॥ श्रीशुक उवाच ॥ उपगुह्यात्मजामेवं रुदत्या दीनदीनवत् ॥ याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥७॥ तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् ॥ अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥८॥ ॥ ॥ ॥ ॥

॥२॥ अथ कंसः शय्यायास्त्वरयोत्थाय मुक्तकेशः सन् त्वरया सूतिकागृहं जगाम ॥३॥ तदा तं कंसं देवकी दीनवाण्या जगाद । हे भ्रातः, इयं कन्या तव स्नुषा भवितुं योग्या । एनां त्वं हंतुं नार्हसि ॥४॥ किंच । हे कंस, त्वया अस्माकं बहवः पुत्रा हताः । अधुना मम विश्रांत्यर्थं एका पुत्रिका दीयताम् ॥५॥ अहं ते कनिष्ठा भगिनी हतसुता दीनाऽस्मि । अतो हे भ्रातः, इमां चरमां कन्यां मे दातुमर्हसि ॥६॥ श्रीशुक उवाच ॥ एवं रुदत्या तया दीनवद्याचितः कंसस्तां निर्भर्त्स्य तस्या हस्तात्कन्यामाकृष्य जग्राह ॥७॥ ततः कंसस्तां चरणयोर्गृहीत्वा शिलोपरि बलेनापोथयत् ॥८॥ ॥ ॥ ॥ ॥ ॥ ॥

सा तद्धस्तादुत्पत्य सद्यो गगने गत्वा तत्र देवी भूत्वा आयुधसहिताऽष्टभुजा ददृशे ॥९॥ तथा दिव्यगंध-पुष्प-माला-वस्त्रालंकारैर्भूषिता धनुः-शूल-बाण-चर्म-खड्ग-शंख-चक्र-गदाधरा ॥१०॥ वलिं समर्पयद्भिः सिद्धचारणगंधर्वादिभिः स्तूयमाना च सती जगाद ॥११॥ हे मंद, मया हतया किं फलम् । तव पूर्वशत्रुस्त्वां हंतुं यत्रक्वापि जातोऽस्ति । त्वं वृथा दीनान् शिशून् मा हिंसीः ॥१२॥ एवं प्रभाष्य सा देवी वाराणस्यादिबहुस्थानेषु बहुनामभिः प्रसिद्धा बभूव ॥१३॥ कंसस्तयोक्तं श्रुत्वा विस्मितः सन् देवकीं वसुदेवं च शृंखला-बंधाद्विमुच्य नम्रो भूत्वा जगाद ॥१४॥ हे भगिनि देवकि, हे भगिनीपते वसुदेव, राक्षसः स्वापत्यमिव मया युवयोर्बहवः पुत्रा हिंसिताः ॥१५॥ सोऽहं निर्दयः सन् ब्रह्महेव श्वसन् कान् लोकान् गमिष्यामि तन्न ज्ञायते ॥१६॥ किंच । दैवमपि मिथ्या वदति । न केवलं मनुष्या एव मिथ्या वदंति । यत आकाशवाण्या विश्वासादहं निर्दयो भूत्वा तव शिशून् हतवान् ॥१७॥ अतो

सा तद्धस्तात्समुत्पत्य सद्यो देव्यंबरं गता ॥ अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥९॥ दिव्यस्रगंबरालेपरत्नाभरणभूषिता ॥ धनुःशूले-षुचर्मासिशंखचक्रगदाधरा ॥१०॥ सिद्धचारणगंधर्वैरप्सरःकिन्नरोरगैः ॥ उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥११॥ किं मया हतया मंद जातः खलु तवांतकृत् ॥ यत्र क्व वा पूर्वशत्रुर्माहिंसीः कृपणान्वृथा ॥१२॥ इति प्रभाष्य तं देवी माया भगवती भुवि ॥ बहुनामनिकेतेषु बहुनामा बभूव ह ॥१३॥ तयाऽभिहितमाकर्ण्य कंसः परमविस्मितः ॥ देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥१४॥ अहो भगिन्यहो भाम मया वां बत पाप्मना ॥ पुरुषाद इवापत्यं बहवो हिंसिताः सुताः ॥१५॥ स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः ॥ काँल्लोकान्वै गमि-ष्यामि ब्रह्महेव मृतः श्वसन् ॥१६॥ दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् ॥ यद्विश्रंभादहं पापः स्वसुर्निहतवान् शिशून् ॥१७॥ मा शोचतं महा-भागावात्मजान्स्वकृतं भुजः ॥ जंतवो न सदैकत्र दैवाधीनाः सदाऽऽसते ॥१८॥ भुवि भौमानि भूतानि यथा यांत्यपयांति च ॥ नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥१९॥ यथाऽनेवंविदो भेदो यत आत्मविपर्ययः ॥ देहयोगवियोगौ च संसृतिर्न निवर्तते ॥२०॥ तस्माद्भद्रे स्वत-नयान्मया व्यापादितानपि ॥ माऽनुशोच यतः सर्वः स्वकृतं विंदतेऽवशः ॥२१॥ यावद्धतोऽस्मि हंताऽस्मीत्यात्मानं मन्यते स्वदृक् ॥ तावत्तदभि-मान्यज्ञो बाध्यबाधकतामियात् ॥२२॥ क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः ॥ इत्युक्त्वाऽश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत् ॥२३॥

युवां स्वारब्धकर्मभोक्तॄन् पुत्रान्प्रति मा शोचतम् । यतो जंतवो दैवाधीनाः संत एकत्र सदा न तिष्ठंति ॥१८॥ किंच । यथाऽऽधारभूतायां भूमौ घटादय उत्पद्यंते नश्यंति च न भूमिस्तथाऽऽधारभूते आत्मनि देहा एवोत्पद्यंते नश्यंति च नात्मा ॥१९॥ एवमजानतः पुंसो देहे आत्मबुद्धिर्भवति । तया पुत्रादिभेदः । भेदाच्च देहयोगवियोगौ भवतः । ततश्च संसारो न निवर्तते ॥२०॥ अतो हे भद्रे, मया मारितानपि पुत्रान् त्वं मानुशोच । यतः प्राणी पराधीनः सन् स्वप्रारब्धं भुंक्ते ॥२१॥ यावज्जनोऽहं हतोऽस्मि हंता चास्मीत्यभि-मानं धारयति तावन्मरणेन दुःखं मारणेन पापं च प्राप्नोति॥२२॥तस्माद्धे दीनवत्सलाः, मम दुष्टचित्तत्वं क्षमध्वम् । एवमुक्त्वाऽश्रुमुखः कंसो देवकीवसुदेवयोः पादावग्रहीत् ॥२३॥

मानं धारयति तावन्मरणेन दुःखं मारणेन पापं च प्राप्नोति॥२२॥तस्माद्धे दीनवत्सलाः, मम दुष्टचित्तत्वं क्षमध्वम् । एवमुक्त्वाऽश्रुमुखः कंसो देवकीवसुदेवयोः पादावग्रहीत ॥२३॥

तत आत्मप्रेम दर्शयन् तौ शृंखलाबंधान्मोचयामास ॥२४॥ ततः पश्चात्तापयुक्तस्य कंसस्य सतो देवकी रोषं व्यसृजत् । वसुदेवश्च रोषं त्यक्त्वा तं जगाद ॥२५॥ हे कंस, अज्ञानादहंकारबुद्धिस्ततः स्वपरभेदस्ततः शोकहर्षभयद्वेषलोभादियुक्ता जना भूत्वा देवदैत्यादिनिमित्तैः परस्परं मारयंतमीश्वरं न पश्यंतीति त्वं यथा वदसि तथैवास्ति ॥ २६ ॥ २७ ॥ श्रीशुक उवाच ॥ एवं देवकीवसुदेवाभ्यां भाषितः कंसस्तदाज्ञां गृहीत्वा गृहं विवेश ॥२८॥ ततस्तस्यां रात्र्यां गतायां परेद्युः कंसो मंत्रिण आहूय योगमाययोक्तं सर्वं तेभ्यः कथयामास ॥२९॥ तत्कंसवचः श्रुत्वा ते देवशत्रवस्तं जगदुः ॥३०॥ हे भोजेंद्र, एवं चेत्तर्हि नगर-ग्राम-गोकुलादिषु स्थितान् अनिर्दशान्निर्दशांश्च शिशून् अद्य वयं हनिष्यामः ॥ ३१ ॥

मोचयामास निगडाद्विश्रब्धः कन्यकागिरा ॥ देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥२४॥ भ्रातुः समनुतप्तस्य क्षांतरोषा च देवकी ॥ व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह ॥२५॥ एवमेतन्महाभाग यथा वदसि देहिनाम् ॥ अज्ञानप्रभवाऽहंधीः स्वपरेति भिदा यतः ॥२६॥ शोकहर्षभयद्वेषलोभमोहमदान्विताः ॥ मिथो घ्नंतं न पश्यंति भावैर्भावं पृथग्दृशः ॥२७॥ श्रीशुक उवाच ॥ कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः ॥ देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहम् ॥२८॥ तस्यां रात्र्यां व्यतीतायां कंस आहूय मंत्रिणः ॥ तेभ्य आचष्ट तत्सर्वं यदुक्तं योगनिद्रया ॥२९॥ आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः ॥ देवान्प्रति कृतामर्षा दैतेया नातिकोविदाः ॥३०॥ एवं चेत्तर्हि भोजेंद्र पुरग्रामव्रजादिषु ॥ अनिर्दशान्निर्दशांश्च हनिष्यामोऽद्य वै शिशून् ॥३१॥ किमुद्यमैः करिष्यंति देवाः समरभीरवः ॥ नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥३२॥ अस्यतस्ते शरव्रातैर्हन्यमानाः समंततः ॥ जिजीविषव उत्सृज्य पलायनपरा ययुः ॥३३॥ केचित्प्रांजलयो दीना न्यस्तशस्त्रा दिवौकसः ॥ मुक्तकच्छशिखाः केचिद्भीताः स्म इति वादिनः ॥३४॥ न त्वं विस्मृतशस्त्रास्त्रान्विरथान्भयसंवृतान् ॥ हंस्यन्यासक्तविमुखान्भग्नचापानयुद्ध्यतः ॥ ३५॥ किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ॥ रहोजुषा किं हरिणा शंभुना वा वनौकसा ॥ किमिंद्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ॥३६॥ तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ॥ ततस्तन्मूलखनने नियुंक्ष्वास्माननुव्रतान् ॥३७॥ ॥ ॥

तव धनुष्यमौर्वीशब्दैर्भीतचित्ता देवा उद्योगैः किं करिष्यंति न किमपि ॥३२॥ तव बाणैर्हन्यमाना देवाः संग्रामं त्यक्त्वा पलायनं चक्रुः ॥३३॥ तत्र केचित्प्रांजलयो दीना बभूवुः । केचिन्मुक्तकच्छशिखा भूत्वा भीताः स्म इति वादिनो बभूवुः ॥३४॥ त्वं तु विस्मृतशस्त्रास्त्रान् विरथान् भयातुरान् विमुखांश्च देवान् न हंसि ॥३५॥ एतावता निर्भयदेशे शूरैर्देवैः किम् । तथा सर्वस्याप्यंतः प्रविष्टेन विष्णुना किम् । पुरुषप्रवृत्तिरहिते वने स्थितेन शंभुना वा किम् । अल्पवीर्येणेंद्रेण तपः कुर्वता ब्रह्मणा वा किम् ॥३६॥ तथापि शत्रुत्वाद्देवा नोपेक्ष्या इति वयं मन्महे । अतो देवानां मूलोत्पाटनेऽस्माकमाज्ञां देहि ॥३७॥ ॥ ॥ ॥ ॥

१ क्वचिदपि बहिरदृष्टेनेत्यर्थः । २ इलावृतनामके वने स्थितेन ।

हे कंस, यथा शरीरे समुपेक्षितो रोगो बद्धमूलः सन् निवर्तयितुं न शक्यते । एवं शत्रुरपि बद्धमूलः सन् जेतुं न शक्यते ॥३८॥ हे प्रभो, देवानां मूलं विष्णुः । तस्य मूलं धर्मः । धर्मस्य मूलं वेद-गो-विप्र-तपो-यज्ञाः ॥३९॥ तस्मात्सर्वप्रकारेण तपस्विनो विप्रान् हविर्दुघा गाश्च हनिष्यामः ॥४०॥ किंच । विप्र-गो-देव-वेद-तपः-सत्य-शम-दमादयो हरेर्मूर्तयः ॥४१॥ स हरिः सर्वदेवानामीश्वरः । विष्णुमूला एव रुद्रब्रह्मादिसर्वे देवाः । अतो ऋषीणां वध एव विष्णोर्वधोपायः ॥४२॥ श्रीशुक उवाच ॥ एवं दुर्मतिः कंसो दुर्मंत्रिभिः सह विचार्य कालपाशेन वेष्टितः सन् ब्राह्मणहिंसां हितं मेने ॥४३॥ ततो दैत्यान् साधुजनानां नाशार्थमाज्ञाप्य गृहं ययौ ॥४४॥ ततः समीपं प्राप्तमृत्यवस्ते दैत्याः साधूनां द्वेषमाचेरुः ॥४५॥

यथाऽऽमयोंऽगे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुम् ॥ यथेंद्रियग्राम उपेक्षितस्तथा रिपुर्महान्बद्धबलो न चाल्यते ॥३८॥ मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः ॥ तस्य च ब्रह्मगोविप्रास्तपोयज्ञाः सदक्षिणाः ॥३९॥ तस्मात्सर्वात्मना राजन्ब्राह्मणान्ब्रह्मवादिनः ॥ तपस्विनो यज्ञशीलान्गाश्च हन्मो हविर्दुघाः ॥४०॥ विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ॥ श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः ॥४१॥ स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः ॥ तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ॥ अयं वै तद्वधोपायो यदृषीणां विहिंसनम् ॥४२॥ श्रीशुक उवाच ॥ एवं दुर्मंत्रिभिः कंसः सह संमंत्र्य दुर्मतिः ॥ ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥४३॥ संदिश्य साधुलोकस्य कदने कदनप्रियान् ॥ कामरूपधरान्दिक्षु दानवान्गृहमाविशत् ॥४४॥ ते वै रजःप्रकृतयस्तमसा मूढचेतसः ॥ सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥४५॥ आयुः श्रियं यशो धर्मं लोकानाशिष एव च ॥ हंति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥४६॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे चतुर्थोऽध्यायः ॥४॥ श्रीशुक उवाच ॥ नंदस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ॥ आहूय विप्रान्वेदज्ञान्स्नातः शुचिरलंकृतः ॥१॥ वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ॥ कारयामास विधिवत्पितृदेवार्चनं तथा ॥ २ ॥ धेनूनां नियुते प्रादाद्विप्रेभ्यः समलंकृते ॥ तिलाद्रीन्सप्त रत्नौघशातकौंभांबरावृतान् ॥३॥ कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया ॥ शुद्ध्यंति दानैः संतुष्ट्या द्रव्याण्यात्माऽऽत्मविद्यया ॥४॥ सौमंगल्यगिरो विप्राः सूतमागधवंदिनः ॥ गायकाश्च जगुर्नेदुर्भेर्यो दुंदुभयो मुहुः ॥५॥ ॥ ॥

साधूनां द्वेषः पुरुषस्य आयुष्यं संपत्तिं यशः धर्मं सर्वाणि कल्याणानि च हंति ॥४६॥ इति श्रीमद्भा० चूर्णि० दश० पूर्वा० चतुर्थोऽध्यायः ॥४॥ ॥ पंचमे जातकं नंदः सूनोः कृत्वा महोत्सवम् । गत्वाऽथ मथुरां प्राप वसुदेवागमोत्सवम् ॥१॥ श्रीशुक उवाच ॥ अथ पुत्रे उत्पन्ने सति जाताह्लाद उदारचित्तो नंदः स्नातः सन् ज्योतिर्विदो विप्रानाहूय ॥१॥ तैः पुण्याहं वाचयित्वा पुत्रस्य जातकर्म तथा पितृदेवानां नांदीश्राद्धादिना पूजनं कारयामास ॥२॥ ततो नंदो विप्रेभ्यो धेनूनां लक्षद्वयं तथा वस्त्ररत्नयुतान् सप्त तिलपर्वतान् ददौ ॥३॥ यतः कालेन भूम्यादि शुद्ध्यति । स्नानेन देहादि । दानेन द्रव्यादि । संस्कारैर्गर्भादि । तपसेंद्रियादि । संतुष्ट्या मनः । आत्मविद्यया जीवात्मा च शुद्ध्यति ॥४॥ ततो विप्रा आशीर्वादं

ददुः । सूत-मागध-बंदिनस्तुष्टुवुः । गायका जगुः । भेरीदुंदुभयो नेदुः ॥५॥ ततो गोकुलं संमार्जितानि संसिक्तानि द्वाराणि अंगणानि गृहमध्यानि च यस्मिंस्तथाभूतं विचित्रध्वज-पताका-माला-तोरणादिभिर्भूषितं चाभूत् ॥६॥ तदा गावो वृषा वत्साश्च हरिद्रातैललिप्ता विचित्रधातु-मयूरपिच्छ-पुष्पमाला-वस्त्रसुवर्णादिभिर्भूषिता बभूवुः ॥७॥ गोपा अमूल्यव-स्त्राभरणैर्भूषिताः संतो नानोपायनपाणयो नंदगृहमाययुः ॥८॥ गोप्यो यशोदायाः पुत्रोत्पत्तिं श्रुत्वा वस्त्रालंकारादिभिरात्मानं भूषयित्वा ॥९॥ पृथुश्रोण्यश्चलत्कुचाश्च सत्यो बलि-भिः सह नंदगृहं त्वरितं जग्मुः ॥१०॥ तदा नंदगृहं गच्छंत्यश्चित्रांबराः पथि केशपाशच्युतपुष्पवर्षाः सकंकणास्ता गोप्यो विरेजुः ॥११॥ ततस्तत्र गत्वा बालके त्वं चिरकालं गोकुलं

व्रजः संमृष्टसंसिक्तद्वाराजिरगृहांतरः ॥ चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ॥६॥ गावो वृषा वत्सतरा हरिद्रातैलरूषिताः ॥ विचित्रधातुब-र्हस्रग्वस्त्रकांचनमालिनः ॥७॥ महार्हवस्त्राभरणकंचुकोष्णीषभूषिताः ॥ गोपाः समाययू राजन्नानोपायनपाणयः ॥ ८ ॥ गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् ॥ आत्मानं भूषयांचक्रुर्वस्त्राकल्पांजनादिभिः ॥९॥ नवकुंकुमकिंजल्कमुखपंकजभूतयः ॥ बलिभिस्त्वरितं जग्मुः पृथु-श्रोण्यश्चलत्कुचाः ॥१०॥ गोप्यः सुमृष्टमणिकुंडलनिष्ककंठ्यश्चित्रांबराः पथि शिखाच्युतमाल्यवर्षाः ॥ नंदालयं सवलया व्रजतीर्विरेजुर्व्यालो-लकुंडलपयोधरहारशोभाः ॥११॥ ता आशिषः प्रयुंजानाश्चिरं पाहीति बालके ॥ हरिद्राचूर्णतैलाद्भिः सिंचंत्यो जनमुज्जगुः ॥१२॥ अवाद्यंत विचित्राणि वादित्राणि महोत्सवे ॥ कृष्णे विश्वेश्वरेऽनंते नंदस्य व्रजमागते ॥१३॥ गोपाः परस्परं हृष्टा दधिक्षीरघृतांबुभिः ॥ आसिंचंतो विलिंपंतो नवनीतैश्च चिक्षिपुः ॥१४॥ नंदो महामनास्तेभ्यो वासोऽलंकारगोधनम् ॥ सूतमागधवंदिभ्यो येऽन्ये विद्योपजीविनः ॥१५॥ तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् ॥ विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥१६॥ रोहिणी च महाभागा नंदगोपाभिनंदिता ॥ व्यचरद्दिव्यवासः-स्रक्कंठाभरणभूषिता ॥१७॥ तत आरभ्य नंदस्य व्रजः सर्वसमृद्धिमान् ॥ हरेर्निवासात्मगुणै रमाऽऽक्रीडमभूऩ्नृप ॥१८॥ गोपान्गोकुलरक्षायां निरूप्य मथुरां गतः ॥ नंदः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ॥१९॥ ॥ ॥ ॥ ॥ ॥

रक्षेत्याद्याशीर्वादान् प्रयुंजानाः सत्यो हरिद्राचूर्णतैल-जलैः परस्परं सिंचंत्यो हरिगीतान्युच्चैर्जगुः ॥१२॥ एवं कृष्णे नंदगोकुलमागते सति गीतवाद्यादिना महोत्साहः प्रवृत्तः ॥१३॥ तदा गोपा हृष्टा भूत्वा परस्परं दधि-क्षीर-घृतांबुभिः सिंचतो नवनीतैर्लिंपंतश्च संतस्तानि च दध्यादीनि मिथश्चिक्षिपुः ॥१४॥ अथ नंदस्तेभ्यः सूत-मागध-वंदिभ्यश्च तथा येऽन्ये गीतवाद्यादिविद्योपजीविनस्तेभ्यश्च वस्त्रालंकार-गोधनैरिच्छितवस्तुसमर्पणैश्च यथायोग्यं सत्कृतवान् ॥१५॥१६॥ तदा नंदेन सत्कृता रोहिणी च दिव्यवस्त्रालंकारादिभिर्भूषिता सती तत्रागतानां गोपिकादीनां सत्कारार्थं व्यचरत् ॥१७॥ तद्दिनमारभ्य नंदस्य गोकुलं सर्वसमृद्धियुक्तं लक्ष्म्याः क्रीडास्थानं चाभूत् ॥१८॥ हे राजन्, एकदा नंदो गोकुलसंरक्षणार्थं

१ नवाश्रागमनयोगान्मम पुत्रो जातः । त्वं महाभाग्यवत्यसीत्यादिना सत्कृता ।

गोपान् स्थापयित्वा कंसस्य प्रतिवर्षं देयं करं दातुं मथुरां गतः ॥१९॥ तदा वसुदेवो नंदमागतं श्रुत्वा राज्ञे दत्तकरं च ज्ञात्वा तस्य दर्शनार्थं तस्य वसतिस्थानं ययौ ॥२०॥ नंद-स्तमागतं वसुदेवं दृष्ट्वोत्थाय प्रीतः सन् दोर्भ्यामालिंगितवान् ॥२१॥ ततस्तेन पूजितः कुशलं पृष्टश्च वसुदेवः सुखासीनो भूत्वेदमाह ॥२२॥ हे भ्रातः, वयोवृद्धस्य तवाधुना पुत्रो जात इति मया श्रुतं तत्समीचीनं जातम् ॥२३॥ किंच । अत्र संसारचक्रे वर्तमानो भवान् मे प्राप्त एतद्दिष्ट्या । यतः प्रियस्य दर्शनं दुर्लभम् ॥२४॥ यथा नद्या ओघेन नीयमानानां तृणादीनामेकत्र स्थितिर्न घटते तथा विचित्रकर्मणां प्रियाणामेकत्र वासो न घटते ॥२५॥ हे नंद, यत्र त्वं गोपैः सहित आस्से तद्बृहद्वनं नाम वनं कुशलं कच्चित् ॥२६॥ हे भ्रातः, मम सुतो मात्रा सह त्वां तातं मन्वानो गोकुले सुखी आस्ते कच्चित् ॥२७॥ हे नंद, पुरुषस्य बंधून्प्रति संपादितो यस्त्रिवर्गः स तेषु बंधुषु क्लिश्यमानेषु सत्सु सुखाय न

वसुदेव उपश्रुत्य भ्रातरं नंदमागतम् ॥ ज्ञात्वा दत्तकरं राज्ञे ययौ तदवमोचनम् ॥२०॥ तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ॥ प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥२१॥ पूजितः सुखमासीनः पृष्ट्वाऽनामयमादृतः ॥ प्रसक्तधीः स्वात्मजयोरिदमाह विशांपते ॥२२॥ दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते ॥ प्रजाशाया निवृत्तस्य प्रजा यत्समपद्यत ॥२३॥ दिष्ट्या संसारचक्रेऽस्मिन्वर्तमानः पुनर्भवः ॥ उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥२४॥ नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ॥ ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥२५॥ कच्चित्पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् ॥ बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥२६॥ भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे ॥ तातं भवंतं मन्वानो भवद्भ्यामुपलालितः ॥२७॥ पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः ॥ न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥२८॥ नंद उवाच ॥ अहो ते देवकीपुत्राः कंसेन बहवो हताः ॥ एकाऽवशिष्टाऽवरजा कन्या साऽपि दिवं गता ॥२९॥ नूनं ह्यदृष्टनिष्ठोऽयमदृष्टपरमो जनः ॥ अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति ॥३०॥ वसुदेव उवाच ॥ करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः ॥ नेह स्थेयं बहुतिथं संत्युत्पाताश्च गोकुले ॥३१॥ श्रीशुक उवाच ॥ इति नंदादयो गोपाः प्रोक्तास्ते शौरिणा ययुः ॥ अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलम् ॥ ३२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे नंदवसुदेवसंगमो नाम पंचमोऽध्यायः ॥५॥ ॥ ॥ ॥ ॥

कल्पते ॥२८॥ नंद उवाच ॥ अहो हे वसुदेव, तव पुत्राः कंसेन बहवो हताः । एका कन्याऽवशिष्टा साऽपि स्वर्गं गता ॥२९॥ हे भ्रातः, पुरुषस्य पुत्रादिसुखप्रदं दैवं यदा हीयते तदैव ते पुत्रादयो नश्यंति । यदा च दैवमनुकूलं भवति तदा वियुक्तानपि पुत्रादीन् पुनः संगमयति । अतस्त्वया दुःखं न भावनीयम् ॥३०॥ वसुदेव उवाच ॥ हे नंद, त्वया राज्ञे वार्षिकः करो दत्तः । युष्माभिर्वयं च दृष्टाः । अतोऽत्र बहुकालं न स्थातव्यम् । यतो गोकुले उत्पाताः संति ॥३१॥ श्रीशुक उवाच ॥ ततो नंदादयो गोपा वसुदेवोक्तं श्रुत्वा तमनुज्ञाप्य शकटैर्गोकुलं ययुः ॥३२॥ इति श्रीमद्भागवतचूर्णि० दशमस्कंधे पूर्वार्धे पंचमोऽध्यायः ॥५॥ ॥ ॥ ॥ ॥

षष्ठे सख्युर्गिरा नंदो व्रजं गच्छन् मृतां पथि। दृष्ट्वा तु राक्षसीं तस्या मृत्युं श्रुत्वाऽथ विस्मितः ॥१॥ श्रीशुक उवाच ॥ अथ नंदो वसुदेवस्य भाषणं न मिथ्या भविष्यतीति चिंतयन् मार्गे हरिं शरणं जगाम ॥१॥ एतर्हिं कंसेन प्रेषिता बालघातिनी पूतना राक्षसी नगर-ग्राम-गोकुलादिषु बालकान् घ्नंती सती चचार ॥२॥ हे नृप, यत्र हरेः श्रवण-कीर्तनादीनि न संति तत्रैव राक्षसादीनां शक्तिः प्रवर्तते। तदा साक्षात्तस्मिन् हरौ का राक्षसेभ्योभयशंका न कापि ॥३॥ सा राक्षसी पूतना एकदा स्त्रीवेषं धृत्वा गोकुले प्राविशत् ॥४॥ तां केशबंध-संसक्त-मल्लिकापुष्पां कृशोदरीं रमणीयवस्त्रां कर्णभूषणकांत्या शोभितमुखाम् ॥५॥ सुंदर-हास्य-कटाक्षावलोकनादिभिर्व्रजौकसां मनो मोहयंतीं पतिदर्शनार्थं प्राप्तां लक्ष्मीमिव गोप्यो

॥ श्रीशुक उवाच ॥ नंदः पथि वचः शौरेर्न मृषेति विचिंतयन् ॥ हरिं जगाम शरणमुत्पातागमशंकितः ॥ १ ॥ कंसेन प्रहिता घोरा पूतना बालघातिनी ॥ शिशूंश्चचार निघ्नंती पुरग्रामव्रजादिषु ॥२॥ न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु ॥ कुर्वंति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि ॥३॥ सा खेचर्येकदोपेत्य पूतना नंदगोकुलम् ॥ योषित्त्वा माययाऽऽत्मानं प्राविशत्कामचारिणी ॥४॥ ता केशबंधव्यतिषक्तमल्लिकां बृहन्नितंबस्तनकृच्छ्रमध्यमाम् ॥ सुवाससं कंपितकर्णभूषणत्विषोल्लसत्कुंतलमंडिताननाम् ॥५॥ वल्गुस्मितापांगविसर्गवीक्षितैर्मनो हरंतीं वनितां व्रजौकसाम् ॥ अमंसतांभोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवागतां पतिम् ॥६॥ बालग्रहस्तत्र विचिन्वती शिशून्यदृच्छया नंदगृहेऽसदंतकम् ॥ बालं प्रतिच्छन्ननिजोरुतेजसं ददर्श तल्पेऽग्निमिवाहितं भसि ॥७॥ विबुध्य तां बालकमारिकाग्रहं चराचरात्मा स निमीलितेक्षणः ॥ अनंतमारोपयदंकमंतकं यथोरगं सुप्तमबुद्धिरज्जुधीः ॥८॥ तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्यांतरा कोशपरिच्छदासिवत् ॥ वरस्त्रियं तत्प्रभया च धर्षिते निरीक्षमाणे जननी ह्यतिष्ठताम् ॥ ९ ॥ तस्मिंस्तनं दुर्जरवीर्यमुल्बणं घोरांऽकमादाय शिशोर्ददावथ ॥ गाढं कराभ्यां भगवान्प्रपीड्य तत्प्राणैः समं रोषसमन्वितोऽपिबत् ॥ १० ॥ सा मुंच मुंचालमिति प्रभाषिणी निष्पीड्यमानाऽखिलजीवमर्मणि ॥ विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्नगात्रा क्षिपती रुरोद ह ॥ ११ ॥ तस्याः स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा ॥ रसा दिशश्च प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपातशंकया ॥ १२ ॥ ॥ ॥ ॥ ॥

मेनिरे ॥६॥ ततः शिशून् विचिन्वती सा पूतना प्रारब्धयोगेन नंदगृहे दुष्टनाशकं बालं तल्पे शयानं ददर्श ॥७॥ तदा हरिर्बालकमारिकां तां ज्ञात्वापि निमीलितनेत्र आस। सा तं बालं गृहीत्वांऽकमारोपयत् ॥८॥ तदा निर्दयचित्तामपि मातुरिव प्रियचेष्टितां तां पूतनां निरीक्षमाणे तत्कांत्या चकिते च यशोदारोहिण्यावतिष्ठताम्। तां न निवारितवत्यौ ॥९॥ ततः सा घोरा बालकमंके निवेश्य तस्मै दुर्जरविषयुक्तं स्तनं ददौ। अथ क्रुद्धो भगवान् तं स्तनं हस्ताभ्यां दृढं प्रपीड्य तस्याः प्राणैः सह पपौ ॥१०॥ तदा सर्वमर्मसु वेदनायुक्ता सा मुंच मुंचेति भाषिणी सती नेत्रे विवृत्य चरणौ च क्षिपंती घर्मव्याप्ता सती रुरोद ॥११॥ तस्याः शब्देन सपर्वता भूमिश्चकंप। सप्तपातालानि दिशश्च प्रतिध्वनियुक्ता

बभूवुः ॥ तदा सर्वे जना वज्रपातशंकया भूमौ पेतुः ॥१२॥ इत्थं सा राक्षसी गतप्राणा सती मुखं विवृत्त्य केश-चरण-भुजान् प्रसार्य स्वेन राक्षसीरूपेण स्थिता सती वज्रेण ताडितो वृत्रासुर इव गोकुले पपात ॥१३॥ पतमानोऽपि तद्देहः षट्क्रोशमध्यवर्तिनो वृक्षान् चूर्णीचकार ॥१४॥ ततस्तत्कलेवरं गिरिकंदरनासिकं आरक्तप्रसृतकेशम् ॥१५॥ अंधकूपवद्गंभीरनेत्रं जलहीनह्रदवदुदरयुक्तं सेतुबंधवत्प्रसृत-भुजोरु-चरण-युक्तं च दृष्ट्वा गोपा गोप्यश्च तत्रसुः ॥१६॥१७॥ ततस्तस्या उरसि क्रीडंतं बालं दृष्ट्वा गोप्यस्तत्रैत्य तं जगृहुः ॥१८॥ ततो यशोदारोहिणीभ्यां सह ता गोप्यो बालस्यांगेषु गोपुच्छभ्रमणादिभी रक्षणविधिं चक्रिरे ॥१९॥ ततस्तं गोप्यो गोमूत्रेण स्नापयित्वा गोरजसा गोमयेन च तस्य ललाटादिषु द्वादशांगेषु केशवादिद्वादशभिर्नामभी रक्षणविधिं चक्रिरे ॥२०॥ ततो गोप्य आचम्य स्वावयवेष्वेकादश-बीजानां न्यासं कृत्वा बालकेऽपि तं न्यासं चक्रुः ॥२१॥ तमाह । हे कृष्ण;

निशाचरीत्थं व्यथितस्तना व्यसुर्व्यादाय केशांश्चरणौ भुजावपि ॥ प्रसार्य गोष्ठे निजरूपमास्थिता वज्राहतो वृत्र इवापतन्नृप ॥१३॥ पतमानोऽपि तद्देहस्त्रिगव्यूत्यंतरद्रुमान् ॥ चूर्णयामास राजेंद्र महदासीत्तदद्भुतम् ॥१४॥ ईषामात्रोग्रदंष्ट्रास्यं गिरिकंदरनासिकम् ॥ गंडशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥१५॥ अंधकूपगभीराक्षं पुलिनारोहभीषणम् ॥ बद्धसेतुभुजोर्वंघ्रिशून्यतोयह्रदोदरम् ॥१६॥ संतत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरम् ॥ पूर्वं तु तन्निःस्वनितभिन्नहृत्कर्णमस्तकाः ॥१७॥ बालं च तस्या उरसि क्रीडंतमकुतोभयम् ॥ गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः ॥१८॥ यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः ॥ रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ॥१९॥ गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम् ॥ रक्षां चक्रुश्च शकृता द्वादशांगेषु नामभिः ॥ २० ॥ गोप्यः संस्पृष्टसलिला अंगेषु करयोः पृथक् ॥ न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥२१॥ अव्यादजोंऽघ्रि मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः ॥ हृत्केशवस्त्वदुर ईश इनस्तु कंठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥२२॥ चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ॥ कोणेषु शंख उरुगाय उपर्युपेंद्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समंतात् ॥२३॥ इंद्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु ॥ श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ २४ ॥ पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान्परः ॥ क्रीडंतं पातु गोविंदः शयानं पातु माधवः ॥२५॥ ॥ ॥

अजस्तव चरणौ रक्षतु । मणिमान् तव जानुनी पातु । यज्ञस्तवोरू पातु । अच्युतः कटितटं पातु । हयशिरा उदरं पातु । केशवो हृदयं पातु । ईश उरस्थलं पातु । इनः कंठं पातु । विष्णुर्भुजौ पातु । उरुक्रमो मुखं पातु । ईश्वरः शिरः पातु ॥२२॥ तथा दिक्षु रक्षणविधिमकुर्वन् । तमाह । गदाधरो हरिः पश्चादस्तु । चापधरो मधुसूदनो दक्षिणेऽस्तु । खड्गधरोऽजनो वामेऽस्तु । शंखधर उरुगायश्चतुष्कोणेषु रक्षतु । उपेंद्र उपरि रक्षतु । तार्क्ष्योऽधो रक्षतु । हलधर आसमंतात्पातु ॥२३॥ हृषीकेश इंद्रियाणि पातु । नारायणः प्राणान् रक्षतु । श्वेतद्वीपपतिश्चित्तं रक्षतु । योगेश्वरो मनो रक्षतु ॥२४॥ पृश्निगर्भो बुद्धिं रक्षतु । भगवानहंकारं रक्षतु । गोविंदः क्रीडंतं पातु । माधवः शयानं रक्षतु ॥२५॥ ॥

वैकुंठो व्रजंतं रक्षतु । श्रीपतिरासीनं रक्षतु । यज्ञभुक् भुंजानं रक्षतु ॥२६॥ तथा डाकिन्यो यातुधान्यो भूतप्रेतपिशाचादयः तथा कोटरा रेवती ज्येष्ठा पूतनादयोऽपस्मारादिरोगाः ॥२७॥२८॥ तथा ये स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ते सर्वे विष्णोर्नामग्रहणान्नश्यंतु ॥२९॥ श्रीशुक उवाच ॥ एवं गोपीभिः कृतरक्षणं सुतं यशोदा स्तनं पाययित्वा शाययामास ॥३०॥ तावन्नंदादयो गोपा गोकुलमेत्य पूतनादेहं दृष्ट्वा विस्मिता बभूवुः आहुश्च ॥३१॥ अहो नूनं वसुदेवो ऋषिर्जातः । यतः स यदाह सोऽयमुत्पातो दृष्टः ॥३२॥ ततो गोपाः परशुभिः पूतनादेहस्य खंडानि कृत्वा दूरे क्षिप्त्वा तानि च काष्ठवेष्टितानि कृत्वा न्यदहन् ॥३३॥ तस्माद्दह्यमानाद्देहादगुरुतुल्यो धूम उत्पन्नः ॥३४॥ एवं सा राक्षसी जिघांसयाऽपि

व्रजंतमव्याद्वैकुंठ आसीनं त्वां श्रियः पतिः ॥ भुंजानं यज्ञभुक् पातु सर्वग्रहभयंकरः ॥२६॥ डाकिन्यो यातुधान्यश्च कूष्मांडा येऽर्भकग्रहाः ॥ भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥२७॥ कोटरा रेवती ज्येष्ठा पूतनामातृकादयः ॥ उन्मादा ये ह्यपस्मारा देहप्राणेंद्रियद्रुहः ॥२८॥ स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये ॥ सर्वे नश्यंतु ते विष्णोर्नामग्रहणभीरवः ॥२९॥ श्रीशुक उवाच ॥ इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् ॥ पाययित्वा स्तनं माता संन्यवेशयदात्मजम् ॥३०॥ तावन्नंदादयो गोपा मथुराया व्रजं गताः ॥ विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ॥३१॥ नूनं बतर्षिः संजातो योगेशो वा समास सः ॥ स एव दृष्टो ह्युत्पातो यदाहानकदुंदुभिः ॥३२॥ कलेवरं परशुभिश्छित्त्वा तत्ते व्रजौकसः ॥ दूरे क्षिप्त्वाऽवयवशो न्यदहन्काष्ठवेष्टितम् ॥३३॥ दह्यमानस्य देहस्य धूमश्चागुरुसौरभः ॥ उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः ॥३४॥ पूतना लोकबालघ्नी राक्षसी रुधिराशना ॥ जिघांसयाऽपि हरये स्तनं दत्त्वाऽऽप सद्गतिम् ॥ ३५ ॥ किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ॥ यच्छन्प्रियतमं किं नु रक्तास्तन्मातरो यथा ॥३६॥ पद्भ्यां भक्तहृदिस्थाभ्यां वंद्याभ्यां लोकवंदितैः ॥ अंगं यस्याः समाक्रम्य भगवानपिबत्स्तनम् ॥३७॥ यातुधान्यपि सा स्वर्गमवाप जननीगतिम् ॥ कृष्णभुक्तस्तनक्षीराः किमु गावो नु मातरः ॥३८॥ पयांसि यासामपिबत्पुत्रस्नेहस्नुतान्यलम् ॥ भगवान्देवकीपुत्रः कैवल्याद्यखिलप्रदः ॥३९॥ तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम् ॥ न पुनः कल्पते राजन्संसारोऽज्ञानसंभवः ॥४०॥ कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः ॥ किमिदं कुत एवेति वदंतो व्रजमाययुः ॥४१॥ ॥ ॥

हरये स्तनं दत्वा सद्गतिं प्राप ॥३५॥ किं पुनः श्रद्धया भक्त्या कृष्णस्य प्रियं कुर्वन् सद्गतिं प्राप्नोतीति वक्तव्यम् ॥३६॥ भक्तहृदये स्थिताभ्यां पद्भ्यां यस्याः शरीरमाक्रम्य भगवान् स्तनं पपौ ॥३७॥ सा राक्षस्यपि मातुः प्राप्तुं योग्यं स्वर्गं प्राप । तदा कृष्णेन यासां स्तनपानं प्रेम्णा कृतं ता गावो मातरश्च स्वर्गं प्राप्नुवंतीति किमु वक्तव्यम् ॥३८॥ तर्हि यासां दुग्धानि मोक्षदो भगवान् पपौ तासां कृष्णे पुत्रस्नेहं कुर्वतीनां गोगोपीनां अज्ञानसंभवः संसार एव पुनः प्राप्तुं योग्यो न भवति ॥३९॥४०॥ गोपास्तु चिताधूमस्य सुगंधमाघ्राय

१ ब्रह्मणा वत्सवत्सपालहरणे कृते तद्दर्पपरिहाराय भगवता वत्सवत्सपालरूपाणि कृत्वा गवां गोपीनां च स्तनपानं कृतं तदभिप्रायेणेदं वर्णनम् ।

किमिदमिति वदंतो गोकुलमाययुः ॥४१॥ ततस्ते गोपैर्वर्णितं पूतनाऽऽगमनादिकं तस्या मृत्युं शिशोः कुशलं च श्रुत्वा विस्मिता आसन् ॥४२॥ ततो नंदः स्वपुत्रं प्रेत्यागतमिव गृहीत्वा मूर्ध्न्यवघ्राय परमं हर्षं लेभे ॥४३॥ हे नृप, यः पुरुषः श्रद्धया एतत्पूतनामोक्षरूपं श्रीकृष्णस्य बालचरितं शृणुयात्स गोविंदे प्रीतिं लभते ॥४४॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे षष्ठोऽध्यायः ॥६॥ ॥ उत्क्षिपन् शकटं व्योम्नि तृणावर्तमधः क्षिपन् । दर्शयन् विश्वमास्ये च कृष्णः क्रीडति सप्तमे ॥१॥ राजोवाच ॥ हे ब्रह्मन्, भगवान् मत्स्याद्यवतारैर्यानि यानि चरितानि करोति तानि तानि नः कर्णसुखानि मनोवेधकानि च भवंति ॥१॥ हे शुक, यच्चरितं शृण्वतः पुंसो मनोग्लानिर्गच्छति । चित्तशुद्धिर्हरौ भक्तिर्भगवद्भक्तसख्यं च भवंति तद्धरेश्चरितं मे वद ॥२॥ अथ अन्यदपि कृष्णस्य बालचरितं मे वद ॥३॥ श्रीशुक उवाच ॥ हे नृप, एकदा कृष्णस्यांगपरिवर्तनसमये करणीये

ते तत्र वर्णितं गोपैः पूतनाऽऽगमनादिकम् ॥ श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन्सुविस्मिताः ॥४२॥ नंदः स्वपुत्रमादाय प्रेत्यागतमुदारधीः ॥ मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ॥४३॥ य एतत्पूतनामोक्षं कृष्णस्यार्भकमद्भुतम् ॥ शृणुयाच्छ्रद्धया मर्त्यो गोविंदे लभते रतिम् ॥४४॥ इति श्रीमद्भा० महा० दश० षष्ठोऽध्यायः ॥६॥ ॥ राजोवाच ॥ येन येनावतारेण भगवान्हरिरीश्वरः ॥ करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो ॥१॥ यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्वं च शुध्यत्यचिरेण पुंसः ॥ भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद मन्यसे चेत् ॥ २ ॥ अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम् ॥ मानुषं लोकमासाद्य तज्जातिमनुरुंधतः ॥ ३ ॥ श्रीशुक उवाच ॥ कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम् ॥ वादित्रगीतद्विजमंत्रवाचकैश्चकार सूनोरभिषेचनं सती ॥४॥ नंदस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः ॥ अन्नाद्यवासःस्रगभीष्टधेनुभिः संजातनिद्राक्षमशीशयच्छनैः ॥ ५ ॥ औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजयती व्रजौकसः ॥ नैवाशृणोद्वै रुदितं सुतस्य सा रुदन्स्तनार्थी चरणावुदक्षिपत् ॥६॥ अधःशयानस्य शिशोरनोऽल्पकप्रवालमृद्वंघ्रिहतं व्यवर्तत ॥ विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥७॥ दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय औत्थानिके कर्मणि याः समागताः ॥ नंदादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै शकटं विपर्यगात् ॥ ( इति ब्रुवंतोऽतिविवादमोहिता जनाः समंतात्परिवव्रुरार्तवत् ) ॥८॥ ॥ ॥

उत्सवाभिषेके तथा तस्मिन्नेव दिने जन्मनक्षत्रयोगे च सति मिलितानां स्त्रीणां मध्ये यशोदा सुगंधतैल-लेपनादिना वाद्यगीतादिभिः सह कृष्णस्याभिषेचनं चकार ॥४॥ ततो यशोदाऽन्नदानादिना पूजितैर्विप्रैः कृतस्वस्त्ययनं पुत्रं प्राप्तनिद्रं ज्ञात्वा शकटाधः प्रेंखे शायितवती ॥५॥ ततः सा तस्मिन्नुत्सवे प्राप्तानां गोपीनां संमानं कुर्वती सती कृष्णरोदनं नाशृणोत् । तदा स्तनपानार्थी कृष्णः पादावूर्ध्वं चालितवान् ॥६॥ ततः शकटाधः शयानस्य शिशोः पादताडितं तच्छकटं विध्वस्तानि नानारसवंति कांस्यादिमयानि पात्राणि यथा भवंति तथा भूत्वा न्युब्जं पपात ॥७॥ ततो यशोदाद्या गोप्यो नंदादयो गोपाश्च तदद्भुतं दृष्ट्वा शकटं कथं विपरीतं पपात । ( इति ब्रुवंतः संतः शकटमासमंतात्परिवव्रुः ) ॥८॥ ॥

तदा तत्र खेलंतो बालका अनेन रुदता कृष्णेन स्वचरणप्रहारेणेदं शकटं पातितमित्याहुः ॥९॥ तद्बालभाषितं गोपादयः सत्यं न मेनिरे। यतो बालस्याप्रमेयं बलं ते न विदुः ॥१०॥ ततो यशोदा रुदंतं शिशुं गृहीत्वा ग्रहपीडाशंकिता भूत्वा विप्रैः कृताशीर्वचनं तं पुत्रं स्तनमपाययत् ॥११॥ ततो गोपैः शकटं पूर्ववत् स्थापितम्। ततो विप्रा ग्रहादिहोमं कृत्वा शकटं दध्यक्षतादिभिः पूजयामासुः ॥१२॥ किंच। ये विप्रा मिथ्याभाषण-हिंसा-दंभादिरहितास्तेषामाशिषो व्यर्था न भवेयुरित्यभिप्रेत्य नंदगोपः पुत्रं स्वपुरतो गृहीत्वा विप्रद्वारा ऋग्यजुः-सामवेदमंत्राभिमंत्रितजलैरभिषेच्य ॥१३॥१४॥ स्वस्त्ययनं वाचयित्वा पुत्रोदयार्थं विप्रेभ्यः षड्रसयुक्तमन्नं सर्वगुणयुक्ता गाश्च प्रादात्। ततस्ते विप्रा आशिषो युयुजुः ॥१५॥१६॥

ऊचुरव्यवसितमतीन्गोपान्गोपीश्च बालकाः ॥ रुदताऽनेन पादेन क्षिप्तमेतन्न संशयः ॥९॥ न ते श्रद्दधिरे गोपा बालभाषितमित्युत ॥ अप्रमेयं बलं तस्य बालकस्य न ते विदुः ॥१०॥ रुदंतं सुतमादाय यशोदा ग्रहशंकिता ॥ कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥११॥ पूर्ववत्स्थापितं गोपैर्बलिभिः सपरिच्छदम् ॥ विप्रा हुत्वाऽर्चयांचक्रुर्दध्यक्षतकुशांबुभिः ॥१२॥ येऽसूयानृतदंभेर्ष्याहिंसामानविवर्जिताः ॥ न तेषां सत्यशीलानामाशिषो विफलाः कृताः ॥१३॥ इति बालकमादाय सामर्ग्यजुरुपाकृतैः ॥ जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः ॥१४॥ वाचयित्वा स्वस्त्ययनं नंदगोपः समाहितः ॥ हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् ॥१५॥ गावः सर्वगुणोपेता वासःस्रग्रुक्ममालिनीः ॥ आत्मजाभ्युदयार्थाय प्रादात्ते चान्वयुंजत ॥१६॥ विप्रा मंत्रविदो युक्तास्तैर्याः प्रोक्तास्तथाऽऽशिषः ॥ ता निष्फला भविष्यंति न कदाचिदपि स्फुटम् ॥१७॥ एकदा रोहमारूढं लालयंती सुतं सती ॥ गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् ॥१८॥ भूमौ निधाय तं गोपी विस्मिता भारपीडिता ॥ महापुरुषमादध्यौ जगतामास कर्मसु ॥१९॥ दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रणोदितः ॥ चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥२०॥ गोकुलं सर्वमावृण्वन्मुष्णंश्चक्षूंषि रेणुभिः ॥ ईरयन्सुमहाघोरशब्देन प्रदिशो दिशः ॥२१॥ मुहूर्तमभवद्गोष्ठं रजसा तमसाऽऽवृतम् ॥ सुतं यशोदा नापश्यत्तस्मिन्न्यस्तवती यतः ॥२२॥ नापश्यत्कश्चनात्मानं परं चापि विमोहितः ॥ तृणावर्तनिसृष्टाभिः शर्कराभिरुपद्रुतः ॥२३॥ इति खरपवनचक्रपांसुवर्षे सुतपदवीमबलाऽविलक्ष्य माता ॥ अतिकरुणमनुस्मरंत्यशोचद्भुवि पतिता मृतवत्सका यथा गौः ॥२४॥ ॥

ता विप्रैरुक्ता आशिषो निष्फलाः कदाचिदपि न भवंति ॥१७॥ अथैकदा यशोदा स्वोत्संगे स्थितं सुतं लालयंती सती शिशोर्भारं वोढुं न सेहे ॥१८॥ ततो यशोदा विस्मिता सती तं भुवि निधाय तत्कल्याणार्थमीश्वरं ध्यात्वा गृहकर्मसु प्रवृत्ता ॥१९॥ तावत्कंसप्रेरितस्तृणावर्तनामा दैत्यश्चक्रवातस्वरूपेणागत्य गोकुलं रजोभिर्व्यापयन् दिशश्च घोरशब्देन नादयन्नासीनं शिशुमाकाशे नीतवान् ॥२०॥२१॥ तदा मुहूर्तपर्यंतं गोकुलं रजस्तमोभ्यां व्याप्तमभूत्। तदा यशोदा यत्र सुतं न्यस्तवती तत्र नापश्यत् ॥२२॥ तदा तृणावर्तोत्पादितधूल्या पीडितो जनः कोऽप्यात्मानं परं च नापश्यत् ॥२३॥ एवं वायुचक्राद्रजोवृष्टौ जातायां सत्यां यशोदा सुतमार्गं न ज्ञात्वा मृतवत्सा गौरिव भुवि निपत्य शुशोच ॥२४॥ ॥

ततः पांसुवृष्टियुक्ते वायौ शांते सति यशोदाया रोदनं श्रुत्वा तत्रागता अश्रुपूर्णमुख्यो गोप्यस्तदनु रुरुदुः ॥२५॥ स दैत्यः कृष्णं हरन् आकाशं गतोऽपि ततः परं जडं जातं कृष्णं गृहीत्वा मथुरां गंतुं नाशक्नोत् ॥२६॥ स कृष्णं पर्वतप्रायं मन्यमानः कृष्णेन गले धृतश्च सन् तं त्यक्तुं नाशक्नोत् ॥२७॥ किंच । गलग्रहणान्निश्चेष्टो बहिर्निर्गतलोचनो दैत्यो गत-प्राणः सन् बालेन सह व्रजे शिलायां पपात ॥२८॥ तदा आकाशाच्छिलायां पतितं विशीर्णावयवं दैत्यं रुदत्यः स्त्रियो दृष्ट्वा ॥२९॥ तस्योरसि लंबमानं कृष्णं च दृष्ट्वा तं शीघ्रं गृहीत्वा यशोदायै समर्प्य गोप्यो गोपाश्च लब्धमनोरथा भूत्वा हर्षं प्रापुराहुश्च ॥३०॥ अहो एष बालो दैत्येन मृत्युं प्रापितोऽपि पुनः प्राप्तः । अन्ये तानाहुः । हिंस्रः स्वपापेनैव मृतः ।

रुदितमनु निशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः ॥ रुरुदुरनुपलभ्य नंदसूनुं पवन उपारतपांसुवर्षवेगे ॥२५॥ तृणावर्तः शांतरयो वात्यारूपधरोऽहरन् ॥ कृष्णं नभोगतो गंतुं नाशक्नोद्भूरिभारभृत् ॥२६॥ तमश्मानं मन्यमान आत्मनो गुरुमत्तया ॥ गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् ॥२७॥ गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः ॥ अव्यक्तरावो न्यपतत्सहबालो व्यसुर्व्रजे ॥२८॥ तमंतरिक्षात्पतितं शिलायां विशीर्णसर्वावयवं करालम् ॥ पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदत्यो ददृशुः समेताः॥२९॥ प्रादाय मात्रे प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लंबमानम् ॥ तं स्वस्तिमंतं पुरुषादनीतं विहायसा मृत्युमुखात्प्रमुक्तम् ॥ गोप्यश्च गोपाः किल नंदमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम् ॥३०॥ अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात्पुनः॥ हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद्विमुच्यते॥३१॥ किं नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तमुत भूतसौहृदम् ॥ यत्संपरेतः पुनरेव बालको दिष्ट्या स्वबंधून्प्रणयन्नुपस्थितः॥३२॥ दृष्ट्वाऽद्भुतानि बहुशो नंदगोपो बृहद्वने ॥ वसुदेववचो भूयो मानयामास विस्मितः ॥ ३३ ॥ एकदाऽर्भकमादाय स्वांकमारोप्य भामिनी ॥ प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥३४॥ पीतप्रायस्य जननी सा तस्य रुचिरस्मितम् ॥ मुखं लालयती राजन् जृंभतो ददृशे इदम् ॥३५॥ खं रोदसी ज्योतिरनीकमाशाः सूर्येंदुवह्निश्वसनांबुधींश्च ॥ द्वीपान्नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजंगमानि ॥३६॥ सा वीक्ष्य विश्वं सहसा राजन्संजातवेपथुः ॥ संमील्य मृगशावाक्षी नेत्रे आसीत्सुविस्मिता ॥३७॥ इति श्रीमद्भा० म० द० पू० तृणावर्तमोक्षो नाम सप्तमोऽध्यायः ॥७॥ ॥

साधुस्तु सर्वत्र समदृष्ट्या भयान्मुच्यते ॥३१॥ किंच । अस्माभिस्तपःपूजनादि किं कृतम् । यतो मृतोऽपि बालो हर्षयन् पुनः प्राप्तः ॥३२॥ एवं बहून्यद्भुतानि नंदो दृष्ट्वा पुनः पुनर्वसुदेवभाषणं सत्यमिति मानयामास ॥३३॥ अथैकदा यशोदा सुतं स्वांकमारोप्य स्तनं पाययामास ॥३४॥ तदा पीतप्रायस्तनस्य तस्य जृंभतः सतो मुखं लालयंती सती तत्रेदं जगद्ददृशे ॥३५॥ तदाह । आकाशं स्वर्गं भूमिं ज्योतिश्चक्रं दिशः सूर्य-चंद्राग्नि-वायु-वरुणान् द्वीप-पर्वत-नदीर्वनानि चराचराणि भूतानि ॥३६॥ हे राजन्, एवं सा विश्वं वीक्ष्य भयात्कंपयुक्ता सती नेत्रे निमील्य विस्मिता आसीत् ॥३७॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वा० सप्तमोऽध्यायः ॥७॥ ॥ ॥ ॥ ॥

अष्टमे नामकर्मास्य बालक्रीडाकुतूहले । मृद्भक्षणादियोगे च विश्वरूपं निरूप्यते ॥१॥ श्रीशुक उवाच ॥ हे राजन्, वसुदेवेन पुत्रयोर्नामकरणार्थं प्रेरितो यादवपुरोहितो गर्गो नंदस्य गोकुलं जगाम ॥१॥ नंदस्तं दृष्ट्वोत्थाय कृतांजलिः सन् ईश्वरबुद्ध्या पूजयामास ॥ २ ॥ एवं कृतातिथ्यं मुनिं स जगाद । हे ब्रह्मन्, पूर्णमनोरथस्य तव वयं किं करवाम ॥ ३ ॥ त्वादृशां महतां स्वाश्रमादन्यत्र गमनं न स्वार्थं किंतु गृहस्थाश्रमिणां कल्याणार्थं भवति ॥४॥ किंच । त्वया अतींद्रियज्ञानसाधनं ज्योतिःशास्त्रं कृतम् । येन पुमान् भूतं भविष्यं च फलं वेत्ति ॥५॥ त्वं ब्रह्मविदां श्रेष्ठोऽसि । अतो मे पुत्रयोर्नामकर्मादिसंस्कारान् कर्तुमर्हसि । यतो ब्राह्मणः सर्वेषां गुरुरस्ति ॥६॥ गर्ग उवाच ॥ हे नंद, अहं यदूनामाचार्य इति

॥ श्रीशुक उवाच ॥ ॥ गर्गः पुरोहितो राजन्यदूनां सुमहातपाः ॥ व्रजं जगाम नंदस्य वसुदेवप्रचोदितः ॥१॥ तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृतांजलिः ॥ आनर्चाधोक्षजधिया प्रणिपातपुरःसरम् ॥२॥ सूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम् ॥ नंदयित्वाऽब्रवीद्ब्रह्मन्पूर्णस्य करवाम किम् ॥३॥ महद्विचलनं नृणां गृहिणां दीनचेतसाम् ॥ निःश्रेयसाय भगवन्कल्पते नान्यथा क्वचित् ॥४॥ ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतींद्रियम् ॥ प्रणीतं भवता येन पुमान्वेद परावरम् ॥५॥ त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान्कर्तुमर्हसि ॥ बालयोरनयोर्नृणां जन्मना ब्राह्मणो गुरुः ॥६॥ गर्ग उवाच ॥ यदूनामहमाचार्यः ख्यातश्च भुवि सर्वदा ॥ सुतं मया संस्कृतं ते मन्यते देवकीसुतम् ॥७॥ कंसः पापमतिः सख्यं तव चानकदुंदुभेः ॥ देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति ॥८॥ इति संचिंतयन् श्रुत्वा देवक्या दारिकावचः ॥ अपि हंता गताशंकस्तर्हि तन्नोऽनयो भवेत् ॥९॥ नंद उवाच ॥ अलक्षितोऽस्मिन्रहसि मामकैरपि गोव्रजे ॥ कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम् ॥१०॥ श्रीशुक उवाच ॥ एवं संप्रार्थितो विप्रः स्वचिकीर्षितमेव तत् ॥ चकार नामकरणं गूढो रहसि बालयोः ॥११॥ गर्ग उवाच ॥ अयं हि रोहिणीपुत्रो रमयन्सुहृदो गुणैः ॥ आख्यास्यते राम इति बलाधिक्याद्बलं विदुः ॥ यदूनामपृथग्भावात्संकर्षणमुशंत्युत ॥१२॥ आसन्वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः ॥ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥१३॥ ॥ ॥ ॥

सदा विख्यातोऽस्मि । मया संस्कारे कृते तव पुत्रं कंसो देवकीसुतमिति कल्पयेत् ॥७॥ किंच । पापबुद्धिः कंसो देवकीकन्यावचः श्रुत्वा देवक्या अष्टमो गर्भः स्त्री भवितुं नार्हतीति चिंतयन् तव वसुदेवस्य च सख्यं ज्ञात्वाऽत्रागत्य यदि पुत्रं हनिष्यति तर्ह्यस्माकं महानन्यायः स्यात् ॥८॥९॥ नंद उवाच ॥ हे नंद, त्वमेकांते मामकैरप्यलक्षितः सन् स्वस्तिवाचनपूर्वकं अनयोः पुत्रयोर्द्विजातिसंस्कारं कुरु ॥१०॥ श्रीशुक उवाच ॥ एवं प्रार्थितो गर्गः स्वस्य कर्तुमिष्टं बालयोर्नामकरणं रहसि चकार ॥११॥ गर्ग उवाच ॥ हे नंद, अयं रोहिणीपुत्रो गुणैः सुहृदो रमयन् राम इत्याख्यास्यते । इमं बलाधिक्याद्बलं यदूनामपृथग्भावात्संकर्षणं च वक्ष्यंति ॥१२॥ किंच । अस्य पुत्रस्य शुक्लो रक्तः पीतश्चेति त्रयो वर्णाः

१ कुतश्चिद्धेतोर्विवदमानानां यादवानामन्योन्यशिक्षया सर्वैकमत्यकरणात् ।

पुरा कृतयुगादावासन् । इदानीं तु कृष्णतां गतः । अतः कृष्ण इत्येकं नाम स्यात् ॥१३॥ किंच । अयं तवात्मजः पूर्वं वसुदेवस्य क्वचिज्जातः । अतो वासुदेव इति वदंति ॥१४॥ अस्य गुणकर्मानुरूपाणि नामानि बहूनि संति । तानि सर्वाणि अहं न वेद्मि । जना अपि न विदुः ॥१५॥ अयं कृष्णो वः कल्याणं करिष्यति । अनेन च सर्वदुःखानि यूयमनायासेन तरिष्यथ ॥१६॥ किंच । पुरा वेनराज्ञि मृते सति चौरपीडिताः साधवोऽनेन रक्ष्यमाणाः संतश्चौरान् जिग्युः ॥१७॥ तथा च ये पुरुषा अस्मिन् प्रीतिं कुर्वंति तेषां शत्रवः पराभवं न कुर्वंति ॥१८॥ तस्मात् हे नंद, अयं तवात्मजो गुणैरैश्वर्येण कीर्त्या च नारायणसमः । अत एनं पालयस्व ॥१९॥ एवं नंदं कथयित्वा गर्गे स्वगृहं गते सति नंदो हर्षितः

प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ॥ वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥१४॥ बहूनि संति नामानि रूपाणि च सुतस्य ते ॥ गुणकर्मानुरूपाणि[1] तान्यहं वेद नो जनाः ॥१५॥ एष वः श्रेय आधास्यद्गोपगोकुलनंदनः ॥ अनेन सर्वदुर्गाणि यूयमंजस्तरिष्यथ ॥१६॥ पुराऽनेन व्रजपते साधवो दस्युपीडिताः ॥ अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ॥१७॥ य एतस्मिन्महाभागाः प्रीतिं कुर्वंति मानवाः ॥ नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः ॥१८॥ तस्मान्नंदात्मजोऽयं ते नारायणसमो गुणैः ॥ श्रिया कीर्त्याऽनुभावेन गोपायस्व समाहितः ॥१९॥ इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते ॥ नंदः प्रमुदितो मेन आत्मानं पूर्णमाशिषाम् ॥२०॥ कालेन व्रजताऽल्पेन गोकुले रामकेशवौ ॥ जानुभ्यां सह पाणिभ्यां रिंगमाणौ विजह्रतुः ॥२१॥ तावंघ्रियुग्ममनुकृष्य सरीसृपंतौ घोषप्रघोषरुचिरं व्रजकर्दमेषु ॥ तन्नादहृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरंति मात्रोः ॥२२॥ तन्मातरौ निजसुतौ घृणया स्नुवंत्यौ पंकांगरागरुचिरावुपगुह्य दोर्भ्याम् ॥ दत्त्वा स्तनं प्रपिबतोः स मुखं निरीक्ष्य मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥२३॥ यर्ह्यंगनादर्शनीयकुमारलीलावंतर्व्रजे तदबलाः प्रगृहीतपुच्छैः ॥ वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षंत्य उज्झितगृहा जहृषुर्हसंत्यः॥२४॥ शृंग्यग्निदंष्ट्र्यसिजलद्विजकंटकेभ्यः क्रीडापरावतिचलौ स्वसुतौ निषेद्धुम् ॥ गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोऽनवस्थाम् ॥२५॥ ॥ ॥ ॥

सन् आत्मानं पूर्णमनोरथं मेने ॥२०॥ ततः स्वल्पेन कालेन गोकुले रामकृष्णौ हस्तसहिताभ्यां जानुभ्यां रिंगमाणौ संतौ विजह्रतुः ॥२१॥ ततो गोकुलकर्दमेषु कटि-पाद-भूषणनादेन हृष्टमनसौ संतौ इतस्ततो गच्छंतं जनं त्रिचतुराणि पदान्यनुगम्य भीतवद्यशोदारोहिण्योः समीपमाजग्मतुः ॥२२॥ तदा ते मातरौ तौ सुतौ हस्ताभ्यामालिंग्य मुखे स्तनं दत्वाऽल्पदशनं तयोर्मुखं वीक्ष्य मुदं ययतुः ॥२३॥ यदा तौ रामकृष्णौ स्त्रीणां दर्शनीयकुमारलीलौ जातौ तदा गोकुलमध्ये ताभ्यां धृतपुच्छैर्वत्सैरितस्तत आकृष्टौ तौ दृष्ट्वा गोप्यो हर्षिता आसन् ॥२४॥ किंच । यदा तज्जनन्यौ तौ क्रीडातत्परावतिचपलौ स्वसुतौ पश्वग्नि-खड्ग-जल-पक्षि-कंटकेभ्यो निषेद्धुं गृहकृत्यानि च कर्तुं न शेकाते । तदा ते मातरौ गृहसौख्यस्य

[1] गुणानुरूपाणि ईश्वरः सर्वज्ञ इत्यादीनि । कर्मानुरूपाणि गोपतिर्गोवर्धनोद्धरण इत्यादीनि ।

परां काष्ठां प्रापतुः ॥२५॥ हे राजर्षे, ततः स्वल्पेन कालेन रामकृष्णौ अघृष्टजानुभिः पद्भिर्विचक्रमतुः ॥२६॥ ततः कृष्णो व्रजबालकैः रामेण च सह स्त्रीणा हर्षं जनयन् चिक्रीडे ॥२७॥ तदा गोप्यः श्रीकृष्णस्य कौमारचापलं वीक्ष्य यशोदायाः समीपमेत्यैवं जगदुः ॥२८॥ हे यशोदे, अयं कृष्णोऽकाले वत्सान् मुंचति । अथ कल्पितैश्चौर्योपायैर्दधि पयश्चात्ति । मर्कटेभ्यो ददाति च । तेषां मध्ये तृप्तत्वेन कोऽपि न भक्षयति चेत्तर्हि भांडं भिनत्ति । दध्यादेरलाभे सति गृहं दग्धं करिष्यामीति क्रुद्धः सन् बालान् रोदयित्वा याति ॥ २९ ॥ तथा यदा तुंगशिक्यस्थभांडेषु हस्तस्पर्शो न भवेत् तदा पीठकोलूखलाद्यैर्विधिं प्रकल्प्य तेषु छिद्रं रचयति । यदा चांधकारयुक्ते गृहे भांडानि स्थाप्यंते तदा कृष्णो धृतमणिगणं

कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले ॥ अघृष्टजानुभिः पद्भिर्विचक्रमतुरंजसा ॥२६॥ ततस्तु भगवान्कृष्णो वयस्यैर्व्रजबालकैः ॥ सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदम् ॥२७॥ कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम् ॥ शृण्वत्याः किल तन्मातुरिति होचुः समागताः ॥२८॥ वत्सान्मुंचन्क्वचिदसमये क्रोशसंजातहासः स्तेयं स्वाद्वत्त्यथ दधि पयः कल्पितैः स्तेययोगैः ॥ मर्कान्भोक्ष्यन्विभजति स चेन्नात्ति भांडं भिनत्ति द्रव्यालाभे स गृहकुपितो यात्युपक्रोश्य तोकान् ॥ २९ ॥ हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैश्छिद्रं ह्यंतर्निहितवयुनः शिक्यभांडेषु तद्वित् ॥ ध्वांतागारे धृतमणिगणं स्वांगमर्थप्रदीपं काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥३०॥ एवं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथाऽऽस्ते ॥ इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्था प्रहसितमुखी नह्युपालब्धुमैच्छत् ॥३१॥ एकदा क्रीडमानास्ते रामाद्या गोपदारकाः ॥ कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥३२॥ सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी ॥ यशोदा भयसंभ्रांतप्रेक्षणाक्षमभाषत ॥ ३३ ॥ कस्मान्मृदमदांतात्मन्भवान्भक्षितवान्रहः ॥ वदंति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम् ॥३४॥ नाहं भक्षितवानंब सर्वे मिथ्याऽभिशंसिनः ॥ यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखम् ॥३५॥ यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान्हरिः ॥ व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः ॥ ३६ ॥ ॥ ॥ ॥

स्वांगमेवार्थप्रदीपं कृत्वा तानि पश्यति ॥३०॥ यदा च रे रे चोर, इत्याक्षिप्तो भवति तदा त्वमेव चोरोऽहं गृहस्वामीति जल्पति । एवं धार्ष्ट्यानि कुरुते । तथा स्वर्चिते गृहे मूत्रपुरीषोत्सर्गादीनि कृत्वा त्वत्समीपे साधुरिवास्ते । एवं क्रुद्धानां गोपीनां वचः श्रुत्वाऽपि यशोदा प्रहसितमुखी सती तमाक्षेप्तुं नैच्छत् ॥३१॥ अथैकदा क्रीडमाना रामादिगोपपुत्राः कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥३२॥ सा कृष्णं करे धृत्वा निर्भर्त्स्य भीतं तमाह ॥३३॥ हे कृष्ण, कस्मात्त्वं मृदं भक्षितवान् । एते बाला बलरामोऽपि वदति ॥३४॥ तदा कृष्ण आह । हे मातः, अहं मृदं न भक्षितवान् । एते मिथ्या वदंति । यदि सत्यगिरस्तर्हि मे मुखं समक्षं पश्य ॥३५॥ एवं चेत्तर्हि मुखं प्रसारयेति मात्रोक्ते हरिर्मुखं प्रसारि-

तवान् ॥३६॥ ततः सा तन्मुखे विश्वं ददर्श । तदाह । स्थावरं जंगमं आकाशं दिशः पर्वत-द्वीपसहितं भूर्लोकं तारागणसहितं चंद्रम् ॥३७॥ पंचमहाभूतानि इंद्रियाणि शब्दादिवि-
पयान् गुणत्रयम् ॥३८॥ जीव-काल-स्वभाव-सहितमेतत्सर्वं जगत् पुत्रस्य विदारिते स्वल्पे मुखे दृष्ट्वा तत्र च स्वसहितं गोकुलं दृष्ट्वा शंकां प्राप्ता सत्याह ॥३९॥ अहो अयं किं स्वप्नः
उत देवमाया किंवा मदीय एव कश्चिद्बुद्धिमोहः । अथवाऽस्य ममार्भकस्य स्वाभाविकमैश्वर्यम् ॥४०॥ इत्युक्त्वा चरमं पक्षं गृहीत्वा कृष्ण ईश्वर इति निश्चित्य जगाद । यस्याश्रये-
णेदं जगत्प्रतीयते तत्पदमहं प्रणताऽस्मि ॥४१॥ तथा यन्मायया ममासौ पतिरेष मे सुत इमा गोप्यो गोपाश्च ममैवेति कुबुद्धिर्भवति स मे गतिः स्यात् ॥४२॥ एवं ज्ञाततत्त्वायां

सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः ॥ साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नींदुतारकम् ॥३७॥ ज्योतिश्चक्रं जलं तेजो नभस्वान्वियदेव
च ॥ वैकारिकाणींद्रियाणि मनोमात्रा गुणास्त्रयः ॥३८॥ एतद्विचित्रं सहजीवकालस्वभावकर्माशयलिंगभेदम् ॥ सूनोस्तनौ वीक्ष्य विदारिता-
स्ये व्रजं महात्मानमवाप शंकाम् ॥३९॥ किं स्वप्न एतदुत देवमाया किंवा मदीयो बत बुद्धिमोहः ॥ अथो अमुष्यैव ममार्भकस्य यः कश्च-
नौत्पत्तिक आत्मयोगः ॥४०॥ अथो यथावन्न वितर्कगोचरं चेतोमनःकर्मवचोभिरंजसा ॥ यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणता-
ऽस्मि तत्पदम् ॥४१॥ अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती ॥ गोप्यश्च गोपाः सहगोधनाश्च मे यन्माययेत्थं कुमतिः
स मे गतिः ॥४२॥ इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः ॥ वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः ॥४३॥ सद्यो नष्टस्मृतिर्गोपी
सारोप्यारोहमात्मजम् ॥ प्रवृद्धस्नेहकलिलहृदयाऽऽसीद्यथा पुरा ॥४४॥ त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः ॥ उपगीयमानमाहात्म्यं
हरिं सा मन्यतात्मजम् ॥४५॥ राजोवाच ॥ नंदः किमकरोद्ब्रह्मन् श्रेय एवं महोदयम् ॥ यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ॥४६॥
पितरौ नान्वविंदेतां कृष्णोदारार्भकेहितम् ॥ गायंत्यद्यापि कवयो यल्लोकशमलापहम् ॥४७॥ श्रीशुक उवाच ॥ द्रोणो वसूनां प्रवरो धरया
सह भार्यया ॥ करिष्यमाण आदेशान्ब्रह्मणस्तमुवाच ह ॥४८॥ जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ ॥ भक्तिः स्यात्परमा लोके ययांऽजो
दुर्गतिं तरेत् ॥४९॥ अस्त्वित्युक्तः स भगवान्व्रजे द्रोणो महायशाः ॥ जज्ञे नंद इति ख्यातो यशोदा सा धराऽभवत् ॥५०॥ ॥ ॥

यशोदायां सत्यां कृष्णः पुत्रस्नेहमयीं स्वमायां व्यतनोत् ॥४३॥ तया नष्टस्मृतिर्गोपी तमंकमारोप्य पूर्ववदासीत् ॥४४॥ किंच । सा यशोदा वेदोपनिषदादिभिर्गीयमानमाहात्म्यं
हरिं पुत्रमिति मेने ॥४५॥ राजोवाच ॥ हे ब्रह्मन्, नंद एवं महोदयं श्रेयः किं चकार । तथा यशोदा च । यस्याः स्तनं हरिः पपौ ॥४६॥ किंच । रामकृष्णयोर्बालचरितं तत्पितरौ
देवकीवसुदेवौ न ज्ञातवंतौ । एवंविधं पुण्यं नंदयशोदाभ्यां किं कृतम् ॥४७॥ श्रीशुक उवाच ॥ हे नृप, अष्टवसूनां मध्ये द्रोणो नाम प्रथमो वसुर्धरानाम्न्या भार्यया सह ब्रह्मणो
गोपालादिलक्षणामाज्ञां करिष्यमाणः सन् तमाह ॥४८॥ हे ब्रह्मन्, आवयोर्भुवि जातयोः सतोर्हरौ भक्तिः स्यादेवं प्रसादं कुरु ॥४९॥ ततो ब्रह्मणा तथेत्युक्तः स द्रोणो गोकुले नंद-

इति नाम्ना जज्ञे । तत्पत्नी च यशोदेति नाम्ना जज्ञे ॥५०॥ तस्मात्पुत्रीभूते हरौ तयोर्दंपत्योर्भक्तिरासीत् ॥५१॥ कृष्णोऽपि ब्रह्मणा प्रोक्तं सत्यं कर्तुं सहरामो गोकुले वसन् स्वली-
लया तेषां प्रीतिं चक्रे ॥५२॥ इति श्रीम० चू० दश० पू० अष्टमोऽध्यायः ॥८॥ ॥ नवमे पय उत्सिक्ते मत्वा गोप्यथ तत्कृतम् । विलोक्य भांडभंगादि कृष्णं दाम्ना बबंध तम्
॥१॥ श्रीशुक उवाच ॥ एकदा गृहदासीषु इतरकर्मसु नियुक्तासु सतीषु यशोदा स्वयं दधिमंथनं चकार ॥१॥ तदा पुत्रस्य यानि बालचरित्राणीह लोके गीतानि तानि स्मरंती सत्य-
गायत ॥२॥ हे नृप, सा कटितटे सूत्रबद्धं क्षौमं वस्त्रं बिभ्रती, तथा स्नेहस्नुतं स्तनयुग्मं, रज्ज्वाकर्षणेन श्रमयुक्तभुजयोश्चलत्कंकणौ, कर्णयोः कुंडले स्वेदयुक्तं मुखं च बिभ्रती सती
दधि ममंथ ॥३॥ तदा स्तनपानकामो हरिस्तां प्राप्य दधिमंथानं धृत्वा न्यषेधत् ॥४॥ तदा सा तमंकमारोप्य सस्मितं तस्य मुखं वीक्षती सती स्तनमपाययत् । तदा चुल्ल्यां स्था-

ततो भक्तिर्भगवति पुत्रीभूते जनार्दने ॥ दंपत्योर्नितरामासीद्गोपगोपीषु भारत ॥५१॥ कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः ॥ सह-
रामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया ॥५२॥ इति श्री० म० द० पू० विश्वरूपदर्शनेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ श्रीशुक उवाच ॥ एकदा गृह-
दासीषु यशोदा नंदगेहिनी ॥ कर्मांतरनियुक्तासु निर्ममंथ स्वयं दधि ॥ १ ॥ यानि यानीह गीतानि तद्बालचरितानि च ॥ दधिनिर्मंथने
काले स्मरंती तान्यगायत ॥२॥ क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकंपं च सुभ्रूः ॥ रज्ज्वाकर्षश्रमभुजचल-
त्कंकणौ कुंडले च स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममंथ ॥३॥ तां स्तन्यकाम आसाद्य मथ्नंतीं जननीं हरिः ॥ गृहीत्वा दधिमंथानं न्यषे-
धत्प्रीतिमावहन् ॥४॥ तमंकमारूढमपाययत्स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् ॥ अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधि-
श्रिते ॥५॥ संजातकोपः स्फुरितारुणाधरं संदश्य दद्भिर्दधिमंथभाजनम् ॥ भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयंगवमंतरं गतः ॥ ६ ॥
उत्तार्य गोपी सुशृतं पयः पुनः प्रविश्य संदृश्य च दध्यमत्रकम् ॥ भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती ॥ ७ ॥
उलूखलांघ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं शिचि स्थितम् ॥ हैयंगवं चौर्यविशंकितेक्षणं निरीक्ष्य पश्चात्सुतमागमच्छनैः ॥८॥ तामात्त-
यष्टिं प्रसमीक्ष्य सत्वरस्ततोऽवरुह्यापससार भीतवत् ॥ गोप्यन्वधावन्न यमाप योगिनां क्षमं प्रवेष्टुं तपसेरितं मनः ॥९॥ ॥ ॥

पिते दुग्धे तापेनोद्रिच्यमाने सत्यतृप्तं पुत्रं हित्वा शीघ्रं तस्योत्तारणार्थं ययौ ॥५॥ तदा कृष्णः क्रुद्धः सन् मंथनपात्रं पाषाणेन भित्वांऽतर्गृहं गत्वा नवनीतमभक्षयत् ॥६॥ ततो
गोपी पय उत्तार्य पुनर्मंथनस्थलमेत्य दधिभांडं भग्नं दृष्ट्वा तत्पुत्रकर्म ज्ञात्वा कृष्णं च तत्र न दृष्ट्वा जहास ॥७॥ ततः परिवर्तितस्योलूखलस्योपरि स्थितं शिक्यस्थं नवनीतं मर्कटाय
ददतं चौर्यशंकितेक्षणं कृष्णं दृष्ट्वा शनैः पृष्ठत आजगाम ॥८॥ ततः कृष्णो धृतयष्टिं यशोदां वीक्ष्योलूखलादुत्तीर्य भीतवत्पलायामास । तदा गोपी योगिनामपि तपसा तदाकारतां
नीतं मनो यं न प्राप तमन्वधावत् ॥९॥ ॥ ॥ ॥ ॥ ॥ ॥

एवं कृष्णमनुगच्छंती कटिपश्चाद्भागभारेण स्तंभितगतिर्यशोदा दुःखेन तं धृतवती ॥१०॥ ततः कृतापराधं रुदंतं भयेन विह्वलनेत्रं सुतंप्रति भयोत्पादनार्थं हस्ते धृत्वाऽभर्त्सयत् ॥११॥ ततः सुतं भीतं ज्ञात्वा यष्टिं त्यक्त्वा तं रज्ज्वा बद्धुमैच्छत् ॥१२॥ बंधनं हि परिवृतेन दाम्ना अंतरावृतस्य पूर्वापरविभागवतो व्याप्यस्य भवति । अस्य कृष्णस्य तु अंतर्बहिः पूर्वमपरं च नास्ति । अयमेव जगतः पूर्वादिको जगद्रूपश्च ॥१३॥ एवंभूतं भगवंतं पुत्रमिति मत्वा यशोदोलूखले दाम्ना बद्धुं प्रवृत्ता ॥१४॥ तदा बध्यमानस्य तद्दाम द्व्यंगुलोनमभूत्तदा तेनान्यद्दाम संदधे ॥१५॥ तदपि द्व्यंगुलं न्यूनं जातम् । तेनान्यदपि संदधे । तदपि द्व्यंगुलं न्यूनं जातम् ॥१६॥ एवं यशोदा स्वगृहस्थितानि दामानि संदधत्यपि तं

अन्वंचमाना जननी बृहच्चलच्छ्रोणीभराक्रांतगतिः सुमध्यमा ॥ जवेन विस्रंसितकेशबंधनच्युतप्रसूनानुगतिः परामृशत् ॥१०॥ कृतागसं तं प्ररुदंतमक्षिणी कषंतमंजन्मषिणी स्वपाणिना ॥ उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयंत्यवागुरत् ॥ ११ ॥ त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला ॥ इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा ॥१२॥ न चांतर्न बहिर्यस्य न पूर्वं नापि चापरम् ॥ पूर्वापरं बहिश्चांतर्जगतो यो जगच्च यः ॥१३॥ तं मत्वाऽऽत्मजमव्यक्तं मर्त्यलिंगमधोक्षजम् ॥ गोपिकोलूखले दाम्ना बबंध प्राकृतं यथा ॥ १४ ॥ तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः ॥ द्व्यंगुलोनमभूत्तेन संदधेऽन्यच्च गोपिका ॥१५॥ यदासीत्तदपि न्यूनं तेनान्यदपि संदधे ॥ तदपि द्व्यंगुलं न्यूनं यद्यदादत्त बंधनम् ॥१६॥ एवं स्वगेहदामानि यशोदा संदधत्यपि ॥ गोपीनां सुस्मयंतीनां स्मयंती विस्मिताऽभवत् ॥१७॥ स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः ॥ दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत्स्वबंधने ॥१८॥ एवं संदर्शिता ह्यंग हरिणा भक्तवश्यता ॥ स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥१९॥ नेमं विरिंचो न भवो न श्रीरप्यंगसंश्रया ॥ प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥२०॥ नायं सुखापो भगवान्देहिनां गोपिकासुतः ॥ ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह ॥ २१ ॥ कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः ॥ अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ॥२२॥ पुरा नारदशापेन वृक्षतां प्रापितौ मदात् ॥ नलकूवरमणिग्रीवाविति ख्यातौ श्रियाऽन्वितौ ॥२३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे गोपीप्रसादो नाम नवमोऽध्यायः ॥९॥ ॥ ॥ ॥ ॥

बद्धुमसमर्था भूत्वा स्मितं कुर्वतीनां गोपीनां मध्ये स्वयमपि हसंती विस्मयमाप ॥१७॥ एवं स्विन्नगात्रायाः स्वमातुः श्रमं दृष्ट्वा कृष्णः कृपया स्वबंधनयोग्य आसीत् ॥१८॥ हे नृप, ब्रह्मादिपालकैः सहितमिदं जगद्यस्य स्वाधीनमस्ति तेन स्ववशेन कृष्णेनैवं भक्तवश्यता दर्शिता ॥१९॥ मुक्तिदाद्भगवतः तस्य बंधनरूपं यं प्रसादं गोपी प्राप तं प्रसादं ब्रह्मा पुत्रोऽपि शिवः सखाऽपि लक्ष्मीर्जायाऽपि न लेभिरे ॥२०॥ किंच । भगवान् यथा भक्तिमतां सुखेन प्राप्यस्तथा योगिनामपि न ॥२१॥ अथ कृष्णो गृहकृत्येषु यशोदायां व्यग्रायां सत्यां पूर्वं कुबेरपुत्रौ गुह्यकौ संतावपि तदानीमर्जुनवृक्षौ जातौ ददर्श ॥२२॥ हे राजन्, तौ नलकूबरमणिग्रीवनामानौ पुरा नारदशापेन मदाद्वृक्षतां प्रापितावास्तुः ॥२३॥ इति श्री० चू०

 ॥ दशमेऽपातयद्रिंगन्नंतरा यमलार्जुनौ । तत्रत्याभ्यां च देवाभ्या कृष्णः स्तुत इतीर्यते ॥१॥ राजोवाच ॥ हे ब्रह्मन्, तयोः शापस्य कारणं यत्कर्म, येन च भागवतोत्तमस्य नारदस्यापि क्रोधः प्राप्तस्तत्कथ्यताम् ॥१॥ श्रीशुक उवाच ॥ हे नृप, कुवेरात्मजौ नलकूवरमणिग्रीवौ धनमदेन गर्विष्ठौ भूत्वा एकदा वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ संतौ गंगातीरस्थे कैलासोपवने गायद्भिः स्त्रीजनैः सह चेरतुः ॥२॥३॥ ततस्तौ गंगामध्ये प्रविश्य युवतिभिः सह चिक्रीडतुः ॥४॥ तावद्यदृच्छया तत्र नारद आगतः सन् तौ मत्तौ जाताविति ज्ञातवान् ॥५॥ ततो नारदं दृष्ट्वा नग्नाः स्त्रियः शापभीताः सत्यो वस्त्राणि पर्यधुस्तौ गुह्यकौ न पर्यधुः ॥६॥ अथ नारदस्तौ मत्तौ दृष्ट्वा तयोर-

॥ राजोवाच ॥ कथ्यतां भगवन्नेतत्तयोः शापस्य कारणम् ॥ यत्तद्विगर्हितं कर्म येन वा देवर्षेस्तमः ॥ १ ॥ श्रीशुक उवाच ॥ रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ ॥ कैलासोपवने रम्ये मंदाकिन्यां मदोत्कटौ ॥२॥ वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ ॥ स्त्रीजनैरनुगायद्भि-श्चेरतुः पुष्पिते वने ॥३॥ अंतः प्रविश्य गंगायामंभोजवनराजिनि ॥ चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥४॥ यदृच्छया च देवर्षिर्भगवां-स्तत्र कौरव ॥ अपश्यन्नारदो देवौ क्षीवाणौ समबुध्यत ॥५॥ तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशंकिताः ॥ वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ॥६॥ तौ दृष्ट्वा मदिरामत्तौ श्रीमदांधौ सुरात्मजौ ॥ तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ॥ ७ ॥ नारद उवाच ॥ न ह्यन्यो जुषतो जोष्यान्बुद्धिभ्रंशो रजोगुणः ॥ श्रीमदादाभिजात्यादिर्यत्र स्त्री द्यूतमासवः ॥८॥ हन्यंते पशवो यत्र निर्दयैरजितात्मभिः ॥ मन्यमानै-रिमं देहमजरामृत्यु नश्वरम् ॥९॥ देवसंज्ञितमप्यंते कृमिविड्भस्मसंज्ञितम्[1] ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥१०॥ देहः किम-न्नदातुः स्वं निषेक्तुर्मातुरेव च ॥ मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ॥११॥ एवं साधारणं देहमव्यक्तप्रभवाप्ययम् ॥ को विद्वानात्म-सात्कृत्वा हंति जंतूनृतेऽसतः ॥१२॥ असतः श्रीमदांधस्य दारिद्र्यं परमंजनम् ॥ आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥१३॥ यथा कंटक-विद्धांगो जंतोर्नेच्छति तां व्यथाम् ॥ जीवसाम्यं गतो लिंगैर्न तथाऽविद्धकंटकः ॥१४॥ ॥ ॥

नुग्रहार्थं शापं दास्यन्निदं जगाद ॥७॥ नारद उवाच ॥ विषयान् सेवमानस्य पुरुषस्य बुद्धिभ्रंशकः श्रीमदादन्यः सत्कुल-विद्यादिजनितो मदो नास्ति । यत्र श्रीमदे स्त्री द्यूतं मद्यं चास्ति ॥८॥ तथा यत्र श्रीमदे इमं देहं स्थिरं मत्वा निर्दयैः पुरुषैः पशवो हन्यंते ॥९॥ अयं देहो नृपसंज्ञितोऽपि अंते कृमिविड्भस्मसंज्ञितो भवति । तदर्थं यो भूतद्रोग्धा स किं स्वार्थं वेद । नैव वेद ॥१०॥ अयं देहः किं स्वस्य अन्नदातुः पितुः मातुः मातामहस्य बलिनो विक्रेतुः शुनो वेति न निश्चीयते ॥११॥ एवं साधारणं देहमात्मेति मत्वा दुर्जनान् विहाय को विद्वान् जंतून् हंति न कोऽपि ॥१२॥ किंच । श्रीमदांधस्य पुरुषस्य परमौषधं दारिद्र्यम् । यतो दरिद्रः पुमनात्मवद्भूतानि पश्यति ॥१३॥ यथा कंटक-विद्ध-शरीरस्तां व्यथां

१ आदिभिर्भक्षितो विड्संज्ञितो दग्धो भस्मसंज्ञितोऽन्यदा कृमिसंज्ञितः ।

जंतोर्नेच्छति तथाऽविद्धकंटकः पुरुषोऽन्यव्यथां न जानाति ॥१४॥ एवं दरिद्रः पुमान् सर्वमदैर्मुक्तः सन् यदृच्छया कष्टं प्राप्नोति तदेव तस्य तपः ॥१५॥ क्षुधया कृशदेहस्यान्नकांक्षिणो दरिद्रस्य पुंस इंद्रियाणि च शुष्यंति । हिंसाऽपि निवर्तते ॥१६॥ किंच दरिद्रस्यैव साधुसमागमो भवति । ततः स शुद्ध्यति ॥१७॥ ननु साधूनामपि धनिकः प्रियः स्यान्न दरिद्र इति तत्राह । साधूनां धनगर्वितैः पुंभिः किं कर्तव्यं न किमपि ॥१८॥ अतोऽनयोः श्रीमदांधयोर्नलकूबरमणिग्रीवयोरज्ञानजं मदं हरिष्यामि ॥१९॥ यत इमौ लोकपालपुत्रौ भूत्वाऽप्यात्मानं वस्त्रहीनं न जानीतः ॥२०॥ अतः कंचित्कालपर्यंतं वृक्षतां गच्छताम् । तत्रापि मत्प्रसादेन स्मृतिः स्यात् ॥२१॥ किंच । इमौ दिव्यशतवर्षे गते हरेः सांनिध्यं

दरिद्रो निरहंस्तंभो मुक्तः सर्वमदैरिह ॥ कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धि तस्य परं तपः ॥१५॥ नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्नकांक्षिणः ॥ इंद्रियाण्यनुशुष्यंति हिंसाऽपि विनिवर्तते ॥१६॥ दरिद्रस्यैव युज्यंते साधवः समदर्शिनः ॥ सद्भिः क्षिणोति तं तर्षं तत आराद्विशुद्ध्यति ॥ १७ ॥ साधूनां समचित्तानां मुकुंदचरणैषिणाम् ॥ उपेक्ष्यैः किं धनस्तंभैरसद्भिरसदाश्रयैः ॥१८॥ तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदांधयोः ॥ तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः ॥१९॥ यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ ॥ न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥२०॥ अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः ॥ स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥२१॥ वासुदेवस्य सांनिध्यं लब्ध्वा दिव्यशरच्छते ॥ वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः ॥२२॥ श्रीशुक उवाच ॥ एवमुक्त्वा स देवर्षिर्गतो नारायणाश्रमम् ॥ नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ ॥२३॥ ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः ॥ जगाम शनकैस्तत्र यत्रास्तां यमलार्जुनौ ॥ २४ ॥ देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ॥ तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥२५॥ इत्यंतरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ ॥ आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् ॥२६॥ बालेन निष्कर्षयताऽन्वगुलूखलं तद्दामोदरेण तरसोत्कलितांघ्रिबंधौ ॥ निष्पेततुः परमविक्रमितातिवेपस्कंधप्रवालविटपौ कृतचंडशब्दौ ॥२७॥ तत्र श्रिया परमया ककुभः स्फुरंतौ सिद्धावुपेत्य कुजयोरिव जातवेदाः ॥ कृष्णं प्रणम्य शिरसाऽखिललोकनाथं बद्धांजली विरजसाविदमूचतुः स ॥२८॥ कृष्ण कृष्ण महायोगिंस्त्वमाद्यः पुरुषः परः ॥ व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥२९॥ ॥

प्राप्य पुनर्देवत्वं लब्ध्वा मदनुग्रहाल्लब्धभक्ती भविष्यतः ॥२२॥ श्रीशुक उवाच ॥ एवमुक्त्वा नारदो नारायणाश्रमं गतः । ततस्तौ नलकूबरमणिग्रीवौ गोकुले यमलार्जुनौ बभूवतुः ॥२३॥ हे नृप, कृष्ण एवं नारदवचः सत्यं कर्तुं यत्र तौ वृक्षावास्तां तत्र शनैर्जगाम ॥२४॥ किंच । नारदो मेऽतिप्रियः अतस्तदुक्तं साधयिष्यामीति मनसि निधाय ॥२५॥ कृष्णस्तयोर्यमलार्जुनयोर्मध्यतो निर्ययौ । कृष्णस्य प्रवेशमात्रेणोलूखलं तिर्यग्गतम् ॥२६॥ तदाकर्षयता कृष्णेनोत्पाटितमूलबंधौ तौ चंडशब्दं कृत्वा पेततुः ॥२७॥ ततः स्वकांत्या दिशः प्रकाशयंतौ नलकूबरमणिग्रीवौ स्वस्वरूपं प्राप्य कृष्णं नत्वा बद्धांजली संतौ जगदतुः ॥२८॥ हे कृष्ण, हे महायोगिन्, त्वमाद्यः पुरुषोऽसि । स्थूलसूक्ष्मात्मकमिदं विश्वं तव स्वरूपम-

स्तीति ब्रह्मविदो जानंति ॥२९॥ हे भगवन्, सर्वभूतानां ये देहेंद्रियादयस्तेषां रक्षकः कालश्च त्वमेवासि ॥३०॥ किंच । महत्तत्वं प्रकृतिः पुरुषश्च त्वमेव ॥३१॥ दृश्यत्वेन वर्तमानै-र्बुद्ध्यहंकारादिभिस्त्वं न गृह्यसे । जीवाद्युत्पत्तेः प्रागेव स्वप्रकाशतया सिद्धं त्वां ज्ञातुं कोऽर्हति ॥३२॥ एवंभूताय भगवते वासुदेवाय ब्रह्मणे तुभ्यं नमः ॥३३॥ अशरीरिणो यस्याव-तारा मत्स्यादिशरीरेषु ज्ञायंते ॥३४॥ स त्वं सर्वलोकस्योत्कर्षाय मोक्षाय च सांप्रतमवतीर्णोऽसि ॥३५॥ हे परमकल्याण, हे परममंगल, शांताय यादवानां पतये वासुदेवाय तुभ्यं नमः ॥३६॥ हे कृष्ण, कुबेरपुत्रौ नौप्रति स्वस्थानं गंतुमाज्ञां देहि । आवयोस्त्वद्दर्शनं नारदस्यानुग्रहादासीत् ॥३७॥ हे हरे, स्वस्थानं गतयोरावयोर्वाणी तव गुणानुकथनेऽस्तु ।

त्वमेकः सर्वभूतानां देहास्वात्मेंद्रियेश्वरः ॥ त्वमेव कालो भगवान्विष्णुरव्यय ईश्वरः ॥ ३० ॥ त्वं महान्प्रकृतिः सूक्ष्मा रजःसत्वतमोमयी ॥ त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥३१॥ गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ॥ कोन्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः ॥३२॥ तस्मै तुभ्यं भगवते वासुदेवाय वेधसे ॥ आत्मद्योतगुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥३३॥ यस्यावतारा ज्ञायंते शरीरेष्वशरीरिणः ॥ तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसंगतैः ॥३४॥ स भवान्सर्वलोकस्य भवाय विभवाय च ॥ अवतीर्णोंऽशभागेन सांप्रतं पतिराशिषाम् ॥३५॥ नमः परमकल्याण नमः परममंगल ॥ वासुदेवाय शांताय यदूनां पतये नमः ॥३६॥ अनुजानीहि नौ भूमंस्तवानुचरकिंकरौ ॥ दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥३७॥ वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः ॥ स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥३८॥ श्रीशुक उवाच ॥ इत्थं संकीर्तितस्ताभ्यां भगवान्गोकुलेश्वरः ॥ दाम्ना चोलूखले बद्धः प्रहसन्नाह गुह्यकौ ॥३९॥ श्रीभगवानुवाच ॥ ज्ञातं मम पुरैवैतदृषिणा करुणात्मना ॥ यच्छ्रीमदांधयोर्वाग्भिर्विभ्रंशोऽनुग्रहः कृतः ॥४०॥ साधूनां समचित्तानां सुतरां मत्कृतात्मनाम् ॥ दर्शनान्नो भवेद्बंधः पुंसोऽक्ष्णोः सवितुर्यथा ॥ ४१ ॥ तद्गच्छतं मत्परमौ नलकूबर सादनम् ॥ संजातो मयि भावो वामीप्सितः परमोऽभवः ॥४२॥ श्रीशुक उवाच ॥ इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः पुनः ॥ बद्धोलूखलमामंत्र्य जग्मतुर्दिशमुत्तराम् ॥४३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे नारदशापो नाम दशमोऽध्यायः ॥१०॥ ॥ ॥ ॥

कर्णौ तव कथाश्रवणे । हस्तौ तव पूजायाम् । मनस्तव पादयोः स्मरणे । शिरस्तव निवासभूत-जगत्प्रणामेऽस्तु । दृष्टिश्च त्वन्मूर्तीनां सतां दर्शनेऽस्तु ॥३८॥ श्रीशुक उवाच ॥ एवं तयोर्वाक्यं श्रुत्वा दाम्नोलूखले बद्धः कृष्णस्तौ प्रत्याह ॥३९॥ श्रीभगवानुवाच ॥ हे गुह्यकौ, मयैतन्नारदशापादि पुरैव ज्ञातम् ॥४०॥ साधूनां दर्शनाद्बंधो न भवेत् । सूर्यस्य दर्शनान्नेत्रयोर्यथा दर्शनप्रतिबंधो न भवति तद्वत् ॥४१॥ अतो युवां मत्परौ संतौ स्वस्थानं गच्छतम् । युवयोर्मयि भक्तिर्जातैवास्ति सैव संसारनिवृत्तिकरी अस्ति ॥४२॥ श्रीशुक उवाच । हे नृप, ततस्तौ नलकूबरमणिग्रीवौ कृष्णं पुनःपुनर्नत्वा परिक्रम्यामंत्र्य चोत्तरां दिशं जग्मतुः ॥४३॥ इति श्रीम० चू० दश० पूर्व० दशमोऽध्यायः ॥१०॥ ॥ ॥ ॥

एकादशे समागत्य वृंदावनमथार्भकैः । वत्सान् पालयतानेन हतौ वत्सवकासुरौ ॥१॥ श्रीशुक उवाच ॥ हे राजन्, ततो नंदादयो गोपाः पततोर्वृक्षयोः शब्दं श्रुत्वा वज्रपातो जात इति भयशंकिताः संतस्तत्राजग्मुः ॥१॥ तत्र भुवि पतितौ वृक्षौ दृष्ट्वा तत्पतनकारणं न ज्ञात्वा बभ्रमुः ॥२॥ तावदुलूखलं विकर्षंतं दाम्ना बद्धं बालं दृष्ट्वा कस्य राक्षसादेरिदं कर्मेत्याहुः ॥३॥ तदा तत्रस्था बाला उलूखलं विकर्षता वृक्षयोर्मध्यगतेनानेन कृष्णेन वृक्षौ पातितौ। ताभ्यां निर्गतौ दिव्यौ पुरुषावपि वयं दृष्टवंत इत्यूचुः ॥४॥ तद्बालवचस्ते केचित्तार्किका गोपा न जगृहुरेव । केचित्संदेहयुक्तचित्ता बभूवुः ॥५॥ तत्रोलूखले दाम्ना बद्धं सुतं दृष्ट्वा प्रहसद्वदनो नंदस्तं मुमोच ॥६॥ अथ कृष्णो गोपीभिः करतालादिना प्रोत्साहितः सन् नृत्यति स्म । कदाचित्प्रशंसितः संस्तद्वशो भूत्वोद्गायति स्म ॥७॥ क्वचित्केनचिदिदमानयेति कृताज्ञः सन् पीठकोन्मान-पादुकं केवलं बिभर्ति । हस्तचालनं च कुरुते ॥८॥

॥ श्रीशुक उवाच ॥ गोपा नंदादयः श्रुत्वा द्रुमयोः पततो रवम् ॥ तत्राजग्मुः कुरुश्रेष्ठ निर्घातभयशंकिताः ॥१॥ भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ ॥ बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥२॥ उलूखलं विकर्षंतं दाम्ना बद्धं च बालकम् ॥ कस्येदं कुत आश्चर्यमुत्पात इति कातराः ॥३॥ बाला ऊचुरनेनेति तिर्यग्गतमुलूखलम् ॥ विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥४॥ न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् ॥ बालस्योत्पाटनं तर्वोः केचित्संदिग्धचेतसः ॥५॥ उलूखलं विकर्षंतं दाम्ना बद्धं स्वमात्मजम् ॥ विलोक्य नंदः प्रहसद्वदनो विमुमोच ह ॥ ६ ॥ गोपीभिः स्तोभितोऽनृत्यद्भगवान्बालवत्क्वचित् ॥ उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयंत्रवत् ॥७॥ बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम् ॥ बाहुक्षेपं च कुरुते स्वानां च प्रीतिमावहन् ॥८॥ दर्शयंस्तद्विदां लोक आत्मनो भृत्यवश्यताम् ॥ व्रजस्योवाह वै हर्षं भगवान्बालचेष्टितैः ॥९॥ (क्रीणीहि भो फलानीति श्रुत्वा सत्वरमच्युतः ॥ फलार्थी धान्यमादाय ययौ सर्वफलप्रदः ॥१०॥ फलविक्रयिणी तस्य च्युतधान्यं करद्वयम् ॥ फलैरपूरयद्रत्नैः फलभांडमपूरि च ॥११॥ सरित्तीरगतं कृष्णं भग्नार्जुनमथाह्वयत् ॥ रामं च रोहिणी देवी क्रीडंतं बालकैर्भृशम् ॥ १२ ॥ नोपेयातां यदाऽऽहूतौ क्रीडासंगेन पुत्रकौ ॥ यशोदां प्रेषयामास रोहिणी पुत्रवत्सलाम् ॥ १३ ॥ क्रीडंतं सा सुतं बालैरतिवेलं सहाग्रजम् ॥ यशोदाऽजोहवीत्कृष्णं पुत्रस्नेहस्नुतस्तनी ॥१४॥ ॥ ॥ ॥ ॥

एवं भगवान् कृष्ण आत्मनो भक्तवश्यतां दर्शयन् बालचेष्टितैर्गोकुलस्य हर्षमुवाह ॥९॥ कदाचिद्यशोदया भो कृष्ण, फलानि गृहाणेत्युक्तः सन् सर्वफलप्रदो भगवान् फलार्थी भूत्वा हस्ताभ्यां धान्यमाददे ॥१०॥ यदा च फलविक्रेत्र्या गलिते धान्ये तस्य करद्वयं फलैः पूरितं तदा फलभांडं रत्नैः पूर्णमभवत् ॥११॥ अथ कदाचिद्रोहिणी सरित्तीरगतं कृष्णं रामं चाजुहाव ॥१२॥ एवमाहूतावपि कृष्णरामौ क्रीडासक्ततया यदा नागतौ तदा रोहिणी तयोरानयनार्थं यशोदां प्रेषितवती ॥ १३ ॥ तदा पुत्रस्नेहस्नुतस्तनी सा यशोदा सहाग्रजं बालैः सह दीर्घं कालं क्रीडंतं कृष्णमाह्वयति स्म ॥१४॥ ॥ ॥ ॥ ॥ ॥

हे कृष्ण, हे कमलाक्ष, हे तात, एहि स्तनं पिब । विहारैरलम् । क्रीडित्वा त्वं श्रांतोऽसि ॥१५॥ रामंप्रति वदति । हे राम कुलनंदन, कृष्णेन सह त्वमागच्छ । प्रातरेव कृताहारस्त्वमधुना भोक्तुमर्हसि ॥१६॥ हे कृष्ण, भोक्ष्यमाणो व्रजाधिपस्त्वां प्रतीक्षते । अत आगत्यावयोः प्रियं विधीयताम् । हे बालकाः, यूयं स्वस्वगृहान् यात ॥१७॥ हे कृष्ण, त्वं धूल्या मलिनदेहो जातोऽसि अतः स्नानं कुरु । अद्य भवतो जन्मनक्षत्रमस्ति । अतो विप्रेभ्यो गाः देहि ॥ १८ ॥ हे राम, तव वयस्यान् मातृमृष्टान् स्वलंकृतांश्च पश्य । त्वमपि स्नात्वा भुक्त्वा स्वलंकृतश्च भूत्वा विहर ॥१९॥ हे राजन्, स्नेहनिबद्धमना यशोदा ब्रह्मादिमुकुटमणिं भगवंतं सुतं मत्वा सरामं तं हस्ते गृहीत्वा स्ववाटं नीतवती ॥२०॥ गोपवृद्धा

कृष्ण कृष्णारविंदाक्ष तात एहि स्तनं पिब ॥ अलं विहारैः क्षुत्क्षांतः क्रीडाश्रांतोऽसि पुत्रक ॥१५॥ हे रामागच्छ ताताशु सानुजः कुलनंदन ॥ प्रातरेव कृताहारस्तद्भवान्भोक्तुमर्हति ॥१६॥ प्रतीक्षते त्वां दाशार्ह भोक्ष्यमाणो व्रजाधिपः ॥ एह्यावयोः प्रियं धेहि स्वगृहान्यात बालकाः ॥१७॥ धूलिधूसरितांगस्त्वं पुत्र मज्जनमावह ॥ जन्मर्क्षमद्य भवतो विप्रेभ्यो देहि गाः शुचिः ॥१८॥ पश्य पश्य वयस्यांस्ते मातृमृष्टान्स्वलंकृतान् ॥ त्वं च स्नातः कृताहारो विहरस्व स्वलंकृतः ॥१९॥ इत्थं यशोदा तमशेषशेखरं मत्वा सुतं स्नेहनिबद्धधीर्नृप ॥ हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम् ॥२०॥ गोपवृद्धा महोत्पाताननुभूय बृहद्वने ॥ नंदादयः समागम्य व्रजकार्यममंत्रयन् ॥ २१ ॥ तत्रोपनंदनामाऽऽह गोपो ज्ञानवयोधिकः ॥ देशकालार्थतत्त्वज्ञः प्रियकृद्रामकृष्णयोः ॥ २२ ॥ उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः ॥ आयांत्यत्र महोत्पाता बालानां नाशहेतवः ॥२३॥ मुक्तः कथंचिद्राक्षस्या बालघ्न्या बालको ह्यसौ ॥ हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥२४॥ चक्रवातेन नीतोऽयं दैत्येन विपदं वियत् ॥ शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः ॥२५॥ यन्न म्रियेत द्रुमयोरंतरं प्राप्य बालकः ॥ असावन्यतमो वापि तदप्यच्युतरक्षणम् ॥२६॥ यावदौत्पातिकोऽरिष्टो व्रजं नाभिभवेदितः ॥ तावद्बालानुपादाय यास्यामोऽन्यत्र सानुगाः ॥२७॥ वनं वृंदावनं नाम पशव्यं नवकाननम् ॥ गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥२८॥ ॥ ॥ ॥

व्रजे महोत्पाताननुभूय एकदा सर्वे मिलित्वा गोकुलस्य हितकृत्यं विचारयामासुः ॥२१॥ तत्र ज्ञानवयोधिक उपनंदनामा गोप आह ॥२२॥ हे गोपाः, अस्माभिरितो बृहद्वनाच्छीघ्रमन्यत्र गंतव्यम् । अत्र बालानां नाशहेतव उत्पाता आयांति ॥२३॥ कथंचिद्बालघ्न्या राक्षस्या अयं कृष्णो मुक्तः । तथा हरेः प्रसादाच्छकटं च तदुपरि नापतत् ॥२४॥ तथा तृणावर्तेनायमाकाशं नीतः । ततः शिलायां पतितोऽपि दैवें रक्षितः ॥२५॥ किंच । वृक्षयोर्मध्यं प्राप्याप्यसौ बालोऽन्यो वा न मृतः । इदमीश्वरेण रक्षणं कृतम् ॥२६॥ अतो यावदन्य औत्पातिकोऽनर्थो व्रजे न भवेत्तावदितो बालान् गृहीत्वाऽन्यत्र यास्यामः ॥२७॥ इतः समीपं वृंदावनं नाम वनं गोपगोपीगवां सेव्यं पवित्रपर्वत-तृण-लतायुक्तं वर्तते ॥ २८ ॥

तत्र भवतां यदि रोचते तर्ह्यद्यैव वयं यास्यामः । शकटान् नियुंक्त । गोधनानि पुरतो यांतु ॥२९॥ एतच्छ्रुत्वा गोपाः साध्वित्युक्त्वा स्वान् स्वान् शकटसमूहान् संयोज्य शकटेषु गृहसाहित्यानि तथा वृद्धबालस्त्रियो निधाय गृहीतधनुष्याः ॥३०॥३१॥ गोधनानि पुरस्कृत्य शृंगाणि पूरयंतस्तूर्यघोषेण पुरोहितैः सह ययुः ॥३२॥ तदा सुवस्त्रालंकारादिधारिण्यो गोप्यः शकटारूढाः सत्यः कृष्णलीला जगुः ॥३३॥ तथा यशोदारोहिण्यावेकं शकटमारुह्य कृष्णरामाभ्यां सह रेजतुः ॥३४॥ एवं ग्रीष्मादिसर्वकालेष्वपि सुखावहं वृंदावनं प्रविश्य शकटैरर्धचंद्रवद्वसतिस्थानं चक्रुः ॥३५॥ किंच । वृंदावनं गोवर्धनं यमुनापुलिनानि च दृष्ट्वा रामकृष्णयोः परमो हर्ष आसीत् ॥३६॥ एवं बालचेष्टितैर्व्रजौकसां प्रीतिं दत्वा

तत्तत्राद्यैव यास्यामः शकटान्युंक्त माचिरम् ॥ गोधनान्यग्रतो यांतु भवतां यदि रोचते ॥२९॥ तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः ॥ व्रजान्स्वान्स्वान्समायुज्य ययू रूढपरिच्छदाः ॥३०॥ वृद्धान्बालान्स्त्रियो राजन्सर्वोपकरणानि च ॥ अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः ॥३१॥ गोधनानि पुरस्कृत्य शृंगाण्यापूर्य सर्वतः ॥ तूर्यघोषेण महता ययुः सहपुरोहिताः ॥३२॥ गोप्यो रूढरथा नूत्नकुचकुंकुमकांतयः ॥ कृष्णलीला जगुः प्रीता निष्ककंठ्यः सुवाससः ॥३३॥ तथा यशोदारोहिण्यावेकं शकटमास्थिते ॥ रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥३४॥ वृंदावनं संप्रविश्य सर्वकालसुखावहम् ॥ तत्र चक्रुर्व्रजावासं शकटैरर्धचंद्रवत् ॥३५॥ वृंदावनं गोवर्धनं यमुनापुलिनानि च ॥ वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप ॥३६॥ एवं व्रजौकसां प्रीतिं यच्छंतौ बालचेष्टितैः ॥ कलवाक्यैः स्वकालेन वत्सपालौ बभूवतुः ॥३७॥ अविदूरे व्रजभुवः सह गोपालदारकैः ॥ चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ ॥३८॥ क्वचिद्वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित् ॥ क्वचित्पादैः किंकिणीभिः क्वचित्कृत्रिमगोवृषैः ॥३९॥ वृषायमाणौ नर्दंतौ युयुधाते परस्परम् ॥ अनुकृत्य रुतैर्जंतूंश्चेरतुः प्राकृतौ यथा ॥४०॥ कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः ॥ वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् ॥४१॥ तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः ॥ दर्शयन्बलदेवाय शनैर्मुग्ध इवासदत् ॥४२॥ ॥ ॥ ॥ ॥

कालेन तौ वत्सपालौ बभूवतुः ॥३७॥ अथ कौमारलीलां निरूपयति । ततस्तौ व्रजभुवः समीपे गोपबालैः सह वत्सान् चारयामासतुः ॥३८॥ क्वचिद्वेणुं वादयतः तथा क्षेपणैर्बिल्वामलकादीनि क्षिपतः । क्वचित्किंकिणीयुक्तपादैरामलकादीनि ताडयतः । क्वचित् कृत्रिमगोवृषैः सह स्वयं वृषायमाणौ नर्दंतौ संतौ मिथो युयुधाते । किंच । हंसमयूरादीन् जंतून् शब्दैरनुकृत्य चेरतुः ॥३९॥४०॥ कदाचिद्बालैः सह वत्सांश्चारयतोः सतोस्तयो रामकृष्णयोर्जिघांसुर्दैत्यः प्राप्तः ॥४१॥ तं वत्सरूपिणं वत्ससमूहगतं वीक्ष्य कृष्णो रामं दर्शयित्वा तत्समीपं

१ वत्सपाला एव द्वित्राः कंबलादिपिहिता वृषरूपमनुकुर्वंति तैः सह । २ तदनुकारिशब्दान् कुर्वंतौ ।

गत्वा ॥४२॥ तं सलांगूलं पश्चात्पादयोर्धृत्वा भ्रामयित्वा भ्रामणमात्रेण गतप्राणं तं कपित्थवृक्षाग्रे प्राहिणोत् । तदा स महाकायो भूत्वा कपित्थफलैः सह पपात ॥४३॥ तं वीक्ष्य वालाः कृष्णं प्रशशंसुः साध्वित्यूचुः । देवाश्च पुष्पवृष्टिं चक्रुः ॥४४॥ (गोप्यश्च हतं वत्सासुरं श्रुत्वा विस्मिता जाताः) एवं तौ वत्सपालौ भूत्वा सप्रातराशौ वत्सांश्चारयंतौ संतौ विचेरतुः ॥४५॥ अथैकदा सर्वे वालाः स्वं स्वं वत्सकुलमादाय जलसमीपं गत्वा जलं पाययित्वा स्वयं च जलं पपुः ॥४६॥ तत्र ते वाला गिरेः शृंगमिव स्थितमेकं पक्षिणं ददृशुः ॥४७॥ हे राजन्, स वको नामाऽसुरः सहसाऽऽगत्य तीक्ष्णतुंडेन कृष्णं जग्रास ॥४८॥ ततो वकेन ग्रस्तं कृष्णं दृष्ट्वा रामं विना सर्वे वाला मूर्छिता वभूवुः ॥४९॥ ततस्तालुमू-

गृहीत्वाऽपरपादाभ्यां सहलांगूलमच्युतः ॥ भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम् ॥ स कपित्थैर्महाकायः पात्यमानैः पपात ह ॥४३॥ तं वीक्ष्य विस्मिता वालाः शशंसुः साधु साध्विति ॥ देवाश्च परिसंतुष्टा वभूवुः पुष्पवर्षिणः ॥४४॥ (वत्सासुरं हतं श्रुत्वा व्रजे गोप्यश्च विस्मिताः ॥) तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ ॥ सप्रातराशौ गोवत्सांश्चारयंतौ विचेरतुः ॥४५॥ स्वं स्वं वत्सकुलं सर्वे पाययिष्यंत एकदा ॥ गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम् ॥४६॥ ते तत्र ददृशुर्वाला महासत्वमवस्थितम् ॥ तत्रसुर्वज्रनिर्भिन्नं गिरेः शृंगमिव च्युतम् ॥४७॥ स वै वको नाम महानसुरो वकरूपधृक् ॥ आगत्य सहसा कृष्णं तीक्ष्णतुंडोऽग्रसद्वली ॥४८॥ कृष्णं महावकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः ॥ वभूवुरिंद्रियाणीव विना प्राणं विचेतसः ॥४९॥ तं तालुमूलं प्रदहंतमग्निवद्गोपालसूनुं पितरं जगद्गुरोः ॥ चच्छर्द सद्योऽतिरुषाऽक्षतं वकस्तुंडेन हंतुं पुनरभ्यपद्यत ॥५०॥ तमापतंतं सनिगृह्य तुंडयोर्दोर्भ्यां वकं कंससखं सतां पतिः ॥ पश्यत्सु वालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम् ॥५१॥ तदा वकारिं सुरलोकवासिनः समाकिरन्नंदनमल्लिकादिभिः ॥ समीडिरे चानकशंखसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे ॥५२॥ मुक्तं वकास्यादुपलभ्य वालका रामादयः प्राणमिवेंद्रियो गणः ॥ स्थानागतं तं परिरभ्य निर्वृताः प्रणीय वत्सान्व्रजमेत्य तज्जगुः ॥५३॥ श्रुत्वा तद्विस्मिता गोपा गोप्यश्चातिप्रियादृताः ॥ प्रेत्यागतमिवौत्सुक्यादैक्षंत तृषितेक्षणाः ॥५४॥ अहो वतास्य वालस्य वहवो मृत्यवोऽभवन् ॥ अप्यासीद्विप्रियं तेषां कृतं पूर्वं यतो भयम् ॥५५॥ अथाऽप्यभिभवंत्येनं नैव ते घोरदर्शनाः ॥ जिघांसयैनमासाद्य नश्यंत्यग्नौ पतंगवत् ॥५६॥ ॥ ॥ ॥ ॥

लेऽग्निवद्दहंतं तं कृष्णं दैत्यो ववाम । ततस्तं पुनस्तुंडेन हंतुं प्रवृत्तः ॥५०॥ तावत्कृष्णस्तं चंच्वोर्हस्ताभ्यां धृत्वा वालेषु पश्यत्सु सत्सु लीलया ददार ॥५१॥ तदा वकारिं कृष्णं देवाः पुष्पैर्ववृषुः । आनक-शंख-नादैश्च सह स्तवैस्तुष्टुवुः ॥५२॥ एवं वकमुखान्मुक्तं कृष्णं प्राप्य रामादयः प्रीताः संतो व्रजमेत्य तत्कर्म जगुः ॥५३॥ गोप्यो गोपाश्च तच्छ्रुत्वा विस्मिता भूत्वा तृषितेक्षणाः संतस्तं कृष्णं दृष्ट्वोचुः ॥५४॥ अहो अस्य वालस्य वहवो मृत्यवः प्राप्ताः तथापि तेषामेवानिष्टमासीत् ॥५५॥ भयंकरास्ते दैत्याः कृष्णजिघांसया प्राप्याग्नौ पतंगव-

त्स्वयमेव नश्यंति ॥५६॥ अहो ब्रह्मविदां वाचः कदापि मृषा न भवंति । यतो गर्गो यदाह तत्तथैव जातम् ॥५७॥ एवं नंदादयो गोपाः कृष्णरामकथां कुर्वंतः संतः संसारवेदना नाविंदन्॥५८॥एवं कृष्णरामौ कौमारैः क्रीडनैर्निलायनैः सेतुबंधैर्मर्कटोत्प्लवनादिभिश्च व्रजे कौमारावस्थां जहतुः॥५९॥इति श्री० चू० दश० एकादशोऽध्यायः ॥११॥ ॥ द्वादशे तु महासर्पवपुर्धरमघासुरम् । वत्सपालगिलं क्रुद्धो गलेऽहन्निति वर्ण्यते ॥१॥ श्रीशुक उवाच ॥ कदाचित्कृष्णः प्रातरुत्थाय वने प्रथमं भोजनं कर्तुं श्रृंगशब्देन बालान् प्रबोध्य वत्सान् पुरस्कृत्य निर्गतः ॥१॥ ततः कृष्णेन सह सहस्रशो बालाः सहस्राधिकसंख्यायुतान् स्वस्ववत्सान् पुरस्कृत्य श्रृंग-वेत्र-वेणून् गृहीत्वा ययुः ॥२॥ ततस्ते कृष्णस्य वत्सैः सह स्ववत्सान्

अहो ब्रह्मविदां वाचो नासत्याः संति कर्हिचित् ॥ गर्गो यदाह भगवानन्वभावि तथैव तत् ॥५७॥ इति नंदादयो गोपाः कृष्णरामकथां मुदा ॥ कुर्वंतो रममाणाश्च नाविंदन्भववेदनाम् ॥५८॥ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ॥ निलायनैः सेतुबंधैर्मर्कटोत्प्लवनादिभिः ॥५९॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे वत्सबकवधो नामैकादशोऽध्यायः ॥११॥ श्रीशुक उवाच ॥ क्वचिद्वनाशाय मनो दधद्व्रजात्प्रातः समुत्थाय वयस्यवत्सपान् ॥ प्रबोधयन् श्रृंगरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः ॥१॥ तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः ॥ स्वान्स्वान्सहस्रोपरिसंख्ययाऽन्वितान्वत्सान्पुरस्कृत्य विनिर्ययुर्मुदा ॥२॥ कृष्णवत्सैरसंख्यातैर्यूथीकृत्य स्ववत्सकान् ॥ चारयंतोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ॥३॥ फलप्रवालस्तवकसुमनःपिच्छधातुभिः ॥ काचगुंजामणिस्वर्णभूषिता अप्यभूषयन् ॥४॥ मुष्णंतोऽन्योन्यशिक्यादीन्ज्ञातानाराच्च चिक्षिपुः ॥ तत्रत्याश्च पुनर्दूराद्धसंतश्च पुनर्ददुः ॥५॥ यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम् ॥ अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥६॥ केचिद्वेणून्वादयंतो ध्मांतः श्रृंगाणि केचन ॥ केचिद्भृंगैः प्रगायंतः कूजंतः कोकिलैः परे ॥७॥ विच्छायाभिः प्रधावंतो गच्छंतः साधु हंसकैः ॥ बकैरुपविशंतश्च नृत्यंतश्च कलापिभिः ॥८॥ विकर्षंतः कीशबालानारोहंतश्च तैर्द्रुमान् ॥ विकुर्वंतश्च तैः साकं प्लवंतश्च पलाशिषु ॥९॥ ॥ ॥ ॥ ॥ ॥

मेलयित्वा चारयंतः संतो बाललीलाभिस्तत्र तत्र स्थलेषु विजह्रुः ॥३॥ ततस्ते पूर्वं मातृभिः काच-गुंजा-रत्न-सुवर्णादिभिर्भूषिता अपि आत्मानं फल-पल्लव-पिच्छ-धातुभिर्भूषयांचक्रुः ॥४॥ किंच । अन्योन्यशिक्यादीन् मुष्णंतो गोपैर्ज्ञातानि दूरं चिक्षिपुः । पुनरानीय ददुश्च ॥५॥ कृष्णो वनशोभावलोकनाय यदि दूरं गतो भवेत्तदा कृष्णमहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥६॥ केचिद्गोपाला वेणून् वादयंतः केचिच्छृंगाणि वादयंतः केचिद्भृंगवद्गायंतः कोकिलवच्च कूजंतः ॥७॥ केचित्पक्षिच्छायाभिर्धावंतः हंसैः सह गच्छंतः बकैः सहोपविशंतः मयूरैः सह नृत्यंतः ॥८॥ केचिद्वृक्षशाखासु लंबमानान् वानरपुच्छान् विकर्षंतः केचित्तत्पुच्छैर्वृक्षानारोहंतः केचिद्दंतदर्शनादिना वानरैः सह विकारान् कुर्वंतः ॥९॥ ॥

१ तस्मान्नंदात्मजोऽयं ते नारायणसमो गुणैरित्यादि । २ निलीय स्थितस्यान्येन तच्छोधनं निलायनम् ।

केचिन्मंडूकवद्विलंघंतः प्रतिबिंबानि हसंतः प्रतिध्वनीन् शपंतश्च संतो रेमिरे ॥१०॥ एवं ते गोपालाः मनुष्यपुत्रतया प्रतीयमानेन परब्रह्मणा श्रीकृष्णेन सह विजन्हुः । अहो तेषां भाग्यम् ॥११॥ यस्य पादरेणुर्योगिभिरपि दुष्प्रापः स एवेश्वरो येषां संमुखे स्वयं स्थितस्तेषां व्रजौकसां भाग्यं किं वर्ण्यते ॥१२॥ अथ तेषां क्रीडनं न सहमानोऽघासुर आगमत् ॥१३॥ पूतनाबकयोः कनिष्ठवंधुः सोऽघासुरः कृष्णप्रमुखान् बालान् दृष्ट्वाऽयं कृष्णो मे भ्रातृभगिन्योर्नाशकर्ता । अतस्तयोर्द्वयोः स्थाने एनं वत्सतत्पालसहितं हनिष्यामि ॥१४॥ किंच । एतेषु बालेषु मृतेषु सत्सु पुत्रप्राणा गोकुलवासिनः सर्वे मृततुल्या भविष्यंति ॥१५॥ इति निश्चित्य योजनदीर्घं पर्वतवत्स्थूलं गुहावत्प्रसारितमुखमाजगरं शरीरं धृत्वा सर्ववत्स-

साकं भेकैर्विलंघंतः सरित्प्रस्रवसंप्लुताः ॥ विहसंतः प्रतिच्छायाः शपंतश्च प्रतिस्वनान् ॥१०॥ इत्थं सतां ब्रह्मसुखानुभूत्या दास्यंगतानां परदैवतेन ॥ मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुंजाः ॥११॥ यत्पादपांसुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यगम्यः ॥ स एव यद्दृग्विषयःस्वयं स्थितः किं वर्ण्यते दिष्टमतो व्रजौकसाम् ॥१२॥ अथाघनामाऽभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः ॥ नित्यं यदंतर्निजजीवितेप्सुभिः पीतामृतै-रप्यमरैः प्रतीक्ष्यते ॥१३॥ दृष्ट्वाऽर्भकान्कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः ॥ अयं तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं हनिष्ये ॥१४॥ एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः ॥ प्राणे गते वर्ष्मसु का नु चिंता प्रजाऽसवः प्राणभृतो हि ये ते ॥१५॥ इति व्यवस्याज-गरं बृहद्वपुः स योजनायाममहाद्रिपीवरम् ॥ धृत्वाऽद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः ॥१६॥ धराधरोष्ठो जलदोत्तरोष्ठो दर्या-ननांतो गिरिशृंगदंष्ट्रः ॥ ध्वांतांतरास्यो वितताध्वजिह्वः परुषानिलश्वासदवेक्षणोष्णः ॥१७॥ दृष्ट्वा तं तादृशं सर्वे मत्वा वृंदावनश्रियम् ॥ व्यात्ता-जगरतुंडेन ह्युत्प्रेक्षंते स्म लीलया ॥१८॥ अहो मित्राणि गदत सत्वकूटं पुरः स्थितम् ॥ अस्मत्संग्रसनव्यात्तव्यालतुंडायते न वा ॥१९॥ सत्य-मर्ककरारक्तमुत्तराहनुवद्घनम् ॥ अधराहनुवद्रोधस्तत्प्रतिच्छाययाऽरुणम् ॥२०॥ प्रतिस्पर्धेते सृक्किभ्यां सव्यासव्ये नगोदरे ॥ तुंगशृंगालयोऽप्ये-तास्तद्दंष्ट्राभिश्च पश्यत ॥२१॥ आस्तृतायाममार्गोऽयं रसनां प्रति गर्जति ॥ एषामंतर्गतं ध्वांतमेतदप्यंतराननम् ॥२२॥ दावोष्णखरवातोऽयं श्वासवद्भाति पश्यत ॥ तद्दग्धसत्वदुर्गंधोप्यंतरामिषगंधवत् ॥२३॥ ॥ ॥ ॥

वत्सपाल-ग्रसनेच्छया तेषां मार्गे शयनं कृतवान् ॥१६॥ कथंभूतः सः । भूमावधरोष्ठो यस्य मेघेपूर्ध्वोष्ठो यस्य दर्याविवौष्ठप्रांतौ यस्य पर्वतशिखरवद्दंष्ट्रा यस्य विस्तीर्णमार्गवजिह्वा यस्य सः ॥१७॥ एवंभूतं दैत्यं दृष्ट्वा तं च वृंदावनशोभेति भ्रांत्या मत्वा वत्सपालाः प्रसारिताजगर-मुखमादृश्येनोत्प्रेक्षितवंतः ॥१८॥ तदाह । अहो मित्राणि गदत । एतत्पुरोगतं वनं महाप्राणिसदृशं दृश्यते न वा। अस्मद्ग्रसनाय प्रसारितसर्पमुखवद्भासते न वा ॥१९॥ सत्यम् । सूर्यकिरणैरारक्तं मेघं मुखस्यो-र्ध्वोष्ठवत्पश्यत । तत्प्रतिच्छायां चाधरोष्ठवत्पश्यत ॥२०॥ एते सव्यासव्ये गुहे ओष्ठप्रांतसदृशौ दृश्येते । एता उच्चशिखरपंक्तयस्तस्य दंष्ट्रासदृशा दृश्यंते ॥२१॥ अयं दीर्घो मार्गो जिह्वावद्भाति ॥२२॥ दावाग्निनोष्णोऽयं वायुस्तस्य श्वासवद्भाति

पश्यत । तत्र दवाग्निना दग्धप्राणिनां दुर्गंधोऽपि तदुदरगतमांसगंधवद्भाति पश्यत॥२३॥अयं किमस्मान् प्रविष्टान् ग्रसिष्यति । एवं चेदनेन कृष्णेन क्षणाद्बकवन्नाशं प्राप्स्यति । एवं परस्परमुक्त्वा कृष्णमुखं दृष्ट्वा करताडनं कुर्वंतः सन्तोऽन्तर्मुखं विविशुः॥२४॥श्रीकृष्णो बालभाषणं श्रुत्वाऽयं राक्षस इति ज्ञात्वा गोपान् वारयितुं यावन्मनो दधे । तावत्ते तदुदरं प्रविष्टाः। तथापि कृष्णप्रवेशं प्रतीक्षमाणेन तेन ते न गिलिताः॥२५॥२६॥ ततः कृष्णो दैवेन मृत्योर्जठराग्निघासान् स्वहस्तान्निःसृतान् तान् दृष्ट्वा विस्मितः सन्॥२७॥एषां प्रविष्टानां मरणमस्याजगरस्य च जीवनं यथा न स्यात्तथा निश्चयं कृत्वा सर्वज्ञो हरिरजगरमुखं विवेश ॥२८॥ तदा मेघांतरिता देवा हाहेति चुक्रुशुः। राक्षसा हर्षं प्रापुः ॥२९॥ कृष्णस्तच्छ्रुत्वा

अस्मान्किमत्र ग्रसिता निविष्टानयं तथा चेद्बकवद्विनंक्ष्यति ॥ क्षणादनेनेति बकार्युशन्मुखं वीक्ष्योद्धसंतः करताडनैर्ययुः ॥ २४ ॥ इत्थं मिथोऽतथ्यमतज्ज्ञभाषितं श्रुत्वा विचिंत्येत्य मृषा मृषायते ॥ रक्षो विदित्वाऽखिलभूतहृत्स्थितः स्वानां निरोद्धुं भगवान्मनो दधे ॥२५॥ तावत्प्रविष्टास्त्वसुरोदरांतरं परं न गीर्णाः शिशवः सवत्साः ॥ प्रतीक्षमाणेन बकारिवेशनं हतस्वकांतस्मरणेन रक्षसा ॥२६॥ तान्वीक्ष्य कृष्णः सकलाभयप्रदो ह्यनन्यनाथान्स्वकरादवच्युतान् ॥ दीनांश्च मृत्योर्जठराग्निघासान्घृणार्दितो दिष्टकृतेन विस्मितः ॥२७॥ कृत्यं किमत्रास्य खलस्य जीवनं न वा अमीषां च सतां विहिंसनम् ॥ द्वयं कथं स्यादिति संविचिन्त्य तज्ज्ञात्वाऽविशत्तुंडमशेषदृग्घरिः॥२८॥ तदा घनच्छदा देवा भयाद्धाहेति चुक्रुशुः॥ जहृषुर्ये च कंसाद्याः कौणपास्त्वघबांधवाः ॥२९॥ तच्छ्रुत्वा भगवान्कृष्णस्त्वव्ययः सार्भवत्सकम् ॥ चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले ॥३०॥ ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः॥ पूर्णोऽतरंगे पवनो निरुद्धो मूर्धन्विनिष्पाट्य विनिर्गतो बहिः ॥३१॥ तेनैव सर्वेषु बहिर्गतेषु प्राणेषु वत्सान्सुहृदः परेतान् ॥ दृष्ट्या स्वयोत्थाप्य तदन्वितः पुनर्वक्त्रान्मुकुंदो भगवान्विनिर्ययौ ॥३२॥ पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद्दिशो दश ॥ प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन्मिषतां दिवौकसाम् ॥३३॥ ततोऽतिहृष्टाः स्वकृतोऽकृतार्हणं पुष्पैः सुरा अप्सरसश्च नर्तनैः ॥ गीतैः सुगा वाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जयनिःस्वनैर्गणाः ॥३४॥ तदद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमंगलस्वनान् ॥ श्रुत्वा स्वधाम्नोंऽत्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगाम विस्मयम् ॥३५॥ ॥ ॥

वत्स-वत्सपाल-सहितमात्मानं चूर्णीकर्तुमिच्छोस्तस्य कंठे ववृधे ॥३०॥ ततो निरुद्धमार्गस्य तस्य देहांतरगतो वायुर्ब्रह्मरंध्रं निर्भिद्य बहिर्निर्गतः ॥३१॥ तेनैव सर्वेषु प्राणेषु बहिर्गतेषु सत्सु मृतान् वत्सवत्सपालान् स्वकीयया दृष्ट्योत्थाप्य तैर्युक्तः कृष्णो मुखाद्बहिर्निर्ययौ ॥३२॥ ततस्तद्देहोत्थितं तेज आकाशे स्थितं सत् कृष्णनिर्गमं प्रतीक्ष्य देवानां पश्यतां सतां बहिर्निर्गते कृष्णे विवेश ॥३३॥ तदा देवाः पुष्पवृष्टिं चक्रुः । अप्सरसो ननृतुः । गंधर्वा जगुः । विद्याधरा वाद्यानि वादयामासुः । वसिष्ठादयो विप्राः स्तुतिं चक्रुः । पार्षदगणा जयजयेति शब्दैः सत्कारं चक्रुः ॥३४॥ तान् वाद्यगीतस्तुत्यादीनां शब्दान् सत्यलोके ब्रह्मा श्रुत्वा तत्रागतः सन् कृष्णस्य महिमानं दृष्ट्वा विस्मयं प्राप ॥३५॥ ॥

हे राजन्, तदाजगरं चर्म शुष्कं सद्वृंदावने व्रजवासिनां बहुकालपर्यंतं क्रीडार्थं महाबिलमासीत् ॥३६॥ हे नृप, एतत्स्वानामघासुरस्य च मोक्षणं कृष्णस्य पंचमवर्षकृतं कर्म बाला व्रजमागत्य षष्ठे वर्षे अद्यैतज्जातमित्यूचुः ॥३७॥ हे नृप, यस्य स्पर्शेनाघासुरोऽपि क्षीणपापो भूत्वैकरूपतां प्राप तस्य मायया मनुष्यपुत्रत्वं स्वीकृतवतः कृष्णस्यैतदाश्चर्यं न ॥३८॥ यस्य मूर्तेः प्रतिमा सकृन्मनसि स्थापिता सती प्रह्लादादिभ्य आत्मगतिं ददौ । स एव भगवान् यस्य मुखं प्रविष्टस्तस्याघासुरस्य मोक्षो जात इदं किमाश्चर्यम् ॥३९॥ सूत उवाच । हे शौनक, एवमाश्चर्यकरं कृष्णचरित्रं श्रुत्वा राजा पुनः पप्रच्छ ॥४०॥ राजोवाच ॥ हे ब्रह्मन्, कौमारे कृतं कर्म बालाः पौगंडके कथमूचुः ॥४१॥ अत्रास्माकं महत्कौतुकं वर्तते ।

राजन्नाजगरं चर्म शुष्कं वृंदावनेऽद्भुतम् ॥ व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम् ॥३६॥ एतत्कौमारजं कर्म हरेरात्माहिमोक्षणम् ॥ मृत्योः पौगंडके बाला दृष्ट्वोचुर्विस्मिता व्रजे ॥३७॥ नैतद्विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः ॥ अघोऽपि यत्स्पर्शनधौतपातकः प्रापात्मसाम्यं त्वसतां सुदुर्लभम् ॥३८॥ सकृद्यदंगप्रतिमांऽतराहिता मनोमयी भागवतीं ददौ गतिम् ॥ स एव नित्यात्मसुखानुभूत्यभिव्युदस्तमायोंऽतर्गतो हि किं पुनः ॥३९॥ सूत उवाच ॥ इत्थं द्विजा यादवदेवदत्तः श्रुत्वा स्वरातुश्चरितं विचित्रम् ॥ पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीतचेताः ॥४०॥ राजोवाच ॥ ब्रह्मन्कालांतरकृतं तत्कालीनं कथं भवेत् ॥ यत्कौमारे हरिकृतं जगुः पौगंडकेऽर्भकाः ॥४१॥ तद्ब्रूहि मे महायोगिन्परं कौतूहलं गुरो ॥ नूनमेतद्धरेरेव माया भवति नान्यथा ॥४२॥ वयं धन्यतमा लोके गुरोऽपि क्षत्रबंधवः ॥ यत्पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतम् ॥४३॥ सूत उवाच ॥ इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारितानंतहृताखिलेंद्रियः ॥ कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तम ॥४४॥ इति श्रीमद्भा० महा० दश० पूर्वार्धे द्वादशोऽध्यायः ॥१२॥ श्रीशुक उवाच ॥ साधु पृष्टं महाभाग त्वया भागवतोत्तम ॥ यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥१॥ सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि ॥ प्रतिक्षणं नव्यवदच्युतस्य यत्स्त्रिया विटानामिव साधु वार्ता ॥२॥ ॥ ॥ ॥ ॥

तद्ब्रूहि ॥ इयं नूनं हरेर्मायैव भवति । अन्यथैतन्न घटते ॥४२॥ किंच । वयं क्षत्रबंधवोऽपि धन्याः । यतस्त्वत्तः कृष्णकथामृतं पिबामः ॥४३॥ सूत उवाच ॥ हे शौनक, इत्थं पृष्टः शुकः प्रश्नस्मारितेन भगवता हृतसर्वेंद्रियत्वेन समाधिस्थो भूत्वा पुनः कथंचिल्लब्धबाह्यज्ञानः सन् शनैस्तं राजानं प्रत्याह ॥४४॥ इति श्रीमद्भागवतचूर्णिका० दशमस्कंधे पूर्वा० द्वादशोऽध्यायः ॥१२॥ त्रयोदशेऽहरद्ब्रह्मा वत्सान् पालांश्च मायया । तदा तत्सर्वरूपोऽव्दं कृष्णः पूर्ववदाचरत् ॥१॥ श्रीशुक उवाच ॥ हे भागवतोत्तम, त्वया साधु पृष्टम् । यतो मुहुर्हरिकथां शृण्वन्नपि त्वं पुनः तां कथां नवीनामिव करोषि ॥१॥ सारग्राहिणां सतां भगवत्कथा प्रतिक्षणं नवीनवद्भवति अयं तेषां स्वभाव एवास्ति । यथा स्त्रीलंपटानां पुंसा

१ स्वानां मृत्योर्मोक्षणमघासुरस्य च संसारान्मोक्षणमित्यर्थः । २ कौमारं पंचमाब्दांतं पौगंडं दशमावधि । कैशोरमापंचदशाद्यौवनं तु ततः परमिति । ३ ब्राह्मणापराधेन क्षत्रियाधमा अपि ।

कामिन्या विलासवार्ता प्रतिक्षणं नवीनवद्भवति तद्वत् ॥२॥ तस्मात् हे नृप, इदं गुह्यमपि वदामि । त्वमेकाग्रमनाः शृणुष्व ॥३॥ तथाऽघासुरमुखाद्वत्सान्बालांश्च रक्षित्वा ततस्तान् यमुनातीरे आनीय कृष्ण इदमाह ॥४॥ हे बालाः, इदं यमुनातीरं रम्यम् । कोमल-स्वच्छ-वालुकम् । प्रफुल्लित-कमल-सुगंधेनाकृष्टानां भ्रमराणां पक्षिणां च नाद-प्रतिध्वनिना लसद्भिर्वृक्षैर्व्याप्तमस्ति ॥५॥ अतोऽस्माभिरत्र भोक्तव्यम् । अस्माकं भोजनवेला गताऽतो वयं क्षुधापीडिताः स्मः ॥६॥ किंच । एते वत्सा जलं पीत्वा समीपे तृणं चरंतु ॥६॥ ततस्तथेत्युक्त्वा बाला वत्सानां जलं पाययित्वा तान् कोमलतृणे देशे संरुद्ध्य स्वस्वशिक्यानि मुक्त्वा कृष्णेन सह बुभुजुः ॥७॥ तदा कृष्णस्य सर्वतः संमुखा अर्भका बहुपंक्तिमंडलैः स्थिताः संतो विरेजुः ॥८॥ तत्र केचित्पुष्पैः केचित्पुष्पदलैः पर्णैः फलैः शिग्भिः शिलादिभिश्च पात्राणि कृत्वा॥९॥ सर्वे स्वस्वभोज्यरुचिं मिथो दर्शयंतो हसंतो हासयंतश्च संतः

शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते ॥ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥३॥ तथाऽघवदान्मृत्यो रक्षित्वा वत्सपालकान् ॥ सरित्पुलिनमानीय भगवानिदमब्रवीत् ॥४॥ अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसंपन्मृदुलाच्छवालुकम् ॥ स्फुटत्सरोगंधहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलम् ॥५॥ अत्र भोक्तव्यमस्माभिर्दिवारूढं क्षुधार्दिताः ॥ वत्साः समीपेऽपः पीत्वा चरंतु शनकैस्तृणम् ॥६॥ तथेति पाययित्वांऽभो वत्सानारुध्य शाद्वले ॥ मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ॥७॥ कृष्णस्य विष्वक्पुरुराजिमंडलैरभ्याननाः फुल्लदृशो व्रजार्भकाः ॥ सहोपविष्टा विपिने विरेजुश्छदा यथांऽभोरुहकर्णिकायाः ॥८॥ केचित्पुष्पैर्दलैः केचित्पल्लवैरंकुरैः फलैः ॥ शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥९॥ सर्वे मिथो दर्शयंतः स्वस्वभोज्यरुचिं पृथक् ॥ हसंतो हासयंतश्चाभ्यवजह्रुः सहेश्वराः ॥१०॥ बिभ्रद्वेणुं जठरपटयोः शृंगवेत्रे च कक्षे वामे पाणौ मसृणकवलं तत्फलान्यंगुलीषु ॥ तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्मभिः स्वैः स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेलिः ॥११॥ भारतैवं वत्सपेषु भुंजानेष्वच्युतात्मसु ॥ वत्सास्त्वंतर्वने दूरं विविशुस्तृणलोभिताः ॥१२॥ तान्दृष्ट्वा भयसंत्रस्तानूचे कृष्णोऽस्य भीभयम् ॥ मित्राण्याशान्मा विरमतेहानेष्ये वत्सकानहम् ॥१३॥ इत्युक्त्वाऽद्रिदरीकुंजगह्वरेष्वात्मवत्सकान् ॥ विचिन्वन्भगवान्कृष्णः सपाणिकवलो ययौ ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥

श्रीकृष्णसहिता बुभुजुः ॥१०॥ तदोदरवस्त्रयोर्मध्ये वेणुं धारयन् वामकक्षे शृंगवेत्रे, वामकरे दध्योदनकवलं, अंगुलिसंधिषु बिल्वाम्रादिफलानि च धारयन् मित्राणि च हासयन् स्वर्गस्थे देवजने आश्चर्येण पश्यति सति बाललीलां कुर्वन् यज्ञभोक्ता भगवान् कृष्णो वत्सपाल-मध्यस्थः सन् बुभुजे ॥११॥ हे नृप, एवं बालेषु भुंजानेषु वत्सास्तृणलोभेन दूरं वनमध्ये विविशुः ॥१२॥ तदा भीतान् गोपान् कृष्ण आह । हे सखायः, भोजनान्मा विरमत । वत्सानहमानेष्ये ॥१३॥ एवमुक्त्वा कृष्णोऽद्रिगुहाकुंजेषु संकटस्थानेषु च वत्सान् विचिन्वन् सपाणिकवलो ययौ ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तदा यो ब्रह्मा पूर्वं कृष्णस्याघासुरमोक्षणं दृष्ट्वा परं विस्मयं प्राप्तः स ब्रह्मा श्रीकृष्णस्यान्यमपि सुंदरं महिमानं द्रष्टुं वनात्तस्य वत्सान् भोजनस्थानाद्वत्सपालांश्चान्यत्र मायाशये नीत्वा स्वयं तिरो बभूव ॥१५॥ ततः कृष्णो वने वत्सानदृष्ट्वा यमुनातटे बालांश्चादृष्ट्वा वने तान् मृगयन् ॥१६॥ वत्सान् वत्सपांश्च क्वापि न दृष्ट्वा सर्वं ब्रह्मकृतं ज्ञात्वा ॥१७॥ कृष्णो वत्स-वत्सपाल-मातृणां ब्रह्मणश्च हर्षं कर्तुं वत्सानां गोपालानां च स्वरूपं दधार ॥१८॥ तदेवाह । वत्सपानां वत्सानां च यावच्छरीरप्रमाणं, यावत्करचरणादिकं, यावंति यष्टि-शृंग-वेणु दल-शिक्यानि, यावंति वस्त्राभरणानि, यावंति गुण-स्वभाव-नाम-स्वरूप-वयांसि, यावच्च क्रीडादिकं तावद्रूपः कृष्णो बभौ । तदा सर्वं विष्णुमयं जगदिति या वाणी

अंभोजन्मजनिस्तदंतरगतो मायार्भकस्येशितुर्द्रष्टुं मंजु महित्वमन्यदपि तद्वत्सानितो वत्सपान् ॥ नीत्वाऽन्यत्र कुरूद्वहांतरदधात्खेऽवस्थितो यः पुरा दृष्ट्वाऽघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम् ॥१५॥ ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् ॥ उभावपि वने कृष्णो विचिकाय समंततः ॥१६॥ क्वाप्यदृष्ट्वांऽतर्विपिने वत्सान्पालांश्च विश्ववित् ॥ सर्वं विधिकृतं कृष्णः सहसाऽवजगाम ह ॥१७॥ ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च ॥ उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥१८॥ यावद्वत्सपवत्सकाल्पकवपुर्यावत्करांघ्र्यादिकं यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषांबरम् ॥ यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं सर्वं विष्णुमयं गिरोंऽगवदजः सर्वस्वरूपो बभौ ॥१९॥ स्वयमात्माऽऽत्मगोवत्सान्प्रतिवार्यात्मवत्सपैः ॥ क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद्व्रजम् ॥२०॥ तत्तद्वत्सान्पृथङ्नीत्वा तत्तद्गोष्ठे निवेश्य सः ॥ तत्तदात्माऽभवद्राजंस्तत्तत्सद्म प्रविष्टवान् ॥२१॥ तन्मातरो वेणुरवत्वरोत्थिता उत्थाप्य दोर्भिः परिरभ्य निर्भरम् ॥ स्नेहस्नुतस्तन्यपयः सुधाऽऽसवं मत्वा परं ब्रह्म सुतानपाययन् ॥२२॥ ततो नृपोन्मर्दनमज्जलेपमालंकाररक्षातिलकाशनादिभिः ॥ संलालितः स्वाचरितैः प्रहर्षयन्सायं गतो यामयमेन माधवः ॥२३॥ गावस्ततो गोष्ठमुपेत्य सत्वरं हुंकारघोषैः परिहूतसंगतान् ॥ स्वकान्स्वकान्वत्सतरानपाययन्मुहुर्लिहंत्यः स्रवदौधमं पयः ॥२४॥ गोगोपीनां मातृतास्मिन्सर्वा स्नेहर्धिकां विना ॥ पुरोवदास्वपि हरेस्तोकता मायया विना ॥२५॥ ॥ ॥

सा प्रत्यक्षा बभूव ॥१९॥ एवं सर्वात्मा कृष्ण आत्मरूपान् वत्सान् स्वात्मरूपैर्गोपबालैर्निवार्यात्मरूपैर्विहारैश्च क्रीडन् व्रजं प्रविवेश ॥२०॥ तत्तद्वत्सान् पृथक् नीत्वा तत्तद्गोशालायां स्थापयित्वा तत्तद्गृहं प्रविवेश ॥२१॥ तदा तन्मातरो वेणुनादं श्रुत्वोत्थाय पुत्रान्मत्वा परं ब्रह्मैव दोर्भिरालिंग्य स्नेहस्नुतं स्तनं पाययामासुः ॥२२॥ एवं नित्यवत्कृष्णः स्वाचरितैर्मातृः प्रहर्षयन् सायंकाले ताभिर्मातृभिर्मज्जन-मर्दन-लेपालंकार-वस्त्र-तिलकाशनादिभिर्लालितः ॥२३॥ गावो गोष्ठं प्राप्य स्वस्ववत्सान् लिहंत्यः मत्वो हुंकारं कृत्वा पयोऽपाययन् ॥२४॥ हे नृप, गोगोपीनामस्मिन् वत्सपुत्ररूपे श्रीकृष्णे स्नेहाधिक्यं विना मातृभावः पूर्ववदासीत् । गोगोपीष्वपि हरेर्बालत्वं मायया विना पूर्ववदासीत् ॥२५॥ ॥

१ स्नेहाधिक्यं निदानी विशेष इत्यर्थः । २ ममेयं माताऽहमस्याः पुत्र इति मोहं विनेत्यर्थः ।

तदाह । व्रजौकसां स्वबालेषु स्नेहवल्ली नित्यं वर्षपर्यंतं निःसीम ववृधे ॥२६॥ एवं कृष्णो वत्स वत्सपालमिषेण वर्षपर्यंतं वनगोष्ठयोः क्रीडितवान् ॥२७॥ किंचिदूनवर्षपर्यंतं रामस्यापि मोह आसीदित्याह । एकदा स रामः कृष्णो वर्षस्य पंचसु षट्सु वा रात्रिषु न्यूनासु सतीषु वनं विवेश ॥२८॥ ततो गोवर्धनशिखरे चरंत्यो गावो व्रजसमीपे चरतो वत्सान् ददृशुः ॥२९॥ ततः स गोसमूहो वत्समोहेन रक्षकानगणयित्वा दुर्गममार्गेण मुखानि पुच्छानि चोन्नमय्य स्रवत्पया हुंकारेण द्रुतं व्रजसमीपं जगाम ॥३०॥ ततो गावो वत्सान् प्राप्यांऽगानि गिलंत्य इव लिहंत्यः पुनः प्रसूता अपि पूर्ववत्सेभ्यो दुग्धमपाययन् ॥३१॥ ततो गोपा गवां रोधनप्रयत्नस्य निष्फलत्वेन जातक्रोधा अतिदुःखमार्गेण तत्रत्य गोवत्सैः सह सुतान् दृष्ट्वा ॥३२॥

व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम् ॥ शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् ॥२६॥ इत्थमात्माऽऽत्मनाऽऽत्मानं वत्सपालमिषेण सः ॥ पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः॥२७॥एकदा चारयन्वत्सान्सरामो वनमाविशत्॥पंचषासु त्रियामासु हायनापूरणीष्वजः ॥२८॥ ततो विदूराच्चरतो गावो वत्सानुपव्रजम् ॥ गोवर्धनाद्रिशिरसि चरंत्यो ददृशुस्तृणम् ॥२९॥ दृष्ट्वाऽथ तत्स्नेहवशोऽस्मृतात्मा सगोव्रजोऽत्यात्मपदुर्गमार्गः ॥ द्विपात्ककुद्ग्रीव उदास्यपुच्छोऽगाद्धुंकृतैरास्रुपया जवेन ॥३०॥ समेत्य गावोऽधोवत्सान्वत्सवत्योऽप्यपाययन् ॥ गिलंत्य इव चांगानि लिहंत्यः स्वौधसं पयः ॥३१॥ गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना ॥ दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोवत्सैर्ददृशुः सुतान् ॥३२॥ तदीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा गतमन्यवोऽर्भकान् ॥ उदुह्य दोर्भिः परिरभ्य मूर्धनि घ्राणैरवापुः परमां मुदं ते ॥३३॥ ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः ॥ कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः ॥३४॥ व्रजस्य रामः प्रेमर्धेर्वीक्ष्यौत्कंठ्यमनुक्षणम् ॥ मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिंतयत् ॥३५॥ किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि ॥ व्रजस्य सात्मनस्तोकेष्वपूर्वं प्रेम वर्धते ॥३६॥ केयं वा कुत आयाता दैवी वा नार्युतासुरी ॥ प्रायो मायाऽस्तु मे भर्तुर्नान्या मेऽपि विमोहिनी ॥३७॥ इति संचिंत्य दाशार्हो वत्सान्सवयसानपि ॥ सर्वानाचष्ट वैकुंठं चक्षुषा वयुनेन सः ॥३८॥ नैते सुरेशा ऋषयो न चैते त्वमेव भासीश भिदाश्रयेऽपि ॥ सर्वं पृथक्त्वं निगमात्कथं वदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत् ॥३९॥ ॥

क्रोधहीना भूत्वा प्रेमातिशयेन दोर्भिः पुत्रानालिंग्य मूर्धानमवघ्राय परमां मुदं प्रापुः॥३३॥ततस्ते गोपास्तेभ्यः पुत्रेभ्यः सकाशात्पुनः कृच्छ्रेण शनैर्निवृत्ता आसन्॥३४॥रामो गवां मुक्तस्तनेष्वपि वत्सेषु प्रेमवृद्धेरतिशयं दृष्ट्वा तत्कारणमजानन्नचिंतयत् ॥३५॥ तदाह । अहो व्रजस्य प्रेम यथा पूर्वं सर्वात्मनि कृष्ण आसीत्तथाऽधुना स्वतोकेष्वपि वर्धते किमेतदद्भुतम् । ममाप्येतेषु वत्सवत्सपालेष्वपूर्वं प्रेम वर्धते एतच्चाद्भुतं किम् ॥३६॥ इयं माया देवानां मनुष्याणां दैत्यानां वा । न केषामपि । यतो मामपि मोहयति अत इयं कृष्णस्यैव ॥३७॥ एवं संचिंत्य रामो वत्सान् बालांश्च ज्ञानदृष्ट्या सर्वान् कृष्णरूपान् ददर्श ॥३८॥ ततः कृष्णं दृष्ट्वा जगाद । हे कृष्ण, एते तावद्वत्सा ऋषीणामंशाः पालास्तु देवानामंशा

१ मम कृष्ण इवैतेषु प्रेमवृद्धिकारणं नास्तीत्यर्थः ।

इत्यहं वेद्मि । अधुना तु सर्वं त्वमेव भासि एतत्कथं तद्विविच्य कथय । तदा कृष्णेन संक्षेपेणोक्तं सर्वं वृत्तांतं बलो ज्ञातवान् ॥३९॥ अथ ब्रह्मा आत्मनो मानेन त्रुटिमात्रेण कालेन तत्रैत्य पूर्ववत् वत्सपालैः सह क्रीडंतं हरिं दृष्ट्वा व्यतर्कयत् ॥४०॥ अहो एते वत्सा बालाश्च मम मायाशये शयाना नाद्याप्युत्थिताः ॥४१॥ किंच । अत्र वने मन्मायामोहितेभ्य इतरे कृष्णेन सह क्रीडंत एते कुत्रत्याः ॥४२॥ एवं चिरं ध्यात्वा ब्रह्मा सत्याः के कतरे चासत्या इति ज्ञातुं समर्थो नासीत् ॥४३॥ यथा दिवसे खद्योतकांतिः किंचिदपि प्रकाशं न करोति । किं तु सूर्यकांत्या परावृत्य खद्योतस्यैव तेजोहीनत्वं संपादयति एवं विश्वमोहनं विष्णुं मोहयितुं प्रवृत्तो ब्रह्मा स्वया मायया स्वयमेव मोहं प्राप ॥४४॥४५॥ तावद्ब्रह्मणः पश्यतः सतः सर्वे वत्साः पालाश्च घनश्यामाः पीतांबरधराः ॥४६॥ चतुर्भुजाः शंख-चक्र-गदा-पद्मधराः किरीट-कुंडल-वनमालाधराः ॥४७॥ श्रीवत्सलांछन-बाहुभूष-

तावदेत्यात्मभूरात्ममानेन त्रुट्यनेहसा ॥ पुरोवदब्दं क्रीडंतं ददृशे सकलं हरिम् ॥४०॥ यावंतो गोकुले बालाः सवत्साः सर्व एव हि ॥ मायाशये शयाना मे नाद्यापि पुनरुत्थिताः॥४१॥इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे ॥ तावंत एव तत्राब्दं क्रीडंतो विष्णुना समम् ॥४२॥ एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः ॥ सत्याः के कतरे नेति ज्ञातुं नेष्टे कथंचन ॥४३॥ एवं संमोहयन्विष्णुं विमोहं विश्वमोहनम् ॥ स्वयैव मायया़ऽजोऽपि स्वयमेव विमोहितः ॥४४॥ तम्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि ॥ महतीतरमायैश्यं निहंत्यात्मनि युंजतः ॥४५॥ तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात् ॥ व्यदृश्यंत घनश्यामाः पीतकौशेयवाससः ॥४६॥ चतुर्भुजाः शंखचक्रगदाराजीवपाणयः ॥ किरीटिनः कुंडलिनो हारिणो वनमालिनः ॥४७॥ श्रीवत्सांगददोरत्नकंबुकंकणपाणयः ॥ नूपुरैः कटकैर्भाताः कटिसूत्रांगुलीयकैः ॥४८॥ आंघ्रिमस्तकमापूर्णास्तुलसीनवदामभिः ॥ कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः ॥४९॥ चंद्रिकाविशदस्मेरैः सारुणापांगवीक्षितैः ॥ स्वकार्थानामिव रजःसत्वाभ्यां स्रष्टृपालकाः ॥५०॥ आत्मादिस्तंबपर्यंतैर्मूर्तिमद्भिश्चराचरैः ॥ नृत्यगीताद्यनेकार्हैः पृथक्पृथगुपासिताः ॥५१॥ अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः ॥ चतुर्विंशतिभिस्तत्वैः परीता महदादिभिः ॥५२॥ कालस्वभावसंस्कारकामकर्मगुणादिभिः॥स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः ॥५३॥ सत्यज्ञानानंतानंदमात्रैकरसमूर्तयः ॥ अस्पृष्टभूरिमाहात्म्या अपि ह्युपनिषद्दृशाम् ॥५४॥ ॥ ॥

णादिलक्षिताः नूपुर कटिसूत्रांगुलीयकैः शोभिताः ॥४८॥ तुलसीनवमालादिभिरापादमस्तकं पूर्णाः ॥४९॥ चंद्रकिरणवद्धवलस्मितयुक्तैः कटाक्षावलोकनैः स्वभक्तमनोरथानां रजःसत्वगुणाभ्यां स्रष्टार इव पालका इव च व्यदृश्यंत ॥५०॥ ब्रह्मादिस्तंबपर्यंतैश्चराचरैर्नृत्यगीताद्यनेकसत्कारैः पृथक् पृथगुपासिताः ॥५१॥ तथाऽणिमाद्यष्टैश्वर्यैर्मायाऽविद्यादिशक्तिभिर्महदादिभिश्चतुर्विंशतिभिस्तत्वैश्च तथा कालस्वभावसंस्कारादिभिः सर्वैर्मूर्तिमद्भिरुपासिताः ॥५२॥५३॥ ततस्ताः सर्वा उपास्यमूर्तयः सत्यरूपा ज्ञानरूपा अनंताः सदैकरूपाः सर्वप्रकाशकब्रह्मरूपाश्च व्यदृश्यंत । एवं ब्रह्मा एकदैव सर्वान् ददर्श ॥५४॥ ॥ ॥ ॥ ॥ ॥

॥५५॥ ततो ब्रह्माऽत्याश्चर्येण चकितः सन् दृष्टिमंतर्मुखां कृत्वा भगवन्मूर्तीनां तेजसा स्तब्धेंद्रियः सन् व्रजाधिष्ठात्र्या देवतायाः समीपे चतुर्मुखी निर्मिता प्रतिमेव तूष्णीं बभूव ॥५६॥ हे नृप, एवं ब्रह्मदेवे किमिदमिति मुह्यति सति श्रीकृष्णः स्वमायारूपां तिरस्करिणीमपसारितवान् ॥५७॥ ततो ब्रह्मा यथा मृतः कथंचित्पुनरुत्तिष्ठति तथोत्थाय नेत्राण्युन्मील्य स्वदेहेन सहेदं जगदवलोकितवान् ॥५८॥ ततः सर्वतः पश्यन् पुरः स्थितं वृंदावनं ददर्श ॥५९॥ तदेवाह । यत्र वने मनुष्याः सिंहादयोऽपि मित्राणीवैकत्र तिष्ठंति ॥६०॥ तत्र गोपबालकनाट्यं धृत्वा पूर्ववद्वत्सान् सखींश्च सर्वतः शोधयंतं सपाणिकवलं ब्रह्मरूपं कृष्णं ब्रह्मा ददर्श ॥६१॥ एवं दृष्ट्वा हंसवाहनाद्भुव्यवतीर्य कृष्णं दंडवन्नत्वा चतुर्मुकुटाग्रैः

एवं सकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान् ॥ यस्य भासा सर्वमिदं विभाति सचराचरम् ॥५५॥ ततोऽतिकुतुकोद्वृत्य स्तिमितैकादशेंद्रियः ॥ तद्धाम्नाऽभूदजस्तूष्णीं पूर्देव्यंतीव पुत्रिका ॥५६॥ इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ ॥ अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति चच्छादाजो ज्ञात्वा सपदि परमोऽजाजवनिकाम् ॥५७॥ ततोऽर्वाक्प्रतिलब्धाक्षः कः परेतवदुत्थितः ॥ कृच्छ्रादुन्मील्य वै दृष्टीराचष्टेदं सहात्मना ॥५८॥ सपद्येवाभितः पश्यन्दिशोऽपश्यत्पुरः स्थितम् ॥ वृंदावनं जनाजीव्यद्रुमाकीर्णं समाप्रियम् ॥५९॥ यत्र नैसर्गदुर्वैराः सहासन्नृमृगादयः ॥ मित्राणीवाजितावासद्रुतरुट्तर्षकादिकम् ॥६०॥ तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनंतमगाधबोधम् ॥ वत्सान्सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥६१॥ दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य पृथ्व्यां वपुः कनकदंडमिवाभिपात्य ॥ स्पृष्ट्वा चतुर्मुकुटकोटिभिरंघ्रियुग्मं नत्वा मुदश्रुसुजलैरकृताभिषेकम् ॥६२॥ उत्थायोत्थाय कृष्णस्य चिरस्य पादयोः पतन् ॥ आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः ॥६३॥ शनैरथोत्थाय विमृज्य लोचने मुकुंदमुद्वीक्ष्य विनम्रकंधरः ॥ कृतांजलिः प्रश्रयवान्समाहितः सवेपथुर्गद्गदयैलतेलया ॥६४॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे त्रयोदशोऽध्यायः ॥१३॥ ब्रह्मोवाच ॥ नौमीड्य तेऽभ्रवपुषे तडिदंबराय गुंजावतंसपरिपिच्छलसन्मुखाय ॥ वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपांगजाय ॥१॥ अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि ॥ नेशे महि त्ववसितुं मनसाऽऽतरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः ॥ २ ॥

कृष्णचरणद्वयं स्पृष्ट्वा तदुपरि आनंदाश्रुजलैरभिषेकं कृतवान् ॥६२॥ ततो ब्रह्मोत्थायोत्थाय श्रीकृष्णस्य पूर्वदृष्टं महित्वं स्मृत्वा स्मृत्वा पुनः पुनः कृष्णपादयोश्चिरं पतन्नास्ते स्म ॥६३॥ ततः शनैरुत्थाय नेत्रे विमृज्य श्रीकृष्णं वीक्ष्य नम्रकंधरः कृतांजलिर्भयेन कंपमानश्च सन् गद्गदया वाचा तुष्टाव ॥६४॥ इति श्रीमद्भागव० दशम०पूर्वा०त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशेऽद्भुतं दृष्ट्वा पूर्वागंतुकनिश्चयम् । अनीशः कर्तुमस्तौपीत्कृष्णं ब्रह्मा विमोहितः ॥१॥ ब्रह्मोवाच ॥ हे स्तुत्य, मेघश्यामाय पीतांबराय गुंजाभिः कृतकर्णभूषणाय वनपुष्पमालाधारिणे मयूरपिच्छमुकुटाय कवलवेत्रश्रृंगवेणुभिः शोभिताय कोमलचरणाय तुभ्यं नमः ॥१॥ हे देव, अतिसुलभतया प्रकाशितस्याऽप्यस्य तत्र स्वरूपस्य महिमानं ज्ञातुमहमन्यो

वा कोऽपि न समर्थः । तदा केवल-सुखानुभव-मात्रस्य निर्गुणस्वरूपस्य तव महिमानं ज्ञातुं कः समर्थो भवेन्न कोऽपि ॥२॥ तस्माद्धे अजित, ज्ञाने प्रयत्नं हित्वा स्वस्थान एव स्थिताः संतः कर्ण-मार्ग-प्राप्तां त्वत्कथां प्रेम्णा श्रुत्वा ये जीवंति तैस्त्वं जितोऽसि ॥३॥ हे विभो, ये चतुर्विध-पुरुषार्थ-साधनरूपां ते भक्तिं हित्वा ज्ञानप्राप्तये यत्नं कुर्वंति तेषां क्लेश एवावशिष्यते । यथा तुषकंडणकारिणां क्लेश एव फलं तद्वत् ॥४॥ हे व्यापक, पुरा वहवोऽपि योगिनोऽष्टांगयोगैर्ज्ञानमप्राप्य पश्चात्कथाश्रवणादिना प्राप्तया भक्त्यैवात्मानं ज्ञात्वा सुखेन ते परां गतिं प्राप्ताः ॥५॥ हे विभो, तथापि गुणातीतस्य तव महिमा जितेंद्रियैः पुरुषैः कदाचिज्ज्ञातुं योग्यो भवति ॥ ६ ॥ जगत्पालनाय बहुगुणाविष्कारेणावतीर्णस्य तव गुणानां प्रमाणं कर्तुं के समर्थाः न केऽपि ॥७॥ तस्मात्तव कृपा कदा भविष्यतीति प्रतीक्षन् स्वकर्मफलमनासक्ततया भुंजानो देहवाङ्मनोभिस्तव श्रवणादिभक्तिं च

ज्ञाने प्रयासमुदपास्य नमंत एव जीवंति सन्मुखसरितां भवदीयवार्ताम् ॥ स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम् ॥३॥ श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यंति ये केवलबोधलब्धये ॥ तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥४॥ पुरेह भूमन्बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया ॥ विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽजोऽच्युत ते गतिं पराम् ॥५॥ तथापि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलांतरात्मभिः ॥ अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न चान्यथा ॥६॥ गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य ॥ कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः ॥७॥ तत्तेऽनुकंपां सुसमीक्षमाणो भुंजान एवात्मकृतं विपाकम् ॥ हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥८॥ पश्येश मेऽनार्यमनंत आद्ये परात्मनि त्वय्यपि मायिमायिनि ॥ मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ ॥९॥ अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः ॥ अजाऽवलेपांऽधतमोंऽधचक्षुष एषोऽनुकंप्यो मयि नाथवानिति ॥१०॥ क्वाहं तमोमहदहंखचराग्निवार्भूसंवेष्टितांडघटसप्तवितस्तिकायः ॥ क्वेदृग्विधाऽविगणितांडपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम् ॥११॥ उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे ॥ किमस्तिनास्तिव्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनंतः ॥१२॥ ॥ ॥

कुर्वन् यो जीवेत स मुक्तिं प्राप्नोति ॥८॥ एवं स्तुत्वा स्वापराधं निवेदयति । हे ईश, मम दुर्जनत्वं पश्य । यतः सर्वमोहके त्वयि स्वमायां प्रसार्य तवैश्वर्यं द्रष्टुमहमिच्छितवान् । एवं कर्तुं त्वय्यहं कियान् । न किंचित् ॥९॥ अतो हे अच्युत, त्वत्तोऽन्यमीश्वरमात्मानं मन्यमानस्य मेऽपराधं क्षमस्व ॥१०॥ हे देव, प्रकृति-महत्तत्वाहंकार-पंचभूतरूपैरावरणैर्वेष्टितो यो ब्रह्मांडघटः स एव सप्तवितस्तिप्रमाणो देहो यस्य सोऽहं क्व । ईदृग्विधासंख्य-ब्रह्मांडरूप-परमाणु-परिभ्रमणार्थं गवाक्षा इव रोमरंध्राणि यस्य तस्य तव महिमा च क्व ॥११॥ अपिच । हे ईश, गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुरपराधाय भवति किम् । नैव भवति । अतः सर्वस्य कुक्षिगतत्वात्तन्मध्यगतस्य ममाप्यपराधं मातृवत्क्षमस्व ॥१२॥ ॥

प्रलयकालीनसमुद्रे स्थितस्य नारायणस्य नाभिकमलाद्ब्रह्मा जात इति वाक् तावन्मिथ्या न । हे ईश, अहं त्वत्तो नोत्पन्नोऽस्मि किम् । अपि तु त्वत्त एवोत्पन्नोऽस्मि ॥१३॥ तर्हि नारायणपुत्रः स्यास्त्वं तत्र मम किं प्राप्तं तत्राह । त्वं सर्वदेहिनामात्मा सर्वसाक्षी नारायणो नासि किम् । अस्येव । ननु देशकालवस्तुपरिच्छेदरहितस्य मे कथं जलाश्रयनारायणत्वं तत्राह । तज्जलस्थितं तव नारायणस्वरूपं सत्यं न किंतु मायैव ॥१४॥ यदि तत्सत्यं तर्हि कमलनालमार्गेणांतःप्रविश्य संवत्सरशतं विचिन्वतापि मया तत्र किमिति न दृष्टम् । तत-स्तपःकरणानंतरं हृदि किमिति सुदृष्टम् । अतो मायैव ॥१५॥ हे मायानिवर्तक, अत्रैवावतारे त्वया वहिः स्फुटस्य प्रपंचस्य स्वोदरमध्ये यशोदायाः प्रदर्शनेन मायात्वं प्रकटीकृतमस्ति ॥१६॥ ननु वहिः स्थितस्य जगतोंऽतर्जठरे प्रतिविंबं पतितमिति चेत्तर्हि प्रतिविंबं वाह्याद्विलोमतया प्रतीयते । न तु तदस्ति। तव चादर्शस्थानीयस्य त्वयि प्रतीतिर्न स्यात्सापि जाता।

जगत्त्रयांतोदधिसंप्लवोदे नारायणस्योदरनाभिनालात् ॥ विनिर्गतोऽजस्त्विति वाङ् न वै मृषा किंत्वीश्वर त्वन्न विनिर्गतोऽस्मि ॥१३॥ नारा-यणस्त्वं नहि सर्वदेहिनामात्माऽस्यधीशाखिललोकसाक्षी ॥ नारायणोंऽगं नरभूजलायनात्तच्चापि सत्यं न तवैव माया ॥१४॥ तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदैव ॥ किंवा सुदृष्टं हृदि मे तदैव किं नो सपद्येव पुनर्व्यदर्शि ॥१५॥ अत्रैव मायाधमनावतारे ह्यस्य प्रपं-चस्य वहिः स्फुटस्य ॥ कृत्स्नस्य चांतर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते ॥१६॥ यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा ॥ तत्त्व-य्यपीह तत्सर्वं किमिदं मायया विना ॥१७॥ अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितमेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि ॥ तावंतोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासितास्तावंत्येव जगंत्यभूस्तदमितं ब्रह्माऽद्वयं शिष्यते ॥१८॥ अजानतां त्वत्पदवीमना-त्मन्यात्माऽऽत्मना भासि वितत्य मायाम् ॥ सृष्टाविवाहं जगतो विधान इव त्वमेषोंऽत इव त्रिनेत्रः ॥१९॥ सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य ॥ जन्मासतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय च ॥२०॥ को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भ-वतस्त्रिलोक्याम् ॥ क्व वा कथं वा कति वा कदेति विस्तारयन्क्रीडसि योगमायाम् ॥२१॥ तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ॥ त्वय्येव नित्यसुखबोधतनावनंते मायात उद्यदपि यत्सदिवावभाति ॥२२॥ ॥ ॥

अतः सा मायैव॥१७॥ ममापि त्वया मायात्वं दर्शितम् । तदाह । त्वमादावेकोऽसि । ततो वत्सास्तत्पालाश्चासि । ततस्ते यावंतस्तावंतश्चतुर्भुजास्तावंत्येव जगंति चाभूः । अंते त्वमेक एवावशिष्टोऽसि ॥१८॥ हे ईश, तव स्वरूपमजानतां त्वं स्वातंत्र्येण मायां विस्तार्य भासि । कथम् । जगत्सृष्टौ ब्रह्मेव। पालने विष्णुरिव । संहारे रुद्र इव च भासि ॥१९॥ हे रक्षक, देवर्षिमनुष्य-तिर्यक्षु वामन-पशुराम-राम-वराहरूपेण तव जन्म दुष्टानां मदनिग्रहाय साधूनामनुग्रहाय च जातम् ॥२०॥ हे व्यापक, हे भगवन्, हे परमात्मन्, हे योगेश्वर, यदा त्वं योगमायां विस्तार्य क्रीडसि तदा तव लीलाः क्व कथं कदा कति चेति त्रैलोक्ये को वेत्ति न कोऽपि । अतस्तव योगमायावैभवमचिंत्यमस्ति ॥२१॥ तस्मादिदं जगन्नित्यसुखबोधरूपे

त्वयि त्वत्सत्तया अनित्यमपि नित्यवत् । असुखमपि सुखवत् । अचेतनमपि चेतनवत् भासते ॥२२॥ किंच । त्वं एकः सत्यः आत्मा आद्यः पुराणः पुरुषः नित्यः पूर्णः अक्षरोऽमृतोऽनंतो ज्योतिर्निरंजनश्चासि ॥२३॥ एवंभूतं त्वां गुरोर्लब्धेन ज्ञानचक्षुषा ये पश्यंति त एव संसारसमुद्रं तरंति ॥२४॥ आत्मस्वरूपमजानतामेव पुंसामज्ञानेन प्रपंचो भवति स पुनरात्मस्वरूपज्ञानेन लीयते। यथा रज्जोरज्ञानेन भासितः सर्पो रज्जुज्ञानेन निवर्तते तद्वत् ॥२५॥ अतोऽज्ञानसंज्ञावेव बंधमोक्षौ स्तः। तौ च अखंडानंदानुभवरूपे आत्मनि विचार्यमाणे सति नाशं प्राप्नुतः ॥२६॥ हे प्रभो, त्वय्यात्मनि देहादिमध्यस्य देहादावात्मानं चाध्यस्य देहे नष्ट आत्मा वहिर्मृग्यत इत्याश्चर्यम्। नहि गृहे नष्टं वस्तु वने मृग्यते ॥२७॥ अतो विवेकिनस्त्वां चिज्जडात्मके शरीर एव जडं त्यजंतः संतो मृगयंति। तस्मात्त्वत्स्वरूपज्ञानेनैव मुक्तिर्भवति ॥२८॥ अथापि हे

एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनंत आद्यः ॥ नित्योऽक्षरोऽजस्रसुखो निरंजनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥२३॥ एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते ॥ गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरंतीव भवानृतांबुधिम् ॥२४॥ आत्मानमेवात्मतयाऽविजानतां तेनैव जातं निखिलं प्रपंचितम् ॥ ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥२५॥ अज्ञानसंज्ञौ भवबंधमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ॥ अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥२६॥ त्वामात्मानं परं मत्वा परमात्मानमेव च ॥ आत्मा पुनर्वहिर्मृग्य अहोऽज्ञजनताऽज्ञता ॥२७॥ अंतर्भवेऽनंत भवंतमेव ह्यतत्त्यजंतो मृगयंति संतः ॥ असंतमप्यंत्यहिमंतरेण संतं गुणं तं किमुयंति संतः ॥ २८ ॥ अथापि ते देव पदांबुजद्वयप्रसादलेशानुगृहीत एव हि ॥ जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥२९॥ तदस्तु मे नाथ स भूरिभागो भवेऽत्र वाऽन्यत्र तु वा तिरश्चाम् ॥ येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम् ॥३०॥ अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा ॥ यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥३१॥ अहो भाग्यमहो भाग्यं नंदगोपव्रजौकसाम् ॥ यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनम् ॥ ३२ ॥ एषां तु भाग्यमहिमाऽच्युत तावदास्तामेकादशैव हि वयं वत भूरिभागाः ॥ एतद्धृषीकचषकैरसकृत्पिवामः शर्वादयोंऽघ्युदजमध्वमृतासवं ते ॥३३॥ ॥ ॥

देव, तव चरणकमल-द्वय-प्रसादलेशेनानुगृहीत एव पुमान् तव महिम्नस्तत्त्वं जानाति नान्यः ॥२९॥ तस्मात् हे नाथ, अत्र ब्रह्मजन्मनि कर्मवशात्प्राप्तायां तिर्यग्योनौ वा तदेव मम भूरिभाग्यं प्राप्नोतु। येन भाग्येन त्वद्भक्तानां मध्ये यः कश्चिदपि भक्तो भूत्वा तव चरणकमलमत्यर्थं सेवेय ॥३०॥ हे कृष्ण, व्रजस्था गावो गोप्यश्चातिधन्याः । यासां स्तन्यं वत्सानां पुत्राणां च स्वरूपेण प्रतिक्षणं तृप्यता त्वया पीतम्। यस्य तव तृप्तये सर्वेऽपि यज्ञा अद्यापि न शक्ताः ॥३१॥ अहो नंदगोपव्रजौकसां महद्भाग्यम्। येषां परमानंदं पूर्णं ब्रह्म मित्रमस्ति ॥३२॥ एषां भाग्यमहिमा तावदास्ताम्। मनो-बुद्ध्यहंकार-चक्षुरादींद्रियाधिष्ठातारो वयं त्रयोदश देवा अपि भूरिभाग्याः। यत एषां गोकुलवासिनामिंद्रियरूपैः

पानपात्रैश्चतुर्दशस्य चित्ताधिष्ठातुर्वासुदेवस्य तेऽमृततुल्यं चरणकमलमकरंदं मुहुः पिबामः ॥३३॥ तस्मात् हे नाथ, अत्र लोके तत्रापि गोकुले कृमिकीटादेरपि जन्म मे भवतु। यस्मिन् जन्मनि गोकुलवासिनां मध्ये यस्य कस्यापि चरणरजोऽभिषेको मदुपरि स्यात्। येषां गोकुलवासिनां सर्वमायुष्यमपि त्वमेव जातोऽसि ॥३४॥ हे देव, भवान् एषां व्रजवासिनां सर्वफलरूपादात्मस्वरूपादन्यत्फलं किं दास्यतीति मे मनो विचारं कुर्वत् सत् मुह्यति। यतो भक्तवेषानुकरणमात्रेण पूतनाऽपि कुलसहिता त्वत्स्वरूपं प्राप्ता। येषां तु गृह-धन-स्त्री-पुत्र-प्राणांतःकरणानि त्वदर्थमेव संति तेषामपि तदेव फलं त्वं दास्यसि चेत्तर्हि तदतीवाल्पम्। अतो भवानेषां भक्त्या ऋणीवास्ते ॥३५॥ हे कृष्ण, यावत्त्वद्भक्ता न जातास्तावदेव तेषां विवेकधैर्यादिधनस्य रागलोभादयश्चौरा भवंति। तथा गृहमपि तेषां तावदेव कारागृहं भवति। मोहोऽपि तावदेव शृंखला स्यात्। त्वद्भक्तानां तु राग-

तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमांघ्रिरजोभिषेकम् ॥ यज्जीवितं तु निखिलं भगवान्मुकुंदस्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥३४॥ एषां घोषनिवासिनामुत भवान्किं देव रातेति नश्चेतो विश्वफलात्फलं त्वदपरं कुत्राप्ययन्मुह्यति ॥ सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥३५॥ तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् ॥ तावन्मोहोंऽघ्रिनिगडो यावत्कृष्ण न ते जनाः ॥३६॥ प्रपंचं निष्प्रपंचोऽपि विडंबयसि भूतले ॥ प्रपन्नजनतानंदसंदोहं प्रथितुं प्रभो ॥३७॥ जानंत एव जानंतु किं बहूक्त्या न मे प्रभो ॥ मनसो वपुषो वाचो वैभवं तव गोचरः ॥३८॥ अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक् ॥ त्वमेव जगतां नाथो जगदेतत्तवार्पितम् ॥३९॥ श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन् क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ॥ उद्धर्मशार्वरहर क्षितिराक्षसध्रुगाकल्पमार्कमर्हन्भगवन्नमस्ते ॥४०॥ श्रीशुक उवाच ॥ इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः ॥ नत्वाऽभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत ॥४१॥ ततोऽनुज्ञाप्य भगवान्स्वभुवं प्रागवस्थितान् ॥ वत्सान्पुलिनमानिन्ये यथापूर्वसखं स्वकम् ॥४२॥ ॥ ॥

दयोऽपि मोचका एव ॥३६॥ किंच। हे प्रभो, शरणागतजनानामानंदं विस्तारयितुं निष्प्रपंचोऽपि त्वं प्रपंचं विस्तारयसि ॥३७॥ एवमादित आरभ्य भगवत्स्वरूपस्य दुर्ज्ञेयत्वमुक्तम्। केचित्तु जानीम इति स्थितास्तानुपहसन्नाह। हे प्रभो, त्वां ये जानंति त एव जानंतु। मम तु मनसः देहस्य वाचश्च तव वैभवं विषयो न[2] भवति ॥३८॥ हेकृष्ण, मां सत्यलोकं गंतुमाज्ञां देहि। त्वमेव सर्वं वेत्सि। त्वमेव जगतां नाथोऽसि। अत इदं जगत् मे शरीरं च तवार्पितम् ॥३९॥ हे श्रीकृष्ण, यादवकुल-कमल-प्रीतिदातृत्वेन हे सूर्योपम, भूमिदेव-ब्राह्मण-पशु-समुद्रस्य वृद्धिकरत्वेन हे चंद्रोपम, हे सूर्यादीनामपि पूज्य, भगवन्, कल्पपर्यंतं तुभ्यं नमः ॥४०॥ श्रीशुक उवाच ॥ ब्रह्मा कृष्णमेवं स्तुत्वा त्रिः परिक्रम्य चरणयोर्नत्वा च सत्यलोकं ययौ ॥४१॥ तदा कृष्णो ब्रह्माणमनुज्ञाप्य पूर्वमेव ब्रह्मणाऽऽनीय वने स्थापितान् वत्सान् यथापूर्व-स्थापित-गोपबालं यमुनातटमानिन्ये ॥४२॥ ॥



१ यदा प्रत्येकार्मिंद्रियाभिमानिनो वयं कीर्तिसौंदर्यसौगंध्याद्येकदेशसेविनोऽपि कृतार्थास्तदा सर्वैरिंद्रियैः सर्वसौंदर्यसेविनामेतेषां किं वर्ण्यते भाग्यमिति। २ तेषां मनआदीनामधिकारात्परतस्त्वद्वैभवमित्यर्थः।

हे नृप, एवं कृष्णं विनैकस्मिन् वर्षे गते सत्यपि ते वालाः क्षणार्धं मेनिरे । यतः कृष्णमायामोहिताः ॥४३॥ यया मायया मोहितं जगत् पुनः पुनरात्मानमपि विस्मरति ॥४४॥ ततस्ते वत्सपाला ऊचुः । हे कृष्ण, त्वं शीघ्रमागतः । त्वया विनैकोऽपि कवलोऽस्माभिर्न भुक्तः । त्वमत्र स्वस्थाने एहि । इतः परं स्वस्थतया भुज्यताम् ॥४५॥ ततः कृष्णः प्रहस्य तैः सह भुक्त्वाऽऽजगरं चर्म दर्शयन् वनाद्व्रजं न्यवर्तत ॥४६॥ तदा मयूरपिच्छैः पुष्पैर्गैरिकादिधातुभिर्विचित्रितांगः शृंगवेणू वादयन् व्रजं प्राविशत् ॥४७॥ ततो वाला एवमूचुः । अद्यानेन कृष्णेन महासर्पो हतः । तस्मादस्माकं रक्षणं च कृतम् ॥४८॥ राजोवाच । हे ब्रह्मन्, व्रजवासिनां स्वपुत्रेभ्योऽप्यधिकः प्रेमा परोद्भवे कृष्णे कथं जात इदं

एकस्मिन्नपि यातेऽब्दे प्राणेशं चांतरात्मनः ॥ कृष्णमायाऽऽहता राजन्क्षणार्धं मेनिरेऽर्भकाः॥४३॥ किं किं न विस्मरंतीह मायामोहितचेतसः ॥ यन्मोहितं जगत्सर्वमभीक्ष्णं विस्मृतात्मकम् ॥४४॥ ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा ॥ नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम् ॥४५॥ ततो हसन्हृषीकेशोऽभ्यवहृत्य सहार्भकैः ॥ दर्शयंश्चर्माजगरं न्यवर्तत वनाद्व्रजम् ॥४६॥ वर्हप्रसूननवधातुविचित्रितांगः प्रोद्दामवेणुदलशृंगर-वोत्सवाढ्यः ॥ वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम् ॥४७॥ अद्यानेन महाव्यालो यशोदानंदसूनुना ॥ हतोऽविता वयं चास्मादिति वाला व्रजे जगुः ॥४८॥ राजोवाच ॥ ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत् ॥ योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ॥४९॥ श्रीशुक उवाच ॥ सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः॥ इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ॥५०॥ तद्राजेंद्र यथा स्नेहः स्वस्वकात्मनि देहिनाम् ॥ न तथा ममतालंबिपुत्रवित्तगृहादिषु ॥५१॥ देहात्मवादिनां पुंसामपि राजन्यसत्तम ॥ यथा देहः प्रियतमस्तथा नह्यनु ये च तम् ॥५२॥ देहोऽपि ममताभाक्चेत्तर्ह्यसौ नात्मवत्प्रियः ॥ यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा वलीयसी ॥५३॥ तस्मात्प्रियतमः स्वात्मा सर्वेषामपि देहिनाम् ॥ तदर्थमेव सकलं जगदेतच्चराचरम् ॥५४॥ कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ॥ जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥५५॥ वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च ॥ भगवद्रूपमखिलं नान्यद्वस्त्विह किंचन ॥५६॥ ॥

कथ्यताम् ॥४९॥ श्रीशुक उवाच ॥ हे नृप, सर्वेषामपि प्राणिनां स्वात्मैवातिप्रियः । इतरे द्रव्यपुत्राद्यास्तत्सुखसाधनत्वेनैव प्रिया न स्वतः ॥५०॥ तस्मात्स्वात्मनि यथा सर्वेषां प्रीतिस्तथा ममतास्पदेषु पुत्रवित्तादिषु न ॥५१॥ किंच । देहात्ममानिनामपि पुंसां यथा देहः प्रियतमस्तथा तमनुसृत्य स्थिताः पुत्रादयो न प्रियाः ॥५२॥ देहोऽपि ममतास्पदं चेत्तर्ह्यप्यसावात्मवत्प्रियो न । यतो मरणोन्मुखेऽपि देहे जीविताशा वलीयसी ॥५३॥ तस्मादात्मा सर्वेषामपि प्रियतमः । तदर्थमेव सकलं प्रियम् ॥५४॥ हे नृप, त्वमेनं कृष्णं सर्वात्मानं जानीहि । स जगद्धितायात्र मायया देहवानिवाभाति । अतोऽत्र सर्वेषां प्रीतिर्जाता ॥५५॥ वस्तुतो जानतां पुंसां चराचरमिदं जगत्कृष्णरूपं भाति ॥५६॥ ॥

सर्वेषामपि पदार्थानां कृष्ण एव कारणम् । अतः श्रीकृष्णव्यतिरिक्तं किं वस्तु तन्निरूप्यताम् ॥५७॥ हे नृप, ये कृष्णचरणकमलनौकामाश्रितास्तेषां भवसमुद्रो वत्सपदतुल्यो भूत्वा मोक्षः प्राप्तो भवति ॥५८॥ एवं त्वया यत् पृष्टं तत्सर्वं कथितम् ॥५९॥ इदं कृष्णस्य गोपबालैः सह क्रीडनमघासुरमोक्षणं वनभोजनं वत्सवत्सपालरूपधारणं ब्रह्मकृतस्तवनं च यः शृणोत्युच्चारयति वा स सर्वपुरुषार्थान् प्राप्नोति ॥६०॥ एवं रामकृष्णौ कौमारैः क्रीडनैर्व्रजे क्रीडंतौ संतौ कौमारं वयो जहतुः ॥६१॥ इति श्रीमद्भाग० चूर्णि० दश० पूर्वार्धे चतुर्दशोऽध्यायः ॥१४॥ ततः पंचदशे धेनुपालनं धेनुकार्दनम् । कालियक्ष्वेडतो गोपरक्षणं च निरूप्यते ॥१॥ श्रीशुक उवाच ॥ ततः पौगंडवयः श्रितौ तौ रामकृष्णौ

सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः ॥ तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम् ॥५७॥ समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः ॥ भवांबुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषाम् ॥५८॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया ॥ यत्कौमारे हरिकृतं पौगंडे परिकीर्तितम् ॥५९॥ एतत्सुहृद्भिश्चरितं मुरारेरघार्दनं शाद्वलजेमनं च ॥ व्यक्तेतरद्रूपमजोर्वभिष्टवं शृण्वन् गृणन्नेति नरोऽखिलार्थान् ॥६०॥ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ॥ निलायनैः सेतुबंधैर्मर्कटोत्प्लवनादिभिः ॥६१॥ इति श्री० म० दश० पू० ब्रह्मस्तुतिर्नाम चतुर्दशोऽध्यायः ॥१४॥ श्रीशुक उवाच ॥ ततश्च पौगंडवयः श्रितौ व्रजे बभूवतुस्तौ पशुपालसंमतौ ॥ गाश्चारयंतौ सखिभिः समं पदैर्वृंदावनं पुण्यमतीव चक्रतुः ॥१॥ तन्माधवो वेणुमुदीरयन्वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः ॥ पशून्पुरस्कृत्य पशव्यमाविशद्विहर्तुकामः कुसुमाकरं वनम् ॥२॥ तन्मंजुघोषालिमृगद्विजाकुलं महन्मनःप्रख्यपयः सरस्वता ॥ वातेन जुष्टं शतपत्रगंधिना निरीक्ष्य रंतुं भगवान्मनो दधे ॥३॥ स तत्र तत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः ॥ स्पृशच्छिखान्वीक्ष्य वनस्पतीन्मुदा स्मयन्निवाहाग्रजमादिपूरुषः ॥४॥ श्रीभगवानुवाच ॥ अहो अमी देववराऽमरार्चितं पादांबुजं ते सुमनःफलार्हणम् ॥ नमंत्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥५॥ एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायंत आदिपुरुषानुपदं भजंते ॥ प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥६॥

गवां पालने नंदादिगोपानां संमतौ जातौ । तदा गोपैः सह गाश्चारयंतौ संतौ स्वपादचिह्नैर्वृंदावनं पुण्यतमं चक्रतुः ॥१॥ एकदा श्रीकृष्णो बलरामादिभिः सह वेणुं वादयन् पशूनां हितं वृंदावनं प्रविवेश ॥२॥ तद्वनं भ्रमर-मृग-पक्षिभिर्व्याप्तं कमलगंधवायुना सेवितं दृष्ट्वा तत्र रंतुं कृष्णो मनो दधे ॥३॥ ततः स आरक्तपल्लवश्रिया फलपुष्पभारेण स्वपादयोः स्पृशच्छिखाग्रान् वृक्षान् दृष्ट्वा हसन्निव कृष्णो रामं जगाद ॥४॥ श्रीभगवानुवाच ॥ हे राम, एते वृक्षाः स्वशाखाभिः पुष्पफलादिपूजासाहित्यं गृहीत्वा तव चरणकमलं, येन पापेनात्मनस्तरुजन्म कृतं तस्य पापस्य नाशाय नमंति ॥५॥ किंच । एते भ्रमरास्तव यशो गायंति । अत इमे प्रायो ऋषिगणा वने गुप्तमपि त्वां न त्यजंति ॥६॥

हे राम, एते मयूरा नृत्यंति । तथैता हरिण्यो गोप्य इव दृष्ट्वा ते प्रियं कुर्वंति । तथा कोकिला गृहं प्राप्ताय तुभ्यं वाग्भिः सत्कुर्वंति । अत एते वनस्था अपि धन्याः ॥७॥
हे राम, इयं भूमिस्तृणलताश्च तव पादस्पर्शाद्धन्याः । वृक्षलताश्च तव नखस्पर्शाद्धन्याः । पर्वत-मृग-पक्षिणस्तव कृपावलोकैर्धन्याः । गोप्यश्च तव वक्षस्थलस्यालिंगनेन धन्याः ॥८॥
श्रीशुक उवाच ॥ एवं वृंदावनं स्तुत्वा प्रीतः श्रीकृष्णो गोवर्धन-समीपवर्ति-नदीतटेषु पशून् चारयन् रेमे ॥९॥ क्वचिद्भ्रमरेषु गायत्सु बलरामेण सह स्वयं गायति ॥१०॥ क्वचिद्धं-सकूजितमनुकूजति । क्वचिन्नृत्यंतं मयूरमभिनृत्यति ॥११॥ क्वचिन्मेघगंभीरया वाचा दूरगान्पशून् आह्वयति ॥१२॥ क्वचिच्चकोर-क्रौंच-चक्रवाकादीनां शब्दाननुकृत्य रौति ।

नृत्यंत्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वंति गोप्य इव ते प्रियमीक्षणेन ॥ सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान्हि सतां निसर्गः ॥७॥ धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ॥ नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योंऽतरेण भुजयोरपि यत्स्पृहा श्रीः ॥८॥ श्रीशुक उवाच ॥ एवं वृंदावनं श्रीमत्कृष्णः प्रीतमनाः पशून् ॥ रेमे संचारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥९॥ क्वचिद्गायति गायत्सु मदांधालिष्वनुव्रतैः ॥ उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ॥१०॥ क्वचिच्च कलहंसानामनुकूजति कूजितम् ॥ अभिनृत्यति नृत्यंतं बर्हिणं हासयन्क्वचित् ॥११॥ मेघगंभीरया वाचा नामभिर्दूरगान्पशून् ॥ क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥१२॥ चकोरक्रौंचचक्राह्वभारद्वाजांश्च बर्हिणः ॥ अनुरौति स्म सत्वानां भीतवद्व्याघ्रसिंहयोः ॥१३॥ क्वचित्क्रीडापरिश्रांतं गोपोत्संगोपबर्हणम् ॥ स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः ॥१४॥ नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः ॥ गृहीतहस्तौ गोपालान्हसंतौ प्रशशंसतुः ॥१५॥ क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः ॥ वृक्षमूलाश्रयः शेते गोपोत्संगोपबर्हणः ॥१६॥ पादसंवाहनं चक्रुः केचित्तस्य महात्मनः ॥ अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥१७॥ अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः ॥ गायंति स्म महाराज स्नेहक्लिन्नधियः शनैः ॥१८॥ एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडंबयन् ॥ रेमे रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः ॥१९॥ श्रीदामा नाम गोपालो रामकेशवयोः सखा ॥ सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् ॥२०॥ ॥ ॥ ॥

क्वचिद्व्याघ्रसिंहाभ्यां भयं प्राप्य पशुषु पलायमानेषु सत्सु स्वयमपि भीतवत्पलायते ॥१३॥ क्वचित्क्रीडाश्रांतं रामं स्वयं चरणशुश्रूषणादिभिर्विगतश्रमं करोति ॥१४॥ क्वचिन्नृत्यतो गायतो गोपान् रामकृष्णौ प्रशशंसतुः ॥१५॥ क्वचित्कृष्णः पत्रशय्यासु गोपोत्संगे कृतोपबर्हणः सन् वृक्षमूले शेते ॥१६॥ तदा केचिद्गोपास्तस्य पादसंवाहनं चक्रुः ॥ अपरे पल्लवादिभिर्निर्मितव्यजनैर्वीजयंति ॥१७॥ अन्ये तु तस्य कृष्णस्यानुरूपाणि गायंति ॥१८॥ एवं कृष्णो मायया स्वरूपमाच्छाद्य स्वाचरणैर्गोपपुत्रत्वं विडंबयन् । ग्राम्यैर्गोपैः सह ग्राम्यवद्रेमे ॥१९॥ तदा रामकृष्णयोर्मित्रं श्रीदामा नाम गोपालस्तथा सुबल-स्तोककृष्णादयो गोपा रामकृष्णसमीपमेत्य प्रेम्णेदं जगदुः ॥२०॥ ॥ ॥

हे राम, हे कृष्ण, इतः समीपे तालवृक्ष-पंक्तिभिर्व्याप्तमेकं महद्वनं वर्तते ॥२१॥ तत्र बहूनि फलानि परिपक्वानि संति । तथापि तानि धेनुकासुरेण रुद्धानि संति ॥२२॥ स तु गर्दभरूपधारी दैत्योऽन्यैर्ज्ञातिभिः सह तत्रास्ते ॥२३॥ स मनुष्यादीन् भक्षयति । तस्मात्तद्वनं मनुष्य-पशु-पक्ष्यादिभिर्वर्जितमस्ति ॥२४॥ तत्र स्थितानां फलानामेष गंधो वाति पश्य ॥२५॥ हे कृष्ण, तानि नः प्रयच्छ । अस्माकं तद्भक्षणे वांछा जाताऽस्ति । हे राम, यदि तेऽस्मद्वचो रोचते तर्हि तेषामानयनार्थं गम्यताम् ॥२६॥ एवं गोपवचः श्रुत्वा रामकृष्णौ सखिप्रियार्थं गोपैः सह तत्र जग्मतुः ॥२७॥ ततो बलरामस्तद्वनं प्रविश्य बाहुभ्यां तालान् कंपयन् फलानि पातयामास ॥२८॥ तदा फलानां पततां शब्दं श्रुत्वा

राम राम महाबाहो कृष्ण दुष्टनिबर्हण ॥ इतोऽविदूरे सुमहद्वनं तालालिसंकुलम् ॥२१॥ फलानि तत्र भूरीणि पतितानि पतंति च ॥ संति किंत्ववरुद्धानि धेनुकेन दुरात्मना ॥२२॥ सोऽतिवीर्योऽसुरो राम हे कृष्ण खररूपधृक् ॥ आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥२३॥ तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् ॥ न सेव्यते पशुगणैः पक्षिसंघैर्विवर्जितम् ॥२४॥ विद्यंतेऽभुक्तपूर्वाणि फलानि सुरभीणि च ॥ एष वै सुरभिर्गंधो विषूचीनोऽवगृह्यते ॥२५॥ प्रयच्छ तानि नः कृष्ण गंधलोभितचेतसाम् ॥ वांछास्ति महती राम गम्यतां यदि रोचते ॥२६॥ एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया ॥ प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥२७॥ बलः प्रविश्य बाहुभ्यां तालान्संपरिकंपयन् ॥ फलानि पातयामास मतंगज इवौजसा ॥२८॥ फलानां पततां शब्दं निशम्यासुररासभः ॥ अभ्यधावत्क्षितितलं सनगं परिकंपयन् ॥२९॥ समेत्य तरसा प्रत्यग्द्वाभ्यां पद्भ्यां बलं बली ॥ निहत्योरसि काशब्दं मुंचन्पर्यसरत्खलः ॥३०॥ पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः ॥ चरणावपरौ राजन्बलाय प्राक्षिपद्रुषा ॥३१॥ स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना ॥ चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥३२॥ तेनाहतो महातालो वेपमानो बृहच्छिराः ॥ पार्श्वस्थं कंपयन्भग्नः स चान्यं सोऽपि चापरम् ॥३३॥ बलस्य लीलयोत्सृष्टखरदेहहताहताः ॥ तालाश्चकंपिरे सर्वे महावातेरिता इव ॥३४॥ नैतच्चित्रं भगवति ह्यनंते जगदीश्वरे ॥ ओतप्रोतमिदं यस्मिंस्तंतुष्वंग यथा पटः ॥३५॥ ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये ॥ क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबांधवाः ॥३६॥ ॥ ॥ ॥

धेनुकासुरो भूतलं कंपयन्नधावत् ॥२९॥ स बलराममेत्य पश्चात्पादाभ्यां वक्षसि निहत्य गर्दभजातिशब्दं कृत्वा परितोऽधावत् ॥३०॥ पुनरेत्य बलसंमुखं स्वपुच्छं कृत्वा बलं हंतुं पश्चिमपादौ प्राक्षिपत् ॥३१॥ तावद्बलस्तमेकेन हस्तेन पादयोर्धृत्वा भ्रामयित्वा च मृतं तं तालशिरसि चिक्षेप ॥३२॥ तेन ताडितस्तालः पार्श्वस्थं तालवृक्षं कंपयन् तदुपरि पतित्वा भग्नः । सोऽन्यं सोऽप्यपरं कंपयन् तदुपरि पतित्वा भग्नः ॥३३॥ एवं खरदेहताडिताः सर्वे ताला महावातप्रेरिता इव चकंपिरे ॥३४॥ अनंते भगवति जगदीश्वरे एतदाश्चर्यं न ॥३५॥ ततो धेनुकस्य सर्वे ज्ञातयो रामकृष्णौप्रति अभ्यद्रवन् ॥३६॥ ॥ ॥ ॥ ॥

आगच्छतस्तांस्तान् रामः कृष्णश्च तत्पश्चात्पादेषु धृत्वा तालवृक्षेषु प्राहिणोत् ॥३७॥ तदा गतप्राणैर्दैत्यदेहैः फलैस्तालाग्रैश्च व्याप्ता मही रराज ॥३८॥ एवं रामकृष्णयोर्महत्कर्म दृष्ट्वा देवाः पुष्पवृष्टिं चक्रुः गंधर्वा जगुः । ऋषयस्तुष्टुवुः ॥३९॥ ततस्तस्मिन् वने गोपास्तालफलानि भक्षयामासुः । पशवश्च तृणं चेरुः ॥४०॥ ततः सरामः कृष्णो गोपैः स्तूयमानः सन् व्रजमाजगाम ॥४१॥ तदा वेणुं क्वणंतं गोरजोव्याप्तेषु केशेषु बद्ध-मयूरपिच्छ-पुष्पं रुचिरावलोकनहास्ययुतं कृष्णं दृष्ट्वा गोप्यः संमुखं जग्मुः ॥४२॥ ततः कृष्णमुखसंबंधि मकरंदं नेत्ररूपैर्भृंगैः पीत्वा दिनोद्भवं वियोगजं तापं जहुः । ततस्तासां सविनय-कटाक्षमोक्षरूपं संमानं गृहीत्वा व्रजं विवेश ॥४३॥ अथ यशोदारोहिण्यौ तयोरिच्छानुरूपं भोजन-

तांस्तानापततः कृष्णो रामश्च नृप लीलया ॥ गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजसु ॥३७॥ फलप्रकरसंकीर्णा दैत्यदेहैर्गतासुभिः ॥ रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥३८॥ तयोस्तत्सुमहत्कर्म निशम्य विबुधादयः ॥ मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥३९॥ अथ तालफलान्यादन्मनुष्या गतसाध्वसाः ॥ तृणं च पशवश्चेरुर्हतधेनुककानने ॥४०॥ कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः ॥ स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥४१॥ तं गोरजश्छुरितकुंतलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ॥ वेणुं क्वणंतमनुगैरनुगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन्समेताः ॥४२॥ पीत्वा मुकुंदमुखसारघमक्षिभृंगैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ॥ तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदपांगमोक्षम् ॥४३॥ तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ॥ यथाकामं यथाकालं व्यधत्तां परमाशिषः ॥४४॥ गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः ॥ नीवीं वसित्वा रुचिरां दिव्यस्रग्गंधमंडितौ ॥४५॥ जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ॥ संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥४६॥ एवं स भगवान्कृष्णो वृंदावनचरः क्वचित् ॥ ययौ राममृते राजन्कालिंदीं सखिभिर्वृतः ॥४७॥ अथ गावश्च गोपाश्च निदाघातपपीडिताः ॥ दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥४८॥ विषांभस्तदुपस्पृश्य दैवोपहतचेतसः ॥ निपेतुर्व्यसवः सर्वे सलिलांते कुरूद्वह ॥४९॥ वीक्ष्य तान्वै तथाभूतान्कृष्णो योगेश्वरेश्वरः ॥ ईक्षयाऽमृतवर्षिण्या स्वनाथान्समजीवयत् ॥५०॥ ते संप्रतीतस्मृतयः समुत्थाय जलांतिकात् ॥ आसन्सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ॥५१॥ ॥ ॥ ॥

वस्त्रादिकं ददतुः ॥४४॥ ततो रामकृष्णौ मज्जनोन्मर्दनादिभिर्गतश्रमौ संतौ सुंदरे वस्त्रे परिधाय ॥४५॥ मात्रा आनीतं स्वाद्वन्नं भक्षित्वा शय्यायां सुखं सुषुपतुः ॥४६॥ एकदा श्रीकृष्णो रामं विना गोभिर्गोपैश्च सह जलप्राशनार्थं यमुनां गतः ॥४७॥ अथ गोपा गावश्च निदाघोष्मपीडितास्तृषार्ता भूत्वा विषदूषितं तस्या यमुनाया जलं पपुः ॥४८॥ तदा ते विषजल-प्राशनाद्गतप्राणाः संतो जलसमीपे निपेतुः ॥४९॥ तान् स्वभक्तान् योगेश्वरः कृष्णोऽमृतदृष्ट्या जीवयामास ॥५० ततस्ते जलांतिकादुत्थाय परस्परं वीक्ष्य विस्मिता

आसन् ॥५१॥ हे राजन्, ते विषं पीत्वा मृतस्यात्मनः पुनरुत्थानं कृष्णस्यानुग्रहदृष्ट्यवलोकनेन जातमित्यमंसत ॥५२॥ इति श्रीमद्भागवतचूर्णि० दश० पूर्वार्धे पंचदशोऽध्यायः ॥१५॥ षोडशे कालियस्योक्तो निग्रहो यमुनाह्रदे । तत्पत्नीभिः स्तुतेनाथ कृष्णेनानुग्रहः कृतः ॥१॥ श्रीशुक उवाच ॥ हे राजन्, कृष्णः कालियसर्पेण दूषितां यमुनां दृष्ट्वा तस्याः शुद्धिमिच्छन् तस्मात् स्थानात्कालियं निःसारितवान् ॥१॥ राजोवाच ॥ हे ब्रह्मन्, भगवानगाधे जले स्थितं कालियं कथं न्यगृह्णात् । किंच । सोऽजलचरोऽपि कथं जलेऽवात्सीत् तत्कथ्यताम् ॥२॥ हे ब्रह्मन्, कृष्णस्य चरितामृतं जुषन् कस्तृप्येत ॥३॥ श्रीशुक उवाच ॥ हे नृप, कालिंद्यां कालियस्य ह्रदो विषाग्निना पच्यमानजल आसीत् । यस्मिन्नुपरि

अन्वमंसत तद्राजन् गोविंदानुग्रहेक्षितम् ॥ पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥५२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे धेनुकवधो नाम पंचदशोऽध्यायः ॥१५॥ श्रीशुक उवाच ॥ विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः ॥ तस्या विशुद्धिमन्विच्छन्सर्पं तमुदवासयत् ॥१॥ राजोवाच ॥ कथमंतर्जलेऽगाधे न्यगृह्णाद्भगवानहिम् ॥ स वै बहुयुगावासं यथाऽऽसीद्विप्र कथ्यताम् ॥२॥ ब्रह्मन्भगवतस्तस्य भूम्नः स्वच्छंदवर्तिनः ॥ गोपालोदारचरितं कस्तृप्येतामृतं जुषन् ॥३॥ श्रीशुक उवाच ॥ कालिंद्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना ॥ श्रप्यमाणपया यस्मिन्पतंत्युपरिगाः खगाः ॥४॥ विप्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः ॥ म्रियंते तीरगा यस्य प्राणिनः स्थिरजंगमाः ॥५॥ तं चंडवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ॥ कृष्णः कदंबमधिरुह्य ततोऽतितुंगमास्फोट्य गाढरशनो न्यपतद्विषोदे ॥६॥ सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसितांबुराशिः ॥ पर्यक्प्लुतो विषकषायविभीषणोर्मिर्धावन्धनुः शतमनंतबलस्य किं तत् ॥७॥ तस्य ह्रदे विहरतो भुजदंडघूर्णवार्घोषमंग वरवारणविक्रमस्य ॥ आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमाणः ॥८॥ तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुंदरास्यम् ॥ क्रीडंतमप्रतिभयं कमलोदरांघ्रिं संदश्य मर्मसु रुषा भुजया चछाद ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥

गच्छंतः पक्षिणो मृत्वा पतंति ॥४॥ किंच । यस्य तीरस्थाः स्थावरजंगमजीवा अंबुकणयुक्तेन विषजलतरंगवायुना स्पृष्टा म्रियंते ॥५॥ तस्मिन् ह्रदे स्थितं तीव्रवेगं कालियं सर्पं दृष्ट्वा तेन दुष्टां नदीं च दृष्ट्वा परिकरं बद्ध्वा कदंबमारुह्य बाहुं करतलेनाहत्य विषोदे पपात ॥६॥ ततः स ह्रदः कृष्णनिपातवेगेन चतुःशतहस्तपर्यंतं परितः प्रसृतः ॥ अनंतबलस्य श्रीकृष्णस्यैतदाश्चर्यं न ॥७॥ ततो ह्रदे क्रीडतः श्रीकृष्णस्य भुजदंडताडितजलघोषं श्रुत्वा ततः स्वगृहपराभवं दृष्ट्वा तदसहमानः कालियः कृष्णसमीपमाजगाम ॥८॥ ततो घनश्यामं सुकुमारं पीतांबरधरं निर्भयं क्रीडंतं कृष्णं दृष्ट्वा मर्मस्थानेषु संदश्य देहेन तमवेष्टयत् ॥९॥ ॥ ॥ ॥ ॥

१ भाविना श्रीकृष्णचरणस्पर्शभाग्येन स एकस्तत्तीरे न शुष्कः । अमृतमाहरता गरुडेनाक्रांतत्वादिति च पुराणांतरम् ।

तत्कालियवेष्टनं दृष्ट्वा गोपा अतिशोकभयैर्मूर्छिताः संतो यमुनातीरे निपेतुः ॥१०॥ तदा गावो वृषभा वत्सा वत्सतर्यश्च कृष्णेऽर्पितेक्षणा रुदत्य इव तस्थिरे ॥११॥ अथ गोकुले भयसूचका भूकंपोल्कापात-नेत्रस्फुरणादय उत्पाता बभूवुः ॥१२॥ तान् दृष्ट्वा नंदादिगोपा रामं विना गाश्चारयितुं गतं कृष्णं ज्ञात्वा ॥१३॥ तैर्दुष्टचिह्नैः कृष्णस्य मरणं ज्ञात्वा कृष्णप्राणा गोपाः शोकदुःखभयातुरा जाताः ॥१४॥ ततः सर्वे आबालवृद्धा गोपाः स्त्रियश्च कृष्णदर्शनलालसाः संतो गोकुलान्निर्जग्मुः ॥१५॥ तदा भीतान् तान् दृष्ट्वा बलः प्रहस्य कृष्णप्रभावज्ञः सन् किंचिदपि नोवाच ॥१६॥ ततस्ते कृष्णं मृगयंतो भगवत्पदैः सूचितमार्गेण यमुनातीरं जग्मुः ॥१७॥ तदा ते गोपा मार्गे गवां पदानां मध्ये मध्ये कृष्णस्य

तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ॥ कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः ॥१०॥ गावो वृषा वत्सतर्यः क्रंदमानाः सुदुःखिताः ॥ कृष्णे न्यस्तेक्षणा भीता रुदत्य इव तस्थिरे ॥११॥ अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः ॥ उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः ॥१२॥ तानालक्ष्य भयोद्विग्ना गोपा नंदपुरोगमाः ॥ विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् ॥१३॥ तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः ॥ तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः ॥१४॥ आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तयः ॥ निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः ॥१५॥ तांस्तथा कातरान्वीक्ष्य भगवान्माधवो बलः ॥ प्रहस्य किंचिन्नोवाच प्रभावज्ञोऽनुजस्य सः ॥१६॥ तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः ॥ भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम् ॥१७॥ ते तत्र तत्राब्जयवांकुशा-शनिध्वजोपपन्नानि पदानि विश्पतेः ॥ मार्गे गवामन्यपदांतरांतरे निरीक्षमाणा ययुरंग सत्वराः ॥१८॥ अंतर्ह्रदे भुजगभोगपरीतमारात्कृष्णं निरीहमुपलभ्य जलाशयांते ॥ गोपांश्च मूढधिषणान्परितः पशूंश्च संक्रंदतः परमकश्मलमापुरार्ताः ॥१९॥ गोप्योऽनुरक्तमनसो भगवत्यनंते तत्सौहृदस्मितविलोकगिरः स्मरंत्यः ॥ ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् ॥२०॥ ताः कृष्णमातरमपत्य-मनुप्रविष्टां तुल्यव्यथाः समनुगृह्य शुचः स्रवंत्यः ॥ तास्ता व्रजप्रियकथाः कथयंत्य आसन्कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः ॥२१॥ कृष्णप्रा-णान्निर्विशतो नंदादीन्वीक्ष्य तं ह्रदम् ॥ प्रत्यषेधत्स भगवान्रामः कृष्णानुभाववित् ॥२२॥ ॥ ॥

ध्वज-यवांकुश-वज्रादिचिह्नयुतानि पदानि वीक्ष्य त्वरया ययुः ॥१८॥ ततस्तत्र ह्रदे सर्पेण वेष्टितं कृष्णं यमुनातीरे मूर्छितान् गोपान् क्रंदमानान् पशूंश्च दृष्ट्वा परममोहेन मूर्छां प्रापुः ॥१९॥ तदा गोप्यश्च कृष्णासक्तमनसः सत्यः सर्पेण प्रियतमे श्रीकृष्णे वेष्टिते सति दुःखिता भूत्वा श्रीकृष्णरहितं त्रैलोक्यं शून्यं ददृशुः ॥२०॥ तदा गोप्यः श्रीकृष्ण-समीपं गंतुं यमुनाह्रदे प्रवेष्टुमुद्युक्तां यशोदां धृत्वा कृष्णमुखेऽर्पितदृशः कृष्णकथाः कथयंत्यश्च सत्यो मृततुल्या आसन् ॥२१॥ तथा कृष्णप्राणान् ह्रदं प्रविशतो नंदादीन्

गोपान् वीक्ष्य रामः प्रत्यषेधत् ॥२२॥ एवमनन्यगतिमात्महेतोर्दुःखितं गोकुलं दृष्ट्वा कृष्णो मुहूर्तं स्थित्वा कालियवंधान्निर्गतः ॥२३॥ ततो हरेर्विस्तीर्यमाणदेहेन व्यथितदेहः कालियस्तं त्यक्त्वा क्रुद्धः सन् फणा उन्नमय्य श्वसन् कृष्णमीक्षमाणस्तस्थौ ॥२४॥ ततो हरिस्तं द्विशिखजिह्वया सृक्किणी लिहंतं दृष्ट्वा क्रीडन् सन् परितस्तं वभ्राम । सर्पोऽपि कृष्णं दंशयितुमवसरं प्रतीक्षमाणो वभ्राम ॥२५॥ एवंभ्रमणेन हतवलमुन्नतांसं तमानम्य तन्मस्तकेषु श्रीकृष्णो ननर्त ॥२६॥ तदा कृष्णं नृत्यं कर्तुमुद्युक्तं दृष्ट्वा गंधर्वसिद्धचारणादयो मृदंगादिवाद्यैर्गीतैः पुष्पवृष्टि-नैवेद्य-स्तुतिभिश्च तं सेवितवंतः ॥२७॥ तदैकशतमस्तकस्य तस्य यद्यच्छिरो न नमति तत्तत्स्वचरणपातैर्ममर्द । तदा स नागो नासाविवरेभ्यो

इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः ॥ आज्ञाय मर्त्यपदवीमनुवर्तमानः स्थित्वा मुहूर्तमुदतिष्ठदुरंगवंधात् ॥२३॥ तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान्भुजंगः ॥ तस्थौ श्वसन् श्वसनरंध्रविषांवरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः॥२४॥तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी ह्यतिकरालविषाग्निदृष्टिम् ॥ क्रीडन्नमुं परिससार यथा खगेंद्रो वभ्राम सोऽप्यवसरं प्रसमीक्षमाणः ॥२५॥ एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरस्स्वधिरूढ आद्यः ॥ तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादांबुजोऽखिलकलादिगुरुर्ननर्त ॥२६॥ तं नर्तुमुद्यतमवेक्ष्य तदा तदीयगंधर्वसिद्धसुरचारणदेववध्वः ॥ प्रीत्या मृदंगपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः ॥२७॥ यद्यच्छिरो न नमतेंऽग शतैकशीर्ष्णस्तत्तन्ममर्द खरदंडधरोंऽघ्रिपातैः ॥ क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृङ्नस्तो वमन्परमकश्मलमाप नागः ॥२८॥ तस्याक्षिभिर्गरलमुद्वमतः शिरस्सु यद्यत्समुन्नमति निःश्वसतो रुषोच्चैः ॥ नृत्यन्पदाऽनुनमयन्दमयांवभूव पुष्पैः प्रपूजित इवेह पुमान्पुराणः ॥२९॥ तच्चित्रतांडवविरुग्णफणातपत्रो रक्तं मुखैरुरु वमन्नृप भग्नगात्रः ॥ स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम ॥३०॥ कृष्णस्य गर्भजगतोऽतिभरावसन्नं पार्ष्णिप्रहारपरिरुग्णफणातपत्रम् ॥ दृष्ट्वाऽहिमाद्यमुपसेदुरमुष्य पत्न्य आर्ताः श्लथद्वसनभूषणकेशवंधाः ॥३१॥ ॥ ॥ ॥ ॥ ॥

मुखतश्च रक्तं वमन् मूर्छां प्राप ॥२८॥ एवं कृतेऽपि तस्य यद्यच्छिरः समुन्नमति तत्तत्कृष्णः पुनर्नृत्यत्पादाघातेन नमयन् दमयांवभूव । तदा हृष्टैर्गंधर्वादिभिः शेषासनः पुराणपुरुष इव यशोदानंदनः पुष्पैः पूजित आसीत् ॥२९॥ हे नृप, तस्य विचित्रतांडवेन भग्नफणच्छत्रः स मुखैः रक्तं वमन् तं पुराणपुरुषं भगवंतं स्मृत्वा तं मनसा शरणं जगाम ॥३०॥ एवं गर्भजगतः कृष्णस्य भारेणाक्रांतं पादताडनेन भग्नफणातपत्रं पतिं दृष्ट्वा तत्पत्न्यो दुःखिता विस्रंसमान-वस्त्र-भूषण-केशवंधाः पुरस्कृतवालकाः कृतांजलिपुटाश्च भूत्वा भर्तुर्मोक्षार्थं भुवि देहं निपात्य कृष्णं प्रणेमुः ॥३१॥ ॥ ॥ ॥ ॥ ॥ ॥

१ अधुना कृष्णः कालियनिग्रहं कृत्वा ह्रदाद्बहिरागमिष्यतीति कथयित्वा यूयं ह्रदे प्रवेशं मा कुरुतेति निषेधितवान् ।

॥३२॥ नागपत्न्य ऊचुः ॥ हे कृष्ण, दंशनादिना कृतापराधेऽस्मिन् सर्पे त्वया कृतोऽयं दंडो योग्योऽस्ति । यतस्तवावतारो दुष्टदमनार्थमस्ति ॥३३॥ हे कृष्ण, यतोऽस्य जन्मांतरगतपापेन सर्पत्वं दृश्यतेऽतस्तत्पापनाशकोऽयं दंडोऽस्मदनुग्रहार्थमेव त्वया कृतः ॥३४॥ अनेन सर्पेण पूर्वजन्मनि किं तपः कृतम् । धर्मो वा आचरितः । येन तपआदिना सर्वप्राणरक्षको भवानस्य शिरःसु नृत्यकाले तुष्यति ॥३५॥ ब्रह्मादयोऽपि तपआदिना यस्याः प्रसादमिच्छंति सा लक्ष्मीरपि त्वच्चरण-स्पर्शाधिकार-वांछया तप आचरत् । स चरणस्पर्शोऽस्य कालियस्य जातः । स कस्य पुण्यकर्मणः प्रभावस्तद्वयं न विद्महे ॥३६॥ ये त्वत्पादरजः प्रपन्नास्ते सार्वभौमं राज्यं स्वर्गलोकं ब्रह्मलोकमणिमाद्यैश्वर्यं मोक्षं च

तास्तं सुविग्नमनसोऽथ पुरस्कृतार्भाः कायं निधाय भुवि भूतपतिं प्रणेमुः ॥ साध्व्यः कृतांजलिपुटाः शमलस्य भर्तुर्मोक्षेप्सवः शरणदं शरणं प्रपन्नाः ॥३२॥ नागपत्न्य ऊचुः ॥ न्याय्यो हि दंडः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय ॥ रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंसन् ॥३३॥ अनुग्रहोऽयं भवतः कृतो हि नो दंडोऽसतां ते खलु कल्मषापहः ॥ यद्दंदशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव संमतः ॥३४॥ तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन ॥ धर्मोऽथ वा सर्वजनानुकंपया यतो भवांस्तुष्यति सर्वजीवः ॥३५॥ कस्यानुभावोऽस्य न देव विद्महे तवांघ्रिरेणुस्पर्शाधिकारः ॥ यद्वांछया श्रीर्ललनाऽचरत्तपो विहाय कामान्सुचिरं धृतव्रता ॥३६॥ न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा वांछंति यत्पादरजः प्रपन्नाः ॥३७॥ तदेष नाथाऽऽप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः ॥ संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद्विभवः समक्षः ॥३८॥ नमस्तुभ्यं भगवते पुरुषाय महात्मने ॥ भूतावासाय भूताय पराय परमात्मने ॥३९॥ ज्ञानविज्ञाननिधये ब्रह्मणेऽनंतशक्तये ॥ अगुणायाविकाराय नमस्ते प्राकृताय च ॥४०॥ कालाय कालनाभाय कालावयवसाक्षिणे ॥ विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥४१॥ भूतमात्रेंद्रियप्राणमनोबुद्ध्याशयात्मने ॥ त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये ॥४२॥ नमोऽनंताय सूक्ष्माय कूटस्थाय विपश्चिते ॥ नानावादानुरोधाय वाच्यवाचकशक्तये ॥४३॥ नमः प्रमाणमूलाय कवये शास्त्रयोनये ॥ प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥४४॥ ॥ ॥ ॥

नेच्छंति ॥३७॥ हे नाथ, एवंभूतं त्वत्पादरज एष प्रयत्नं विना प्राप । अहो अस्य महद्भाग्यम् ॥३८॥ अतोऽचिंत्यैश्वर्याय परमात्मनेऽनंतशक्तये ब्रह्मणे ते नमः ॥३९॥४०॥ तथा कालशक्त्याश्रयाय सृष्ट्यादिकालावयवानां साक्षिणे विश्वरूपाय विश्वस्योपद्रष्ट्रे च ते नमः ॥४१॥४२॥ अनंताय सूक्ष्माय नानावादाननुसरते[1] ते नमः ॥४३॥ प्रत्यक्षादिप्रमाणानां मूलाय वेदात्मकनिःश्वासाय ते नमः ॥४४॥ ॥ ॥ ॥ ॥ ॥ ॥

१ अस्ति नास्ति सर्वज्ञः किंचिज्ज्ञो बद्धो मुक्त एकोऽनेक इत्यादयो नानावादास्ताननुसरतीति तस्मै ।

संकर्षणाय वासुदेवाय प्रद्युम्नाय अनिरुद्धाय एवं चतुर्मूर्तये कृष्णाय तुभ्यं नमः ॥४५॥ मनोबुद्ध्यहंकाराणां प्रकाशकाय । तथापि तेषां मनआदीनामगोचराय तुभ्यं नमः ॥४६॥ अतर्क्यमहिम्ने आत्मारामाय परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः ॥४७॥४८॥ हे प्रभो, त्वं वस्तुतो निरिच्छोऽपि गुणैर्विश्वस्योत्पत्त्यादीन् कुर्वन् जीवानां संस्काररूपेण सतो घोरादीन् स्वभावान् प्रतिबोधयंश्च सन्नमोघविहारः क्रीडसि ॥४९॥ एवंभूतस्य तव त्रिलोक्यां शांता अशांतास्तनवः संति । तत्राधुना शांतानां सतां रक्षणार्थमवतीर्णोऽसि ॥५०॥ तथापि हे भगवन्, तामसत्वात्त्वामजानतोऽस्य कालियस्यापराधः सकृत्त्वया स्वामिना सोढव्यः । हे शांतात्मन्, अयं नागः प्राणांस्त्यजति अत इममनुगृहाण । शोच्यानां

नमः कृष्णाय रामाय वसुदेवसुताय च ॥ प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥४५॥ नमो गुणप्रदीपाय गुणात्मच्छादनाय च ॥ गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ॥४६॥ अव्याकृतविहाराय सर्वव्याकृतसिद्धये ॥ हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने ॥४७॥ परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः ॥ अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे ॥४८॥ त्वं ह्यस्य जन्मस्थितिसंयमान्प्रभो गुणैरनीहोऽकृत कालशक्तिधृक् ॥ तत्तत्स्वभावान्प्रतिबोधयन्सतः समीक्षयाऽमोघविहार ईहसे ॥४९॥ तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शांता अशांता उत मूढयोनयः ॥ शांताः प्रियास्ते ह्यधुनाऽवितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः ॥५०॥ अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः ॥ क्षंतुमर्हसि शांतात्मन्मूढस्य त्वामजानतः ॥५१॥ अनुगृह्णीष्व भगवन्प्राणांस्त्यजति पन्नगः ॥ स्त्रीणां नः साधु शोच्यानां पतिः प्राणः प्रदीयताम् ॥५२॥ विधेहि ते किंकरीणामनुष्ठेयं तवाज्ञया ॥ यच्छ्रद्धयाऽनुतिष्ठन्वै मुच्यते सर्वतो भयात् ॥५३॥ श्रीशुक उवाच ॥ इत्थं स नागपत्नीभिर्भगवान्समभिष्टुतः ॥ मूर्छितं भग्नशिरसं विससर्जांघ्रिकुट्टनैः ॥५४॥ प्रतिलब्धेंद्रियप्राणः कालियः शनकैर्हरिम् ॥ कृच्छ्रात्समुच्छ्वसन्दीनः कृष्णं प्राह कृतांजलिः ॥५५॥ कालिय उवाच ॥ वयं खलाः सहोत्पत्त्या तामसा दीर्घमन्यवः ॥ स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः ॥५६॥ त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनम् ॥ नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ॥५७॥ वयं च तत्र भगवन्सर्पा जात्युरुमन्यवः ॥ कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम् ॥५८॥ भवान्हि कारणं तत्र सर्वज्ञो जगदीश्वरः ॥ अनुग्रहं निग्रहं वा मन्यसे तद्विधेहि नः ॥५९॥

स्त्रीणां नः पतिरूपः प्राणो दीयताम् ॥५१॥५२॥ किंच । अस्माकं तव दासीनां यत्कर्तव्यं तत्कथय । यतस्त्वदाज्ञाकरः पुमान् सर्वभयान्मुच्यते ॥५३॥ श्रीशुक उवाच ॥ एवं नागपत्नीभिः स्तुतः कृष्णोंऽघ्रिकुट्टनैर्भग्नशिरसं मूर्छितं सर्पं विससर्ज ॥५४॥ ततः शनैः प्राप्तेंद्रियप्राणः स कालियः कृतांजलिः सन् हरिमाह ॥५५॥ कालिय उवाच ॥ हे कृष्ण, वयमुत्पत्त्यैव खलास्तामसा दीर्घक्रोधाः स्मः । हे नाथ, प्राणिनां स्वभावो दुस्त्यजोऽस्ति ॥५६॥ हे ईश, त्वयैव नानास्वभावादियुक्तमिदं जगत्सृष्टमस्ति ॥५७॥ हे भगवन्, तत्र जगति वयमतिक्रोधाः सर्पाः । अतो ब्रह्मादिभिरपि दुस्त्यजां त्वन्मायां त्वदनुग्रहं विना कथं त्यजामः ॥५८॥ यतो मायाऽत्यागे त्वं कारणमतोऽनुग्रहं निग्रहं वा यन्मन्यसे तद्विधेहि ॥५९॥

श्रीशुक उवाच ॥ एवं सर्पवचः श्रुत्वा कृष्ण आह । हे सर्प, त्वयाऽत्र यमुनाह्रदे न स्थेयम् । त्वं स्वज्ञातिपुत्रस्त्रीभिः सह समुद्रं शीघ्रं याहि । यत इयं नदी गोभिर्नृभिश्च सेव्यते ॥६०॥ किंच । यः पुमान् तुभ्यं जातमेतन्मच्छासनं स्मरेत् सायं प्रातर्वा कीर्तयेत्स सर्वेभ्यो भयं नाप्नुयात् ॥ ६१ ॥ योऽत्र मम क्रीडास्थाने ह्रदे स्नात्वा जलैर्देवादींस्तर्पयेत् उपोष्य वा मामर्चेत् स सर्वपापैः प्रमुच्यते ॥६२॥ त्वं तु यस्य भयाद्रमणकं द्वीपं हित्वा एतं ह्रदं प्राप्तः स गरुडो मत्पादलांछितं त्वां न भक्षयिष्यति॥६३॥श्रीशुक उवाच ॥ एवं कृष्णेनोक्तः कालियस्तत्स्त्रियश्च तं कृष्णं दिव्यवस्त्रालंकारादिभिर्दिव्यगंधानुलेपनैः कमलमालया च पूजयामासुः ॥६४॥६५॥एवं जगन्नाथं संपूज्य प्रदक्षिणीकृत्याभिवाद्य च तस्याज्ञया॥६६॥कालियः स्त्रीपुत्रसुहृद्भिः सह रमणकं द्वीपं जगाम ।

श्रीशुक उवाच ॥ इत्याकर्ण्य वचः प्राह भगवान्कार्यमानुषः ॥ नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम् ॥ स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यते नदी ॥६०॥ य एतत्संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनम् ॥ कीर्तयन्नुभयोः संध्योर्न युष्मद्भयमाप्नुयात् ॥६१॥ योऽस्मिन्स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः ॥ उपोष्य मां स्मरन्नर्चेत्सर्वपापैः प्रमुच्यते ॥६२॥ द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः ॥ यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्पादलांछितम् ॥६३॥ श्रीशुक उवाच ॥ एवमुक्तो भगवता कृष्णेनाद्भुतकर्मणा ॥ तं पूजयामास मुदा नागपत्न्यश्च सादरम्॥६४॥दिव्यांबरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः ॥ दिव्यगंधानुलेपैश्च महत्योत्पलमालया ॥६५॥ पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ॥ ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवंद्य तम् ॥६६॥ सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ॥ तदैव साऽमृतजला यमुना निर्विषाऽभवत् ॥ अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः ॥६७॥ इति श्रीम० म० दश० पू० कालियनिर्यापणं नाम षोडशोऽध्यायः ॥१६॥ ॥ राजोवाच ॥ नागालयं रमणकं कस्मात्तत्याज कालियः ॥ कृतं किंवा सुपर्णस्य तेनैकेनासमंजसम् ॥१॥ श्रीशुक उवाच ॥ उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः ॥ वानस्पत्यो महाबाहो नागानां प्राङ्निरूपितः ॥२॥ स्वं स्वं भागं प्रयच्छंति नागाः पर्वणि पर्वणि ॥ गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥३॥ विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः ॥ कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् ॥४॥ तच्छ्रुत्वा कुपितो राजन्भगवान्भगवत्प्रियः ॥ विजिघांसुर्महावेगः कालियं समुपाद्रवत् ॥५॥

तदैव सा यमुना भगवदनुग्रहान्निर्विषाऽभवत् ॥६७॥ इति श्रीम० चू० दश० पूर्वा० कालियनिर्यापणं नाम षोडशोऽध्यायः ॥१६॥ नागं सप्तदशे नागालयं तं निरयापयत् । बंधून् स्वदुःखतः श्रांतान् सुप्तांस्तत्र दवादपात् ॥१॥ राजोवाच ॥ हे ब्रह्मन्, कालियो नागस्थानं रमणकं द्वीपं कस्मात्कारणात्तत्याज । तेनैवैकेन गरुडस्य किमप्रियं कृतम् ॥१॥ श्रीशुक उवाच ॥ गरुडस्य भक्ष्यैः सर्पजनैः स्वबाधा-परिहाराय वृक्षमूले प्रतिमासं गरुडायैकैकनागसहितो बलिरुपकल्पित आसीत् ॥२॥ ते सर्वे नागाः पर्वणि पर्वणि स्वं स्वं भागं गरुडाय स्वरक्षणार्थं प्रयच्छंति ॥३॥ विष-पराक्रम-दर्पव्याप्तः कालियस्तु गरुडं तुच्छीकृत्य तस्मै स्वभागं न ददौ । किंतु अन्यैर्दत्तं तद्बलिं स्वयं बुभुजे ॥४॥ तच्छ्रुत्वा क्रुद्धो गरुडः कालियं हंतुं

तत्समीपमागतः ॥५॥ तमागतं दृष्ट्वोज्जृंभितफण उग्रलोचनः कालियो विषायुधः सन् दंतैर्गरुडं ददंश ॥६॥ तदा प्रचंडवेगो गरुडः क्रुद्धः सन् सव्यपक्षेण तं जघान ॥७॥ तदा तत्पक्षताडितः कालियो विह्वलः सन् तेन गरुडेनागम्यं यमुनाह्रदं विवेश ॥८॥ तदगम्यत्वे कारणमाह । तत्रैकदा गरुडो भक्ष्यमेकं महामत्स्यं सौभरिणा निवारितोऽपि बलादहरत् ॥९॥ ततः स ऋषिर्मीनपतौ हते सति दुःखितान् मीनान् दृष्ट्वा तत्रस्थानां निर्भयत्वं संपादयन् गरुडमुद्दिश्याह ॥१०॥ अत्र यदि गरुड एत्य मत्स्यान् खादति तर्हि सद्यो मरिष्यति । एतत्सत्यं ब्रवीमि ॥११॥ हे नृप, तदेतत्कारणं कालियो वेद । अन्यः कोऽपि सर्पो न वेद । अतः स गरुडाद्भीतः सन् तत्रागत्य स्थितः । ततस्तस्मात्कृष्णेन निष्कासितः ॥१२॥ ततो ह्रदान्निर्गतं कृष्णं दिव्यगंधवाससं स्वर्णालंकृतं दृष्ट्वा ॥१३॥ गोपा उत्थायानंदपूर्णमनसः संतस्तमालिंगयामासुः ॥१४॥ यशोदा रोहिणी नंदो गोप्यो गोपाश्च कृष्णं प्राप्य प्राप्तमनोरथा आसन् ॥१५॥ रामश्च तमालिंग्य जहास । गावो वृषा वत्साश्च परमं हर्षं लेभिरे ॥१६॥ ततः सभार्या विप्रा नंदं गत्वोचुः । हे नंद, तव सुतः कालियसर्पदष्टोऽपि मुक्तः । एतद्दिष्ट्या ॥१७॥ अतो विप्रेभ्यो दानं देहि । ततो नंदः प्रीतः सन् सुवर्णं गाश्च ब्राह्मणेभ्यो ददौ ॥१८॥ तदा यशोदाऽपि कृष्णं परिष्वज्यांकमारोप्य प्रेमाश्रूणि मुमोच ॥१९॥ हे नृप, सर्वे व्रजवासिनो गावश्च तस्मिन् कालिय-मर्दन-दिवसे रात्रौ क्षुधा-तृषा-व्याप्ताः संतो यमुनातीर ऊषुः ॥२०॥ ॥ ॥

तमापतंतं तरसा विषायुधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः ॥ दद्भिः सुपर्णं व्यदशद्ददायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ॥६॥ तं तार्क्ष्यपुत्रः स निरस्य मन्युमान्प्रचंडवेगो मधुसूदनासनः ॥ पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमुग्रविक्रमः ॥७॥ सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः ॥ ह्रदं विवेश कालिंद्यास्तदगम्यं दुरासदम् ॥८॥ तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् ॥ निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् ॥९॥ मीनान्सुदुःखितान्दृष्ट्वा दीनान्मीनपतौ हते ॥ कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् ॥१०॥ अत्र प्रविश्य गरुडो यदि मत्स्यान्स खादति ॥ सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्यहम् ॥११॥ तं कालियः परं वेद नान्यः कश्चन लेलिहः ॥ अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः ॥१२॥ कृष्णं ह्रदाद्विनिष्क्रांतं दिव्यस्रग्गंधवाससम् ॥ महामणिगणाकीर्णं जांबूनदपरिष्कृतम् ॥१३॥ उपलभ्योत्थिताः सर्वे लब्धप्राणा इवासवः ॥ प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे ॥१४॥ यशोदा रोहिणी नंदो गोप्यो गोपाश्च कौरव ॥ कृष्णं समेत्य लब्धेहा आसँल्लब्धमनोरथाः ॥१५॥ रामश्चाच्युतमालिंग्य जहासास्यानुभाववित् ॥ नगा गावो वृषा वत्सा लेभिरे परमां मुदम् ॥१६॥ नंदं विप्राः समागत्य गुरवः सकलत्रकाः ॥ ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः ॥१७॥ देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे ॥ नंदः प्रीतमना राजन् गाः सुवर्णं तदादिशत् ॥१८॥ यशोदापि महाभागा नष्टलब्धप्रजा सती ॥ परिष्वज्यांकमारोप्य मुमोचाश्रुकलां मुहुः ॥१९॥ तां रात्रिं तत्र राजेंद्र क्षुत्तृड्भ्यां श्रमकर्षिताः ॥ ऊषुर्व्रजौकसो गावः कालिंद्या उपकूलतः ॥२०॥ ॥ ॥

तदा शुष्कवनोत्पन्नो दावाग्निः सुप्तं व्रजजनं निशीथे सर्वतो व्याप्य दग्धुमुपचक्रमे ॥२१॥ ततस्ते दह्यमाना जना उत्थाय मायामनुष्यं कृष्णं शरणं गत्वाऽऽहुः ॥२२॥ ६ कृष्ण, हे कृष्ण, हे राम, एषोऽतिभयंकरोऽग्निस्त्वन्मित्राण्यस्मान् ग्रसते ॥२३॥ अतो मृत्युरूपादस्मादग्नेर्नः पाहि । त्वच्चरणं त्यक्तुं वयं न शक्नुमः ॥२४॥ इत्थं स्वजनव्याकुलत्वं दृष्ट्वा कृष्णस्तमग्निं पपौ ॥२५॥ इति श्रीम० चू० दश० पूर्वा० सप्तदशोऽध्यायः ॥ १७ ॥ अष्टादशे ततो ग्रीष्मे वसंतगुणलक्षिते । अघातयद्बलेनालं प्रलंबं लीलया हरिः ॥१॥ श्रीशुक उवाच ॥ ततः प्रातःकाले कृष्णो ज्ञातिभिर्गीयमानः सन् व्रजं विवेश ॥१॥ एवं मायया गोपालत्वं स्वीकृत्य रामकृष्णयोर्गोकुले क्रीडतोः सतोर्जीवानां नातिप्रियो ग्रीष्मऋतुः

तदा शुचिवनोद्भूतो दावाग्निः सर्वतो व्रजम् ॥ सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे ॥२१॥ तत उत्थाय संभ्रांता दह्यमाना व्रजौकसः ॥ कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम् ॥२२॥ कृष्ण कृष्ण महाभाग हे रामामितविक्रम ॥ एष घोरतमो वह्निस्तावकान्ग्रसते हि नः ॥२३॥ सुदुस्तरान्नः स्वान्पाहि कालाग्नेः सुहृदः प्रभो ॥ न शक्नुमस्त्वच्चरणं संत्यक्तुमकुतोभयम् ॥२४॥ इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः ॥ तमग्निमपिबत्तीव्रमनंतोऽनंतशक्तिधृक् ॥२५॥ इति श्रीम० महा० दशम० पूर्वार्धे दावाग्निमोचनं नाम सप्तदशोऽध्यायः ॥१७॥ श्रीशुक उवाच ॥ अथ कृष्णः परिवृतो ज्ञातिभिर्मुदितात्मभिः ॥ अनुगीयमानो न्यविशद्व्रजं गोकुलमंडितम् ॥१॥ व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया ॥ ग्रीष्मो नामर्तुरभवन्नातिप्रेयाञ्शरीरिणाम् ॥२॥ स च वृंदावनगुणैर्वसंत इव लक्षितः ॥ यत्रास्ते भगवान्साक्षाद्रामेण सह केशवः ॥३॥ यत्र निर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् ॥ शश्वत्तच्छीकरर्जीषद्रुममंडलमंडितम् ॥४॥ सरित्सरःप्रस्रवणोर्मिवायुना कह्लारकंजोत्पलरेणुहारिणा ॥ न विद्यते यत्र वनौकसां दवो निदाघवह्न्यर्कभवोऽतिशाद्वले ॥५॥ अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याः पुलिनैः समंततः ॥ न यत्र चंडांशुकरा विषोल्बणा भुवो रसं शाद्वलितं च गृह्णते ॥६॥ वनं कुसुमितं श्रीमन्नदच्चित्रमृगद्विजम् ॥ गायन्मयूरभ्रमरं कूजत्कोकिलसारसम् ॥७॥ क्रीडिष्यमाणस्तत्कृष्णो भगवान्बलसंयुतः ॥ वेणुं विरणयन्गोपैर्गोधनैः संवृतोऽविशत् ॥८॥ प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः ॥ रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः ॥९॥ कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन् ॥ वेणुपाणितलैः शृंगैः प्रशशंसुरथापरे ॥१०॥

प्राप्तः ॥२॥ स च वृंदावनगुणैर्वसंत इव लक्षितः । यत्र वृंदावने रामः कृष्णश्च तिष्ठतः ॥३॥ तस्य वसंतसाम्यमाह । यत्र ग्रीष्मे निर्झरनादेन गतझिल्लीशब्दं वृंदावनं भवति । निर्झराणामंबुकणैर्ये स्निग्धा वृक्षास्तेषां मंडलैः शोभितम् ॥४॥ यत्र वने कोमलतृणप्रदेशे मंद-सुगंध-शीतल-वायुना वनस्थितानां ग्रीष्मकालीन-सूर्यकिरणोत्पन्नस्तापो न बाधते ॥५॥ यत्र चातिप्रखरा अपि सूर्यकिरणा भूमेरार्द्रतां न हरंति ॥६॥ एवंभूतं पुष्पितं मृगपक्षिभिर्नादितं मयूरभ्रमरैर्गीतं वृंदावनं दृष्ट्वा ॥७॥ क्रीडां कर्तुमिच्छन् कृष्णो रामगोपालगोधनैर्युक्तः सन् वेणुं वादयन् तद्वनं विवेश ॥८॥ ततः पल्लव-मयूरपिच्छ-पुष्पमाला-गैरिकादिभिः कृतभूषणा रामादयो गोपा ननृतुर्युयुधुर्जगुश्च ॥९॥ तदा कृष्णस्य नृत्यतः सतः केचिज्जगुः ।

केचिद्वेणु-हस्तताल-शृंगाण्यवादयन् । अपरे प्रशशंसुः ॥१०॥ एवं गोपजातिगुप्ता देवा गोपालरूपा भूत्वा रामकृष्णयोः स्तुतिं चक्रुः ॥११॥ तदा काकपक्षधरौ तौ रामकृष्णौ भ्रामणोल्लंघनास्फोटन-विकर्षणैर्बाहुयुद्धेन च चिक्रीडतुः ॥१२॥ क्वचिदन्येषु नृत्यत्सु स्वयं गायकौ वादकौ भूत्वा साध्विति प्रशशंसतुः ॥१३॥ क्वचित् बिल्वैः कुंभवृक्षफलै-रामलक-मुष्टिभिरस्पृश्यत्वेन नेत्रबंधादिना च चिक्रीडतुः । क्वचिन्मृगाणां पक्षिणां च चेष्टया ॥१४॥ क्वचित् भेकप्लुतिभिः दोलालंबनेन नृपलीलया च चिक्रीडतुः ॥१५॥ एवं तौ क्रीडाभिर्वने नदी-पर्वत-कुंजवन-सरोवरेषु चेरतुः ॥१६॥ एकदा गोपैः सह तद्वने तयोः पशून् चारयतोः सतोस्तयोर्हर्तुमिच्छया गोपरूपी प्रलंबासुरः प्राप्तः ॥१७॥ तदा भगवान् तं जानन्नपि तद्वधोपायं विचिंत्य तेन सह सख्यं कर्तुं गोपानन्वमोदत ॥१८॥ ततः कृष्णो गोपानाहूयाह । हे गोपाः, वयं सर्वे यथायोग्यं वयोबलाद्यनुरूपं द्वंद्वशो भूत्वा विह-

गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः ॥ ईडिरे कृष्णरामौ च नटा इव नटं नृप ॥११॥ भ्रामणैर्लंघनैः क्षेपैरास्फोटनविकर्षणैः ॥ चिक्रीडतुर्नियुद्धेन काकपक्षधरौ क्वचित् ॥१२॥ क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् ॥ शशंसतुर्महाराज साधुसाध्विति वादिनौ ॥१३॥ क्वचिद्बिल्वैः क्वचित्कुंभैः क्वचामलकमुष्टिभिः ॥ अस्पृश्यनेत्रबंधाद्यैः क्वचिन्मृगखगेहया ॥१४॥ क्वचिच्च दर्दुरप्लावैर्विविधैरुपहासकैः ॥ कदाचित्स्पंदोलिकया कर्हिचिन्नृपचेष्टया ॥१५॥ एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने ॥ नद्यद्रिद्रोणिकुंजेषु काननेषु सरस्सु च ॥१६॥ पशूंश्चारयतोर्गोपैस्तद्वने रामकृष्णयोः ॥ गोपरूपी प्रलंबोऽगादसुरस्तज्जिहीर्षया ॥१७॥ तं विद्वानपि दाशार्हो भगवान्सर्वदर्शनः ॥ अन्वमोदत तत्सख्यं वधं तस्य विचिंतयन् ॥१८॥ तत्रोपाहूय गोपालान्कृष्णः प्राह विहारवित् ॥ हे गोपा विहरिष्यामो द्वंद्वीभूय यथायथम् ॥१९॥ तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ ॥ कृष्णसंघट्टिनः केचिदासन्रामस्य चापरे ॥२०॥ आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः ॥ यत्रारोहंति जेतारो वहंति च पराजिताः ॥२१॥ वहंतो वाह्यमानाश्च चारयंतश्च गोधनम् ॥ भांडीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ॥२२॥ रामसंघट्टिनो यर्हि श्रीदामवृषभादयः ॥ क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप ॥२३॥ उवाह कृष्णो भगवान् श्रीदामानं पराजितः ॥ वृषभं भद्रसेनस्तु प्रलंबो रोहिणीसुतम् ॥२४॥ अविषह्यं मन्यमानः कृष्णं दानवपुंगवः ॥ वहन्द्रुततरं प्रागादवरोहणतः परम् ॥२५॥ ॥ ॥

रिष्यामः ॥१९॥ तत्र गोपा रामकृष्णौ नायकौ चक्रुः । तत्र केचित्कृष्णपक्षीया अन्ये च रामपक्षीया आसन् ॥२०॥ ततो वाह्यवाहकलक्षणाः क्रीडा आचेरुः ॥ यासु क्रीडासु जेतार आरोहंति । पराजिताश्च वहंति ॥२१॥ एवं वहंतो वाह्यमानाश्च गोपा गोधनं चारयंतः संतो भांडीरक-नामक-वटस्य समीपं जग्मुः ॥२२॥ यदा रामपक्षीयाः श्रीदामवृषभादयः क्रीडायां जयिनो जातास्तदा कृष्णपुरोगमास्तानूहुः ॥२३॥ तत्र श्रीकृष्णः श्रीदामानमुवाह । भद्रसेनो वृषभं प्रलंबो रामम् ॥२४॥ ततः स दैत्यः कृष्णमसह्यं मत्वा रामं वहन् मर्यादातः परं दूरं शीघ्रमगात् ॥२५॥ ॥ ॥ ॥ ॥ ॥ ॥

ततः पर्वतवज्जडं जातं रामं वहन् स यदा कुंठितगतिर्जातस्तदा गोपरूपं त्यक्त्वा स्वं दैत्यरूपमास्थितः सन् विद्युद्युक्तो मेघ इव बभा ॥२६॥ तत आकाशेऽतिवेगेन गच्छंतमग्नि-सदृशाक्षिं ज्वालासदृशकेशं तं दृष्ट्वा रामः किंचित्तत्रास ॥२७॥ अथ प्राप्तस्मृतिर्निर्भयो राम आत्मानं हरंतं दैत्यं रुषा दृढमुष्टिना शिरसि जघान ॥२८॥ ततो दैत्यस्तदैव भग्न-मस्तको भूत्वा मुखाद्रक्तं वमन् महाशब्दं च कुर्वन् गतप्राणो भूत्वा वज्रहतो गिरिरिव भूमौ पपात ॥२९॥ एवं रामेण निहतं प्रलंबं दृष्ट्वा साधु साध्विति वादिनो गोपा विस्मिता आसन् ॥३०॥ अपि च । प्रेत्यागतमिव तं राममालिंग्य प्रेमविह्वलचित्ताः संतो हे राम, त्वं चिरंजीवेत्याशीर्वादान् दत्वा प्रशशंसुः ॥३१॥ एवं पापे प्रलंबे निहते सति संतुष्टा

तमुद्वहन्धरणिधरेंद्रगौरवं महासुरो विगतरयो निजं वपुः ॥ स आस्थितः पुरटपरिच्छदो बभौ तडिद्द्युमानुडुपतिवाडिवांबुदः ॥२६॥ निरीक्ष्य तद्वपुरलमंबरे चरत्प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकम् ॥ ज्वलच्छिखं कटककिरीटकुंडलत्विषाऽद्भुतं हलधर ईषदत्रसत् ॥२७॥ अथागतस्मृतिरभयो रिपुं बलो विहाय सार्थमिव हरंतमात्मनः ॥ रुषाऽहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा ॥२८॥ स आहतः सपदि विशी-र्णमस्तको मुखाद्वमन्रुधिरमपस्मृतोऽसुरः ॥ महारवं व्यसुरपतत्समीरयन् गिरिर्यथा मघवत आयुधाऽऽहतः ॥२९॥ दृष्ट्वा प्रलंबं निहतं बलेन बलशालिना ॥ गोपाः सुविस्मिता आसन्साधुसाध्विति वादिनः ॥३०॥ आशिषोऽभिगृणंतस्तं प्रशशंसुस्तदर्हणम् ॥ प्रेत्यागतमिवालिंग्य प्रेमविह्वलचेतसः ॥३१॥ पापे प्रलंबे निहते देवाः परमनिर्वृताः ॥ अभ्यवर्षन्बलं माल्यैः शशंसुः साधुसाध्विति ॥३२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे प्रलंबवधो नामाष्टादशोऽध्यायः ॥१८॥ श्रीशुक उवाच ॥ क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः ॥ स्वैरं चरंत्यो विविशुस्तृणलोभेन गह्वरम् ॥१॥ अजा गावो महिष्यश्च निर्विशंत्यो वनाद्वनम् ॥ इषीकाटवीं विविशुः क्रंदंत्यो दावतर्षिताः ॥२॥ तेऽपश्यंतः पशून्गोपाः कृष्णरामादयस्तदा ॥ जातानुतापा न विदुर्विचिन्वंतो गवां गतिम् ॥३॥ तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरंकितैर्गवाम् ॥ मार्गमन्वगमन्सर्वे नष्टाजीव्या विचेतसः ॥४॥ मुंजाटव्यां भ्रष्टमार्गं क्रंदमानं स्वगोधनम् ॥ संप्राप्य तृषिताः श्रांतास्ततस्ते संन्यवर्तयन् ॥५॥

देवा रामं पुष्पैरभ्यवर्षन् साधु साध्विति प्रशशंसुश्च ॥३२॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वा० अष्टादशोऽध्यायः ॥१८॥ ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः । मुंजार-ण्यमरण्याग्ने ररक्ष तन्निपानतः ॥१॥ श्रीशुक उवाच ॥ हे नृप, क्रीडासक्तेषु गोपेषु तद्गावः स्वैरं चरंत्यस्तृणलोभेन दूरं घोरमरण्यं विविशुः ॥१॥ अजा गावो महिष्यश्च वनाद्वनं विशंत्यो दावेन तृषिताः क्रंदंत्योऽत्युच्छ्रित-घन-तृणविशेषारण्यं विविशुः ॥२॥ ततः कृष्णरामादयो गोपाः पशून् अदृष्ट्वा तन्मार्गं विचिन्वंतोऽपि न विदुः ॥३॥ ततः पशूनां खुरैश्छि-न्नैर्भूप्रदेशैर्दंतैश्छिन्नैश्च तृणैर्गवां मार्गमनुलक्ष्य जग्मुः ॥४॥ ततस्ते गोपा मुंजारण्ये क्रंदमानं स्वगोधनं प्राप्य तृषिताः श्रांताश्च संतस्ततः संन्यवर्तयन् ॥५॥

॥

तदा कृष्णेन मेघगंभीरया वाचाऽऽहूतास्ता गावः स्वनामशब्दं श्रुत्वा प्रतिनेदुः ॥६॥ तदैव तस्मिन् वने सर्वतः प्रसृतो दावाग्निर्वायुना वृद्धिं गतः सन् स्थावरजंगमानां क्षयकर्ता प्रादुरभूत् ॥७॥ तदा तं सर्वतः प्राप्तं दावाग्निं दृष्ट्वा भीता गोपा गावश्च सबलं कृष्णमूचुः ॥८॥ हे कृष्ण हे कृष्ण, हे राम, दावाग्निना दह्यमानान् शरणागतान्नो युवां त्रातुमर्हथः ॥९॥ हे कृष्ण, त्वद्बांधवा दुःखं प्राप्तुं नार्हंति । वयं हि त्वन्नाथास्त्वत्सेवकाः स्मः ॥१०॥ श्रीशुक उवाच । हे नृप, बंधूनां दीनं वचः श्रुत्वा कृष्ण आह । हे गोपा मा भैष्ट । यूयं नेत्राणि निमीलयत ॥११॥ तथेत्युक्त्वा मीलिताक्षेषु तेषु सत्सु श्रीकृष्णो दावाग्निं पीत्वा तान् दुःखादमोचयत् ॥१२॥ ततश्च ते गोपा नेत्राण्युन्मील्य

ता आहूता भगवता मेघगंभीरया गिरा ॥ स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः ॥६॥ ततः समंताद्वनधूमकेतुर्यदृच्छयाऽभूत्क्षयकृद्वनौकसाम् ॥ समीरितः सारथिनोल्बणोल्मुकैर्विलेलिहानः स्थिरजंगमान्महान् ॥७॥ तमापतंतं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः ॥ ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः ॥८॥ कृष्ण कृष्ण महावीर हे रामामितविक्रम ॥ दावाग्निना दह्यमानान्प्रपन्नांस्त्रातुमर्हथः ॥९॥ नूनं त्वद्बांधवाः कृष्ण न चार्हत्यवसीदितुम् ॥ वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः ॥१०॥ श्रीशुक उवाच ॥ वचो निशम्य कृपणं बंधूनां भगवान्हरिः ॥ निमीलयत मा भैष्ट लोचनानीत्यभाषत ॥११॥ तथेति मीलिताक्षेषु भगवानग्निमुल्बणम् ॥ पीत्वा मुखेन तान्कृच्छ्राद्योगाधीशो व्यमोचयत् ॥१२॥ ततश्च तेऽक्षीण्युन्मील्य पुनर्भांडीरमापिताः ॥ निशाम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः ॥१३॥ कृष्णस्य योगवीर्यं तद्योगमायानुभावितम् ॥ दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् ॥१४॥ गाः संनिवर्त्य सायाह्ने सहरामो जनार्दनः ॥ वेणुं विरणयन्गोष्ठमगाद्गोपैरभिष्टुतः ॥१५॥ गोपीनां परमानंद आसीद्गोविंददर्शने ॥ क्षणं युगशतमिव यासां येन विनाभवत् ॥१६॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे दावाग्निपानं नामैकोनविंशोऽध्यायः ॥१९॥ श्रीशुक उवाच ॥ तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः ॥ गोपाः स्त्रीभ्यः समाचख्युः प्रलंबवधमेव च ॥१॥ ॥ ॥ ॥

पुनर्भांडीरवटं प्रापिताः संतो हरेः कर्म ज्ञात्वा विस्मिता आसन् ॥१३॥ ततस्ते गोपाः कृष्णस्य दावाग्निप्राशनरूपं सामर्थ्यं तस्माद्दावाग्नेरात्मनो मोक्षणं च दृष्ट्वा तं कृष्णं देवं मेनिरे ॥१४॥ ततः सायाह्ने सरामः कृष्णो गोपैः स्तुतः सन् गाः परावर्त्य वेणुं वादयन् व्रजं विवेश ॥१५॥ तदा गोपीनां कृष्णदर्शने परमानंद आसीत् । कृष्णं विना यासां क्षणं युगशतमिवाभवत् ॥१६॥ इति श्रीमद्भा० चू० दश० पूर्वार्धे एकोनविंशोऽध्यायः ॥१९॥ विंशे प्रावृट्शरच्छोभावर्णनेन वनोचिताः । प्रावृट्क्रीडा निरूप्यंते गोपरामयुजो हरेः ॥१॥ श्रीशुक उवाच ॥ अथ गोपा दावाग्नेरात्मनो मोक्षं प्रलंबवधं च कृष्णरामयोरद्भुतं कर्म स्त्रीभ्य आचख्युः ॥१॥ ॥ ॥ ॥

१ घोरारण्यप्रवेश-क्षुधातृषाश्रमादिजनितादुःखात् ।

वृद्धगोपा गोप्यश्च तच्छ्रुत्वा कृष्णरामौ देवश्रेष्ठौ मेनिरे ॥२॥ ततः सर्वप्राणिनामुत्पत्तिहेतुर्मेघप्रास्याऽऽकाशं क्षोभितं कुर्वाणो वर्षर्तुः प्राप्तः ॥३॥ तदा विद्युद्गर्जनादियुक्तैर्मेघैराकाशं गुणैर्व्याप्तं ब्रह्मेव शुशोभ ॥४॥ सूर्योऽष्टौ मासान् पीतं यद्भूमेर्जलं तन्मोक्तुमारेभे ॥५॥ किंच । मेघा जगतो जीवनं जलं कृपालवो जना इव मुमुचुः ॥६॥ तदा ग्रीष्मतुना कृशा भूमिः पर्जन्येन पुष्टा जाता । यथा काम्यतपसो नरस्य देहस्तपसः फलरूपान् विषयान् प्राप्य पुष्टो भवति तद्वत् ॥७॥ रात्रिषु खद्योता भांति ग्रहा न भांति । यथा कलौ पापेन पाखंडा भांति वेदा न भांति तद्वत् ॥८॥ पर्जन्यशब्दं श्रुत्वा मंडूकाः शब्दांश्चक्रुः । यथा नित्यकर्मावसाने गुरुशब्दं श्रुत्वा तच्छिष्या अधीयंते तद्वत् ॥९॥ पूर्वशुष्का अपि क्षुद्र-

गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः ॥ मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ ॥२॥ ततः प्रावर्तत प्रावृट् सर्वसत्वसमुद्भवा ॥ विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ॥३॥ सांद्रनीलांबुदैर्व्योम सविद्युत्स्तनयित्नुभिः ॥ अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥४॥ अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु ॥ स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥५॥ तडित्वंतो महामेघाश्चंडश्वसनवेपिताः ॥ प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ॥६॥ तपःकृशा देवमीढा आसीद्वर्षीयसी मही ॥ यथैव काम्यतपसस्तनुः संप्राप्य तत्फलम् ॥७॥ निशामुखेषु खद्योतास्तमसा भांति न ग्रहाः ॥ यथा पापेन पाखंडा नहि वेदाः कलौ युगे ॥८॥ श्रुत्वा पर्जन्यनिनदं मंडूका व्यसृजन्गिरः ॥ तूष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये ॥९॥ आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः ॥ पुंसो यथाऽस्वतंत्रस्य देहद्रविणसंपदः ॥१०॥ हरिता हरिभिः शष्पैरिंद्रगोपैश्च लोहिता ॥ उच्छिलींध्रकृतच्छाया नृणां श्रीरिव भूरभूत् ॥११॥ क्षेत्राणि सस्यसंपद्भिः कर्षकाणां मुदं ददुः ॥ धनिनामुपतापं च दैवाधीनमजानताम् ॥१२॥ जलस्थलौकसः सर्वे नववारिनिषेवया ॥ अबिभ्रद्रुचिरं रूपं यथा हरिनिषेवया ॥१३॥ सरिद्भिः संगतः सिंधुश्चुक्षुभे श्वसनोर्मिमान् ॥ अपक्वयोगिनश्चित्तं कामाक्तं गुणयुग्यथा ॥१४॥ गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः ॥ अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः ॥१५॥ मार्गा बभूवुः संदिग्धास्तृणैश्छन्ना ह्यसंस्कृताः ॥ नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव ॥१६॥ ॥

नद्य उन्मार्गवाहिन्य आसन् । यथेंद्रियतृप्तिपरतंत्रस्य पुंसो द्रव्यादिसंपदः कुमार्गेण गच्छंति तद्वत् ॥१०॥ हरिततृणैरारक्तकीटैश्च हरिता रक्ता च जाता भूमी राज्ञां सेनासंपदिवाभूत् ॥११॥ क्षेत्राणि धान्यसंपत्तिभिः कर्षकाणां हर्षं ददुः । वृष्टिर्दैवाधीनेत्यजानतां धनिनामुपतापं च ददुः ॥१२॥ सर्वे प्राणिनो नवोदकसेवनेन सुंदरं स्वरूपं दधुः । यथा हरिसेवया भक्ताः ॥१३॥ नदीभिः संगतः समुद्रः क्षोभं प्राप । यथाऽपक्वयोगिनश्चित्तं कामवासनायुक्तं सत् क्षुभ्यति तद्वत् ॥१४॥ पर्वता धाराभिर्हन्यमाना अपि न विव्यथुः । यथा व्यसनैः पराभूता अपि भक्ता न व्यथंति तद्वत् ॥१५॥ मार्गास्तृणैः संछन्नाः संतः संदिग्धाः आसन् । द्विजैरनभ्यस्ताः श्रुतयो तथा संशययुक्ता भवंति तद्वत् ॥१६॥ ॥

१ कृपालवो जना यथा तप्तं जनं निरीक्ष्यानुकंपमानास्तत्राप्यायनाय स्वजीवनमपि त्यजंति तद्वत् ।

मेघेषु विद्युतः स्थैर्यं न चक्रुः । पुरुषेषु जारिण्यः स्त्रिय इव ॥१७॥ आकाशे मौर्वीरहितमपींद्रधनुष्यमशोभत । प्रपंचे निर्गुणः पुरुषो यथा शोभते तद्वत् ॥१८॥ मेघैराच्छादितश्चंद्रो न रराज । अहंकारेणावृतो जीव इव ॥१९॥ मेघप्राप्त्या हर्षिता मयूराः प्रतिनादं चक्रुः । यथा गृहे खिन्नाः पुरुषा भक्तसमागमे आनंदं प्राप्नुवंति तद्वत् ॥२०॥ वृक्षा मूलैर्जलं पीत्वा पुष्टा आसन् । यथा तपसा कृशा नराः पुनर्विषयसेवया पुष्टा भवंति तद्वत् ॥२१॥ किंच । पंक-कंटकादियुक्ततीरेषु-सरःसु चक्रवाकादयः पक्षिणोऽवसन् । अशांतकृत्येषु गृहेषु विषयासक्ताः पुरुषा यथा वसंति तद्वत् ॥२२॥ पर्जन्ये वर्षति सति जलौघैर्नदीनां तटमर्यादा अभिद्यंत । कलौ पाखंडिनां दुष्टवादैर्वेदमार्गा यथा भिद्यंते तद्वत् ॥२३॥ मेघा भूतेभ्यो जलं व्यमुंचन् । यथा राजानो दानानि ददते तद्वत् ॥२४॥ एवंभूतं पक्वखर्जूरजंबुयुक्तं तद्वनं दृष्ट्वा गोगोपैर्बलरामेण च सह क्रीडितुं कृष्णस्तद्वनं प्रविवेश ॥२५॥ तदा ऊधोभारेण

लोकबंधुषु मेघेषु विद्युतश्चलसौहृदाः ॥ स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव ॥१७॥ धनुर्वियति माहेंद्रं निर्गुणं च गुणिन्यभात् ॥ व्यक्ते गुणव्यतिकरे गुणवान्पुरुषो यथा ॥१८॥ न रराजोडुपश्छन्नः स्वज्योत्स्नाराजितैर्घनैः ॥ अहंमत्या भासितया स्वभासा पुरुषो यथा ॥१९॥ मेघागमोत्सवा हृष्टाः प्रत्यनंदन् शिखंडिनः ॥ गृहेषु तप्ता निर्विण्णा यथाऽच्युतजनागमे ॥२०॥ पीत्वाऽपः पादपाः पद्भिरासन्नानात्ममूर्तयः ॥ प्राक् क्षामास्तपसा श्रांता यथा कामानुसेवया ॥२१॥ सरस्स्वशांतरोधस्सु न्यूषुरंगापि सारसाः ॥ गृहेष्वशांतकृत्येषु ग्राम्या इव दुराशयाः ॥२२॥ जलौघैर्निरभिद्यंत सेतवो वर्षतीश्वरे ॥ पाखंडिनामसद्वादैर्वेदमार्गाः कलौ यथा ॥२३॥ व्यमुंचन्वायुभिर्नुन्ना भूतेभ्योऽथामृतं घनाः ॥ यथाऽऽशिषो विश्पतयः काले काले द्विजेरिताः ॥२४॥ एवं वनं तद्वर्षिष्ठं पक्वखर्जूरजंबुमत् ॥ गोगोपालैर्वृतो रंतुं सबलः प्राविशद्धरिः ॥२५॥ धेनवो मंदगामिन्य ऊधोभारेण भूयसा ॥ ययुर्भगवताऽऽहूता द्रुतं प्रीत्या स्नुतस्तनीः ॥२६॥ वनौकसः प्रमुदिता वनराजीर्मधुच्युतः ॥ जलधारा गिरेर्नादानासन्ना ददृशे गुहाः ॥२७॥ क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति ॥ निर्विश्य भगवान्रेमे कंदमूलफलाशनः ॥२८॥ दध्योदनं समानीतं शिलायां सलिलांतिके ॥ संभोजनीयैर्बुभुजे गोपैः संकर्षणान्वितः ॥२९॥ शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणम् ॥ तृप्तान्वृषान्वत्सतरान्गाश्च स्वोधोभरश्रमाः ॥ ३० ॥ प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदावहाम् ॥ भगवान्पूजयांचक्रे आत्मशक्त्युपबृंहिताम् ॥ ३१ ॥

मंदगामिन्यो धेनवो भगवताऽऽहूताः सत्यः स्तनेभ्यो गलितदुग्धधारा ययुः ॥२६॥ तदा हरिः स्वलीलादर्शनेन प्रीताः भिल्लांगना ददर्श । वनपंक्तयो मधुस्रवा ददर्श । गिरेः पतिता नादयुक्ता जलधरास्तन्निकटवर्तिनीर्गुहाश्च ददर्श ॥२७॥ कदाचिन्मेघे वर्षति सति कृष्णो गुहायां वृक्षकोटरे च प्रविश्य कंदमूलानि भक्षयन् सन् रेमे ॥२८॥ गृहादानीतं दध्योदनं शिलायां स्थापयित्वा बलेन गोपैश्च सह बुभुजे ॥२९॥ ततस्तृणोपरि चर्वतस्तृप्तान् वृषान् वत्सान् गाश्च पयोधरभारश्रमाः ॥३०॥ तथा स्वप्रभावेण वृद्धिंगतां वर्षर्तु-शोभां च दृष्ट्वा भगवान् तस्या मानं चक्रे ॥३१॥ ॥ ॥ ॥ ॥ ॥ ॥

एवं व्रजे रामकृष्णयोर्निवसतोः सतोः शरदृतुः प्राप्तः । तदा खं निरभ्रं, जलं स्वच्छं, वायुश्च शांतोऽभवत् ॥३२॥ शरदा जलानि स्वच्छता प्रापुः । यथा पुनः योगसेवया योगभ्रष्टानां चेतांसि स्वच्छतां प्राप्नुवंति तद्वत् ॥३३॥ किंच नभसो मेघं भूतानां सांकार्यं भुवः पंकं जलस्य मलं च शरद् नाशयामास । यथा चतुर्णामाश्रमिणां पापं कृष्णभक्तिर्नाशयति तद्वत् ॥३४॥ मेघाः सर्वस्वं हित्वा शुभ्रकांतयो विरेजुः । यथा पुत्र-वित्त-लोकेषणास्त्यक्त्वा मुनयः शोभंते तद्वत् ॥३५॥ पर्वता जलं क्वचिन्मुमुचुः क्वचिन्न मुमुचुः । यथा ज्ञानिनो ज्ञानामृतं क्वचिद्ददते क्वचिन्न ददते तद्वत् ॥३६॥ अल्पजलचराः क्षीयमाणं जलं न विदुः । यथा क्षीयमाणमायुर्मूढा नरा न जानंति तद्वत् ॥३७॥ क्षुद्रजलचरा अर्कजं तापं प्रापुः । यथा कुटुंबी दारिद्र्येण पीडितः सन् तापं प्राप्नोति तद्वत् ॥३८॥ किंच । स्थलानि शनैः शनैः कर्दमं जहुः । लताश्चापक्वतां जहुः । यथा धीराः शरीरादौ ममतां

एवं निवसतोस्तस्मिन्रामकेशवयोर्व्रजे ॥ शरत्समभवद्व्यभ्रा स्वच्छांब्वपरुषानिला ॥३२॥ शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः ॥ भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥३३॥ व्योम्नोऽब्दं भूतशाबल्यं भुवः पंकमपां मलम् ॥ शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाऽशुभम् ॥३४॥ सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः ॥ यथा त्यक्तैषणाः शांता मुनयो मुक्तकिल्बिषाः ॥३५॥ गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् ॥ यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ॥३६॥ नैवाविदन्क्षीयमाणं जलं गाधजलेचराः ॥ यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुंबिनः ॥३७॥ गाधवारिचरास्तापमविंदन् शरदर्कजम् ॥ यथा दरिद्रः कृपणः कुटुंब्यविजितेंद्रियः ॥३८॥ शनैः शनैर्जुहुः पंकं स्थलान्यामं च वीरुधः ॥ यथाऽहंममतां धीराः शरीरादिष्वनात्मसु ॥३९॥ निश्चलांबुरभूत्तूष्णीं समुद्रः शरदागमे ॥ आत्मन्युपरते सम्यङ्मुनिर्व्युपरतागमः ॥४०॥ केदारेभ्यस्त्वपोऽगृह्णन्कर्षका दृढसेतुभिः ॥ यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः ॥४१॥ शरदर्कांशुजांस्तापान्भूतानामुडुपोऽहरत् ॥ देहाभिमानजं बोधो मुकुंदो व्रजयोषिताम् ॥४२॥ खमशोभत निर्मेघं शरद्विमलतारकम् ॥ सत्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥४३॥ अखंडमंडलो व्योम्नि रराजोडुगणैः शशी ॥ यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ॥४४॥ आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम् ॥ जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः ॥४५॥ ॥ ॥ ॥ ॥

त्यजंति तद्वत् ॥३९॥ किंच । समुद्रः अचंचलजलोऽभूत् । यथा त्यक्तकर्ममार्गो मुनिः शांतो भवति तद्वत् ॥४०॥ शरदागमे कर्षकाः क्षेत्रेभ्यः सेतुभिर्जलं जगृहुः । यथा योगिन इंद्रियैः स्रवज्ज्ञानमिंद्रियनिरोधेन रक्षंति तद्वत् ॥४१॥ भूतानां शरत्कालीनसूर्यकिरणजं तापं चंद्रो जहार । देहाभिमानजं तापं बोधो यथा हरति तद्वत् ॥४२॥ आकाशं निर्मेघं स्वच्छनक्षत्रं शुशुभे । यथा सत्वयुक्तं चित्तं, पूर्वोत्तरमीमांसानिर्णीतान् वेदार्थान् जानाति तद्वत् ॥४३॥ तदा पूर्णमंडलश्चंद्रो नक्षत्रैर्वृतः सन् शुशुभे । यथा कृष्णो यादवैर्वृतः सन् शोभते तद्वत् ॥४४॥ जनाः समशीतोष्णं पुष्पित-वन-वायुमालिंग्य तापं जहुः । कृष्णहृतचित्ता गोप्यस्तु तापं न जहुः ॥४५॥ ॥ ॥ ॥

तदा गोमृगखगस्त्रियः शरदृतुना स्वपतिभिरनुगम्यमानाः सत्यो गर्भिण्योऽभवन् ॥४६॥ सूर्योदये सति सूर्यविकासीनि कमलानि चंद्रविकासिकमलैर्विना हर्षं प्रापुः । यथा धार्मिकेण राज्ञा रक्षिता लोका दस्यून् विना हर्षं प्राप्नुवंति तद्वत ॥४७॥ किंच । पुर-ग्राम-व्रजेषु नवान्नप्राशनादिकैर्यज्ञैर्लौकिकैश्च महोत्सवैः पक्कधान्येन च युक्ता भूमिर्बभौ ॥४८॥ शरदृतौ प्राप्ते सति वणिजः संन्यासिनो नृपाः स्नातकाश्च वर्षाकाले एकत्र रुद्धाः संतो बहिर्निर्गम्य स्वान् स्वानर्थान् प्रपेदिरे । यथा सिद्धा आयुषा रुद्धाः संतः काले प्राप्ते देवादिदेहान् प्राप्नुवंति तद्वत् ॥४९॥ इति श्रीमद्भा० चू० दश० पूर्वा० विंशोऽध्यायः ॥२०॥ एकविंशे शरद्रम्य-वृंदावनगते हरौ ॥ तद्वेणुस्वरमाकर्ण्य गोपीभिर्गीतमीर्यते ॥१॥ श्रीशुक उवाच । हे राजन्, एकदा गोगोपालसहितः कृष्णः शरत्स्वच्छजलं कमलसुगंधवायुना वातम् ॥१॥ पुष्पितवनपंक्तिषु स्थितैर्मत्तभ्रमरपक्षिभिर्नादित-सरोवर-नदी-पर्वतयुक्तं तद्वृंदावनं

गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाऽभवन् ॥ अन्वीयमानाः स्ववृषैः फलैरीशक्रिया इव ॥४६॥ उदहृष्यन्वारिजानि सूर्योत्थाने कुमुद्विना ॥ राज्ञा तु निर्भया लोका यथा दस्यून्विना नृप ॥४७॥ पुरग्रामेष्वाग्रयणैरैंद्रियैश्च महोत्सवैः ॥ बभौ भूः पक्कसस्याढ्या कलाभ्यां नितरां हरेः ॥४८॥ वणिङ्मुनिनृपस्नाता निर्गम्यार्थान्प्रपेदिरे ॥ वर्षरुद्धा यथा सिद्धाः स्वपिंडान्काल आगते ॥४९॥ इति श्रीमद्भागवते म० द० पू० शरद्वर्णनं नाम विंशतितमोऽध्यायः ॥२०॥ श्रीशुक उवाच ॥ इत्थं शरत्स्वच्छजलं पद्माकरसुगंधिना ॥ न्यविशद्वायुना वातं सगोगोपालकोऽच्युतः ॥१॥ कुसुमितवनराजिशुष्मिभृंगद्विजकुलघुष्टसरःसरिन्महीध्रम् ॥ मधुपतिरवगाह्य चारयन्गाः सहपशुपालबलश्चुकूज वेणुम् ॥२॥ तद्व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् ॥ काश्चित्परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन् ॥३॥ तद्वर्णयितुमारब्धाः स्मरंत्यः कृष्णचेष्टितम् ॥ नाशकन्स्मरवेगेन विक्षिप्तमनसो नृप ॥४॥ बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद्वासः कनककपिशं वैजयंतीं च मालाम् ॥ रंध्रान्वेणोरधरसुधया पूरयन्गोपवृंदैर्वृंदारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः ॥५॥ इति वेणुरवं राजन्सर्वभूतमनोहरम् ॥ श्रुत्वा व्रजस्त्रियः सर्वा वर्णयंत्योऽभिरेभिरे ॥६॥ गोप्य ऊचुः ॥ अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननु विवेशयतोर्वयस्यैः ॥ वक्त्रं व्रजेशसुतयोरनुवेणु जुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥७॥ ॥ ॥ ॥ ॥

प्रविश्य बलेन गोपालैश्च सह गाश्चारयन् वेणुमवादयत् ॥२॥ तत्कामोत्पत्तिकरं वेणुगीतं श्रुत्वा गोप्यः कृष्णस्य परोक्षं स्वसखीभ्योऽवर्णयन् ॥३॥ तद्वर्णयितुमारब्धवत्योऽपि कामवेगेन विक्षिप्तमनसो गोप्यो वर्णयितुं नाशकन् ॥४॥ तदा यादृशं कृष्णस्मरणं तासां मनःक्षोभकं जातं तदाह । कृष्णो मयूरपिच्छयुक्तं मुकुटं, नटवत्सुंदरं शरीरं, कर्णयोः कर्णिकारपुष्पं, स्वर्णवत्पीतं वस्त्रं, वैजयंतीं मालां च बिभ्रत् वेणो रंध्राण्यधरामृतेनापूर्य गोपैर्गीतकीर्तिः सन् वृंदावनं विवेश॥५॥हे नृप, एवंभूतस्य कृष्णस्य वेणुशब्दं श्रुत्वा व्रजस्त्रियः कृष्णं वर्णयंत्यः पदे पदे मनसा कृष्णमालिंगितवत्यः ॥६॥ गोप्य ऊचुः ॥ हे गोप्यः, नेत्रवतां तावदिदमेव फलं नान्यत् । तत्किं तदाह । समानवयस्यैर्मित्रैः सह पशून् वने

प्रवेशयतो रामकृष्णयोर्वेणुं वादयतोर्मुखं यैः पीतं तैरेव तत्प्रियदर्शनरूपं फलं सेवितं नान्यैः ॥७॥ अन्या आहुः । हे गोप्यः, आम्रपल्लव-कमलमालाभिर्विचित्रवेषौ रामकृष्णौ नटश्रेष्ठाविव गोपसभायां मध्ये क्वचिद्गायमानौ विरेजतुः । अहो गोपानां पुण्यमिति ॥८॥ किंच । हे गोप्यः, अयं वेणुः किं पुण्यं कृतवान् । यतोऽस्मद्भोग्यां कृष्णाधरसुधां स्वयं भुंक्ते । किंच । यासां जलेन पुष्टस्ता नद्यः कमलमिषेण रोमांचिता लक्ष्यंते । येषां वंशे जातस्ते वृक्षा मधुधारामिषेणाश्रूणि मुमुचुः ॥९॥ हे सखि, इदं वृंदावनं भुवः कीर्तिं स्वर्गादपि विशेषेण विस्तारयति । यतः कृष्णचरणकमलाभ्यां प्राप्तशोभम् । किंच । कृष्णस्य वेणुनादं तदनु मत्तमयूरनृत्यं च दृष्ट्वाऽन्ये मृगादयः पर्वते तत्रतत्र स्तब्धा बभूवुः ॥१०॥ अपरा आहुः । हे गोप्यः, एता हरिण्योऽज्ञा अपि धन्याः । यतो वेणुगीतं श्रुत्वा पतिभिः सह स्नेहावलोकनैः कृष्णसत्कारं कृतवत्यः ॥११॥ अन्या ऊचुः । हे गोप्यः देवांगनाः

चूतप्रवालबर्हस्तबकोत्पलाब्जमालानुपृक्तपरिधानविचित्रवेषौ ॥ मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रंगे यथा नटवरौ क्व च गायमानौ ॥८॥ गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधामपि गोपिकानाम् ॥ भुंक्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथाऽऽर्याः ॥९॥ वृंदावनं सखि भुवो वितनोति कीर्तिं यद्देवकीसुतपदांबुजलब्धलक्ष्मि ॥ गोविंदवेणुमनु मत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्वम् ॥१०॥ धन्याः स्म मूढमतयोऽपि हरिण्य एता या नंदनंदनमुपात्तविचित्रवेषम् ॥ आकर्ण्य वेणुरणितं सहकृष्णसाराः पूजां दधुर्विरचितां प्रणयावलोकैः ॥११॥ कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् ॥ देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः ॥१२॥ गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबंत्यः ॥ शावाः स्नुतस्तनपयःकवलाः स्म तस्थुर्गोविंदमात्मनि दृशाऽश्रुकलाः स्पृशंत्यः ॥१३॥ प्रायो बतांब विहगा मुनयो वनेऽस्मिन्कृष्णेक्षितं तदुदितं कलवेणुगीतम् ॥ आरुह्य ये द्रुमभुजान्रुचिरप्रवालान् शृण्वंत्यमीलितदृशो विगतान्यवाचः ॥१४॥ नद्यस्तदा तदुपधार्य मुकुंदगीतमावर्तलक्षितमनोभवभग्नवेगाः ॥ आलिंगनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णंति पादयुगलं कमलोपहाराः ॥१५॥ दृष्ट्वाऽऽतपे व्रजपशून्सहरामगोपैः संचारयंतमनु वेणुमुदीरयंतम् ॥ प्रेमप्रवृद्ध उदितः कुसुमावलीभिः सख्युर्व्यधात्स्ववपुषांबुद आतपत्रम् ॥१६॥ ॥ ॥ ॥

कृष्णं दृष्ट्वा तद्वेणुगीतं च श्रुत्वा विमानानां मध्ये देवानामुत्संगेषु स्थिता अपि मदनेन गतधैर्या विगतनीव्यो मुमुहुः ॥१२॥ किंच । हे गोप्यः, गावो वेणुगीतामृतमुन्नमितकर्णपुटैः पिबंत्यस्तस्थुः । तथा स्तनपाने प्रवृत्ता वत्सा मुखाद्गलितदुग्धकवलाः संतो विस्मृतस्तनपाना बभूवुः ॥१३॥ हे गोप्यः, अत्र ये पक्षिणो वृक्षशाखा आरुह्य कृष्णस्य वेणुगीतं शृण्वंति तं च निमेषरहितदृष्टिभिः पश्यंति । ते बहुधा मुनयो भवितुमर्हंति ॥१४॥ हे गोप्यः, नद्यः कृष्णगीतं श्रुत्वा कामेन भग्नवेगाः सत्य ऊर्मिभुजैः कमलान्याहरंत्यो मुरारेश्चरणयुगुलं धारयंति । अतस्ता धन्याः ॥१५॥ किंच । हे गोप्यः, मेघः आतपे रामगोपैः सह पशून् चारयंतं कृष्णं दृष्ट्वोदितः सन् स्ववपुषा छत्रमिव छायामकरोत् । अहो

अस्य भाग्यम् ॥१६॥ हे सख्यः, एताः पुलिंद्यः कृतार्थाः । यतः श्रीकृष्णचरणकमलकुंकुमं वने गमनेन तृणेषु संलग्नं दृष्ट्वा तन्मुखस्तनेष्वालिप्य कामव्यथां जहुः । अतस्ता धन्याः ॥१७॥ अन्या ऊचुः । हे सख्यः, अयं गोवर्धनपर्वतो वैष्णवेषु श्रेष्ठोऽस्ति । यतः स सहगोगणयो रामकृष्णयोर्जल-तृण-कंद-मूल-गुहादिभिः संमानं करोति ॥१८॥ किंच । हे सख्यः, शिरसि गोपादबंधन-रज्जुवेष्टनेन स्कंधे गोकर्षणार्थं पाशग्रहणेन शोभमानयोर्गा वने नयतो रामकृष्णयोर्वेणुनादैर्गतिमतां स्तब्धता ( स्थावरधर्मः ) तरूणां रोमांचो ( जंगमधर्मः ) इदमत्याश्चर्यम् ॥१९॥ एवं हे नृप, वृंदावनचारिणः कृष्णस्यानेकक्रीडा मिथो वर्णयंत्यो गोप्यस्तन्मयतां ययुः ॥२०॥ ॥ इति श्रीमद्भा० चू० दश० पूर्वा० एकविंशोऽध्यायः ॥२१॥ ॥ द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया । वरं दत्वा गतः कृष्णो यज्ञशालामितीर्यते ॥१॥ श्रीशुक उवाच ॥ हे राजन्, हेमंततौं मार्गशीर्षे मासे व्रजकुमा-

पूर्णाः पुलिंद्य उरुगायपदाब्जरागश्रीकुंकुमेन दयितास्तनमंडितेन ॥ तद्दर्शनस्मररुजस्तृणरूषितेन लिंपंत्य आननकुचेषु जहुस्तदाधिम् ॥१७॥ हंतायमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः ॥ मानं तनोति सहगोगणयोस्तयोर्यत्पानीयसूयवसकंदरकंदमूलैः ॥१८॥ गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः ॥ अस्पंदनं गतिमतां पुलकस्तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥१९॥ एवंविधा भगवतो या वृंदावनचारिणः ॥ वर्णयंत्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥२०॥ इति श्रीमद्भागवते महा० दशमस्कंधे पूर्वार्धे वेणुगीतं नाम एकविंशोऽध्यायः ॥२१॥ श्रीशुक उवाच ॥ हेमंते प्रथमे मासि नंदव्रजकुमारिकाः ॥ चेरुर्हविष्यं भुंजानाः कात्यायन्यर्चनव्रतम् ॥१॥ आप्लुत्यांऽभसि कालिंद्या जलांते चोदितेऽरुणे ॥ कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम् ॥२॥ गंधैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः ॥ उच्चावचैश्चोपहारैः प्रवालफलतंडुलैः ॥३॥ कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नंदगोपसुतं देवि पतिं मे कुरु ते नमः ॥ इति मंत्रं जपंत्यस्ताः पूजां चक्रुः कुमारिकाः ॥४॥ एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः ॥ भद्रकालीं समानर्चुर्भूयान्नंदसुतः पतिः ॥५॥ उषस्युत्थाय गोत्रैः स्वैरन्योन्याबद्धबाहवः ॥ कृष्णमुच्चैर्जगुर्यांत्यः कालिंद्यां स्नातुमन्वहम् ॥६॥ नद्यां कदाचिदागत्य तीरे निक्षिप्य पूर्ववत् ॥ वासांसि कृष्णं गायंत्यो विजह्रुः सलिले मुदा ॥७॥ भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः ॥ वयस्यैरावृतस्तत्र गतस्तत्कर्मसिद्धये ॥८॥

रिका हविष्यं भुंजानाः सत्यः कात्यायनीदेवीपूजनरूपं व्रतं चेरुः ॥१॥ प्रत्यहमरुणोदये यमुनाया जले स्नात्वा तत्तीरे वालुकामयीं देवीं कृत्वा ॥२॥ तां गंध-पुष्प-पल्लव-फल-तंदुल-धूप-दीप-नैवेद्यादिभिरर्चयामासुः ॥३॥ किंच । हे कात्यायनि, हे महामाये, हे देवि, नंदगोपसुतं कृष्णं मे पतिं कुरु । तुभ्यं नमः । एवं मंत्रं जपंत्यस्ताः कन्याः पूजां चक्रुः । एवं मासपर्यंतं व्रतं चेरुः ॥४॥५॥ व्रतस्य पूर्वांगमाह । प्रत्यहमुषःकाल उत्थाय स्वकीयैर्नामभिः परस्परं गृहीतहस्ताः कालिंद्यां स्नातुं यांत्य उच्चैः कृष्णं जगुः ॥६॥ एकदा नद्यां गत्वा तीरे पूर्ववद्वस्त्राणि निधाय जले विजह्रुः ॥७॥ तज्ज्ञात्वा योगेश्वरः कृष्णो गोपैः सह तत्रैत्य ॥८॥ ॥ ॥ ॥

तासां वस्त्राणि गृहीत्वा कदंबमारुह्य बालैः सह हसन् सन् परिहासं जगाद ॥९॥ हे अबलाः, यूयमत्र वृक्षाधोभागे आगत्य स्वं स्वं वस्त्रं गृह्यताम् । अहं सत्यं कथयामि न परिहासः । यतो यूयं व्रतकृशाः स्थ ॥१०॥ मया कदापि मिथ्याभाषणं न कृतम् । तदिमे गोपा जानंति । अतोऽत्रैत्यैकैकशः सहैव वाऽऽगत्य वस्त्राणि स्वीकुरुत ॥११॥ हे नृप, कृष्णस्य तत्परिहासकृतं वस्त्राहरणं दृष्ट्वा गोप्यो व्रीडिताः सत्यो मिथः प्रेक्ष्य हास्यं कृत्वा जलाद्बहिर्न निर्ययुः ॥१२॥ एवं कृष्णे ब्रुवति सति ताः शीतोदके आकंठमग्नाः कंपमानाः सत्यः कृष्णमूचुः ॥१३॥ तत्र काश्चिन्मोहिता ऊचुः । हे कृष्ण त्वमन्यायं मा कृथाः । नंदपुत्रं त्वां वयं जानीमः । नः वस्त्राणि देहि । यतो वयं कंपिताः स्मः ॥१४॥ प्रौढा

तासां वासांस्युपादाय नीपमारुह्य सत्वरः ॥ हसद्भिः प्रहसन्बालैः परिहासमुवाच ह ॥९॥ अत्रागत्याबलाः कामं स्वं स्वं वासः प्रगृह्यताम् ॥ सत्यं ब्रवाणि नो नर्म यद्यूयं व्रतकर्शिताः ॥१०॥ न मयोदितपूर्वं वा अनृतं तदिमे विदुः ॥ एकैकशः प्रतीच्छध्वं सहैवोत सुमध्यमाः ॥११॥ तस्य तत्क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः ॥ व्रीडिताः प्रेक्ष्य चान्योन्यं जातहासा न निर्ययुः ॥१२॥ एवं ब्रुवति गोविंदे नर्मणा क्षिप्तचेतसः ॥ आकंठमग्नाः शीतोदे वेपमानास्तमब्रुवन् ॥१३॥ माऽनयं भोः कृथास्त्वां तु नंदगोपसुतं प्रियम् ॥ जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः ॥१४॥ श्यामसुंदर ते दास्यः करवाम तवोदितम् ॥ देहि वासांसि धर्मज्ञ नोचेद्राज्ञे ब्रुवामहे ॥१५॥ श्रीभगवानुवाच ॥ भवत्यो यदि मे दास्यो मयोक्तं वा करिष्यथ ॥ अत्रागत्य स्ववासांसि प्रतीच्छंतु शुचिस्मिताः ॥१६॥ ततो जलाशयात्सर्वा दारिकाः शीतवेपिताः ॥ पाणिभ्यां योनिमाच्छाद्य प्रोत्तेरुः शीतकर्शिताः ॥१७॥ भगवानाह ता वीक्ष्य शुद्धभावप्रसादितः ॥ स्कंधे निधाय वासांसि प्रीतः प्रोवाच सस्मितम् ॥१८॥ यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत्तदु देवहेलनम् ॥ बद्ध्वांजलिं मूर्ध्न्यपनुत्तयेंऽहसः कृत्वा नमोऽधो वसनं प्रगृह्यताम् ॥१९॥ इत्यच्युतेनाभिहितं व्रजाबला मत्वा विवस्त्राप्लवनं व्रतच्युतिम् ॥ तत्पूर्तिकामास्तदशेषकर्मणां साक्षात्कृतं नेमुरवद्यमृग्यतः ॥२०॥ तास्तथाऽवनता दृष्ट्वा भगवान्देवकीसुतः ॥ वासांसि ताभ्यः प्रायच्छत्करुणस्तेन तोषितः ॥२१॥ ॥ ॥ ॥

ऊचुः । हे श्यामसुंदर, वयं ते दास्यो भवाम । तवोदितं च करवाम । त्वं नो वस्त्राणि देहि । नोचेन्नंदाय ब्रूमहे ॥१५॥ श्रीभगवानुवाच । भवत्यो यदि मे दास्यो मदुक्तं च करिष्यथ तर्हि अत्रागत्य स्वानि स्वानि वस्त्राणि गृह्णंतु ॥१६॥ ततस्ताः पाणिभ्यां योनिमाच्छाद्य शीतेन कंपिताः सत्यो जलाद्बहिर्निर्गताः ॥१७॥ ततः कृष्णस्ताः कुमारिका वीक्ष्य स्कंधे वासांसि गृहीत्वा प्रीतो मंदहास्यं कुर्वन् प्रोवाच ॥१८॥ हे अबलाः, यूयं व्रतं धृत्वा वस्त्ररहिताः स्नानं कृतवत्यस्तद्देवस्यापराधरूपं पापं जातम् । तस्य पापस्य निवृत्तये मस्तकेऽञ्जलिं बद्ध्वाऽधः प्रणामं कृत्वा वस्त्राणि गृह्यताम् ॥१९॥ एवं कृष्णोक्तं विवस्त्रस्नानं व्रतनाशकं मत्वा व्रतपूर्तिहेतवे तमेव प्रणेमुः ॥२०॥ ततः कृष्णो नम्रास्ता दृष्ट्वा ताभ्यो

वासांसि ददौ ॥२१॥ एवं कृष्णेन दृढं वंचिता लज्जया च त्याजिता वस्त्राणि चापहृतानि । तथापि तास्तं दोषदृष्ट्या नापश्यन् ॥२२॥ ततस्ताः कन्याः स्वस्ववासांसि परिधाय कृष्णसमागमेन वशीकृतास्तस्मिन् कृष्णे लज्जायितेक्षणाः सत्यस्ततः स्थानान्नोच्चेलुः ॥२३॥ ततस्तासां संकल्पं ज्ञात्वा भक्तवत्सलः श्रीकृष्णस्ताः प्रत्याह ॥२४॥ हे साध्व्यः, युष्माकं संकल्पो मया ज्ञातोऽनुमोदितश्च । अतः स सत्यो भवितुमर्हति ॥२५॥ किंच । मयि स्थापितचित्तानां मनोरथः सांसारिकविषयभोगाय न कल्पते ॥२६॥ हे अबलाः, यूयं व्रजं गच्छत, आगामिनीः शरत्कालीना रात्रीर्मया सह रंस्यथ तेन पूर्णमनोरथा भविष्यथ ॥२७॥ श्रीशुक उवाच । हे नृप, एवं कृष्णेनाज्ञापितास्ताः कुमारिकाः कृष्णचरणकमलं

दृढं प्रलब्धास्त्रपया च हापिताः प्रस्तोभिताः क्रीडनवच्च कारिताः ॥ वस्त्राणि चैवापहृतान्यथाप्यमुं ता नाभ्यसूयन्प्रियसंगनिर्वृताः ॥२२॥ परिधाय स्ववासांसि प्रेष्ठसंगमसज्जिताः ॥ गृहीतचित्ता नो चेलुस्तस्मिँल्लज्जायितेक्षणाः ॥२३॥ तासां विज्ञाय भगवान्स्वपादस्पर्शकाम्यया ॥ धृतव्रतानां संकल्पमाह दामोदरोऽबलाः ॥२४॥ संकल्पो विदितः साध्व्यो भवतीनां मदर्चनम् ॥ मयाऽनुमोदितः सोऽसौ सत्यो भवितुमर्हति ॥२५॥ न मय्यावेशितधियां कामः कामाय कल्पते ॥ भर्जिता क्वथिता धाना प्रायो बीजाय नेष्यते ॥२६॥ यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः ॥ यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ॥२७॥ श्रीशुक उवाच ॥ इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः ॥ ध्यायंत्यस्तत्पदांभोजं कृच्छ्रान्निर्विविशुर्व्रजम् ॥२८॥ अथ गोपैः परिवृतो भगवान्देवकीसुतः ॥ वृंदावनाद्गतो दूरं चारयन्गाः सहाग्रजः ॥२९॥ निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः ॥ आतपत्रायितान्वीक्ष्य द्रुमानाह व्रजौकसः ॥३०॥ हे स्तोककृष्ण हे अंशो श्रीदामन्सुबलार्जुन ॥ विशालर्षभ तेजस्विन्देवप्रस्थ वरूथप ॥३१॥ पश्यतैतान्महाभागान्परार्थैकांतजीवितान् ॥ वातवर्षातपहिमान्सहंतो वारयंति नः ॥३२॥ अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् ॥ सुजनस्येव येषां वै विमुखा यांति नार्थिनः ॥३३॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ॥ गंधनिर्याासभस्मास्थितोक्मैः कामान्वितन्वते ॥३४॥ एतावज्जन्मसाफल्यं देहिनामिह देहिषु ॥ प्राणैरर्थैर्धिया वाचा श्रेय एवाचरेत्सदा ॥३५॥ इति प्रवालस्तबकफलपुष्पदलोत्करैः ॥ तरूणां नम्रशाखानां मध्येन यमुनां गतः ॥३६॥ ॥ ॥ ॥

ध्यायंत्यो व्रजं ययुः ॥२८॥ अथ सबलः कृष्णो गोपैर्युक्तो गाश्चारयन् वृंदावनाद्दूरं गतः ॥२९॥ तदा ग्रीष्मर्तुकालीन-सूर्यकिरणतापे छत्रवत्कृतच्छायान् वृक्षान् दृष्ट्वा कृष्णो गोपानाह ॥३०॥ हे स्तोककृष्ण, हे अंशो, हे श्रीदामान्, हे सुबलादयः, ॥३१॥ यूयमेतान् वृक्षान् पश्यत । स्वयं वात-वर्षातप-हिमान् सहित्वाऽस्माकं तानि वातादीनि वारयंति ॥३२॥ अहो एतेषां वृक्षाणां जन्म श्रेष्ठम् । येषां याचका विमुखा न गच्छंति॥३३॥ एते पत्र-पुष्प-फल च्छाया-मूल-वल्कल-काष्ठैः सर्वेषां मनोरथान् पूरयंति ॥३४॥ संसारे स्थितानां प्राणिनामेतावदेव जन्मनः साफल्यम् । तदाह । प्राणैरर्थैर्बुद्ध्या वाचा चान्येषां हितमेवाचरेत् ॥३५॥ एवं वदन् श्रीकृष्णः पल्लव-पुष्पगुच्छ-फल-पुष्पादिभिर्नम्रशाखानां तरूणां

मध्येन यमुनातीरं प्राप्तः ॥३६॥ तत्र गोपा यमुनाया जलं गाः पाययित्वा स्वयमपि यथेच्छं पपुः ॥३७॥ ततो यमुनाया उपवने पशून् चारयंतः क्षुधार्ता गोपाः कृष्णरामावुपागम्येदमब्रुवन् ॥३८॥ इति श्रीमद्भा० चू० द० पू० द्वाविंशोऽध्यायः ॥२२॥ त्रयोविंशे ततो गोपैरन्नयाञ्चोपदेशतः । तत्पत्न्यनुग्रहात्कृष्णो दीक्षितानन्वतापयत् ॥१॥ गोपा ऊचुः ॥ हे राम, हे कृष्ण, एषा क्षुधाऽस्मान् बाधते तच्छांतिं कर्तुमर्हथः ॥१॥ श्रीशुक उवाच ॥ एवं गोपैः प्रार्थितो भगवान् कृष्णः स्वभक्ताया विप्रभार्यायाः प्रसीदन् सन्निदं जगाद ॥२॥ हे गोपाः, इतोऽविदूर एव ब्राह्मणाः स्वर्गप्राप्तीच्छया आंगिरसं नाम सत्रं कुर्वंतस्तिष्ठंति । तत्र यूयं गच्छत ॥३॥ गत्वा च मम रामस्य च नाम कथयित्वाऽस्मदर्थं यूयमन्नं याचत । तेन युष्माकं क्षुधा निवृत्ता भविष्यति ॥४॥ ततो गोपास्तत्र गत्वा विप्रान् दंडवत् नत्वा कृतांजलयो भूत्वाऽन्नमयाचंत ॥५॥ हे ब्राह्मणाः, यूयं शृणुत ।

तत्र गाः पाययित्वाऽपः सुमृष्टाः शीतलाः शिवाः ॥ ततो नृप स्वयं गोपाः कामं स्वादु पपुर्जलम् ॥३७॥ तस्या उपवने कामं चारयंतः पशून्नृप ॥ कृष्णरामावुपागम्य क्षुधार्ता इदमब्रुवन् ॥३८॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे गोपीवस्त्रापहारो नाम द्वाविंशोऽध्यायः ॥२२॥ गोपा ऊचुः ॥ राम राम महावीर्य कृष्ण दुष्टनिबर्हण ॥ एषा वै बाधते क्षुन्नस्तच्छांतिं कर्तुमर्हथः ॥१॥ श्रीशुक उवाच ॥ इति विज्ञापितो गोपैर्भगवान्देवकीसुतः ॥ भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत् ॥२॥ प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः ॥ सत्रमांगिरसं नाम ह्यासते स्वर्गकाम्यया ॥३॥ तत्र गत्वौदनं गोपा याचतास्मद्विसर्जिताः ॥ कीर्तयंतो भगवत आर्यस्य मम चाभिधाम् ॥४॥ इत्यादिष्टा भगवता गत्वाऽयाचंत ते तथा ॥ कृतांजलिपुटा विप्रान् दंडवत्पतिता भुवि ॥५॥ हे भूमिदेवाः शृणुत कृष्णस्यादेशकारिणः ॥ प्राप्तान् जानीत भद्रं वो गोपान्नो रामचोदितान् ॥६॥ गाश्चारयंतावविदूर ओदनं रामाच्युतौ वो लषतो बुभुक्षितौ ॥ तयोर्द्विजा ओदनमर्थिनोर्यदि श्रद्धा च वो यच्छत धर्मवित्तमाः ॥७॥ दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः ॥ अन्यत्र दीक्षितस्यापि नान्नमश्नन्हि दुष्यति ॥८॥ इति ते भगवद्याच्ञां शृण्वंतोऽपि न शुश्रुवुः ॥ क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः ॥९॥ देशः कालः पृथग्द्रव्यं मंत्रतंत्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥१०॥ तं ब्रह्म परमं साक्षाद्भगवंतमधोक्षजम् ॥ मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे ॥११॥

श्रीकृष्णस्य रामस्य चाज्ञया प्राप्तानस्मान् जानीत ॥६॥ किंच । हे द्विजाः, इतः समीपे गाश्चारयंतौ रामकृष्णौ क्षुधितौ वर्तेते । तौ युष्मत्तोऽन्नमभिलषतः । अतो वः श्रद्धा यद्यस्ति तर्हि तयोरन्नं दीयताम् ॥७॥ ननु वयं दीक्षिता अभोज्यान्ना इति चेत्तर्हि हे विप्राः, पशुयागदीक्षायामग्नीषोमीयपशुहिंसनात्पूर्वमन्नभक्षणे सौत्रामणीयागे चान्नभक्षणे दोषोऽस्ति । अन्ययागे दीक्षितस्यान्नभक्षणे दोषो नास्ति । अतोऽन्नं दीयताम् ॥८॥ हे राजन्, एवं द्विजा भगवद्याच्ञां शृण्वंतोऽपि न शुश्रुवुः । यतो बालिशा अपि वयं ज्ञानवृद्धा इत्यभिमानवंतः ॥९॥ किंच । हे नृप, देश-काल-द्रव्य-मंत्र-तंत्रादि सर्वं यज्ञश्च यन्मयः ॥१०॥ तं साक्षात्परब्रह्मरूपं भगवंतं द्विजा मनुष्योऽयमिति मेनिरे ॥११॥ ॥

ततोऽन्नं दद्म इति नेति च नोचुः । ततो गोपा निराशा भूत्वा रामकृष्णयोः समीपमागत्य तथोचुः ॥१२॥ तच्छ्रुत्वा कृष्णः प्रहस्य पुनर्गोपानाह ॥१३॥ हे गोपाः, बलरामसहितं मामत्र प्राप्तं विप्रपत्नीभ्यः कथयत । ता वोऽन्नं दास्यंति ॥१४॥ ततो गोपास्तत्र गत्वा पत्नीशालायामासीनास्ता दृष्ट्वा नत्वा च जगदुः ॥१५॥ हे विप्रपत्न्यः, युष्मभ्यं नमः । नः वचांसि शृणुत । इतोऽविदूरे प्राप्तेन कृष्णेन वयं प्रेषिताः ॥१६॥ स कृष्णो गाश्चारयन् गोपालै रामेण च सह दूरमागतः । तस्य गोपैः सह क्षुधितस्यान्नं दीयताम् ॥१७॥ ततस्ताः कृष्णं प्राप्तं श्रुत्वा शीघ्रं गंतुं जातसंभ्रमा बभूवुः ॥१८॥ ततश्चतुर्विधमन्नं गृहीत्वा नद्यः समुद्रमिव कृष्णमभिजग्मुः ॥१९॥ तदा पति-भ्रातृ-बंधु-सुतै-र्निषेधिता अपि

न ते यदोमिति प्रोचुर्न नेति च परंतप ॥ गोपा निराशाः प्रत्येत्य तथोचुः कृष्णरामयोः ॥१२॥ तदुपाकर्ण्य भगवान्प्रहस्य जगदीश्वरः ॥ व्याजहार पुनर्गोपान् दर्शयँल्लौकिकीं गतिम् ॥१३॥ मां ज्ञापयत पत्नीभ्यः ससंकर्षणमागतम् ॥ दास्यंति काममन्नं वः स्निग्धा मय्युषिता धिया ॥१४॥ गत्वाऽथ पत्नीशालायां दृष्ट्वाऽऽसीनाः स्वलंकृताः ॥ नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥१५॥ नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः ॥ इतोऽविदूरे चरता कृष्णेनेहेषिता वयम् ॥१६॥ गाश्चारयन् स गोपालैः सरामो दूरमागतः ॥ बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥१७॥ श्रुत्वाऽच्युतमुपायातं नित्यं तद्दर्शनोत्सुकाः ॥ तत्कथाक्षिप्तमनसो बभूवुर्जातसंभ्रमाः ॥१८॥ चतुर्विधं बहुगुण-मन्नमादाय भाजनैः ॥ अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥१९॥ निषिध्यमानाः पतिभिर्भ्रातृभिर्बंधुभिः सुतैः ॥ भगवत्युत्तमश्लोके दीर्घश्रुतधृताशयाः ॥२०॥ यमुनोपवनेऽशोकनवपल्लवमंडिते ॥ विचरंतं वृतं गोपैः साग्रजं ददृशुः स्त्रियः ॥२१॥ श्यामं हिरण्यपरिधिं वनमा-ल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे ॥ विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहासम् ॥२२॥ प्रायः श्रुतप्रियतमोदयकर्णपूरै-र्यस्मिन्निमग्नमनसस्तमथाक्षिरंध्रैः ॥ अंतः प्रवेश्य सुचिरं परिरभ्य तापं प्राज्ञं यथाऽभिमतयो विजहुर्नरेंद्र ॥२३॥ तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया ॥ विज्ञायाखिलदृग्द्रष्टा प्राह प्रहसिताननः ॥२४॥ स्वागतं वो महाभागा आस्यतां करवाम किम् ॥ यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं हि वः ॥२५॥ नन्वद्धा मयि कुर्वंति कुशलाः स्वार्थदर्शनाः ॥ अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा ॥२६॥ ॥

ताः कृष्णे धृतमनसः सत्यो ॥२०॥ यमुनोपवने गत्वा तत्र संचरंतं गोपैर्वृतं सरामं कृष्णं ददृशुः ॥२१॥ कथंभूतं तम् । श्यामं पीतांबरधरं मित्रस्कंधे कृतहस्तमन्येन हस्तेन कमलं भ्रामयंतं प्रसन्नमुखम् ॥२२॥ ईदृशं तं दृष्ट्वा नेत्ररंध्रैरंतः प्रवेश्य चिरकालमालिंग्य संसारतापं जहुः । यथा सुषुप्तिसाक्षिणं प्राज्ञमालिंग्य तस्मिन् लयं प्राप्याहंकारवृत्तयस्तापं त्यजंति तद्वत् ॥२३॥ ततः कृष्णस्त्यक्तसर्वाशाः स्वदर्शनार्थं प्राप्तास्ता ज्ञात्वा प्रहस्याह ॥२४॥ हे स्त्रियः, वः स्वागमम् । आस्यताम् । युष्माकं वयं किं करवाम । किंच । मद्दर्श-नार्थं यूयं प्राप्ताश्चेदिदं वो योग्यम् ॥२५॥ यतः स्वकीयमर्थं पश्यंतो विवेकिन आत्मनि प्रिये मयि फलाभिसंधिरहितामखंडां भक्तिं कुर्वंति ॥२६॥ ॥ ॥

यस्यात्मनः संपर्कात्देह-पुत्र-कलत्र-धनादयः सर्वेऽपि प्रिया भवंति । तस्मादात्मनोऽन्यः कः प्रियोऽस्ति न कोऽपि ॥२७॥ अतो मद्दर्शनेन यूयं धन्याः । तस्माद्यूयं यज्ञवाटंप्रति गच्छत । युष्मत्पतयो गृहस्थाश्रमिणस्ते युष्माभिर्यज्ञं समापयिष्यंति ॥२८॥ पत्न्य ऊचुः । हे विभो, एवं क्रूरं वक्तुं त्वं नार्हसि । 'न मे भक्तः प्रणश्यतीति' स्ववाक्यं सत्यं कुरुष्व । वयं सर्वबंधून् हित्वा त्वद्दास्यार्थं प्राप्ताः । अतोऽस्मान् मा त्यज ॥२९॥ किंच । अस्मत्पतिपुत्रादयोऽस्मान्न गृह्णंति । तस्मादस्माकमन्या गतिर्मा भूदेवंभूतं त्वद्दास्यमेव देहि ॥३०॥ श्रीभगवानुवाच ॥ हे स्त्रियः, पतिपुत्रादयो युष्मान्न निंदंति । देवा अपि युष्माकं मानमेव कुर्वंति ॥३१॥ किंच । अस्मिन् संसारे ममांगसंगो मद्भक्तानां सुखाय स्नेहवृद्धये च

प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः ॥ यत्संपर्कात्प्रिया आसंस्ततः को न्वपरः प्रियः ॥२७॥ तद्यात देवयजनं पतयो वो द्विजातयः ॥ स्वसत्रं पारयिष्यंति युष्माभिर्गृहमेधिनः ॥२८॥ पत्न्य ऊचुः ॥ मैवं विभोऽर्हति भवान्गदितुं नृशंसं सत्यं कुरुष्व निगमं तव पादमूलम् ॥ प्राप्ता वयं तुलसिदाम पदाऽवसृष्टं केशैर्निवोढुमतिलंघ्य समस्तबंधून् ॥२९॥ गृह्णंति नो न पतयः पितरौ सुता वा न भ्रातृबंधुसुहृदः कुत एव चान्ये ॥ तस्माद्भवत्प्रपदयोः पतितात्मनां नो नान्या भवेद्गतिररिंदम तद्विधेहि ॥३०॥ ॥ श्रीभगवानुवाच ॥ पतयो नाभ्यसूयेरन्पितृभ्रातृसुतादयः ॥ लोकाश्च वो मयोपेता देवा अप्यनुमन्वते ॥३१॥ न प्रीतयेऽनुरागाय ह्यंगसंगो नृणामिह ॥ तन्मनो मयि युंजाना अचिरान्मामवाप्स्यथ ॥३२॥ श्रीशुक उवाच ॥ इत्युक्ता मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः ॥ ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥३३॥ तत्रैका विधृता भर्त्रा भगवंतं यथाश्रुतम् ॥ हृदोपगुह्य विजहौ देहं कर्मानुबंधनम् ॥३४॥ भगवानपि गोविंदस्तेनैवान्नेन गोपकान् ॥ चतुर्विधेनाशयित्वा स्वयं च बुभुजे प्रभुः ॥३५॥ एवं लीलानरवपुर्नृलोकमनुशीलयन् ॥ रेमे गोगोपगोपीनां रमयन् रूपवाक्कृतैः ॥३६॥ अथानुस्मृत्य विप्रास्ते अन्वतप्यन् कृतागसः ॥ यद्विश्वेश्वरयोर्याच्ञामहन्म नृविडंबयोः ॥३७॥ दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम् ॥ आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥३८॥ धिग्जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञताम् ॥ धिक्कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥३९॥ ॥

न भवति । किंतु मनःसंग एव । अतो मयि मनो युंजानाः सत्यो यूयं शीघ्रं मां प्राप्स्यथ ॥३२॥ श्रीशुक उवाच । एवं कृष्णेनोक्ता विप्रपत्न्यो यज्ञवाटं पुनर्गताः । ते च पतयस्तासु दोषदृष्टिमकृत्वा ताभिः सह यज्ञं समाप्तं कृतवंतः ॥३३॥ तत्रैका भर्त्रा धृता सती यथाश्रुतं कृष्णं मनसाऽऽलिंग्य कर्मानुबंधनं देहं जहौ ॥३४॥ ततः कृष्णस्तेनान्नेन गोपान् भोजयित्वा स्वयमपि बुभुजे ॥३५॥ एवं कृष्णो मनुष्यलोकमनुकुर्वन् गोगोपगोपी रमयन् स्वयं रेमे ॥३६॥ अथ ते विप्रा रामकृष्णयोर्याच्ञां हतवंतो वयमिति स्मृत्वाऽनुतापं प्रापुः ॥३७॥ ततस्ते स्त्रीणां कृष्णे भक्तिं दृष्ट्वा भक्त्या हीनं स्वमात्मानं व्यगर्हयन् ॥३८॥ अहो नो जन्म धिक् । तथा व्रतं विद्यां कुलं क्रियाश्च धिक् । यतो वयं कृष्णे

विमुखाः ॥३९॥ किंच । भगवन्माया योगिनामपि मोहिनी । यतो वयं नृणां गुरवोऽपि स्वार्थे मुह्यामहे ॥४०॥ अहो स्त्रीणामपि गोविंदे भावं पश्यत । यो भावो गृहनामकमृत्युपाशानच्छिनत् ॥४१॥ किंच । आसां स्त्रीणामुपनयनसंस्कारो गुरौ वासस्तपः शौचं संध्योपास्त्यादि कर्माणि च न संति ॥४२॥ तथापि योगेश्वरे कृष्णे दृढा भक्तिरस्ति । सा संस्कारादियुक्तानामप्यस्माकं नास्ति । किमासां भाग्यम् ॥४३॥ किंच । कृपालुः कृष्णो गृहेच्छया मत्तानां नो गोपवाक्यैः स्मारयामास ॥४४॥ अन्यथा पूर्णकामस्य तस्यान्नयाचनया किं कार्यम् ॥४५॥ किंच । लक्ष्मीरन्यान् ब्रह्मादीन् हित्वा यं सेवते तस्यान्नयाचना केवलं जनमोहिन्यस्ति ॥४६॥ किंच । देश-काल-द्रव्य-मंत्र-तंत्रादयो धर्मो यज्ञश्च यन्मयः

नूनं भगवतो माया योगिनामपि मोहिनी ॥ यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥४०॥ अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ ॥ दुरंतभावं योऽविध्यन्मृत्युपाशान्गृहाभिधान् ॥४१॥ नासां द्विजातिसंस्कारो न निवासो गुरावपि ॥ न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥४२॥ अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे ॥ भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥४३॥ ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया ॥ अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥४४॥ अन्यथा पूर्णकामस्य कैवल्याद्याशिषां पतेः ॥ ईशितव्यैः किमस्माभिरीशस्यैतद्विडंबनम् ॥४५॥ हित्वाऽन्यान्भजते यं श्रीः पादस्पर्शाशयाऽसकृत् ॥ आत्मदोषापवर्गेण तद्याच्ञा जनमोहिनी ॥४६॥ देशः कालः पृथग्द्रव्यं मंत्रतंत्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥४७॥ स एष भगवान् साक्षाद्विष्णुर्योगेश्वरेश्वरः ॥ जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे ॥४८॥ अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः ॥ भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ ॥४९॥ नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे ॥ यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ॥५०॥ स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् ॥ अविज्ञातानुभावानां क्षंतुमर्हत्यतिक्रमम् ॥५१॥ इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः ॥ दिदृक्षवोऽप्यच्युतयोः कंसाद्भीता न चाचलन् ॥५२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे यज्ञपत्न्युद्धरणं नाम त्रयोविंशोऽध्यायः ॥२३॥ ॥ श्रीशुक उवाच ॥ भगवानपि तत्रैव बलदेवेन संयुतः ॥ अपश्यन्निवसन्गोपानिंद्रयागकृतोद्यमान् ॥१॥ ॥ ॥ ॥

॥४७॥ स एष भगवान् यदुषु जात इति श्रुत्वाऽपि वयं तदनुसंधानं न धारयामः ॥४८॥ अहो वयं धन्याः । येषां नस्तादृशीः स्त्रियः । यासां भक्त्या नो मतिर्हरौ निश्चला जाता ॥४९॥ तस्मै भगवते कृष्णाय नमः । यन्मायामोहिता वयं कर्ममार्गेषु भ्रमामः ॥५०॥ स कृष्णः स्वमायामोहितात्मनामस्माकमपराधं क्षंतुमर्हति ॥५१॥ एवं स्वापराधमनुस्मृत्य कंसाद्भीतास्ते द्विजास्तयोर्दर्शनाय न जग्मुः ॥५२॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे त्रयोविंशोऽध्यायः ॥२३॥ ॥ चतुर्विंशे महेंद्रस्य मखं व्यावर्त्य हेतुभिः । कृष्णः प्रवर्तयामास गोवर्धनमखोत्सवम् ॥१॥ श्रीशुक उवाच ॥ रामेण सह कृष्णोऽपि गोकुले निवसन्नेकदेंद्रस्य यज्ञे कृतोद्योगान् गोपान् ददर्श ॥१॥ ॥ ॥

तत्सर्वं ज्ञात्वाऽपि कृष्ण इंद्रस्य गर्वनिरासाभिप्रायेण नम्रतया नंदादीन् प्रपच्छ ॥२॥ हे पितः, कोऽयं संभ्रमो वः प्राप्तः । मखोऽयमिति चेदस्य किं फलं का देवता केनाधिकारिणा केन साधनेन साध्यते ॥३॥ एतन्मह्यं ब्रूहि । स्वपरदृष्टिशून्यानां मित्रोदासीनशत्रुरहितानां भवादृशां साधूनां गोप्यं कृत्यं किमपि नास्ति ॥४॥५॥ किंच । अयं जनो ज्ञात्वाऽज्ञात्वा च कर्माणि करोति । तत्र यथा विदुषः कर्मफलं स्यात्तथाऽविदुषो न भवेत् ॥६॥ तत्रायं कर्मयोगो भवतां किं शास्त्रविचारेण प्रवृत्तो लोकाचारप्राप्तो वा तत्कथ्यताम् ॥७॥ नंद उवाच । पर्जन्याधिपतिर्भगवानिंद्रोऽस्ति । मेघास्तु तस्यैव प्रियमूर्तयः । ते मेघा भूतानां जीवनं जलं वर्षंति ॥८॥ तमिंद्रं वयं वैश्या अन्ये च विप्रादयस्तत्कृतवृ-

तदभिज्ञोऽपि भगवान्सर्वात्मा सर्वदर्शनः ॥ प्रश्रयावनतोऽपृच्छद्वृद्धान्नंदपुरोगमान् ॥२॥ कथ्यतां मे पितः कोऽयं संभ्रमो व उपागतः ॥ किं फलं कस्य चोद्देशः केन वा साध्यते मखः ॥३॥ एतद् ब्रूहि महान्कामो मह्यं शुश्रूषवे पितः ॥ नहि गोप्यं हि साधूनां कृत्यं सर्वात्मनामिह ॥४॥ अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषाम् ॥ उदासीनोऽरिवद्वर्ज्य आत्मवत्सुहृदुच्यते ॥५॥ ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति ॥ विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत् ॥६॥ तत्र तावत्क्रियायोगो भवतां किं विचारतः ॥ अथवा लौकिकस्तन्मे पृच्छतः साधु भण्यताम् ॥७॥ नंद उवाच ॥ पर्जन्यो भगवानिंद्रो मेघास्तस्यात्ममूर्तयः ॥ तेऽभिवर्षंति भूतानां प्रीणनं जीवनं पयः ॥८॥ तं तात वयमन्ये च वार्मुचां पतिमीश्वरम् ॥ द्रव्यैस्तद्रेतसा सिद्धैर्यजंते क्रतुभिर्नराः ॥९॥ तच्छेषेणोपजीवंति त्रिवर्गफलहेतवे ॥ पुंसां पुरुषकाराणां पर्जन्यः फलभावनः ॥१०॥ य एवं विसृजेद्धर्मं पारंपर्यागतं नरः ॥ कामाल्लोभाद्भयाद्द्वेषात्स वै नाप्नोति शोभनम् ॥११॥ श्रीशुक उवाच ॥ वचो निशम्य नंदस्य तथाऽन्येषां व्रजौकसाम् ॥ इंद्राय मन्युं जनयन्पितरं प्राह केशवः ॥१२॥ श्रीभगवानुवाच ॥ कर्मणा जायते जंतुः कर्मणैव विलीयते ॥ सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥१३॥ अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम् ॥ कर्तारं भजते सोऽपि नह्यकर्तुः प्रभुर्हि सः ॥१४॥ किमिंद्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम् ॥ अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम् ॥१५॥ ॥ ॥

ष्टिजलेन सिद्धैर्द्रव्यैः क्रतुभिर्यजंते ॥९॥ ततश्च होमशेषेणान्नादिना धर्मार्थकामसिद्ध्यर्थं जीविकां कल्पयंति । अतः पर्जन्यद्वारेंद्र एव लोकानां फलसाधकः ॥१०॥ एवं परंपराप्राप्तं धर्मं यः कामलोभद्वेषादिना त्यजेत् । स शुभं नाप्नोति ॥११॥ श्रीशुक उवाच ॥ एवं नंदस्य गोपानां च वचः श्रुत्वेंद्राय क्रोधं जनयन् कृष्णो नंदमाह ॥१२॥ श्रीभगवानुवाच ॥ हे पितः अयं जीवो जन्मांतरकृतेन कर्मणा जायते म्रियते च । तथा सुःखं दुखं भयं कल्याणं च कर्मणैव प्राप्नोति ॥१३॥ यदि च जीवानां कर्मफलदाता कश्चिदीश्वरः स्यात्तर्हि सोऽपि कर्तारं भजते ॥१४॥ अतः कर्मत एव फलप्राप्तिर्भवति । तस्मात्स्वस्वकर्मानुवर्तिनां भूतानां प्राक्तनं यत् कर्म तदन्यथा कर्तुमसमर्थेनेंद्रेण किं न किंचित् ॥१५॥

१ यो यत्कर्म करोति तस्यैव पुंसस्तस्य कर्मणः फलदाता नान्यस्य कर्माकर्तुः । अतः स कर्मपरतंत्रो देवोऽजागलस्तनतुल्य इत्यर्थः ।

किंच । अयं जनः कर्मप्राप्तस्वभावाधीनः सन् स्वभावमेवानुसरति । अत इदं सर्वं जगत्स्वभावे एव स्थितमस्ति ॥१६॥ एतावता जीवः कर्मणोच्चनीचान् देहान् प्राप्नोति त्यजति च । तथा शत्रुमित्रोदासीनाः कर्मणैवोत्पद्यंते । अतः कर्मैव गुरुरीश्वरः ॥१७॥ तस्माज्जनः स्वभावस्थः सन् कर्मैव पूजयेत् । तदेवास्य दैवतम् ॥१८॥ किंच । जीविकासाधनहेतुभूतमेकं देवं त्यक्त्वा योऽन्यं देवं सेवते स तस्माद्देवात्कल्याणं न प्राप्नोति । दुष्टा स्त्री जारं सेवित्वा यथा तस्मात्कल्याणं न प्राप्नोति तद्वत् ॥१९॥ स्ववृत्तिं वक्तुं वर्णानां वृत्तिभेदमाह । विप्रो वेदाध्ययनादिना वर्तेत । राजा भुवो रक्षया, वैश्यः कृषिवाणिज्यादिना शूद्रश्च द्विजसेवया वर्तेत ॥२०॥ तत्र वैश्यवृत्तिश्चतुर्धा–कृषिः वाणिज्यं गोरक्षणं वृद्धिजीवनं चेति । तत्र वयं गोपाः सदैव गोरक्षणवृत्तयः ॥२१॥ किंच । सत्वरजस्तमोगुणा जगतः पालनोत्पत्तिनाशहेतवः संति । तत्र रजसा जगदुत्पद्यते ॥२२॥ तथा रजसा प्रेरिता

स्वभावतंत्रो हि जनः स्वभावमनुवर्तते ॥ स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥१६॥ देहानुच्चावचान् जंतुः प्राप्योत्सृजति कर्मणा ॥ शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ॥१७॥ तस्मात्संपूजयेत्कर्म स्वभावस्थः स्वकर्मकृत् ॥ अंजसा येन वर्तेत तदेवास्य हि दैवतम् ॥१८॥ आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति ॥ न तस्माद्विंदते क्षेमं जारं नार्यसती यथा ॥१९॥ वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः ॥ वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया ॥२०॥ कृषिवाणिज्यगोरक्षा कुसीदं तुर्यमुच्यते ॥ वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥२१॥ सत्वं रजस्तम इति स्थित्युत्पत्त्यंतहेतवः ॥ रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् ॥२२॥ रजसा चोदिता मेघा वर्षंत्यंबूनि सर्वतः ॥ प्रजास्तैरेव सिद्ध्यंति महेंद्रः किं करिष्यति ॥२३॥ न नः पुरो जनपदा न ग्रामा न गृहा वयम् ॥ नित्यं वनौकसस्तात वनशैलनिवासिनः ॥२४॥ तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः ॥ य इंद्रयागसंभारास्तैरयं साध्यतां मखः ॥२५॥ पच्यंतां विविधाः पाकाः सूपांताः पायसादयः ॥ संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥२६॥ हूयंतामग्नयः सम्यक् ब्राह्मणैर्ब्रह्मवादिभिः ॥ अन्नं बहुविधं तेभ्यो देयं वो धेनुदक्षिणाः ॥२७॥ अन्येभ्यश्चाश्वचांडालपतितेभ्यो यथार्हतः ॥ यवसं च गवां दत्वा गिरये दीयतां बलिः ॥२८॥ स्वलंकृता भुक्तवंतः स्वनुलिप्ताः सुवाससः ॥ प्रदक्षिणं च कुरुत गोविप्रानलपर्वतान् ॥२९॥ ॥ ॥ ॥ ॥

मेघा जलं समुद्रशिलादिष्वपि वर्षंति । तैर्मेघैरेव प्रजा जीवंति तत्रेंद्रः किं करिष्यति ॥२३॥ तथा हे नंद, अस्माकं नगराणि देशा ग्रामाश्च न संति । वयं नित्यं वनपर्वतवासिनः ॥२४॥ तस्माद्गवां ब्राह्मणानां पर्वतस्य च यज्ञ इंद्रयज्ञार्थं संपादितैः साहित्यैरेव क्रियताम् ॥२५॥ तत्र विविधाः पायसादयः मुद्गसूपांताः पाकाः पच्यंताम् । तथा संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥२६॥ तथा विप्रैरग्नयो हूयंताम् । तेभ्यो युष्माभिरन्नं धेनुसहिता दक्षिणाश्च देयाः ॥२७॥ तथाऽन्येभ्यः श्वचांडालपतितेभ्योऽप्यन्नं देयम् । तथा गवां तृणं दत्वा पर्वताय बलिर्दीयताम् ॥२८॥ तथा यूयं सुवाससः स्वलंकृता भुक्तवंतः संतो गोविप्राग्निपर्वतान् प्रदक्षिणं कुरुत ॥२९॥ ॥ ॥

हे नंद, एतन्मम मतं यदि रोचते तर्हि क्रियताम् । अयं गोब्राह्मणपर्वतानां यज्ञः सर्वेषां मम च प्रियोऽस्ति ॥३०॥ श्रीशुक उवाच । एवमिंद्रगर्वं दूरीकुर्वता कृष्णेनोक्तं श्रुत्वा नंदाद्यास्तद्वचोऽगृह्णन् ॥३१॥ तथा च कृष्णेनोक्तं सर्वं चक्रुः । तच्च । विप्रैः स्वस्तिवाचनं वाचयित्वा इंद्रयज्ञद्रव्येण पर्वताय बलिं ब्राह्मणभोजनं च कृत्वा ॥३२॥ अन्येभ्योऽन्नं गोभ्यश्च तृणं दत्वा गोधनानि पुरस्कृत्य शकटेष्वारुह्य स्वलंकृता नंदाद्याः कृष्णवीर्याणि गायंत्यो गोप्यश्च गिरिं प्रदक्षिणं चक्रुः ॥३३॥३४॥ तदा कृष्णो गोपविश्वासार्थं पर्वतमस्तकेऽन्यन्महद्रूपं धृत्वाऽहं पर्वतोऽस्मीति ब्रुवन् बलिमभक्षयत् ॥३५॥ किंच । स कृष्णो व्रजजनैः सहात्मनाऽऽत्मने तस्मै नमस्कृत्वाऽऽह । अहो हे जनाः, पश्यत । असौ रूपवान् पर्वतोऽस्माकमनुग्रहं कृतवान् ॥३६॥ अयं पर्वतः सर्पाद्यनेकरूपाणि धृत्वा स्वावज्ञां कुर्वतो मर्त्यान् हंति । अतो गवां स्वस्य च सुखार्थमस्मै नमस्यामः ॥३७॥ हे नृप, एवं पर्वत-

एतन्मम मतं तात क्रियतां यदि रोचते ॥ अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मखः ॥३०॥ श्रीशुक उवाच ॥ कालात्मना भगवता शक्रदर्पं जिघांसता ॥ प्रोक्तं निशम्य नंदाद्याः साध्वगृह्णंत तद्वचः ॥३१॥ तथा च व्यदधुः सर्वं यथाऽऽहमधुसूदनः ॥ वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान् ॥३२॥ उपहृत्य बलीन्सर्वानादृता यवसं गवाम् ॥ गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥३३॥ अनांस्यनडुद्युक्तानि ते चारुह्य स्वलंकृताः ॥ गोप्यश्च कृष्णवीर्याणि गायंत्यः सद्विजाशिषः ॥३४॥ कृष्णस्त्वन्यतमं रूपं गोपविश्रंभणं गतः ॥ शैलोऽस्मीति ब्रुवन्भूरि बलिमादद्बृहद्वपुः ॥३५॥ तस्मै नमो व्रजजनैः स चक्रे आत्मनाऽऽत्मने ॥ अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात् ॥३६॥ एषोऽवजानतो मर्त्यान्कामरूपी वनौकसः ॥ हंति ह्यस्मै नमस्यामः शर्मणे आत्मनो गवाम् ॥३७॥ इत्यद्रिगोद्विजमखं वासुदेवप्रणोदिताः ॥ यथा विधाय ते गोपाः सहकृष्णा व्रजं ययुः ॥३८॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे चतुर्विंशतितमोऽध्यायः ॥२४॥ ॥ श्रीशुक उवाच ॥ इंद्रस्तदात्मनः पूजां विज्ञाय विहतां नृप ॥ गोपेभ्यः कृष्णनाथेभ्यो नंदादिभ्यश्चुकोप सः ॥१॥ गणं सांवर्तकं नाम मेघानां चांतकारिणाम् ॥ इंद्रः प्राचोदयत्क्रुद्धो वाक्यं चाहेशमान्युत ॥२॥ अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् ॥ कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम् ॥३॥ यथाऽदृढैः कर्ममयैः क्रतुभिर्नामनौनिभैः ॥ विद्यामान्वीक्षिकीं हित्वा तितीर्षंति भवार्णवम् ॥४॥ ॥

गोब्राह्मणयज्ञं कृत्वा सहकृष्णा गोपा व्रजं ययुः ॥३८॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे चतुर्विंशोऽध्यायः ॥२४॥ एकविंशे रुषा शक्रे व्रजनाशाय वर्षति । उद्धृत्य गिरिमासारादरक्षद्गोकुलं प्रभुः ॥१॥ श्रीशुक उवाच॥ इंद्र आत्मनः पूजां गोपैर्विहतां ज्ञात्वा कृष्णनाथेभ्यस्तेभ्यो नंदादिगोपेभ्यश्चुकोप ॥१॥ तत इंद्रः प्रलयकर्तारं मेघानां गणं गोकुलनाशार्थं प्रेषयामास । अहमेवेश्वर इत्यभिमानेन वाक्यं चाह ॥२॥ अहो गोपानां श्रीमदमाहात्म्यं पश्यत । ये गोपाः कृष्णं मनुष्यमाश्रित्य मे देवस्यापमानं चक्रुः ॥३॥ यथा अज्ञाः पुरुषा आत्मज्ञानरूपां विद्यां हित्वा कर्ममयैर्यज्ञैर्भवमसुद्रं तर्तुमिच्छंति ॥४॥ ॥ ॥ ॥ ॥

तथा एते गोपा अज्ञं शिशुं कृष्णमाश्रित्य मेऽपमानं चक्रुः ॥५॥ अतस्तेषां श्रीमदनाशार्थं पशूनां क्षयं कुरुत ॥६॥ अहमपि ऐरावतं गजमारुह्य नंदव्रजं हंतुं मरुद्गणनामकैर्देवैः सहागमिष्यामि ॥७॥ श्रीशुक उवाच ॥ एवमिंद्रेणाज्ञप्ता निर्मुक्तबंधना मेघा हस्तिशुंडासदृशैर्धाराभिर्नंदगोकुलं पीडयामासुः ॥८॥ ततस्ते गर्जंतो विद्युद्भिर्विद्योतमानाः संतो जलोपलान् ववृषुः ॥९॥ एवं मेघेषु स्थूलधारा मुंचत्सु सत्सु जलौघैः प्लाव्यमाना भूर्निम्नमुन्नतं च नादृश्यत ॥१०॥ तदाऽतिवृष्ट्याऽतिवातेन च कंपिताः पशवो गोपा गोप्यश्च शीतपीडिताः संतः कृष्णं शरणं ययुः ॥११॥ तत्र गावः शिरः पुत्रांश्च देहेनाच्छाद्य कृष्णपादमूलं ययुः ॥१२॥ ततो गोपादय आहुः ॥ हे कृष्ण, कृष्ण, हे भक्तवत्सल, इदं त्वन्नाथं

वाचालं बालिशं स्तब्धमज्ञं पंडितमानिनम् ॥ कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम् ॥५॥ एषां श्रियाऽवलिप्तानां कृष्णेनाध्मायितात्मनाम् ॥ धुनुत श्रीमदस्तंभं पशून्नयत संक्षयम् ॥६॥ अहं चैरावतं नागमारुह्यानुव्रजे व्रजम् ॥ मरुद्गणैर्महावीर्यैर्नंदगोष्ठजिघांसया ॥७॥ श्रीशुक उवाच ॥ इत्थं मघवताऽऽज्ञप्ता मेघा निर्मुक्तबंधनाः ॥ नंदगोकुलमासारैः पीडयामासुरोजसा ॥८॥ विद्योतमाना विद्युद्भिः स्तनंतः स्तनयित्नुभिः ॥ तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः ॥९॥ स्थूणास्थूला वर्षधारा मुंचत्स्वभ्रेष्वभीक्ष्णशः ॥ जलौघैः प्लाव्यमाना भूर्नादृश्यत नतोन्नतम् ॥१०॥ अत्यासारातिवातेन पशवो जातवेपनाः ॥ गोपा गोप्यश्च शीतार्ता गोविंदं शरणं ययुः ॥११॥ शिरः सुतांश्च कायेन प्रच्छाद्यासारपीडिताः ॥ वेपमाना भगवतः पादमूलमुपाययुः ॥१२॥ कृष्ण कृष्ण महाभाग त्वन्नाथं गोकुलं प्रभो ॥ त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल ॥१३॥ शिलावर्षनिपातेन हन्यमानमचेतनम् ॥ निरीक्ष्य भगवान्मेने कुपितेंद्रकृतं हरिः ॥१४॥ अपर्त्वत्युल्बणं वर्षमतिवातं शिलामयम् ॥ स्वयागे निहतेऽस्माभिरिंद्रो नाशाय वर्षति ॥१५॥ तत्र प्रतिविधिं सम्यगात्मयोगेन साधये ॥ लोकेशमानिनां मौढ्याद्धरिष्ये श्रीमदं तमः ॥१६॥ नहि सद्भावयुक्तानां सुराणामीशविस्मयः ॥ मत्तोऽसतां मानभंगः प्रशमायोपकल्पते ॥१७॥ तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् ॥ गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः ॥१८॥ इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् ॥ दधार लीलया कृष्णश्छत्राकमिव बालकः ॥१९॥

गोकुलं कुपितादिंद्राद्रक्षितुमर्हसि ॥१३॥ ततः शिलावृष्टिपातेन ताडितं गोकुलं दृष्ट्वा हरिस्तत्सर्वमिंद्रकृतं मेने ॥१४॥ कथं मेने तदाह । अस्माभिः स्वयज्ञे नाशिते सतींद्रो व्रजनाशार्थं वर्षति ॥१५॥ तत्र प्रतीकारमहं स्वसामर्थ्येन साधये । तेन चैषां लोकेशमानिनां श्रीमदं हरिष्ये ॥१६॥ यतः सात्विकानां देवानामीशा वयमिति गर्वो न युक्तः । अतो मत्त एषां मानभंगः शांतयेऽवकल्पते ॥१७॥ तस्मान्मच्छरणं व्रजं स्वसामर्थ्येन रक्षिष्यामि । अयं नियमो मया धृतोऽस्ति ॥१८॥ एवमुक्त्वा कृष्ण एकहस्तेन गोवर्धनाचलमुत्कृत्य दधार । बालश्छत्राकमिव ॥१९॥

॥ ॥ ॥ ॥ ॥

१ पूर्वं ये प्रलयाभिप्रायेण बद्धा आसन् ते तदा निर्मुक्तबंधनाः कृता इत्यर्थः ।

अथ कृष्ण आह । हे अंब, हे तात, हे गोपाः, यूयं सगोधनाः सर्वे यथासुखं गिरिगर्तं विशत ॥२०॥ मद्धस्ताद्गिरिः पतेदिति शंका न कार्या । वातवर्षभयेभ्यो युष्माकं रक्षणं मया कृतमस्ति ॥२१॥ एवं कृष्णेन विश्वासं प्रापिता गोपादयो भृत्यपुरोहितादिभिः सह गिरिगर्तं विविशुः ॥२२॥ ततस्तैर्व्रजवासिभिः क्षुधातृषयोर्दुःखं हित्वा वीक्ष्यमाणः कृष्णः सप्तदिनपर्यंतं गोवर्धनपर्वतं दधार । स्थानाच्च नाचलत् ॥२३॥ इंद्रः कृष्णस्य तद्योगसामर्थ्यं दृष्ट्वा विस्मितो भ्रष्टसंकल्पः सन् स्वान् मेघान् न्यवारयत् ॥२४॥ ततः कृष्ण आकाशं निरभ्रं वातसहितां वृष्टिं च शांतां दृष्ट्वा गोपानाह ॥२५॥ हे गोपाः, सस्त्रीधनार्भका यूयमिदानीं बहिर्निर्यात । त्रासं त्यजत । वातवर्षं शांतम् । नद्यश्च स्वल्पजला जाताः ॥२६॥ ततो गोपा

अथाह भगवान्गोपान्हेंऽब तात व्रजौकसः ॥ यथोपजोषं विशत गिरिगर्तं सगोधनाः ॥२०॥ न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातने ॥ वातवर्षभयेनालं तत्त्राणं विहितं हि वः ॥२१॥ तथा निर्विविशुर्गर्तं कृष्णाश्वासितमानसाः ॥ यथावकाशं सधनाः सव्रजाः सोपजीविनः ॥२२॥ क्षुत्तृड्व्यथां सुखापेक्षां हित्वा तैर्व्रजवासिभिः ॥ वीक्ष्यमाणो दधावद्रिं सप्ताहं नाचलत्पदात् ॥२३॥ कृष्णयोगानुभावं तं निशाम्येंद्रोऽतिविस्मितः ॥ निस्तंभो भ्रष्टसंकल्पः स्वान्मेघान्संन्यवारयत् ॥२४॥ खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम् ॥ निशाम्योपरतं गोपान्गोवर्धनधरोऽब्रवीत् ॥२५॥ निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः ॥ उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः ॥२६॥ ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनम् ॥ शकटोढोपकरणं स्त्रीबालस्थविराः शनैः ॥२७॥ भगवानपि तं शैलं स्वस्थाने पूर्ववत्प्रभुः ॥ पश्यतां सर्वभूतानां स्थापयामास लीलया ॥२८॥ तं प्रेमवेगान्निभृता व्रजौकसो यथा समीयुः परिरंभणादिभिः ॥ गोप्यश्च सस्नेहमपूजयन्मुदा दध्यक्षताद्भिर्युयुजुः सदाशिषः ॥२९॥ यशोदा रोहिणी नंदो रामश्च बलिनां वरः ॥ कृष्णमालिंग्य युयुजुराशिषः स्नेहकातराः ॥३०॥ दिवि देवगणाः साध्याः सिद्धगंधर्वचारणाः ॥ तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि पार्थिव ॥३१॥ शंखदुंदुभयो नेदुर्दिवि देवप्रणोदिताः ॥ जगुर्गंधर्वपतयस्तुंबुरुप्रमुखा नृप ॥३२॥ ततोऽनुरक्तैः पशुपैः परिश्रितो राजन्स गोष्ठं सबलोऽव्रजद्धरिः ॥ तथाविधान्यस्य कृतानि गोपिका गायंत्य ईयुर्मुदिता हृदिस्पृशः ॥३३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे पंचविंशोऽध्यायः ॥२५॥ ॥ ॥ ॥

गोधनं शकटारोपितपरिच्छदं च गृहीत्वा बहिर्निर्ययुः ॥२७॥ ततः कृष्णः सर्वेषां पश्यतां सतां पूर्ववत् स्वस्थाने गोवर्धनं स्थापयामास ॥२८॥ ततः प्रेमवेगेन पूर्णा गोपाः कृष्णमालिंगनादिभिरुपजग्मुः । गोप्यश्च स्नेहेन दध्यक्षताद्भिः कृष्णमपूजयन् श्रेष्ठाशीर्वादांश्च ददुः ॥२९॥ ततो यशोदा रोहिणी नंदो रामश्च कृष्णमालिंग्याशीर्वादं ददुः ॥३०॥ तदा स्वर्गे देवसाध्यसिद्धगंधर्वचारणास्तुष्टुवुः पुष्पवृष्टिं च चक्रुः ॥३१॥ तदा देववादिता दुंदुभयो नेदुः । गंधर्वा जगुः ॥३२॥ ततो गोपैर्वेष्टितः सरामः कृष्णो व्रजं विवेश । तमनु गोपिका गोवर्धनोद्धरणादीनि कृष्णस्य चरित्रानि गायंत्यो ययुः ॥३३॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे पंचविंशोऽध्यायः ॥२५॥ ॥ ॥

षड्विंशे विस्मितान् गोपान् कृष्णस्याद्भुतकर्मभिः । नंदो गर्गोक्तिमाश्राव्य तदैश्वर्यमवर्णयत् ॥१॥ श्रीशुक उवाच ॥ गोपाः कृष्णस्यैवंविधानि कर्माणि वीक्ष्य विस्मिताः संतो नंद-मभिगम्योचुः ॥१॥ हे नंद, अस्य कर्माण्यद्भुतानि संति । अतोऽसौ ग्राम्येषु गोपालेषु स्वस्यायोग्यं जन्म कथमर्हति ॥२॥ यः सप्तवर्षात्मको वाल एकेन हस्तेन कथं गिरिं धृत्वा स्थितः । गजराट् पद्ममिव ॥३॥ तथा मीलिताक्षेण वालेन पूतनायाः स्तनः प्राणैः सह कथं पीतः ॥४॥ किंच । शकटस्याधः शयानस्य त्रिमासिकवयस ऊर्ध्वं चरणौ चालयतः पादाग्रेण हतं शकटं कथं विपर्यस्तं पतितम् ॥५॥ हे नंद, एकवर्षस्तव पुत्रस्तृणावर्तेन दैत्येनाकाशमार्गेण नीतः सन् तमेव कथं जघान ॥६॥ क्वचिन्नवनीतचौर्ये यशोदयोलूखले

श्रीशुक उवाच ॥ एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते ॥ अतद्वीर्यविदः प्रोचुः समभ्येत्य सुविस्मिताः ॥१॥ वालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै ॥ कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ॥२॥ यः सप्तहायनो वालः करेणैकेन लीलया ॥ कथं विभ्रद्गिरिवरं पुष्करं गजराडिव ॥३॥ तोकेनामीलिताक्षेण पूतनाया महौजसः ॥ पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः ॥४॥ हिन्वतोऽधः शयानस्य मास्यस्य चरणावुदक् ॥ अनोऽपतद्विपर्यस्तं रुदतः प्रपदा हतम् ॥५॥ एकहायन आसीनो ह्रियमाणो विहायसा ॥ दैत्येन यस्तृणावर्तमहन्कंठग्रहातुरम् ॥६॥ क्वचिद्धैयंगवस्तैन्ये मात्रा बद्ध उलूखले ॥ गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ॥७॥ वने संचारयन्वत्सान्सरामो वाल-कैर्वृतः ॥ हंतुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥८॥ वत्सेषु वत्सरूपेण प्रविशंतं जिघांसया ॥ हत्वा न्यपातयत्तेन कपित्थानि च लीलया ॥९॥ हत्वा रासभदैतेयं तद्बंधूंश्च बलान्वितः ॥ चक्रे तालवनं क्षेमं परिपक्वफलान्वितम् ॥१०॥ प्रलंबं घातयित्वोग्रं बलेन बलशालिना ॥ अमोचयद्व्रजपशून्गोपांश्चारण्यवह्नितः ॥११॥ आशीविषतमाहींद्रं दमित्वा विमदं ह्रदात् ॥ प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम् ॥१२॥ दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौकसाम् ॥ नंद ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम् ॥१३॥ क्व सप्तहायनो वालः क्व महाद्रिविधा-रणम् ॥ ततो नो जायते शंका व्रजनाथ तवात्मजे ॥१४॥ ॥ ॥ ॥

बद्धः सन् बाहुभ्यां रिंगन् यमलार्जुनयोर्मध्ये गत्वा तौ कथं पातयामास ॥७॥ एकदा वने रामगोपैर्युक्तः कृष्णो वत्सान् चारयन् तावत्प्राप्तं बकं बाहुभ्यां मुखतः कथमपाटयत् ॥८॥ तथा च वत्समध्ये प्राप्तं वत्सरूपिणं दैत्यं हत्वा कपित्थवृक्षे क्षिप्त्वा तेन कपित्थानि पातयामास ॥९॥ ततो बलरामयुक्तो धेनुकासुरं तद्बंधूंश्च हत्वा तालवनं निर्भयं चक्रे ॥१०॥ ततः प्रलंबं बलरामेण घातयित्वा दावाग्नेर्गा गोपांश्च मोचयामास ॥११॥ ततोऽतिविषं कालियं दमित्वा ह्रदान्निष्कास्य यमुनां निर्विषजलां चक्रे॥१२॥ हे नंद, तव पुत्रे सर्वेषामस्माकं दुस्त्यजा प्रीतिः । तथाऽस्मासु तस्यापि स्वाभाविका प्रीतिः कथमस्ति ॥१३॥ अहो अयं सप्तवर्षात्मको बालः क्व महापर्वतधारणं च क्व ॥१४॥ ॥ ॥

नंद उवाच ॥ हे गोपाः, एनं पुत्रमुद्दिश्य गर्गो मे यदाह तद्वचः श्रूयताम् । तेन वः शंका गच्छतु ॥१५॥ तदाह । प्रतियुगं तनूर्गृह्णतोऽस्य श्वेतो रक्तः पीतश्चेति त्रयो वर्णा आसन् । इदानीं कृष्णत्वं प्राप्तः ॥१६॥ किंच । अयं तव पुत्रः पूर्वं क्वचिद्वसुदेवस्य पुत्रो जातः । अतस्तज्जानंतो जना एनं वासुदेवमिति वदंति ॥१७॥ अस्य गुणकर्मयोग्यानि नामानि रूपाणि च बहूनि संति तान्यहं वेद जना न विदुः ॥१८॥ एष वः कल्याणं करिष्यति । अनेन सर्वसंकटानि यूयमनायासेन तरिष्यथ ॥१९॥ पुरा अराजके जाते सति चोरपीडिताः साधवोऽनेन रक्षिताः संतश्चोरान् जिग्युः ॥२०॥ अस्मिन् कृष्णे ये प्रीतिं कुर्वंति तेषां शत्रवः पराभवं न कुर्वंति ॥२१॥ तस्मात् हे नंद, तव पुत्रो गुणैः श्रिया कीर्त्यादिना च

नंद उवाच ॥ श्रूयतां मे वचो गोपा व्येतु शंका च वोऽर्भके ॥ एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ॥१५॥ वर्णास्त्रयः किलास्यासन्गृह्णतोऽनुयुगं तनूः ॥ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥१६॥ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ॥ वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥१७॥ बहूनि संति नामानि रूपाणि च सुतस्य ते ॥ गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥१८॥ एष वः श्रेय आधास्यद्गोपगोकुलनंदनः ॥ अनेन सर्वदुर्गाणि यूयमंजस्तरिष्यथ ॥१९॥ पुराऽनेन व्रजपते साधवो दस्युपीडिताः ॥ अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ॥२०॥ य एतस्मिन्महाभागाः प्रीतिं कुर्वंति मानवाः ॥ नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः ॥२१॥ तस्मान्नंद कुमारोऽयं नारायणसमो गुणैः ॥ श्रिया कीर्त्याऽनुभावेन तत्कर्मसु न विस्मयः ॥ २२ ॥ इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते ॥ मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम् ॥ २३ ॥ इति नंदवचः श्रुत्वा गर्गगीतं व्रजौकसः ॥ ( दृष्टश्रुतानुभावास्ते कृष्णस्यामिततेजसः ) ॥ मुदिता नंदमानर्चुः कृष्णं च गतविस्मयाः ॥ २४ ॥ देवे वर्षति यज्ञविप्लवरुषा वज्राश्मपर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वाऽनुकंप्युत्स्मयन् ॥ उत्पाट्यैककरेण शैलमबलो लीलोच्छिलींध्रं यथा बिभ्रद्गोष्ठमपान्महेंद्रमदभित्प्रीयान्न इंद्रो गवाम् ॥ २५ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे षड्विंशतितमोऽध्यायः ॥२६॥ ॥ ॥ ॥ ॥

नारायणसमः । अतो हे गोपाः, अस्य कृष्णस्य कर्मसु आश्चर्यं नहि ॥२२॥ एवं कथयित्वा गर्गे स्वगृहं गते सति अहमिमं कृष्णं नारायणांशं मन्ये ॥२३॥ एवं गर्गगीतं नंदवचः श्रुत्वा ( कृष्णस्य दृष्टश्रुतसामर्थ्यास्ते ) गोपा गतविस्मयाः संतः कृष्णं नंदं चानर्चुः ॥२४॥ एवमुक्त्वा श्रीशुको भगवतः प्रीतिं प्रार्थयते। स्व-यज्ञ-नाश-क्रोधेनेंद्रे वर्षति सति दुःखितं गोगोपालस्त्रीसहितं गोकुलं दृष्ट्वा दययैककरेण गोवर्धनमुत्पाट्य बालश्छत्राकमिव तं धृत्वा यो व्रजं ररक्ष स इंद्रमदनाशको गवां स्वामी श्रीकृष्णो नः प्रीयताम् ॥२५॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे षड्विंशोऽध्यायः ॥२६॥ ॥ ॥ ॥ ॥

सप्तविंशे तदालक्ष्य कृष्णस्य प्रभवं परम् । वर्ण्यते सुरभींद्राभ्यामभिषेकमहोत्सवः ॥१॥ श्रीशुक उवाच ॥ हे नृप, श्रीकृष्णेन गोवर्धनाचलं धृत्वा गोकुले रक्षिते सति स्वर्गादिंद्रो गोलोकात्सुरभिश्च कृष्णं प्रत्याजग्मतुः ॥१॥ तत इंद्रो लज्जितः सन्नेकांते कृष्णं प्राप्य तत्पादयोः शिरसा नत्वा ॥२॥ नष्टत्रिलोकेशमदः कृतांजलिः सन् कृष्णं जगाद ॥३॥ इंद्र उवाच ॥ हे कृष्ण, तव स्वरूपं शुद्धसत्वात्मकं रजोगुणतमोगुणरहितं शांतमस्ति । अतो हे सर्वज्ञ, तवायं संसारो नास्ति ॥४॥ तदाऽज्ञानकृता लोभादयः कुतः स्युः । तथाऽपि त्वं धर्मरक्षणाय खलनिग्रहाय च तेषां मानभंगादिरूपं दंडं बिभर्षि ॥५॥ हे ईश, त्वं जगतः पिता गुरुः कालश्चासि । अतो जगदीशमानिनामस्माकं मानं विधुन्वन् लीलावतारै-

॥ श्रीशुक उवाच ॥ गोवर्धने धृते शैल आसाराद्रक्षिते व्रजे ॥ गोलोकादाव्रजत्कृष्णं सुरभिः शक्र एव च ॥१॥ विविक्त उपसंगम्य व्रीडितः कृतहेलनः ॥ पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा ॥२॥ दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः ॥ नष्टत्रिलोकेशमद इंद्र आह कृतांजलिः ॥३॥ इंद्र उवाच ॥ विशुद्धसत्वं तव धाम शांतं तपोमयं ध्वस्तरजस्तमस्कम् ॥ मायामयोऽयं गुणसंप्रवाहो न विद्यते तेऽग्रहणानुबंधः ॥४॥ कुतो नु तद्धेतव ईश तत्कृता लोभादयो येऽबुधलिंगभावाः ॥ तथापि दंडं भगवान्बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥५॥ पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदंडः ॥ हिताय स्वेच्छातनुभिः समीहसे मानं विधुन्वन् जगदीशमानिनाम् ॥६॥ ये मद्विधाऽज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तन्मदम् ॥ हित्वाऽऽर्यमार्गं प्रभजंत्यपस्मया ईहा खलानामपि तेऽनुशासनम् ॥७॥ स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेऽविदुषः प्रभावम् ॥ क्षंतुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती ॥८॥ तवावतारोऽयमधोक्षजेह स्वयंभराणामुरुभारजन्मनाम् ॥ चमूपतीनामभवाय देव भवाय युष्मच्चरणानुवर्तिनाम् ॥९॥ नमस्तुभ्यं भगवते पुरुषाय महात्मने ॥ वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥१०॥ स्वच्छंदोपात्तदेहाय विशुद्धज्ञानमूर्तये ॥ सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥११॥ मयेदं भगवन्गोष्ठनाशायासारवायुभिः ॥ चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥१२॥ ॥ ॥ ॥

र्लीलां करोषि ॥६॥ हे हरे, ये मत्सदृशा अज्ञास्ते भयकालेऽप्यभयं त्वां दृष्ट्वा मदं हित्वा त्वद्भक्तिलक्षणं सन्मार्गं भजंति । अतस्तव लीलैव खलानामपि दंडरूपास्ति ॥७॥ एवंभूतस्त्वमैश्वर्यमदव्याप्तस्य ममापराधं क्षंतुमर्हसि । पुनस्त्वय्येवंभूता बुद्धिर्मे कदापि माभूत् ॥८॥ हे अधोक्षज, अयं तेऽवतारो भूमेर्भारभूतानां खलानां नाशाय त्वच्चरणसेवकानां साधूनामुत्कर्षाय चास्ति । अतस्त्वत्सेवकस्य मेऽपराधः क्षंतव्यः ॥९॥ एवं क्षमापयित्वा नमस्करोति । हे कृष्ण, वासुदेवाय यादवानां पतये तुभ्यं भगवते नमः ॥१०॥ स्वभक्तेच्छया गृहीतदेहाय ज्ञानस्वरूपाय सर्वस्य कारणाय सर्वभूतात्मने ते नमः ॥११॥ हे भगवन्, यज्ञे नष्टे व्रजनाशार्थं मयेदमकृत्यं कृतम् । तत्सहनं कर्तव्यम् ॥१२॥ ॥

किंच । त्वयाऽनुग्रहः कृतः । तेनाहं गर्वरहितो जातोऽस्मि । अत ईश्वरं गुरुं त्वां शरण प्राप्तः ॥१३॥ श्रीशुक उवाच ॥ एवमिंद्रेण स्तुतः कृष्णः प्रहस्य तं जगाद ॥१४॥ श्रीभगवानुवाच ॥ हे इंद्र, देवराज्येन मत्तस्य तवानुग्रहार्थं मया ते यज्ञभंगः कृतः ॥१५॥ किंच । ऐश्वर्यमदांधः पुमान् दंडपाणिं मां न पश्यति । अतो यस्यानुग्रहमिच्छामि तं संपद्भ्यो भ्रंशयामि ॥१६॥ हे इंद्र, तव कल्याणमस्तु । गर्वरहितैर्युष्माभिः स्वाधिकारे यथापूर्वं स्थीयतां मदाज्ञा च क्रियताम् ॥१७॥ अथ कामधेनुर्गोभिः सह गोपरूपिणमीश्वरं कृष्णं नत्वा जगाद ॥१८॥ सुरभिरुवाच ॥ हे कृष्ण, हे विश्वात्मन्, इंद्रेण हतानामप्यस्माकं लोकनाथेन त्वया रक्षणं कृतमस्ति ॥१९॥ हे जगत्पते, त्वं नो दैवतम् । अतो

त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तंभो वृथोद्यमः ॥ ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥१३॥ ॥ श्रीशुक उवाच ॥ एवं संकीर्तितः कृष्णो मघोना भगवानमुम् ॥ मेघगंभीरया वाचा प्रहसन्निदमब्रवीत् ॥१४॥ श्रीभगवानुवाच ॥ मया तेऽकारि मघवन्मखभंगोऽनुगृह्णता ॥ मदनुस्मृतये नित्यं मत्तस्येंद्रश्रिया भृशम् ॥१५॥ मामैश्वर्यश्रीमदांधो दंडपाणिं न पश्यति ॥ तं भ्रंशयामि संपद्भ्यो यस्य चेच्छाम्यनुग्रहम् ॥१६॥ गम्यतां शक्र भद्रं वः क्रियतां मेऽनुशासनम् ॥ स्थीयतां स्वाधिकारेषु युक्तैर्वः स्तंभवर्जितैः ॥१७॥ अथाह सुरभिः कृष्णमभिवंद्य मनस्विनी ॥ स्वसंतानैरुपामंत्र्य गोपरूपिणमीश्वरम् ॥१८॥ सुरभिरुवाच ॥ कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वसंभव ॥ भवता लोकनाथेन सनाथा वयमच्युत ॥१९॥ त्वं नः परमकं दैवं त्वं न इंद्रो जगत्पते ॥ भवाय भव गोविप्रदेवानां ये च साधवः ॥२०॥ इंद्रं नस्त्वाभिषेक्ष्यामो ब्रह्मणा नोदिता वयम् ॥ अवतीर्णोऽसि विश्वात्मन्भूमेर्भारापनुत्तये ॥२१॥ श्रीशुक उवाच ॥ एवं कृष्णमुपामंत्र्य सुरभिः पयसाऽऽत्मनः ॥ जलैराकाशगंगाया ऐरावतकरोद्धृतैः ॥२२॥ इंद्रः सुरर्षिभिः साकं नोदितो देवमातृभिः ॥ अभ्यषिंचत दाशार्हं गोविंद इति चाभ्यधात् ॥२३॥ ( अहमिंद्रो हि देवानां त्वं गवामिंद्रतां गतः ॥ गोविंद इति लोके त्वां गास्यंति भुवि मानवाः ॥१॥ ) तत्रागतास्तुंबुरुनारदादयो गंधर्वविद्याधरसिद्धचारणाः ॥ जगुर्यशो लोकमलापहं हरेः सुरांगनाः संननृतुर्मुदान्विताः ॥२४॥ तं तुष्टुवुर्देवनिकायकेतवो ह्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः ॥ लोकाः परां निर्वृतिमाप्नुवंस्त्रयो गावस्तदा गामनयन्पयोद्रुताम् ॥२५॥ ॥ ॥ ॥ ॥

गोविप्रसाधूनामभ्युदयार्थमद्य त्वमेवास्माकमिंद्रो भव ॥२०॥ किंच । ब्रह्मणा प्रेरिता वयं त्वामेवास्माकमिंद्रत्वेऽभिषेक्ष्यामः ॥२१॥ श्रीशुक उवाच ॥ एवं सुरभिः कृष्णं संप्रार्थ्य स्वदुग्धेन तथेंद्र आकाशगंगाया ऐरावतशुंडोद्धृतैर्जलैः कृष्णमभ्यषिंचत् । ततश्चेंद्रः कृष्णस्य गोविंद इति नाम कृतवान् ॥२२॥२३॥ ( अहं देवानामिंद्रः त्वं च गवामिंद्रत्वं प्राप्तः । अतस्त्वां भुवि मानवा गोविंद इति गास्यंति ॥१॥ ) तदा तत्रागतास्तुंबुरु-नारदादयो गंधर्व-विद्याधर-सिद्ध-चारणाश्च हरेर्यशो जगुः । देवांगना ननृतुः ॥२४॥ तदा देवमुख्याः कृष्णं स्तुत्वा पुष्पवृष्टिं चक्रुः । त्रयो लोकाः सुखं प्रापुः । गावो दुग्धैरार्द्रां भूमिमकुर्वन् ॥२५॥ ॥ ॥ ॥ ॥

किंच । क्षीरादिरसवाहिन्यो नद्य आसन् । वृक्षा मधुस्रवा आसन् । व्रीह्याद्यौषधयः कर्षणं विनैव पक्का अभूवन् । पर्वता बहिः प्रकटान् मणीन् धृतवंतः ॥२६॥ एवं कृष्णेऽभिषिक्ते सति स्वभावेन क्रूराण्यपि सर्पव्याघ्रादिजंतूनि निर्वैराणि जातानि ॥२७॥ हे नृप, एवमिंद्रो गोगोकुलपतिं कृष्णमभिषिच्य तेनानुज्ञातो देवैः सह स्वर्गं ययौ ॥२८॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे सप्तविंशोऽध्यायः ॥२७॥ अष्टाविंशे ततो नंदाऽऽनयनं वरुणालयात् । वैकुंठदर्शनं चाथ गोपीनामनुवर्ण्यते ॥१॥ श्रीशुक उवाच । एकादश्यां निराहारो नंदो जनार्दनमभ्यर्च्य कलामात्रावशिष्टद्वादश्यां दैत्यवेलामज्ञात्वाऽरुणोदयात्पूर्वमेव निशि स्नातुं यमुनाजलं प्रविवेश । तदा वरुणदूतस्तं धृत्वा वरुणसमीपं निनाय ॥१॥२॥ गोकुले नंदमपश्यंतो गोपा हे कृष्ण, हे रामेति चुक्रुशुः । तच्छ्रुत्वा गोपानामभयं दत्वा श्रीकृष्णो वरुणांतिकं ययौ ॥३॥ ततो वरुण आगतं हरिं दृष्ट्वा तद्दर्शनाज्जातानं-

नानारसौघाः सरितो वृक्षा आसन्मधुस्रवाः ॥ अकृष्टपच्यौषधयो गिरयो बिभ्रदुन्मणीन् ॥२६॥ कृष्णेऽभिषिक्त एतानि सत्वानि कुरुनंदन ॥ निर्वैराण्यभवंस्तात क्रूराण्यपि निसर्गतः ॥२७॥ इति गोगोकुलपतिं गोविंदमभिषिच्य सः ॥ अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम् ॥२८॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे सप्तविंशोऽध्यायः ॥२७॥ ॥ श्रीशुक उवाच ॥ एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ॥ स्नातुं नंदस्तु कालिंद्या द्वादश्यां जलमाविशत् ॥१॥ तं गृहीत्वाऽनयद्भृत्यो वरुणस्यासुरोंऽतिकम् ॥ अविज्ञायासुरीं वेलां प्रविष्टमुदकं निशि ॥२॥ चुक्रुशुस्तमपश्यंतः कृष्ण रामेति गोपकाः ॥ भगवांस्तदुपश्रुत्य पितरं वरुणाहृतम् ॥ तदंतिकं गतो राजन्स्वानामभयदो विभुः ॥३॥ प्राप्तं वीक्ष्य हृषीकेशं लोकपालः सपर्यया ॥ महत्या पूजयित्वाऽऽह तद्दर्शनमहोत्सवः ॥४॥ वरुण उवाच ॥ अद्य मे निभृतो देहोऽद्यैवार्थोऽधिगतः प्रभो ॥ त्वत्पादभाजो भगवन्नवापुः पारमध्वनः ॥५॥ नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने ॥ न यत्र श्रूयते माया लोकसृष्टिविकल्पना ॥६॥ अजानता मामकेन मूढेनाकार्यवेदिना ॥ आनीतोऽयं तव पिता तद्भवान्क्षंतुमर्हति ॥७॥ ममाप्यनुग्रहं कृष्ण कर्तुमर्हस्यशेषदृक् ॥ गोविंद नीयतामेष पिता ते पितृवत्सल ॥८॥ श्रीशुक उवाच ॥ एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः ॥ आदायागात्स्वपितरं बंधूनां चावहन्मुदम् ॥९॥ नंदस्त्वतींद्रियं दृष्ट्वा लोकपालमहोदयम् ॥ कृष्णे च संनतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् ॥१०॥

दस्तमर्हणैः संपूज्य जगाद ॥४॥ वरुण उवाच ॥ हे कृष्ण, अद्य मया देहसाफल्यं प्राप्तम् । हे हरे, त्वच्चरणभजनकर्तारो ये जनास्ते मोक्षं प्रापुः ॥५॥ अतस्तुभ्यं निरतिशयैश्वर्याय ब्रह्मणे परमात्मने नमः । यत्र लोकसृष्टिकरी मायाऽविद्यमानेव तिष्ठति ॥६॥ हे कृष्ण अजानता मे दूतेन त्वत्पितुरत्रानयनं कृतं तत्त्वं क्षंतुमर्हसि ॥७॥ हे कृष्ण, सर्वसाक्षी त्वं ममाप्यनुग्रहं कर्तुमर्हसि । हे गोविंद, एष ते पिता नीयताम् ॥८॥ श्रीशुक उवाच ॥ एवं वरुणेन प्रसादितः श्रीकृष्णः स्वपितरं गृहीत्वा स्वानां हर्षं कुर्वन् गोकुलं प्राप्तः ॥९॥ नंदस्त्वदृष्टपूर्वं वरुणस्यैश्वर्यं तथा तेषां लोकपालानां कृष्णे नम्रतां च दृष्ट्वा व्रजमेत्य ज्ञातिभ्यो जगाद ॥१०॥

॥ ॥ ॥

ततो गोपास्तमीश्वरं मत्वाऽयं कृष्णः स्वगतिं ब्रह्माख्यांप्रति नः प्रापयिष्यति किं वैकुंठं च दर्शयिष्यति किमिति संकल्पितवंतः ॥११॥ ततः सर्वज्ञः कृष्णस्तेषां संकल्पसिद्धये चिंतयामास ॥१२॥ अयं जनोऽत्र लोकेऽविद्याकामकर्मभिस्तिर्यगादियोनिषु भ्रमन् स्वीयां गतिं न वेद ॥१३॥ एवं दयालुः कृष्णो विचिंत्य स्वं ब्रह्मस्वरूपं वैकुंठलोकं च गोपानां दर्शयामास ॥१४॥ तत्र प्रथमं देहादिव्यतिरिक्तं ब्रह्मस्वरूपं दर्शयामास । तदाह । सत्यं ज्ञानमनंतं स्वप्रकाशं ब्रह्म दर्शयामास । यज्ज्ञानिनः पश्यंति ॥१५॥ एवं ब्रह्महृदं कृष्णेन नीता मग्नाश्च पुनः कृष्णेनोद्धृताः संतो वैकुंठं ददृशुः । कृष्णे निमित्ते सति यं वैकुंठं पूर्वमक्रूरो दृष्टवान् ॥१६॥ तदा नंदादयो गोपास्तं वैकुंठे वेदैः स्तूयमानं कृष्णं दृष्ट्वा परमानंदेन व्याप्ताः संतो विस्मिता बभूवुः ॥१७॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे अष्टाविंशोऽध्यायः ॥२८॥ ॥ ऊनत्रिंशे तु रासार्थमुक्तिप्रत्युक्तयो हरेः । गोपीभी राससंरंभे

ते त्वौत्सुक्यधियो राजन्मत्वा गोपास्तमीश्वरम् ॥ अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः ॥११॥ इति स्वानां स भगवान्विज्ञायाखिलदृक् स्वयम् ॥ संकल्पसिद्धये तेषां कृपयैतदचिंतयत् ॥१२॥ जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः ॥ उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन् ॥१३॥ इति संचिंत्य भगवान्महाकारुणिको हरिः ॥ दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥१४॥ सत्यं ज्ञानमनंतं यद्ब्रह्म ज्योतिः सनातनम् ॥ यद्धि पश्यंति मुनयो गुणापाये समाहिताः ॥१५॥ ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः ॥ ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात्पुरा ॥१६॥ नंदादयस्तु तं दृष्ट्वा परमानंदनिर्वृताः ॥ कृष्णं च तत्र च्छंदोभिः स्तूयमानं सुविस्मिताः ॥१७॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धेऽष्टाविंशतितमोऽध्यायः ॥२८॥ ॥ श्रीशुक उवाच ॥ भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ॥ वीक्ष्य रंतुं मनश्चक्रे योगमायामुपाश्रितः ॥१॥ तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिंपन्नरुणेन शंतमैः ॥ स चर्षणीनामुदगाच्छुचो मृजन्प्रियः प्रियाया इव दीर्घदर्शनः ॥२॥ दृष्ट्वा कुमुद्वंतमखंडमंडलं रमाननाभं नवकुंकुमारुणम् ॥ वनं च तत्कोमलगोभिरंजितं जगौ कलं वामदृशां मनोहरम् ॥३॥ निशम्य गीतं तदनंगवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः ॥ आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कांतो जवलोलकुंडलाः ॥४॥

तस्य चांतर्धिकौतुकम् ॥१॥ श्रीशुक उवाच ॥ हे नृप, भगवान् शरदृतौ विलसितमल्लिकापुष्पा गोपकन्याभ्यः प्रतिश्रुतास्ता रात्रीः प्राप्ता वीक्ष्य योगमायामाश्रितः सन् क्रीडां कर्तुं मनश्चक्रे ॥१॥ तदा नक्षत्रराजश्चंद्रः श्रीकृष्णप्रीत्यर्थं, यथा, पतिः स्वप्रियाया मुखमरुणेन कुंकुमेन विलिंपति तद्वत् पूर्वदिशाया मुखं सुखकरैः किरणैरुदयरागेणारक्तीकुर्वन् समुदयं प्राप्तः ॥२॥ तदा पूर्णमंडलं तं चंद्रं तथा तस्य कोमलकिरणै रंजितं वनं च दृष्ट्वा कृष्णः स्त्रीणां मनोहरं मधुरमगायत ॥३॥ तत्कामवर्धनं गीतं श्रुत्वा व्रजस्त्रियो मिथः स्वगमनमकथयित्वा स कृष्णो यत्रासीत्तत्र गीतध्वनिमार्गेण ययुः ॥४॥ ॥ ॥ ॥ ॥

१ मुक्तपरांतिस्संवादप्राप्तानत्वाद्गतनिर्देशः । न त्वतस्यैश्वर्ये भगवति किंचिदप्यसंभावितमिति भावः ।

तत्र काश्चिद्दुहंत्यो दोहं हित्वा ययुः । तथाऽन्याश्चुल्ल्यां दुग्धमधिश्रित्य क्वाथमप्रतीक्षमाणा ययुः । काश्चित्संयावं पक्कमनुत्तार्य ययुः ॥५॥ काश्चित्परिवेषयंत्यस्तद्धित्वा ययुः । काश्चि- च्छिशून् पाययंत्यस्तद्धित्वा ययुः । अन्याः पतीन् शुश्रूषंत्यस्तद्धित्वा ययुः । काश्चिदश्नंत्यो भोजनमपास्य ययुः ॥६॥ का० लिंपंत्यः का० अंगोद्वर्तनं कुर्वंत्यः का० नेत्रे अंजंत्यः का० व्यत्यंस्तवस्त्राभरणाः कृष्णसमीपं ययुः ॥७॥ एवं ताः पति-पितृ-भ्रातृभिर्वार्यमाणा अपि गोविंदाकर्षितचित्ता युयः॥८॥काश्चिद्गोप्योंऽतर्गृहे पत्यादिभिः कुंठिताः सत्यो मीलि- तलोचना भूत्वैकाग्रतया कृष्णं दध्युः ॥९॥ तदा कृष्णविरहतापेन गतपापास्तथा ध्यानेन प्राप्तं यत् श्रीकृष्णालिंगनं तेन यः सुखभोगस्तेन क्षीणपुण्यबंधनास्ता गोप्यो जारबुद्ध्या संगता अपि गुणमयं देहं त्यक्त्वा सायुज्यमुक्तिं प्राप्ताः ॥१०॥११॥ राजोवाच । हे ब्रह्मन्, गोप्यः कृष्णं केवलं सुंदरं पुरुषं विदुः । ब्रह्मत्वेन न विदुः । एवं सति तासां कृष्ण-

दुहंत्योऽभिययुः काश्चिद्दोहं हित्वा समुत्सुकाः ॥ पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ॥५॥ परिवेषयंत्यस्तद्धित्वा पाययंत्यः शिशून्पयः ॥ शुश्रूषंत्यः पतीन्काश्चिदश्नंत्योऽपास्य भोजनम् ॥६॥ लिंपंत्यः प्रमृजंत्योऽन्या अंजंत्यः काश्च लोचने ॥ व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णांतिकं ययुः ॥७॥ ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबंधुभिः ॥ गोविंदापहृतात्मानो न न्यवर्तंत मोहिताः ॥८॥ अंतर्गृहगताः काश्चिद्गोप्योऽलब्ध- विनिर्गमाः ॥ कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥९॥ दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ॥ ध्यानप्राप्ताच्युताऽऽश्लेषनिर्वृत्या क्षीण- मंगलाः ॥१०॥ तमेव परमात्मानं जारबुद्ध्याऽपि संगताः ॥ जहुर्गुणमयं देहं सद्यः प्रक्षीणबंधनाः ॥११॥ राजोवाच ॥ कृष्णं विदुः परं कांतं न तु ब्रह्मतया मुने ॥ गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥१२॥ श्रीशुक उवाच ॥ उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ॥ द्विष- न्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥१३॥ नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ॥ अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥१४॥ कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ॥ नित्यं हरौ विदधतो यांति तन्मयतां हि ते ॥१५॥ न चैवं विस्मयः कार्यो भवता भगवत्यजे ॥ योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥१६॥ ता दृष्ट्वांऽतिकमायाता भगवान्व्रजयोषितः ॥ अवदद्वदतां श्रेष्ठो वाचःपेशैर्विमोहयन् ॥१७॥

ध्यानेन सायुज्यमुक्तिः कथं जाता तत्कथ्यताम् ॥१२॥ श्रीशुक उवाच ॥ हे नृप, एतत्पूर्वं सप्तमस्कंधे ते उक्तम् । यथा द्विषन्नपि शिशुपालः सिद्धिं प्राप्तः । तदा कृष्णस्य प्रियाः तद्ध्यानादिना सिद्धिं गमिष्यंतीति किमु वक्तव्यम् ॥१३॥ हे नृप, अव्ययस्य गुणनियंतुरियं प्रकटता नृणां मोक्षायैव ॥१४॥ हरौ कामं क्रोधं भयं स्नेहं संबंधं सख्यं च कुर्वंतः पुरुषास्तन्मयतां प्राप्नुवंति ॥१५॥ एवंभूत ईश्वरे कृष्णे भवता विस्मयो न कार्यः ॥ यतः श्रीकृष्णादेतत्स्थावरादिकमपि विमुच्यते ॥१६॥ ततः कृष्णः प्राप्ता गोपीर्दृष्ट्वा वाग्विला-

---

१ व्यत्यस्तानि स्थानतः स्वरूपतश्चोर्ध्वाधोधारणेन विपर्ययं प्राप्तानि वस्त्रभूषणानि यासां ताः । २ नहि वस्तुशक्तिर्बुद्धिमपेक्षते । अन्यथामत्वाऽपि पीतामृतवदिति भावः । ३ जीवेष्वावृतं ब्रह्मत्वं कृष्णस्य तु हृषीकेशत्वादनावृतमतो न तत्र बुद्ध्यपेक्षेति । ४ न देहिसादृश्यमत्र वक्तुं युज्यत इति भावः ।

सैस्ता मोहयन् जगाद ॥१७॥ श्रीभगवानुवाच ॥ हे गोप्यः, युष्माकं स्वागतम् । युष्माकं प्रियमहं किं करवाणि । व्रजस्य कुशलमस्ति कच्चित् । वः आगमनकारणं ब्रूत ॥१८॥ एषा रजनी भयंकररूपा । अस्यां व्याघ्रसिंहादयः संचरंति । अतो यूयं व्रजंप्रति यात । अत्र स्त्रीभिर्न स्थेयम् ॥१९॥ युष्मानपश्यंतो मातृ-पितृ-पुत्र-भ्रातृ-पतयो वो मृगयंते । अतस्तेषां बंधूनां भयं माकुरुत ॥२०॥ युष्माभिः पुष्पितं चंद्रिकाकिरणैः शोभितं च वनं दृष्टम् ॥२१॥ अतो हे सत्यो यूयं शीघ्रं व्रजं यात । स्वपतीन् शुश्रूषध्वम् । युष्माकं बालावत्साश्च क्रंदंति तान् पाययत दुह्यत च ॥२२॥ मत्स्नेहाद्यूयं वशीकृतचित्ता भूत्वा प्राप्ताश्चेत्तर्हीदं वो योग्यम् । यतो मयि प्राणिनः प्रीतिं कुर्वंति ॥२३॥ भर्तुस्तद्बंधूनां च शुश्रूषणं

श्रीभगवानुवाच ॥ स्वागतं वो महाभागाः प्रियं किं करवाणि वः ॥ व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणम् ॥१८॥ रजन्येषा घोररूपा घोरसत्त्वनिषेविता ॥ प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ॥१९॥ मातरः पितरः पुत्रा भ्रातरः पतयश्च वः ॥ विचिन्वंति ह्यपश्यंतो मा कृध्वं बंधुसाध्वसम् ॥२०॥ दृष्टं वनं कुसुमितं राकेशकररंजितम् ॥ यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥२१॥ तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन्सतीः ॥ क्रंदंति वत्सा बालाश्च तान्पाययत दुह्यत ॥२२॥ अथवा मदभिस्नेहाद्भवत्यो यंत्रिताशयाः ॥ आगता ह्युपपन्नं वः प्रीयंते मयि जंतवः ॥२३॥ भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ॥ तद्बंधूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥२४॥ दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ॥ पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥२५॥ अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ॥ जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः ॥२६॥ श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात् ॥ न तथा संनिकर्षेण प्रतियात ततो गृहान् ॥२७॥ श्रीशुक उवाच ॥ इति विप्रियमाकर्ण्य गोप्यो गोविंदभाषितम् ॥ विषण्णा भग्नसंकल्पाश्चिंतामापुर्दुरत्ययाम् ॥२८॥ कृत्वा मुखान्यवशुचः श्वसनेन शुष्यद्बिंबाधराणि चरणेन भुवं लिखंत्यः ॥ अस्रैरुपात्तमषिभिः कुचकुंकुमानि तस्थुर्मृजंत्य उरुदुःखभराः स्म तूष्णीम् ॥२९॥ प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ॥ नेत्रे विमृज्य रुदितोपहते स्म किंचित्संरंभगद्गदगिरोऽब्रुवतानुरक्ताः ॥३०॥ ॥

स्त्रीणां परमो धर्मोऽस्ति ॥२४॥ हे गोप्यः, स्वपतिर्दुष्टस्वभावो भाग्यहीनो वृद्धो रोगी निर्धनोऽपि अपातकी चेत्तर्हि स्त्रीभिर्न त्याज्यः ॥२५॥ किंच । कुलीनस्त्रियाः जारसौख्यं परलोके स्वर्गनाशकं इह लोके यशोनाशकं भयसूचकं शास्त्रनिषिद्धं च ॥२६॥ मयि प्रेमवृद्धिस्तु यथा श्रवणाद्दर्शनाद्ध्यानाच्च भवति तथांऽगसंगेन न भवति । अतो यूयं गृहान्प्रति यात ॥२७॥ श्रीशुक उवाच ॥ एवमप्रियं कृष्णस्य वचः श्रुत्वा भग्नसंकल्पास्ता गोप्यश्चिंतां प्रापुः ॥२८॥ ततो मुखान्यधः कृत्वा पादांगुष्ठेन भुवं लिखंत्योऽश्रुभिः कुचकुंकुमानि मृजंत्यस्तूष्णीं तस्थुः ॥२९॥ ततो रोदनाश्रुपूर्णे नेत्रे विमृज्याप्रियमिव भाषमाणं कृष्णं किंचित्कोपावेशेन गद्गदगिरस्ता गोप्यो जगदुः ॥३०॥ ॥ ॥

१ ब्रह्महत्यादिमहापापेन पतितश्चेत्तर्हि तस्य संसर्गमकृत्वा स दूरतः सेव्यः ।

गोप्य ऊचुः । हे विभो, त्वमेवं निष्ठुरं वक्तुं नार्हसि । यथा आदिपुरुषो भगवान् मुमुक्षून् भजते तथा त्वत्पादमूलं प्राप्तानस्मान् त्वं भजस्व । मा त्यज ॥३१॥ पत्यादीनां सेवनं स्त्रीणां परो धर्म इति यत्त्वयोक्तं तदुपदेशपदे ईशे त्वय्येवास्तु । यतो भवान् शरीरिणामात्मा हितकर्ताऽतिप्रियश्चासि ॥३२॥ हे कृष्ण, शास्त्रनिपुणाः पुरुषाः प्रिये त्वयि प्रीतिं कुर्वंति । दुःखदैः पतिपुत्रादिभिः किम् । अतो नः प्रसीद । त्वयि धृतामाशां मा छिंद्याः ॥३३॥ किंच । अस्मच्चित्तमेतावत्कालपर्यंतं सुखेन गृहेषु निर्विशतिस्म तत्त्वयाऽपहृतम् । हस्तावपि यौ गृहकृत्ये निर्विशतस्तौ त्वयाऽपहृतौ । तथा पादौ तव पादमूलात्पदमात्रमपि न चलतः । अतः कथं व्रजं यामः । किंवा करवाम ॥३४॥ अतो हे कृष्ण, नः कामाग्निं

गोप्य ऊचुः ॥ मैवं विभोऽर्हति भवान्गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमूलम् ॥ भक्ता भजस्व दुरवग्रह मा त्यजास्मान्देवो यथाऽऽदि-पुरुषो भजते मुमुक्षून् ॥३१॥ यत्पत्यपत्यसुहृदामनुवृत्तिरंग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥ अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बंधुरात्मा ॥३२॥ कुर्वंति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥ तन्नः प्रसीद परमे-श्वर मास्म छिंद्या आशां भृतां त्वयि चिरादरविंदनेत्र ॥३३॥ चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥ पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किं वा ॥३४॥ सिंचांग नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् ॥ नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥३५॥ यर्ह्यंबुजाक्ष तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रि-यस्य ॥ अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमंग स्थातुं त्वयाऽभिरमिता बत पारयामः ॥३६॥ श्रीर्यत्पदांबुजरजश्चकमे तुलस्या लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टम् ॥ यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद्वयं च तव पादरजः प्रपन्नाः॥३७॥ तन्नः प्रसीद वृजिनार्दन तेंऽघ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ॥ त्वत्सुंदरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि दास्यम् ॥३८॥ वीक्ष्यालकावृतमुखं तव कुंडलश्री-गंडस्थलाधरसुधं हसितावलोकम् ॥ दत्ताभयं च भुजदंडयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः ॥३९॥ ॥ ॥

त्वदधरामृतपूरेण सिंच । एवं नो चेत् तर्हि कामाग्निना विरहाग्निना च देहान् दग्ध्वा वयं योगिन इव ध्यानेन ते पदवीं प्राप्नुयामः ॥३५॥ हे हरे, लक्ष्म्या अपि दत्तानंदं तव पादतलं यदा स्पृष्टवत्यो वयं त्वया चाऽऽनंदितास्तदारभ्यान्यसमक्षं[2] स्थातुं न समर्थाः ॥३६॥ किंच । लक्ष्मीस्तव वक्षस्यसापत्न्यं स्थानं लब्ध्वाऽपि तुलस्या सपत्न्या सह त्वत्पदांबुजरज इच्छति । तद्वद्वयमपि ते पादरजः प्राप्ताः ॥३७॥ हे दुःखहर, त्वं नः प्रसीद । वयं स्वगृहान् हित्वा ते चरणमूलं योगिन इव प्राप्ताः । अतो हे पुरुषरत्न, तवावलोकनेन कामसंतप्तचित्तानां नो दास्यं देहि ॥३८॥ कुटिलकेशैर्वेष्टितं हास्यावलोकनयुक्तं च तव मुखं दृष्ट्वा तथा दत्ताभयं बाहुदंडयुग्मं लक्ष्म्या अपि रतिजनकं ते वक्षस्थलं च दृष्ट्वा वयं

१ उपदेशानां शुश्रूषत्वेनोपदिश्यमानानां पत्यादीनां पदेऽधिष्ठाने । २ तुच्छास्ते पतयो न रोचंत इत्यर्थः ।

तव दास्य एव भवामः ॥३९॥ हे कृष्ण, तव वेणुगीतमोहिता का वा स्त्री त्रैलोक्ये स्वधर्मान्न चलेत् । इदं त्रैलोक्यसुंदरं ते रूपं दृष्ट्वा गो-पक्षि-वृक्ष-मृगा अपि रोमांचान् दधुः ॥४०॥ हे हरे, त्वं व्रज-भय-दुःखहर आदिपुरुषो जातोऽसीति निश्चितम् । अतो नो दासीनां तप्तस्तनेषु मस्तकेषु च स्वहस्तकमलं स्थापय ॥४१॥ श्रीशुक उवाच ॥ एवं तासां पारवश्य-प्रलपितं श्रुत्वाऽऽत्मारामोऽपि कृष्णस्ता रमयामास ॥४२॥ ततः स्वस्यावलोकनेन प्रफुल्लितमुखीभिस्ताभिर्युक्तः श्रीकृष्णो नक्षत्रैर्युक्तश्चंद्र इव शुशुभे ॥४३॥ ततो गोपीभिर्गीयमानः स्वयमपि गायन् कृष्णो वैजयंतीं मालां धृत्वा वनं शोभयन् तत्र व्यचरत् ॥४४॥ ततो गोपीभिः सह हिमवालुकं यमुनातटं प्रविश्य रेमे ॥४५॥ ततः कृष्णो वाहुप्रसारणेन आलिंगनेन हस्त-

का स्त्र्यंग ते कलपदायतमूर्छितेन संमोहिताऽऽर्यचरितान्न चलेत्रिलोक्याम् ॥ त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यविभ्रन् ॥४०॥ व्यक्तं भवान्व्रजभयार्तिहरोऽभिजातो देवो यथाऽऽदिपुरुषः सुरलोकगोप्ता ॥ तन्नो निधेहि करपंकजमार्तबंधो तप्तस्तनेषु च शिरस्सु च किंकरीणाम् ॥४१॥ श्रीशुक उवाच ॥ इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ॥ प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥४२॥ ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ॥ उदारहासद्विजकुंददीधितिर्व्यरोचतैणांक इवोडुभिर्वृतः ॥४३॥ उपगीयमान उद्गायन्वनिताशतयूथपः ॥ मालां बिभ्रद्वैजयंतीं व्यचरन्मंडयन्वनम् ॥४४॥ नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ॥ रेमे तत्तरलानंदकुमुदामोदवायुना ॥४५॥ वाहुप्रसारपरिरंभकराऽलकोरुनीवीस्तनालभननर्मनखाग्रपातैः ॥ क्ष्वेल्याऽवलोकहसितैर्व्रजसुंदरीणामुत्तंभयन्रतिपतिं रमयांचकार ॥४६॥ एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ॥ आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥४७॥ तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ॥ प्रशमाय प्रसादाय तत्रैवांतरधीयत ॥४८॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे भगवतो रासक्रीडावर्णनं नामैकोनत्रिंशोऽध्यायः ॥२९॥ ॥ श्रीशुक उवाच ॥ अंतर्हिते भगवति सहसैव व्रजांगनाः ॥ अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥१॥ गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ॥ आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥२॥

केशो-रु-स्तनानां ग्रहणेन परिहासेन नखाग्रपातेन क्रीडया अवलोकनैर्हसितैश्च गोपीनां कामं संदीपयन् ता रमयामास ॥४६॥ एवं कृष्णात्प्राप्तमानास्ता गोप्यो भुवि स्त्रीणां मध्ये आत्मानमधिकं मेनिरे ॥४७॥ ततः कृष्णस्तासां गर्वं मदं च वीक्ष्य गर्वशमनायानुग्रहाय च तत्रैवांतरधीयत ॥४८॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे रासक्रीडायामेकोनत्रिंशोऽध्यायः ॥२९॥ ॥ त्रिंशे विरहसंतप्तगोपीभिः कृष्णमार्गणम् । उन्मत्तवन्न नियतं भ्रमंतीभिर्वने वने ॥१॥ श्रीशुक उवाच ॥ भगवत्यंतर्हिते सति सहसैव तमपश्यंत्यो गोप्योऽतप्यन् ॥१॥ ततस्ताः कृष्णस्य गत्या प्रेमहास्यावलोकनैर्भाषणैः क्रीडाभिश्चाकृष्टचित्ताः सत्यः कृष्णस्य लीलाऽनुकरणेन चिक्रीडुः ॥२॥ ॥ ॥

किंच । कृष्णस्य गतिहास्यावलोकनादिषु तासां न केवलं चित्तान्यैवैक्यं प्राप्तान्यपि तु देहा अप्यैक्यं प्राप्तास्तेन कारणेन कृष्ण इव क्रीडाविलासान् कुर्वत्यस्ता अहमेव कृष्ण इति परस्परं निवेदयामासुः ॥३॥ तत उच्चैः कृष्णमेव गायंत्यो मत्तवदेकत्र मिलित्वा वनाद्वनं गच्छंत्यः कृष्णममृगयन् ॥ तत आकाशमिव सर्वव्यापिनं तं कृष्णं वृक्षान् पप्रच्छुः ॥४॥ हे अश्वत्थ, हे प्लक्ष, हे वट, अस्माकं मनो हृत्वा चोर इव गतः कृष्णो युष्माभिर्दृष्टः किम् ॥५॥ हे कुरवकाशोक-नाग-पुन्नाग-चंपकाः, अस्माकं दर्पहरस्मितः स इतो गतः कृष्णो युष्माभिर्दृष्टः किम् ॥६॥ हे गोविंदचरणप्रिये तुलसि, भ्रमरकुलैः सह त्वां बिभ्रत् तवातिप्रियः कृष्णस्त्वया दृष्टः किम् ॥७॥ हे मालति, हे मल्लिके, हे जातियूथिके, कृष्णः कर-

गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः ॥ असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः ॥३॥ गायंत्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम् ॥ पप्रच्छुराकाशवदंतरं बहिर्भूतेषु संतं पुरुषं वनस्पतीन् ॥४॥ दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ॥ नंदसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥५॥ कच्चित्कुरबकाशोकनागपुन्नागचंपकाः ॥ रामानुजो मानिनीनामितो दर्पहर-स्मितः ॥६॥ कच्चित्तुलसि कल्याणि गोविंदचरणप्रिये ॥ सह त्वाऽलिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥७॥ मालत्यदर्शि वः कच्चिन्मल्लिके जातियूथिके ॥ प्रीतिं वो जनयन्यातः करस्पर्शेन माधवः ॥८॥ चूतप्रियालपनसासनकोविदारजंब्वर्कबिल्वबकुलाम्रकदंबनीपाः ॥ येऽन्ये परार्थ-भवका यमुनोपकूलाः शंसंतु कृष्णपदवीं रहितात्मनां नः ॥९॥ किं ते कृतं क्षिति तपो बत केशवांघ्रिस्पर्शोत्सवोत्पुलकितांगरुहैर्विभासि ॥ अप्यंघ्रिसंभव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरंभणेन ॥१०॥ अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन्दृशां सखि सुनिर्वृतिमच्युतो वः ॥ कांतांगसंगकुचकुंकुमरंजितायाः कुंदस्रजः कुलपतेरिह वाति गंधः ॥११॥ बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकु-लैर्मदांधैः ॥ अन्वीयमान इह वस्तरवः प्रणामं किं वाऽभिनंदति चरन्प्रणयावलोकैः ॥१२॥ पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ॥ नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥१३॥ ॥ ॥ ॥ ॥

स्पर्शेन वः प्रीतिं जनयन्नितो गतः किम् ॥८॥ हे आम्र-पनस-बिल्व-बकुल-कदंबादयो वृक्षाः, यूयं यमुनातीरे स्थिताः स्थ । अतः शून्यचेतसां नः कृष्णमार्गं कथयत ॥९॥ हे पृथ्वि, त्वया तपः किं कृतम् । या त्वं कृष्णचरणस्पर्शेन रोमांचिता शोभसे । अतस्त्वया कृष्णो दृष्टः किम् ॥१०॥ हे हरिणि, श्रीकृष्णः स्वमुखादिभिस्तव दृशां प्रियं कुर्वन् प्रियया सह इतो गतः किम् ॥११॥ हे वृक्षाः, कृष्णः प्रियायाः स्कंधे बाहुं कृत्वा तुलसिकामोदमदांधैर्भ्रमरैरनुगम्यमानः सन् वः प्रणामस्य प्रेमावलोकनैः संमानं करोति किम् ॥१२॥ काश्चिदाहुः । हे सख्यः, एता लताःप्रति पृच्छत । यत एताः पत्युर्वृक्षस्य बाहूनालिंग्यापि रोमांचं बिभ्रति । अहो आसां भाग्यम् । एता नूनं कृष्णनखस्पृष्टाः संति ॥१३॥ ॥



१ नहि स्वपतिसंगतावीदृक् पुलकसंभव इति भावः ।

एवमुन्मत्तवचो गोप्यः कृष्णशोधनेनातिविह्वलाः सत्यो हरेस्तास्ता लीला अनुचक्रुः ॥१४॥ कस्याश्चित्पूतनावदाचरंत्याः काचित्कृष्णवदाचरंती स्तनं पपौ । अन्या बालवदात्मानं कृत्वा रुदती सती परां शकटाकृतिं पदा जघान ॥१५॥ काचित्तृणावर्तदैत्यरूपं धृत्वा कृष्णरूपामन्यां जहार । कापि चरणौ कर्षयंती रिंगयामास ॥१६॥ ततो द्वे कृष्णरामरूपे अन्याश्च गोपरूपा जाताः । तत्रैका वत्सरूपधरां हंति अन्या च बकरूपधरां हंति ॥१७॥ एका कृष्णरूपं धृत्वा दूरे स्थिता गोरूपधारिणीरन्या आहूय वेणुं क्वणयति स्म । तदाऽन्यास्तां साध्विति शंसंति ॥१८॥ कस्यांचित्स्वभुजं कृत्वा चलंत्येका जगाद । अहं कृष्णो मम गतिं पश्यत ॥१९॥ काचिद्गोपी, यूयं वातवर्षाभ्यां मा भैष्ट । ततो युष्मत्संरक्षणं मया कृतम् । इत्युक्त्वा हस्तेन वस्त्रमूर्ध्वं धृतवती ॥२०॥ तदैका गोपी कृष्णरूपं धृत्वा कालियरूपिण्या गोप्याः शिरस्यारुह्य जगाद । हे दुष्टाहे, त्वमितो गच्छ । अहं खलानां

इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ॥ लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥१४॥ कस्याश्चित्पूतनायंत्याः कृष्णायंत्यपिवत्स्तनम् ॥ तोकायित्वा रुदत्यन्या पदाहन् शकटायतीम् ॥१५॥ दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ॥ रिंगयामास काऽप्यंघ्री कर्षंती घोषनिःस्वनैः ॥१६॥ कृष्णरामायिते द्वे तु गोपायंत्यश्च काश्चन ॥ वत्सायतीं हंति चान्या तत्रैका तु बकायतीम् ॥१७॥ आहूय दूरगा यद्वत्कृष्णस्तमनुवर्ततीम् ॥ वेणुं क्वणंतीं क्रीडंतीमन्याः शंसंति साध्विति ॥ १८ ॥ कस्यांचित्स्वभुजं न्यस्य चलंत्याहापरा ननु ॥ कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः ॥१९॥ मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया ॥ इत्युक्त्वैकेन हस्तेन यतंत्युन्निदधेऽम्बरम् ॥२०॥ आरुह्यैका पदाऽऽक्रम्य शिरस्याहापरां नृप ॥ दुष्टाहे गच्छ जातोऽहं खलानां ननु दंडधृक् ॥२१॥ तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम् ॥ चक्षूंष्याश्वपिधध्वं वो विधास्ये क्षेममंजसा ॥२२॥ बद्धाऽन्यया स्रजा काचितन्वी तत्र उलूखले ॥ ( बध्नामि भांडभेत्तारं हैयंगवमुषं त्विति ॥ ) भीता सुदृक् पिधायास्यं भेजे भीतिविडंबनम् ॥२३॥ एवं कृष्णं पृच्छमाना वृंदावनलतास्तरून् ॥ व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥२४॥ पदानि व्यक्तमेतानि नंदसूनोर्महात्मनः ॥ लक्ष्यंते हि ध्वजांभोजवज्रांकुशयवादिभिः ॥२५॥ तैस्तैः पदैस्तत्पदवीमन्विच्छंत्योऽग्रतोऽबलाः ॥ वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥२६॥ ॥ ॥ ॥ ॥

दंडकर्ता जातोऽस्मि ॥२१॥ तत्रैकाऽऽह । हे गोपाः, दावाग्निं पश्यत । नेत्राणि निमीलयत । युष्माकं कुशलमहं करोमि ॥२२॥ तत्र कृष्णरूपैका गोपी यशोदारूपया गोप्या पुष्पमालयोलूखले (दधिभांडभेत्तारं नवनीतचोरं च त्वां बध्नामीति) बद्धा सती मुखमाच्छाद्य भयानुकरणं भेजे ॥२३॥ एवं वृक्षादीन् पृच्छमाना गोप्यो वनप्रदेशे कृष्णस्य पदानि ददृशुः ॥२४॥ तत आहुः । एतानि पदानि श्रीकृष्णस्यैव । मीन-ध्वज-कमल-वज्रांकुशादिभिश्चिह्नितानि संति ॥२५॥ ततस्तैस्तैः पदैः कृष्णमार्गमन्विच्छंत्यो गोप्योऽग्रतो गत्वा तत्रान्यस्त्रियाः पदैर्युक्तानि कृष्णपदानि दृष्ट्वा दुःखिताः सत्य आहुः ॥२६॥ ॥ ॥ ॥ ॥

हे गोप्यः, कृष्णेन सह यातायाः कस्या एतानि पदानि ॥२७॥ अनयैव नूनं हरिराराधितः । यतोऽस्मान् हित्वा कृष्ण इमामेकांतस्थानमनयत् ॥२८॥ हे सख्यः, एते कृष्णपदाब्जरेणवोऽतिधन्याः । यान् ब्रह्मा शिवो लक्ष्मीश्च पापनाशार्थं मूर्ध्नि दधुः ॥२९॥ हे सख्यः, तस्या एतानि पदानि नः क्षोभं कुर्वंति । या एकैवैकांते कृष्णस्याधरं गोपीनां सर्वस्वं भुंक्ते ॥३०॥ अहो सख्यः, अत्र तस्याः पदानि न लक्ष्यंते । तेन तां कृष्णः स्कंधमारोपितवानित्यनुमीयते ॥३१॥ (हे गोप्यः, वधूं स्कंधे वहतः कृष्णस्याधिकमग्नान्यमूनि पदानि पश्यत ॥१॥ अत्र च पुष्पहेतोः कांता स्कंधादवरोपिता ॥) तथाऽत्र तदर्थं कृष्णेन पुष्पावचयः कृतः । यतोऽत्र पादाग्राभ्यां पृथ्वीमर्दनं दृश्यते । इमे कृष्णस्यासंपूर्णपदे पश्यत ॥३२॥ किंच । कामिना कृष्णेनाऽत्र तस्याः केशप्रसाधनं कृतम् । तस्या इदं कृष्णजानुमध्ये उपविष्टायाश्चिह्नं दृश्यते ॥३३॥ हे नृप, गोपीभिर्यथा तर्कितं तथा तया गोप्या सहात्मारामोऽपि श्रीकृष्णः कामिनां दीनत्वं स्त्रीणां दुःस्वभावं च दर्शयन् रेमे ॥३४॥ एवं कृष्णं विचिन्वंत्यस्ता गोप्यो वने चेरुः । कृष्णोऽपि ता गोपीर्विहाय यां गोपीमेकांते निन्ये साऽप्यात्मानं स्त्रीणां मध्ये श्रेष्ठं मेने ॥३५॥३६॥ ततः सा कृष्णेन सह किंचिद्दूरं गत्वा गर्विष्ठा सती कृष्णमब्रवीत् । हे कृष्ण, अहमितोऽग्रे चलितुं न शक्ता । अतो यत्र गंतुं ते मनस्तत्र मां नय ॥३७॥ इत्याकर्ण्य कृष्णो मे स्कंधमारुह्यतामित्याह । ततस्तस्यां स्कंधारोहोद्यतायां स्वयमंतर्दधे । तदा साऽपि वधूरन्वतप्यत ॥३८॥ हा नाथ, हे रमण, हे अतिप्रिय, क्वासि क्वासि । हे सखे, तव दास्या मे संनिधिं दर्शय ॥३९॥ ॥ ॥ ॥ ॥

कस्याः पदानि चैतानि याताया नंदसूनुना ॥ अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥२७॥ अनयाऽऽराधितो नूनं भगवान्हरिरीश्वरः ॥ यन्नो विहाय गोविंदः प्रीतो यामनयद्रहः ॥२८॥ धन्या अहो अमी आल्यो गोविंदांघ्र्यब्जरेणवः ॥ यान्ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥२९॥ तस्या अमूनि नः क्षोभं कुर्वंत्युच्चैः पदानि यत् ॥ यैकाऽपहृत्य गोपीनां रहो भुंक्तेऽच्युताधरम् ॥३०॥ न लक्ष्यंते पदान्यत्र तस्या नूनं तृणांकुरैः ॥ खिद्यत्सुजातांघ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥३१॥ (इमान्यधिकमग्नानि पदानि वहतो वधूम् ॥ गोप्यः पश्यत कृष्णस्य भाराक्रांतस्य कामिनः॥१॥ अत्रावरोपिता कांता पुष्पहेतोर्महात्मना ॥) अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः॥ प्रपदाक्रमणे एते पश्यताऽसकले पदे ॥३२॥ केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥ तानि चूडयता कांतामुपविष्टमिह ध्रुवम् ॥३३॥ रेमे तया चात्मरत आत्मारामोऽप्यखंडितः ॥ कामिनां दर्शयन्दैन्यं स्त्रीणां चैव दुरात्मताम् ॥३४॥ इत्येवं दर्शयंत्यस्ताश्चेरुर्गोप्यो विचेतसः ॥ यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने ॥३५॥ सा च मेने तदाऽऽत्मानं वरिष्ठं सर्वयोषिताम् ॥ हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥३६॥ ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ॥ न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥३७॥ एवमुक्तः प्रियामाह स्कंधमारुह्यतामिति ॥ ततश्चांतर्दधे कृष्णः सा वधूरन्वतप्यत ॥३८॥ हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥ दास्यास्ते कृपणाया मे सखे दर्शय संनिधिम् ॥३९॥ ॥

श्रीशुक उवाच ॥ कृष्णस्य मार्गं मृगयंत्यो गोप्यः समीपे तद्वियोगमोहितां तां सखीं ददृशुः ॥४०॥ ततस्तयोक्तं कृष्णान्मानप्राप्तिं दौरात्म्यादपमानं च श्रुत्वा विस्मयं प्रापुः ॥४१॥ ततस्तयाऽपि सहितास्ताः सर्वाः कृष्णान्वेषणाय यावच्चंद्रप्रकाशः पतितस्तावद्वने गत्वा ततो निबिडवृक्षच्छायायांऽधकारव्याप्तं वनं दृष्ट्वा प्रतिनिववृतुः ॥४२॥ ततस्ताः कृष्णमनसस्तद्गुणानेव गायंत्यो गोप्यः स्वगृहाणि न सस्मरुः ॥४३॥ ततो यत्र पूर्वं श्रीकृष्णेन संगतिरासीत्तदेव यमुनातटं गत्वा कृष्णागमनमिच्छंत्यो मिलिताः सत्यः कृष्णं जगुः ॥४४॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे त्रिंशोऽध्यायः ॥३०॥ एकत्रिंशे निराशास्ताः पुनः पुलिनमागताः । कृष्णमेवानुगायंत्यः प्रार्थयंते तदागमम् ॥१॥ गोप्य ऊचुः ॥ हे प्रिय, तव जन्मना गोकुलमधिकमुत्कर्षेण वर्तते । यतस्त्वमत्र जातस्तस्माल्लक्ष्मीर्गोकुलमलंकृत्य वर्तते । एवं व्रजे हर्षिते सति त्वदीया गोपिकास्त्वदर्थं धृतप्राणाः सत्यो दिक्षु त्वां विचिन्वते ।

अन्विच्छंत्यो भगवतो मार्गं गोप्यो विदूरतः ॥ ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥४०॥ तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥ अवमानं च दौरात्म्याद्विस्मयं परमं ययुः ॥४१॥ ततोऽविशन्वनं चंद्रज्योत्स्ना यावद्विभाव्यते ॥ तमः प्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः ॥४२॥ तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेव गायंत्यो नात्मागाराणि सस्मरुः ॥४३॥ पुनः पुलिनमागत्य कालिंद्याः कृष्णभावनाः ॥ समवेता जगुः कृष्णं तदागमनकांक्षिताः ॥४४॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे रासक्रीडायां कृष्णान्वेषणं नाम त्रिंशत्तमोऽध्यायः ॥३०॥ गोप्य ऊचुः ॥ जयति तेऽधिकं जन्मना व्रजः श्रयत इंदिरा शश्वदत्र हि ॥ दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥१॥ शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ॥ सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥२॥ विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् ॥ वृषमयात्मजाद्विश्वतोभयादृषभ ते वयं रक्षिता मुहुः ॥३॥ न खलु गोपिकानंदनो भवानखिलदेहिनामंतरात्मदृक् ॥ विखनसार्थितो विश्वगुप्तये सख उदेयिवान्सात्वतां कुले ॥४॥ विरचिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात् ॥ करसरोरुहं कांत कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥५॥ व्रजजनार्तिहन्वीर योषितां निजजनस्मयध्वंसनस्मित ॥ भज सखे भवत्किंकरीः स्म नो जलरुहाननं चारु दर्शय ॥६॥ ॥ ॥ ॥ ॥ ॥

अतस्त्वमस्माकं दृश्यो भव ॥१॥ अन्या आहुः । हे संभोगपते, अतिसुंदरया दृष्ट्या अमूल्यदासीर्नोमारयतस्तव त्वया क्रियमाण इह लोकेऽयं वधो न भवति किम् । किंतु भवत्येव । अतस्तव दृशाऽपहृतप्राणप्रत्यर्पणाय त्वया दृश्यताम् ॥२॥ हे श्रेष्ठ, त्वया विषमय-जल-प्राशनात्तथाऽघासुरात् वृष्टि-वायु-विद्युद्भ्योऽरिष्टासुर-व्योमासुरादिभ्यश्च वयं रक्षिताः । अत इदानीं किमुपेक्षसे ॥३॥ अपि च । हे सखे, त्वं यशोदापुत्रो नहि । किंतु जीवानां बुद्धिसाक्षी ब्रह्मणा जगद्रक्षणार्थं प्रार्थितः सन् यदुकुले जातोऽसि । अतस्तव भक्तोपेक्षाऽनुचिता ॥४॥ हे यादवश्रेष्ठ, संसारभयात्ते चरणं शरणं प्राप्तानां दत्ताभयं हस्तकमलं नः शिरसि स्थापय ॥५॥ हे गोकुलजनदुःखनाशक, हे वीर, सखे, तव दासीनामस्माकं स्वीकारं

कुरु । आदौ तावन्मुखकमलं दर्शय ॥६॥ हे सखे, नमस्कारकर्तॄणां नृणां पापनाशकं पशूनामनुगमनकारि कालियफणास्वर्पितं ते चरणकमलं नः स्तनेषु कृत्वा कामं छिंधि ॥७॥ हे कमलनेत्र, तव मधुरवाण्या मुह्यंतीर्नो दासीरधरामृतेन संजीवय ॥८॥ हे हरे, तापत्रयेण तप्तानां शांतिकरं पापनाशकं श्रवणमात्रेण मंगलप्रदं तव कथामृतं ये भुवि गृणंति ते धन्याः । किं पुनर्ये त्वां पश्यंति ते धन्या इति । अतः प्रार्थयामहे त्वया दृश्यतामिति ॥९॥ हे कृष्ण, तव हास्यं प्रेमावलोकं क्रीडनं तथा रहसि सांकेतिकभाषणानि एतानि सर्वाणि हे कपट, नः मनः क्षोभयंति ॥१०॥ हे सुंदर, यदा त्वं व्रजात् पशून् चारयन् चलसि तदा ते पदं, हे नाथ, रजःकणैस्तृणांकुरैश्च क्लिश्यतीति नो मनोऽस्वास्थ्यं प्राप्नोति । एवंभूतास्त्वद्दुःखशंकितचित्ता वयम् ॥११॥ त्वं तु सायंकाले कृष्णकुंतलैर्व्याप्तं गोरजोभिः शोभितं मुखकमलं मुहुर्दर्शयन् नो मनसि केवलं काममर्पयसि न तु संगं ददासि ।

प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ॥ फणिफणार्पितं ते पदांबुजं कृणु कुचेषु नः कृंधि हृच्छयम् ॥७॥ मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ॥ विधिकरीरिमा वीर मुह्यतीरधरसीधुनाऽऽप्यायस्व नः ॥८॥ तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ॥ श्रवणमंगलं श्रीमदाततं भुवि गृणंति ते भूरिदा जनाः ॥९॥ प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमंगलम् ॥ रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयंति हि ॥१०॥ चलसि यद्व्रजाच्चारयन्पशून्नलिनसुंदरं नाथ ते पदम् ॥ शिलतृणांकुरैः सीदतीति नः कलिलतां मनः कांत गच्छति ॥११॥ दिनपरिक्षये नीलकुंतलैर्वनरुहाननं बिभ्रदावृतम् ॥ घनरजस्वलं दर्शयन्मुहुर्मनसि नः स्मरं वीर यच्छसि ॥१२॥ प्रणतकामदं पद्मजार्चितं धरणिमंडनं ध्येयमापदि ॥ चरणपंकजं शंतमं च ते रमण नः स्तनेष्वर्पयाधिहन् ॥१३॥ सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुंबितम् ॥ इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥१४॥ अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम् ॥ कुटिलकुंतलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम् ॥१५॥ पतिसुतान्वयभ्रातृबांधवानतिविलंघ्य तेंऽत्यच्युतागताः ॥ गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥१६॥ रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ॥ बृहदुरः श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥१७॥ ॥ ॥ ॥ ॥

अतस्त्वं कपटः ॥१२॥ अतोऽधुना कपटं विहाय हे रमण, सुखतमं ब्रह्मणा पूजितमापत्काले ध्येयं च ते चरणकमलं नः स्तनेषु कामशांतयेऽर्पय ॥१३॥ हे सखे, रतिवृद्धिकरं सुस्वरवेणुना चुंबितं तवाधरोष्ठामृतं नो देहि ॥१४॥ हे कृष्ण, दिवसे यदा त्वं वनेऽटसि तदा त्वामपश्यतीनां नः क्षणार्धमपि युगवद्भवति । एवं तवादर्शनेऽस्माकं दुःखम् । तथा तव श्रीमुखं पश्यतीनां नो दृशां यः पक्ष्मकृत् ब्रह्मा सोऽप्यज्ञ एवेति च तव दर्शने सुखातिशयः ॥१५॥ तस्मात् हे अच्युत, पतिपुत्रबांधवादीन् हित्वा वयं तव गीतमोहिताः सत्यस्त्वत्समीपं प्राप्ताः स्मः । हे शठ, एवंभूताः स्त्रियो रात्रौ स्वयमागतास्त्वां विना कस्त्यजेन्न कोऽपि ॥१६॥ किंच । हे कृष्ण, तवैकांते भाषणं हास्ययुक्तं मुखं प्रेमावलोकनं तथा

लक्ष्मीस्थानं वक्षश्च दृष्ट्वाऽतिस्पृहा भवति । मनश्च मुह्यति ॥१७॥ हे सखे, इयं तव प्रकटता व्रजवासिनां दुःखहंत्री जगतो मंगलरूपा चास्ति । अतोऽस्माकं स्वजनानां हृद्रोगनाशकं यदतिगोप्यमौषधं तत्कार्पण्यमकृत्वा देहि ॥१८॥ हे प्रिय, यत्तव सुकुमारं पदकमलं वयं कठोरस्तनेषु संमर्दनशंकया भीताः सत्यः शनैर्धारयेम । तेन त्वं वनेऽटसि । अतस्तत्ते चरणकमलं सूक्ष्मपाषाणादिभिर्न व्यथेत किम् । किंतु व्यथंतैवेति भवदायुषां नो बुद्धिर्मुह्यति ॥१९॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे गोपीगीतं नामैकत्रिंशोऽध्यायः ॥३१॥ द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः । तत्राविर्भूय गोपीस्ताः सांत्वयामास मानयन् ॥१॥ श्रीशुक उवाच ॥ एवमनेकधा गायंत्यो गोप्यः कृष्णदर्शने उत्सुकाः सत्य उच्चै रुरुदुः ॥१॥ तदा पीतांवरधरः कामस्यापि मोहकः श्रीकृष्णस्तासां मध्य आविर्वभूव ॥२॥ तं प्रियं दृष्ट्वोत्फुल्लनेत्रा गोप्यो युगपदुत्तस्थुः । यथाऽचेतने शरीरे प्राणे प्राप्ते सति करचरणा-

व्रजवनौकसां व्यक्तिरंग ते वृजिनहंत्र्यलं विश्वमंगलम् ॥ त्यज मनाक्च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥१८॥ यत्ते सुजात चरणांवुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु ॥ तेनाटवीमटसि तद्व्यथते न किंस्वित्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥१९॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे रासक्रीडायां गोपीगीतं नामैकत्रिंशोऽध्यायः ॥३१॥ ॥ श्रीशुक उवाच ॥ इति गोप्यः प्रगायंत्यः प्रलपंत्यश्च चित्रधा ॥ रुरुदुः सुस्वरं राजन्कृष्णदर्शनलालसाः ॥१॥ तासामाविरभूच्छौरिः स्मयमानमुखांवुजः ॥ पीतांवरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥२॥ तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽवलाः ॥ उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतम् ॥३॥ काचित्करांवुजं शौरेर्जगृहेंऽजलिना मुदा ॥ काचिद्दधार तद्वाहुमंसे चंदनभूषितम् ॥४॥ काचिदंजलिनाऽगृह्णात्तन्वी तांवूलचर्वितम् ॥ एका तदंघ्रिकमलं संतप्ता स्तनयोरधात् ॥५॥ एका भ्रुकुटिमावध्य प्रेमसंरंभविह्वला ॥ घ्नंतीवैक्षत्कटाक्षेपैः संदष्टदशनच्छदा ॥६॥ अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखांवुजम् ॥ आपीतमपि नातृप्यत्संतस्तच्चरणं यथा ॥७॥ तं काचिन्नेत्ररंध्रेण हृदि कृत्य निमील्य च ॥ पुलकांग्युपगुह्यास्ते योगीवानंदसंप्लुता ॥८॥ सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ॥ जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥९॥ ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ॥ व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥१०॥ ॥ ॥ ॥

दयोऽवयवा युगपत्स्वस्वव्यापारे प्रवर्तंते तद्वत् ॥३॥ तदा काचिद्गोपी कृष्णस्य हस्तकमलं हस्तद्वयेन जगृहे । काचित्तद्वाहुं स्वस्कंधे दधार ॥४॥ काचित्तस्य चर्वितं तांवूलमंजलिना जग्राह । एका तच्चरणकमलं स्तनयोर्दधार ॥५॥ एकाऽधरोष्ठं दष्ट्वा भृकुटिं वक्रीकृत्य कृष्णं कटाक्षैस्ताडयंतीवैक्षत ॥६॥ अन्याऽनिमीलिताभ्यां दृग्भ्यां तन्मुखं सेवमानापि नातृप्यत् । यथा तच्चरणं सेवंतः संतो न तृप्यंति तद्वत् ॥७॥ काचिन्नेत्रद्वारेण कृष्णं हृदये नीत्वा नेत्रे निमील्यालिंग्य योगीवानंदव्याप्ताऽऽस्ते स्म ॥८॥ एवं सर्वास्ता भगवद्दर्शनेन वियोगजं तापं जहुः ॥९॥ ततो गतशोकाभिर्गोपीभिर्वेष्टितः कृष्णोऽधिकं वभौ । यथा पुरुषः सत्वादिभिः शक्तिभिर्भाति तद्वत् ॥१०॥ ॥ ॥

ततः कृष्णस्ता आदाय कालिंद्यास्तटं प्रविश्य बभौ ॥११॥ कथंभूतं तटम् । शरत्कालीनचंद्रकिरणैर्ध्वस्तं-रात्रिगतं तिमिरं यस्मिंस्तत् सुखकरं नदीतरंगैरास्तृतमृदुवालुकं च ॥१२॥ ततश्च ता गोप्यः पूर्णकामाः सत्यः स्वकुचकुंकुमांकितैरुत्तरीयवस्त्रैरंतर्यामिणे कृष्णायासनं रचयामासुः ॥१३॥ तत्रोपविष्टः कृष्णो गोपीसभागतस्ताभिः संमानितश्च सन् शुशुभे ॥१४॥ ततो हास्ययुक्तलीलावलोकनेन विलासयुक्तया भ्रुकुट्योपलक्षिता गोप्यः स्वांककृतयोः श्रीकृष्णचरणहस्तयोः संमर्दनेन श्रीकृष्णस्य सत्कारं कृत्वा ईषत्कुपिताः सत्यो बभाषिरे ॥१५॥ गोप्य ऊचुः । हे कृष्ण, केचिल्लोकाः भजतः प्राणिनः प्रति तद्भजनानुसारेण भजंति । केचित्तु एतद्विपरीतं भजंति । केचित्तूभयविधानपि न भंजति । एतत्कथं तद्ब्रूहि ॥१६॥ तदा गोपीनामभिप्रायं ज्ञात्वा श्रीभगवानुवाच ॥ हे सख्यः, उपकारप्रत्युपकारतया ये परस्परं भजंति ते केवलं स्वार्थार्थम् । तत्र प्रेम धर्मश्च नास्ति॥१७॥अभजतो ये भजंति ते द्विविधाः ।

ताः समादाय कालिंद्या निर्विश्य पुलिनं विभुः ॥ विकसत्कुंदमंदारसुरभ्यनिलषट्पदम् ॥११॥ शरच्चंद्रांशुसंदोहध्वस्तदोपातमः शिवम् ॥ कृष्णाया हस्ततरलाचितकोमलवालुकम् ॥१२॥ तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथांतं श्रुतयो यथा ययुः ॥ स्वैरुत्तरीयैः कुचकुंकुमांकितैरची-क्लृपन्नासनमात्मबंधवे ॥१३॥ तत्रोपविष्टो भगवान्स ईश्वरो योगेश्वरांतर्हृदि कल्पितासनः ॥ चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥१४॥ सभाजयित्वा तमनंगदीपनं सहासलीलेक्षणविभ्रमभ्रुवा ॥ संस्पर्शनेनांककृतांघ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥१५॥ गोप्य ऊचुः ॥ भजतोऽनुभजंत्येक एक एतद्विपर्ययम् ॥ नोभयांश्च भजंत्येक एतन्नो ब्रूहि साधु भोः ॥१६॥ श्रीभगवानुवाच ॥ मिथो भजंति ये सख्यः स्वार्थैकांतोद्यमा हि ते ॥ न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥१७॥ भजंत्यभजतो ये वै करुणाः पितरो यथा ॥ धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥१८॥ भजतोऽपि न वै केचिद्भजंत्यभजतः कुतः ॥ आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥१९॥ नाहं तु सख्यो भजतोऽपि जंतून्भजाम्यमीषामनुवृत्तिवृत्तये ॥ यथाऽधनो लब्धधने विनष्टे तच्चिंतयाऽन्यन्निभृतो न वेद ॥२०॥ एवं मदर्थोज्झि-तलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः ॥ मया परोक्षं भजता तिरोहितं माऽसूयितुं मार्हथ तत्प्रियं प्रियाः ॥२१॥ ॥

साधवः स्नेहिनश्च । तत्र साधूनामुपदेशादिद्वारा निर्दोषो धर्मोऽस्ति । स्नेहिनां प्रेमद्वारा सुखं भवति ॥१८॥ ये केचिद्भजतोऽपि न भजंति । अभजतः कुतः । ते तु चतुर्विधाः । आत्मारामाः आप्त[3]कामाः मूढाः निर्दयाश्च ॥१९॥ तत्र चरमपक्षगतं निर्दयमात्मानं मन्यमाना गोपीः प्रत्याह । हे सख्यः, अहं तु एतेषां मध्ये न कोऽपि किंतु परमकारुणिकः परमसुहृच्चास्मि । यतोऽहं भजतां निरंतरध्यानप्रवृत्त्यर्थं तान्न भजामि । एतत्सदृष्टांतमाह । यथाऽधनो लब्धधने नष्टे सति तच्चिंतयाऽन्यत्क्षुत्पिपासादिकमपि न वेत्ति तद्वत् ॥२०॥ एवं मदर्थे त्यक्तलोकवेदज्ञातीनां युष्माकं मयि निश्चलवृत्तिलाभार्थं अहं गुप्तरीत्या स्थितः । अतो हे प्रियाः, प्रियं मां दोषारोपेण द्रष्टुं यूयं न योग्याः ॥२१॥ ॥

१ तद्भजनमनपेक्ष्य अभजतोऽपि भजंति ।२ अंतर्मुखहृदयः । ३ पूर्णकामत्वेन भोगेच्छारहिताः । ४ कृतोपकारानुसंधानरहिताः ।

हे प्रियाः, निष्कपटतया मत्सेवां कुर्वतीनां वः प्रत्युपकारं कर्तुं चिरकालेनाऽप्यहं न शक्नोमि । या यूयं दुश्छेद्यगृहशृंखलाश्छित्वा मामभजन् । तासां युष्माकं साधुकृत्येनैव तद्युष्मत्साधुकृत्यं प्रतिकृतं भवतु ॥२२॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे द्वात्रिंशोऽध्यायः॥३२॥ त्रयस्त्रिंशे ततो गोपीमंडलीमध्यगो हरिः । प्रियास्ता रमयामास ह्रदिनीवनकेलिभिः ॥१॥ श्रीशुक उवाच ॥ हे नृप, एवं कृष्णवचः श्रुत्वा गोप्यो वियोगजं तापं जहुः ॥१॥ तत्र यमुनापुलिने गोविंदोऽन्योन्यसंग्रथितबाहुभिः स्त्रीरत्नैः सह रासक्रीडां प्रारभत ॥२॥ ततो मंडलरूपेण स्थितानां गोपीनां द्वयोर्द्वयोर्मध्ये प्रविष्टेन श्रीकृष्णेन सह रासोत्सवः संप्रवृत्तः । तत्र गोप्यः स्वनिकटस्थं कृष्णं मामेवायमालिंगितवानिति मन्यंते स्म । तदा स्त्रीस-

न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः ॥ या माऽभजन्दुर्जरगेहशृंखलाः संवृश्च्य तद्वः प्रतियातु साधुना ॥२२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे रासक्रीडायां गोपीसांत्वनं नाम द्वात्रिंशोऽध्यायः ॥३२॥ ॥ श्रीशुक उवाच ॥ इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ॥ जहुर्विरहजं तापं तदंगोपचिताशिषः ॥१॥ तत्रारभत गोविंदो रासक्रीडामनुव्रतैः ॥ स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥२॥ रासोत्सवः संप्रवृत्तो गोपीमंडलमंडितः ॥ योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ प्रविष्टेन गृहीतानां कंठे स्वनिकटं स्त्रियः ॥३॥ यं मन्येरन्नभस्तावद्विमानशतसंकुलम् ॥ दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥४॥ ततो दुंदुभयो नेदुर्निपेतुः पुष्पवृष्टयः ॥ जगुर्गंधर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥५॥ वलयानां नूपुराणां किंकिणीनां च योषिताम् ॥ स प्रियाणामभूच्छब्दस्तुमुलो रासमंडले ॥६॥ तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः ॥ मध्ये मणीनां हैमानां महामरकतो यथा ॥७॥ पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुंडलैर्गंडलोलैः ॥ स्विद्यन्मुख्यः कबररशनाग्रंथयः कृष्णवध्वो गायंत्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥८॥ उच्चैर्जगुर्नृत्यमाना रक्तकंठ्यो रतिप्रियाः ॥ कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ काचित्समं मुकुंदेन स्वरजातीरमिश्रिताः ॥९॥ उन्निन्ये पूजिता तेन प्रीयता साधुसाध्विति ॥ तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥१०॥ ॥ ॥

हितानां देवानां विमानशतसंकुलमाकाशं बभूव ॥३॥४॥ तदा देवैर्वादिता दुंदुभयो नेदुः । देवकृताः पुष्पवृष्टयः पेतुः । सस्त्रीका गंधर्वाः कृष्णस्य निर्मलं यशो जगुः ॥५॥ तदा रासमंडले कृष्णसहितानां स्त्रीणां, वलयानां नूपुराणां किंकिणीनां च तुमुलः शब्दो बभूव ॥६॥ तत्र गोपीभिः सह कृष्णः स्वर्णमणिमध्ये नीलमणिरिव शुशुभे ॥७॥ तथा गोप्यः पादन्यासैर्हस्तचालनैर्हास्ययुक्तभ्रूविलासैश्चंचलैः कुचैः पटैश्च तथा गंडेषु चंचलैः कुंडलैश्च स्वेदयुक्तवदना भूत्वा गायंत्यः सत्यः कृष्णेन सह मेघसमूहे विद्युत इव विरेजुः ॥८॥ ता नृत्यंत्यो मधुरकंठ्यो रतिप्रिया गोप्य उच्चैर्जगुः । यासां गीतेन जगद्व्याप्तमासीत् ॥९॥ तत्र काचिद्गोपी कृष्णेन सह षड्जादिस्वरालापगतीरुच्चारयंती सती ता गतीः कृष्ण-

१ युष्मच्छीलेनैव समानृण्यं न तु मत्कृतप्रत्युपकारेणेत्यर्थः । २ रासो नाम बहुनर्तकीयुक्तो नृत्यविशेषस्तां क्रीडाम् । ३ तत्र नानामूर्तिः कृष्णो मेघचक्रमिव गोप्यस्तडित इव स्वेदस्तुषार इव गीतं गर्जितमित्येति यथासंभवमूह्यम् ।

गीताभिर्गतिभिरमिश्रिताश्चकार । तदा कृष्णेन साधुसाध्विति पूजिता सती तदेव गीतं पुनर्ध्रुवाख्यतालविशेषेण जगौ । तदा कृष्णस्तस्यै बहुमानं ददौ ॥१०॥ काचिद्गोपी रासपरिश्रांता सती कृष्णस्य स्कंधं बाहुना जग्राह । एका स्वस्कंधगतं चंदनालिप्तं कृष्णबाहुमाघ्राय हृष्टरोमा सती चुचुंब ॥११॥१२॥ कस्याश्चिद्गंडे गंडं संदधत्याः कृष्णस्तांबूलचर्वितं ददौ ॥१३॥ काचिन्नृत्यंती श्रांता सती कृष्णहस्तकमलं स्तनयोरधात् ॥१४॥ एवमन्या अपि गोप्यः कृष्णं कांतं लब्ध्वा कृष्णहस्ताभ्यां गृहीतकंठ्यः सत्यो गानं कृत्वा नानाविभ्रमैश्चिक्रीडिरे॥१५॥ ततो वादकेषु देवेषु गायकेषु च गंधर्वादिषु रसावेशेन मुह्यत्सु सत्सु । अन्यामेव वाद्यादिसंपत्तिं दर्शयन् राससंभ्रममाह । तदा गोप्यो राससभायां केशेभ्यो गलि-

काचिद्रासपरिश्रांता पार्श्वस्थस्य गदाभृतः ॥ जग्राह बाहुना स्कंधं श्लथद्वलयमल्लिका ॥११॥ तत्रैकांऽसगतं बाहुं कृष्णस्योत्पलसौरभम् ॥ चंदनालिप्तमाघ्राय हृष्टरोमा चुचुंब ह ॥१२॥ कस्याश्चिन्नाट्यविक्षिप्तकुंडलत्विषमंडितम् ॥ गंडं गंडे संदधत्या अदात्तांबूलचर्वितम् ॥१३॥ नृत्यंती गायती काचित्कूजन्नूपुरमेखला ॥ पार्श्वस्थाऽच्युतहस्ताब्जं श्रांताऽधात्स्तनयोः शिवम् ॥१४॥ गोप्यो लब्ध्वाऽच्युतं कांतं श्रिय एकांतवल्लभम् ॥ गृहीतकंठ्यस्तद्दोर्भ्यां गायंत्यस्तं विजह्रिरे ॥१५॥ कर्णोत्पलालकविटंककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ॥ गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥१६॥ एवं परिष्वंगकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ॥ रेमे रमेशो व्रजसुंदरीभिर्यथाऽर्भकः स्वप्रतिबिंबविभ्रमः ॥१७॥ तदंगसंगप्रमुदाकुलेंद्रियाः केशान्दुकूलं कुचपट्टिकां वा ॥ नांजः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह ॥१८॥ कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ॥ कामार्दिताः शशांकश्च सगणो विस्मितोऽभवत् ॥१९॥ कृत्वा तावंतमात्मानं यावतीर्गोपयोषितः ॥ रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥२०॥ तासामतिविहारेण श्रांतानां वदनानि सः ॥ प्रामृजत्करुणः प्रेम्णा शंतमेनांग पाणिना ॥२१॥ ॥ ॥ ॥ ॥

तपुष्पमालाः सत्यो वलयनूपुरघोषवाद्यैर्भ्रमरेषु गायकेषु सत्सु भगवता समं ननृतुः॥१६॥ एवं भगवानप्यालिंगन-करस्पर्शावलोकन-विलासहासैर्गोपीभिः सह रेमे । यथा बालः स्वप्रतिबिंबैः क्रीडति तद्वत् ॥१७॥ गोप्यस्तदंगसंगहर्षेण व्याप्तेंद्रियाः सत्यः केशान् वस्त्राणि कुचपट्टिकां वा यथापूर्वं धर्तुं समर्था न बभूवुः ॥१८॥ एवं कृष्णविक्रीडितं दृष्ट्वा देवस्त्रियोऽपि कामार्दिता भूत्वा मुमुहुः । चंद्रोऽपि शुक्रमंगलादिग्रहसहितः कामार्दितः सन् विस्मितो बभूव ॥१९॥ एवमात्मारामोऽपि कृष्णो यावत्यो गोपांगनास्तावंति रूपाणि कृत्वा ताभिः सह रेमे ॥२०॥ ततः क्रीडया श्रमितानां गोपीनां मुखानि कृष्णः सुखकरेण स्वपाणिना प्रामृजत् ॥२१॥ ॥ ॥ ॥

१ अनेन भगवान् स्वीयमेव सर्वकलाकौशलं सौगंध्यलावण्यमाधुर्यादि च तासु संचार्य ताभिः सह रेम इति सूचितम् । २ अनेनैतत्सूचितं भवति । चंद्रेण विस्मितेन गतौ विस्मृतायां सत्यां ततः प्राक्तनाः सर्वेऽपि ग्रहास्तत्रतत्रैव तस्थुस्ततश्चातिदीर्घासु रात्रिषु यथासुखं विजह्रुरिति ।

ततो गोप्योऽमृतायितहास्यावलोकनेन कृष्णस्य संमानं कुर्वत्यस्तस्य कर्माणि जगुः ॥२२॥ अथ जलक्रीडामाह। ततः कृष्णः श्रमं दूरीकर्तुं मालासंबंधिभिर्भ्रमरैरनुगतः सन् हस्तिनीभिर्गज इव गोपीभिः सह यमुनाया उदकं विवेश ॥२३॥ स कृष्णो गोपीभिरतिशयेन परिषिच्यमानः पुष्पवृष्टिं कुर्वद्भिर्देवैरीड्यमानश्च सन्नुदके रेमे ॥२४॥ अथ वनक्रीडामाह। ततश्च कृष्णो यमुनाया उपवने भृंगाणां स्त्रीणां च गणैर्वेष्टितः सन् गजीभिर्गज इव चचार ॥२५॥ एवं कृष्णश्चंद्रकिरणैः शोभिताः शरत्कालीनाः सर्वा निशाः आत्मन्यवरुद्धधातुः सन् सेवितवान् ॥२६॥ राजोवाच ॥ हे ब्रह्मन्, भगवान् धर्मस्थापनार्थं दुष्टानां नाशार्थं चावतीर्णः ॥२७॥ स धर्ममर्यादानां वक्ता कर्ता रक्षिता च सन् परस्त्रीसंभोगरूपं धर्मविरुद्धं कर्म कथं कृतवान् ॥२८॥ किंच। पूर्णकामोऽपि भगवान् निंद्यं कर्म केनाभिप्रायेण कृतवान्। एतं नः संशयं छिंधि ॥२९॥ परमेश्वरे कैमुतिकन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह ॥ श्रीशुक उवाच ॥ हे नृप, महतां धर्ममर्यादोलंघनं परस्त्रीसेवनादि साहसं च दृष्टम्। तत्तेषां तेजस्विनां दोषाय न भवति। यथा विष्ठाद्यमंगलं दहतोऽप्यग्नेस्तत्कर्म तस्य दोषाय न भवति तद्वत् ॥३०॥ तथाऽपि देहादिपरतंत्रो जन इदं शास्त्रविरुद्धं कर्म मनसाऽपि नाचरेत्। आचरंश्च यथा शिवं विनाऽन्यो विषं भक्षयन् म्रियेत तथा नश्येत् ॥३१॥ किंच। महतां वचः सत्यम्। तदन्येनाचरितव्यम्। महतामाचरणं तु क्वचित्सत्यं तत्तेषां वचसा विरुद्धं न चेत्तर्हि तदन्येनाचरितव्यम् ॥३२॥ ॥

गोप्यः स्फुरत्पुरटकुंडलकुंतलत्विङ्गंडश्रिया सुधितहासनिरीक्षणेन ॥ मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥२२॥ ताभिर्युतः श्रममपोहितुमंगसंगघृष्टस्रजः सकुचकुंकुमरंजितायाः ॥ गंधर्वपालिभिरनुद्रुत आविशद्वाः श्रांतो गजीभिरिभराडिव भिन्नसेतुः ॥२३॥ सोंऽभस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोंऽग ॥ वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेंद्रलीलः ॥२४॥ ततश्च कृष्णोपवने जलस्थलप्रसूनगंधानिलजुष्टदिक्तटे ॥ चचार भृंगप्रमदागणावृतो यथा मदच्युद्द्विरदः करेणुभिः ॥२५॥ एवं शशांकांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः ॥ सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः ॥२६॥ राजोवाच ॥ संस्थापनाय धर्मस्य प्रशमायेतरस्य च ॥ अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥२७॥ स कथं धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता ॥ प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम् ॥२८॥ आप्तकामो यदुपतिः कृतवान्वै जुगुप्सितम् ॥ किमभिप्राय एतं नः संशयं छिंधि सुव्रत ॥२९॥ श्रीशुक उवाच ॥ धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ॥ तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥३०॥ नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः ॥ विनश्यत्याचरन्मौढ्याद्यथा रुद्रोऽब्धिजं विषम् ॥३१॥ ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ॥ तेषां यत्स्ववचो युक्तं बुद्धिमांस्तत्समाचरेत् ॥३२॥

१ प्रजापतींद्रसोमविश्वामित्रादीनाम्।

यतो निरहंकारिणां महतां धर्माचरणेन स्वार्थो नास्ति । अधर्माचरणेनानर्थश्च नास्ति । किंतु प्रारब्धकर्मक्षपणमात्रमेव तेषां तत्कृत्यं नान्यत् ॥३३॥ अतः सर्वप्राणिनां नियंतुर्हरे-र्धर्माधर्माचरणाभ्यां पुण्यपापसंबंधो नास्तीति किं पुनर्वक्तव्यम् ॥३४॥ किंच । यस्य चरणकमलपरागनिषेवणेन तृप्ता मुनयो मुक्तबंधनाः संतः सर्वत्र स्वेच्छया चरंति । तस्येश्वरस्ये-च्छया गृहीतदेहस्य बंधः कुतः स्यान्न कुतोऽपि ॥३५॥ किंच । हे नृप, गोपीनां गोपानां सर्वदेहिनां च योंऽतश्चरति स सर्वसाक्षी भूतानामनुग्रहार्थं मनुष्यदेहमास्थितः सन् तादृशीः क्रीडा भजते । याः स्मृत्वा नरस्तत्परो भवेत् ॥३६॥३७॥ गोकुलवासिनः स्वस्वदारान् स्वस्वपार्श्वस्थान् मत्वा तन्मायामोहिताः संतः कृष्णाय नासूयन् ॥३८॥ ततो

कुशलाचरितेनैषामिह स्वार्थो न विद्यते ॥ विपर्ययेण वाऽनर्थो निरहंकारिणां प्रभो ॥३३॥ किमुताखिलसत्वानां तिर्यङ्मर्त्यदिवौकसाम् ॥ ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥३४॥ यत्पादपंकजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबंधाः ॥ स्वैरं चरंति मुनयोऽपि न नह्यमानास्तस्येच्छयात्तवपुषः कुत एव बंधः ॥३५॥ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ॥ योंऽतश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥३६॥ अनुग्रहाय भूतानां मानुषं देहमास्थितः ॥ भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ॥३७॥ नासूयन्खलु कृष्णाय मोहितास्तस्य मायया ॥ मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ॥३८॥ ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ॥ अनिच्छंत्यो ययुर्गोप्यः स्वगृहान्भगवत्प्रियाः ॥३९॥ विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः ॥ भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥४०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे रासक्रीडावर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥ ॥ श्रीशुक उवाच ॥ एकदा देवयात्रायां गोपाला जातकौतुकाः ॥ अनोभिरनडुद्युक्तैः प्रययुस्तेंऽबिकावनम् ॥१॥ तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम् ॥ आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेंऽबिकाम् ॥२॥ गावो हिरण्यं वासांसि मधुमध्वन्नमादृताः ॥ ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥३॥ ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः ॥ रजनीं तां महाभागा नंदसुनंदकादयः ॥४॥ ॥

गोप्यो ब्राह्मे मुहूर्ते प्राप्ते कृष्णाज्ञयाऽनिच्छंत्योऽपि गृहान् ययुः ॥३९॥ इदं व्रजस्त्रीभिः सह विष्णोः क्रीडितं यः शृणुयाद्वर्णयेद्वा स हरौ भक्तिं प्राप्य कामवासनामाशु त्यजति ॥४०॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे रासक्रीडावर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥ ॥ चतुस्त्रिंशेऽहिना ग्रस्तं नंदं हरिरमूमुचत् । विद्याध्रं चांगिरःशापाच्छंखचूडं तथाऽवधीत् ॥१॥ श्रीशुक उवाच ॥ एकदा महादेवयात्रायां जातकौतुका गोपालाः शकटैरंबिकावनं ययुः ॥१॥ तत्र सरस्वत्यां नद्यां स्नात्वा शिवमंबिकां चानर्चुः ॥२॥ ततो गोपा महादेवप्रीत्यर्थं ब्राह्मणेभ्यो गो-सुवर्ण-वस्त्रान्नानि ददुः ॥३॥ ततस्ते गोपाः केवलं जलं प्राश्य ब्रह्मचर्यादिव्रतधारिणः संतस्तत्र सरस्वतीनदीतीरे तां रात्रिं न्यवसन् ॥४॥ ॥

१ शृंगाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान् कर्तुमिति भावः । २ न त्वस्मदादितुल्योऽस्य देहः येन दोषः स्यादिति । ३ एवंभूतैश्वर्याभावे तथा कुर्वतः पापा ज्ञेया इति भावः ।

तस्मिन् वने एकोऽजगरः सर्पो बुभुक्षितः सन् तत्रागत्य शयानं नंदं जग्रास ॥५॥ स पादतो ग्रस्तो नंदो हे कृष्ण, कृष्ण, हे तात, सर्पो मां ग्रसते । अतः शरणागतं मां मोचयेति चुक्रोश ॥६॥ ततो गोपा नंदाक्रोशं श्रुत्वोत्थाय सर्पग्रस्तं नंदं दृष्ट्वा ज्वलितकाष्ठैः सर्पं ताडयामासुः ॥७॥ तैस्ताडितोऽपि दह्यमानोऽपि च सर्पो नंदं नामुंचत् । तदा कृष्णस्तत्रैत्य पदा तं सर्पमस्पृशत् ॥८॥ स सर्पो भगवत्पादस्पर्शाद्गतपापः सन् सर्पशरीरं हित्वा विद्याधरपूजितं स्वरूपं भेजे ॥९॥ तदा प्रकाशयुक्तशरीरेण पुरतः स्थितं सुवर्णपुष्पमालिनं कृतप्रणामं तं कृष्णः पप्रच्छ ॥१०॥ हे सर्प, अद्भुतदर्शनस्त्वं कः । कथं वा एतां सर्पयोनिं प्राप्तः ॥११॥ सर्प उवाच । हे कृष्ण, अहं सुदर्शन इति कश्चिद्विद्याधरः स्वरूपसंपत्त्या

कश्चिन्महानहिस्तस्मिन्विपिनेऽतिबुभुक्षितः ॥ यदृच्छयाऽऽगतो नंदं शयानमुरगोऽग्रसीत् ॥५॥ स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम् ॥ सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥६॥ तस्य चाक्रंदितं श्रुत्वा गोपालाः सहसोत्थिताः ॥ ग्रस्तं च दृष्ट्वा विभ्रांताः सर्पं विव्यधुरुल्मुकैः ॥७॥ अलातैर्दह्यमानोऽपि नामुंचत्तमुरंगमः ॥ तमस्पृशत्पदाऽभ्येत्य भगवान्सात्वतां पतिः ॥८॥ स वै भगवतः श्रीमत्पादस्पर्शहताशुभः ॥ भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥९॥ तमपृच्छद्धृषीकेशः प्रणतं समुपस्थितम् ॥ दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥१०॥ को भवान्परया लक्ष्म्या रोचतेऽद्भुतदर्शनः ॥ कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः ॥११॥ सर्प उवाच ॥ अहं विद्याधरः कश्चित्सुदर्शन इति श्रुतः ॥ श्रिया स्वरूपसंपत्त्या विमानेन चरन्दिशः ॥१२॥ ऋषीन्विरूपानंगिरसः प्राहसं रूपदर्पितः ॥ तैरिमां प्रापितो योनिं प्रलब्धैः स्वेन पाप्मना ॥१३॥ शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः ॥ यदहं लोकगुरुणा पदा स्पृष्टो हताशुभः ॥१४॥ तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम् ॥ आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥१५॥ प्रपन्नोऽस्मि महायोगिन्महापुरुष सत्पते ॥ अनुजानीहि मां देव सर्वलोकेश्वरेश्वर ॥१६॥ ब्रह्मदंडाद्विमुक्तोऽहं सद्यस्तेऽच्युत दर्शनात् ॥ यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च ॥ सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥१७॥ इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवंद्य च ॥ सुदर्शनो दिवं यातः कृच्छ्रान्नंदश्च मोचितः ॥१८॥ ॥

युतः सन् विमानेन दिशो गच्छन् ॥१२॥ कुरूपान् अंगिरस ऋषीन् दृष्ट्वा रूपेण गर्वितोऽहं तान् हसितवान् । तदोपसहितैस्तैः शापं दत्वेमामजगरयोनिं प्रापितः ॥१३॥ दयालुभिस्तैः शापो मेऽनुग्रहायैव दत्तः । येन शापेनाहं लोकगुरुणा त्वया पदा स्पृष्टः सन् गतपापो जातः ॥१४॥ हे दुःखनाशन, एवंभूतं त्वामहं स्वलोकं गंतुमनुज्ञां याचे ॥१५॥ हे कृष्ण, अहं तव शरणं गतोऽस्मि । हे देव, त्वं मां गंतुमाज्ञां देहि ॥१६॥ हे अच्युत, तव दर्शनाद्ब्रह्मशापमुक्तोऽहमस्मि । यन्नाम गृह्णन् पुमान् श्रोतॄनात्मानं च सद्यः पुनाति । तस्य तव पदा स्पृष्टोऽहं पवित्रो जात इत्यत्र किमाश्चर्यम् ॥१७॥ एवं कृष्णानुज्ञां गृहीत्वा तस्मै प्रदक्षिणां नमस्कारं च कृत्वा सुदर्शनः स्वर्गं गतः । नंदश्च संकटान्मोचितः ॥१८॥ ॥

गोपास्तत्कृष्णवैभवं दृष्ट्वा विस्मितचित्ताः संतस्तत्रांबिकावने कृतं नियमं समाप्य पुनर्व्रजं ययुः ॥१९॥ अथैकदा रामकृष्णौ स्त्रीणां मध्यगौ संतौ वने रात्र्यां विजह्रतुः ॥२०॥ तौ स्त्रीजनैरुपगीयमानौ मालाशोभितौ ॥२१॥ उदितचंद्रतारकं रात्रिमुखं सत्कुर्वंतौ संतौ सर्वभूतानां मनःश्रवणमंगलं गायनं चक्रतुः ॥२२॥२३॥ तद्गीतं श्रुत्वा मोहिता गोप्यो गतवस्त्रं देहं नाविदन् ॥२४॥ एवं तयो रामकृष्णयोः क्रीडतोर्गायतोश्च सतोः कुबेरानुचरः शंखचूड इति नामा गुह्यकस्तत्राजगाम ॥२५॥ स निर्भयः सन् तयो रामकृष्णयोः पश्यतोः सतोः तौ रक्षकौ यस्य तं क्रोशंतं स्त्रीजनं उत्तरदिशि हठात् प्रेरयामास ॥२६॥ तदा कृष्णरामेति क्रोशंतं स्त्रीगणं दृष्ट्वा तौ रामकृष्णावन्वधावताम् ॥२७॥ तौ मा भैष्टे-

निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः ॥ समाप्य तस्मिन्नियमं पुनर्व्रजं नृपा ययुस्तत्कथयंत आदृताः ॥१९॥ कदाचिदथ गोविंदो रामश्चाद्भुतविक्रमः ॥ विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥२०॥ उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः ॥ स्वलंकृतानुलिप्तांगौ स्रग्विणौ विरजोंऽबरौ ॥२१॥ निशामुखं मानयंतावुदितोडुपतारकम् ॥ मल्लिकागंधमत्तालिजुष्टं कुमुदवायुना ॥२२॥ जगतुः सर्वभूतानां मनःश्रवणमंगलम् ॥ तौ कल्पयंतौ युगपत्स्वरमंडलमूर्छितम् ॥२३॥ गोप्यस्तद्गीतमाकर्ण्य मूर्छिता नाविदन्नृप ॥ स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ॥२४॥ एवं विक्रीडतोः स्वैरं गायतोः संप्रमत्तवत् ॥ शंखचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥२५॥ तयोर्निरीक्षतो राजंस्तन्नाथं प्रमदाजनम् ॥ क्रोशंतं कालयामास दिश्युदीच्यामशंकितः ॥२६॥ क्रोशंतं कृष्ण रामेति विलोक्य स्वपरिग्रहम् ॥ यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥२७॥ मा भैष्टेत्यभयारावौ शालहस्तौ तरस्विनौ ॥ आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम् ॥२८॥ स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् ॥ विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया ॥२९॥ तमन्वधावद्गोविंदो यत्र यत्र स धावति ॥ जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन्स्त्रियो बलः ॥३०॥ अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः ॥ जहार मुष्टिनैवांग सहचूडामणिं विभुः ॥३१॥ शंखचूडं निहत्यैवं मणिमादाय भास्वरम् ॥ अग्रजायाददत्प्रीत्या पश्यंतीनां च योषिताम् ॥३२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे शंखचूडवधो नाम चतुस्त्रिंशत्तमोऽध्यायः ॥३४॥ ॥ ॥ ॥

त्यभयशब्दौ शालहस्तौ संतौ तं गुह्यकाधमं शीघ्रं प्रापतुः ॥२८॥ तदा शंखचूडः कालमृत्यू इव प्राप्तौ तौ दृष्ट्वा स्त्रीगणं त्यक्त्वा जीवितेच्छया प्राद्रवत् ॥२९॥ स गुह्यको यत्र यत्र धावति तत्र तत्र श्रीकृष्णस्तच्छिरोरत्नं गृहीतुमिच्छन् धावति स्म । बलस्तु स्त्रियो रक्षन् तत्रैव तस्थौ ॥३०॥ कृष्णः शंखचूडस्य समीपं गत्वा मुष्टिना चूडामणिसहितं तस्य मस्तकं जहार ॥३१॥ एवं शंखचूडं हत्वा मणिं गृहीत्वा सर्वस्त्रीणां पश्यंतीनां सतीनां तं मणिं बलरामाय ददौ ॥३२॥ ॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे शंखचूडवधो नाम चतुस्त्रिंशोऽध्यायः ॥३४॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ पंचत्रिंशे वनं याते कृष्णं गोकुलयोषितः । युग्मश्लोकानुगीतेन निन्युर्दुःखेन वासरान् ॥१॥ श्रीशुक उवाच ॥ हे नृप, गोप्य एवं रात्रिषु कृष्णेन सह क्रीडित्वा दिवा कृष्णे वनं गते सति कृष्णलीला गायंत्यः सत्यो दुःखेन दिवसान् निन्युः ॥१॥ गोप्यऊचुः । हे गोप्यः, वामवाहौ कृतवामकपोलः कृष्णोऽधरोष्ठे स्थापितं कोमलांगुलिभिराश्रितसप्तस्वरच्छिद्रं वेणुं यदा वादयति ॥२॥ तदा तच्छ्रुत्वा सिद्धस्त्रियः सिद्धैः सह वर्तमाना अपि कामवाणेभ्योऽर्पितचित्ताः सत्यो मोहं प्रापुः । मोहेन विस्मृतनीव्यश्च बभूवुः । एवंभूतस्य कृष्णस्य विरहं वयं कथं सहाम ॥३॥ हे अवलाः, इदमाश्चर्यं श्रृणुत । अयं नंदसूनुर्दुःखितजनानां सुखकरो यदा । वेणुनादं करोति ॥४॥ तदा वृषभा गावो मृगाश्च वेणुवाद्येन हृतचित्ता दंतैर्दष्टग्रासा उत्तंभितकर्णा लिखितचित्रमिवासन् । तस्य कृष्णस्य विरहं कथं सहाम ॥५॥ हे सखि, यदा वलरामसहितः कृष्णो मयूरपिच्छधातुपल्लवैः कृतमल्लवेषः सन् वेणुनादेन गा आह्व-

श्रीशुक उवाच ॥ गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ॥ कृष्णलीलाः प्रगायंत्यो निन्युर्दुःखेन वासरान् ॥१॥ गोप्य ऊचुः ॥ वामवाहुकृतवामकपोलो वलिगतभ्रुरधरार्पितवेणुम् ॥ कोमलांगुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुंदः ॥२॥ व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ॥ काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥३॥ हंत चित्रमवलाः श्रृणुतेदं हारहास उरसि स्थिरविद्युत् ॥ नंदसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥४॥ वृंदशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ॥ दंतदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥५॥ वर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिवर्हविडंबः ॥ कर्हिचित्सवल आलि स गोपैर्गाः समाह्वयति यत्र मुकुंदः ॥६॥ तर्हि भग्नगतयः सरितो वै तत्पदांबुजरजोऽनिलनीतम् ॥ स्पृहयतीर्वयमिवावहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥७॥ अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ॥ वनचरो गिरितटेषु चरंतीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥८॥ वनलतास्तरव आत्मनि विष्णुं व्यंजयंत्य इव पुष्पफलाढ्याः ॥ प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥९॥ दर्शनीयतिलको वनमालादिव्यगंधतुलसीमधुमत्तैः ॥ अलिकुलैरलघुगीतमभीष्टमाद्रियन्यर्हि संधितवेणुः ॥१०॥ सरसि सारसहंसविहंगाश्चारुगीतहृतचेतस एत्य ॥ हरिमुपासत ते यतचित्ता हंत मीलितदृशो धृतमौनाः ॥११॥ ॥ ॥ ॥ ॥

यति ॥६॥ तदा भग्नगतयो नद्यो वायुना प्रापितं तच्चरणकमलरजो वयमिव स्पृहयंत्यः स्थिरोदका भवंति । तस्य कृष्णस्य विर० ॥७॥ हे सखि, हरिर्गोपैर्वर्णितपराक्रमो गिरितटेषु चरंतीर्गा यदा वेणुना समाह्वयति ॥८॥ तदा वृक्षा वनलताश्च स्वस्मिन् विष्णुं प्रकटयंत्य इव पुष्पफलाढ्याः सत्यो मधुधाराः ससृजुः स्म । तस्य कृष्णस्य विर० ॥९॥ हे सखि, यदाऽतिसुंदरः श्रीकृष्णो भ्रमराणामुच्चैर्गीतमादरेण श्रृण्वन् वेणुं वादयति ॥१०॥ तदा सरोवरस्थाः सारसहंसपक्षिणो गीतेन हृतचित्ताः संतः कृष्णसमीपमागत्य मौनं धृत्वा तं कृष्णमुपासते । तस्य श्रीकृष्णस्य विरहं कथं सहाम ॥११॥ ॥ ॥ ॥ ॥

हे गोप्यः, यदा, सरामः कृष्णः पर्वततटेषु वर्तमानः सन् विश्वं हर्षयन् वेणुनादेन विश्वं पूरयति ॥१२॥ तदा मेघः कृष्णस्यातिक्रमणशंकितचित्तो भूत्वा मंदं मंदं गर्जति । तथा पुष्पैर्वर्षति । छायया छत्रं च विदधाति । तस्य कृष्णस्य विरहं कथं सहाम ॥१३॥ हे यशोदे, तव सुतो नानागोपक्रीडासु निपुणः सन् यदाऽधरोष्ठेऽर्पितवेणुर्भूत्वा निषादादि-सप्तस्वरालापान् प्रकटयति ॥१४॥ तदा तच्छ्रुत्वा ब्रह्मशिवेंद्रमुख्या देवा नम्रकंठचित्ताः संतस्तद्भेदाननिश्चित्य मोहं प्रापुः । तस्य कृष्णस्य विरहं कथं सहाम ॥१५॥ हे सखि, श्रीकृष्णो ध्वजादिचिह्नितैः स्वचरणकमलैर्व्रजभूमेर्गवादिखुराक्रमणव्यथां शमयन् वेणुं च वादयन् गज इव यदा व्रजति ॥१६॥ तदा तद्विलोकनेनार्पितकामवेगा वयं वृक्षगतिं गमिताः सत्यो मोहेन केशबंधं वस्त्रं वा न विदामः । तस्य कृष्णस्य विर० ॥१७॥ हे अबलाः श्रीहरिः, क्वचिद्देशे गोगणनार्थं ग्रथितमणिमालाधरः सन् गोपस्य स्कंधे भुजं कृत्वा

सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ॥ हर्षयन्यर्हि वेणुरवेण जातहर्ष उपरंभति विश्वम् ॥१२॥ महदतिक्रमणशंकितचेता मंदमंदमनुगर्जति मेघः ॥ सुहृदमभ्यवर्षत्सुमनोभिश्छायया च विदधत्प्रतपत्रम् ॥१३॥ विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निज-शिक्षाः ॥ तव सुतः सति यदाऽधरबिंबे दत्तवेणुरनयत्स्वरजातीः ॥१४॥ सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ॥ कवय आनतकंधरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥१५॥ निजपदाब्जदलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः ॥ व्रजभुवः शमयन्खुरतोदं वर्ष्मधुर्य-गतिरीडितवेणुः ॥१६॥ व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ॥ कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥१७॥ मणिधरः क्वचिदागणयन्गा मालया दयितगंधतुलस्याः ॥ प्रणयिनोऽनुचरस्य कदांऽसे प्रक्षिपन्भुजमगायत यत्र ॥१८॥ क्वणितवेणुरववंचित-चित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ॥ गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥१९॥ कुंददामकृतकौतुकवेषो गोपगोधन-वृतो यमुनायाम् ॥ नंदसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥२०॥ मंदवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन ॥ वंदिनस्तमुप-देवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥२१॥ वत्सलो व्रजगवां यदगध्रो वंद्यमानचरणः पथि वृद्धैः ॥ कृत्स्नगोधनमुपोह्य दिनांते गीतवेणुर-नुगेडितकीर्तिः ॥२२॥ उत्सवं श्रमरुचाऽपि दृशीनामुन्नयन्खुररजश्छुरितस्रक् ॥ दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥२३॥

यदाऽगायत ॥१८॥ तदा वेणुनादेन हृतचित्ताः कृष्णसार-हरिणस्त्रियो वयमिव त्यक्तगृहाशाः सत्यः कृष्णमाश्रयंते ततश्च न निवर्तंते । तस्य कृष्णस्य विरहं० ॥१९॥ हे सखि, नंदसू-नुर्गोपगोधनवेष्टितो यदा यमुनायां क्रीडितवान् ॥२०॥ तदा वायुः सुगंधशीतलस्पर्शेन तं संमानयन् वाति । तदा च गंधर्वादिगणा वाद्य-गीत-पुष्पवृष्ट्यादिभिः परित उपासत । तस्य कृष्णस्य विर० ॥२१॥ हे सख्यः, व्रजगवां हितकर्ता मार्गे ब्रह्मादिभिर्वंदितचरणः सायंकाले सर्वं गोधनमेकीकृत्य गीतवेणुः सन् ॥२२॥ खुररजोभिर्व्याप्तमालो नो नेत्राणां हर्षं प्रापयन् अयं कृष्ण आगच्छति पश्यत पश्यत ॥२३॥

॥ ॥ ॥ ॥

किंच । हे सख्यः, श्रीकृष्णो बदरपांडुवदनः स्वर्णकुंडलकांत्या शोभनं गंडस्थलं शोभयन्नस्मिन् सायंकाले व्रजगवामस्माकं च दिनतापं शमयन् समीपमायाति । एनं पश्यत ॥२४॥ ॥२५॥ श्रीशुक उवाच ॥ हे नृप, एवं व्रजस्त्रियः कृष्णलीला गायंत्यो दिनेष्वपि रेमिरे ॥२६॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे पंचत्रिंशोऽध्यायः ॥३५॥ ॥ षट्त्रिंशे तु हतेऽरिष्टे नारदोक्त्या बलाच्युतौ । वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, एवं कृष्णं प्राप्तं दृष्ट्वा व्रजस्य परमोत्सवे वर्तमाने सति तदा वृषभाकृतिररिष्टासुरः खुरैर्विदारितां महीं कंपयन् ॥१॥ वृषभजातिशब्दं कुर्वन् पदा महीं च विदारयन् पुच्छमूर्ध्वं कृत्वा शृंगाग्रेण तटान्युत्क्षिपन् ॥२॥ किंचित्

मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ॥ बदरपांडुवदनो मृदुगंडं मंडयन्कनककुंडललक्ष्म्या ॥२४॥ यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनांते ॥ मुदितवक्त्र उपयाति दुरंतं मोचयन्व्रजगवां दिनतापम् ॥२५॥ श्रीशुक उवाच ॥ एवं व्रजस्त्रियो राजन्कृष्णलीलानुगायतीः ॥ रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महोदयाः ॥२६॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे वृंदावनक्रीडायां गोपिकायुगलगीतं नाम पंचत्रिंशोऽध्यायः ॥३५॥ ॥ श्रीशुक उवाच ॥ अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः ॥ महीं महाककुत्कायः कंपयन्खुरविक्षताम् ॥१॥ रंभमाणः खरतरं पदा च विलिखन्महीम् ॥ उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥२॥ किंचित्किंचिच्छकृन्मुंचन्मूत्रयंस्तब्धलोचनः ॥ यस्य निर्ह्रादितेनांग निष्ठुरेण गवां नृणाम् ॥३॥ पतंत्यकालतो गर्भाः स्रवंति स्म भयेन वै ॥ निर्विशंति घना यस्य ककुद्यचलशंकया ॥४॥ तं तीक्ष्णशृंगमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ॥ पशवो दुद्रुवुर्भीता राजन्संत्यज्य गोकुलम् ॥५॥ कृष्ण कृष्णेति ते सर्वे गोविंदं शरणं ययुः ॥ भगवानपि तद्वीक्ष्य गोकुलं भयविद्रुतम् ॥६॥ मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ॥ गोपालैः पशुभिर्मंद त्रासितैः किमसत्तम ॥७॥ बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ॥ इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोपयन् ॥८॥ सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ॥ सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥९॥ ॥

किंचित् विष्ठां मूत्रं चोत्सृजन् गोकुलनिकटे प्राप्तः । यस्य शब्देन गवां नारीणां च गर्भा अकाले स्रवंति पतंति च । तथा यस्य स्कंधे पर्वतशंकया मेघा निर्विशंति ॥३॥४॥ तं तीक्ष्णशृंगं दैत्यं दृष्ट्वा गोप्यो गोपाश्च त्रासं प्रापुः । पशवो व्रजं हित्वा दुद्रुवुः ॥ ५ ॥ तदा सर्वे गोपाः कृष्णकृष्णेति गोविंदं शरणं ययुः । भगवांश्च भयविद्रुतं व्रजं दृष्ट्वा ॥६॥ मा भैष्टेति गिराऽऽश्वास्य दैत्यमाह्वयत् । हे मंद, त्रासितैर्गोपैः पशुभिश्च किम् ॥७॥ त्वादृशानां दुष्टानां बलदर्पहाऽहमस्मि । इत्युक्त्वा करतलेन बाहुमास्फोट्य तं कोपयन् ॥८॥ सख्युः स्कंधे भुजं कृत्वा कृष्णः स्थितः । एवं कोपितो दैत्यः खुरेण भुवमुल्लिखन् क्रुद्धः सन् कृष्णमुपाद्रवत् ॥९॥ ॥ ॥ ॥

१ आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः । अत ऊर्ध्वं प्रसूतिः स्यात् ।

अग्र-न्यस्त-श्रृंगाग्रः स स्तब्धलोचनः कटाक्षेण वक्रं दृष्ट्वेंद्रमुक्तो वज्र इव कृष्णमधावत् ॥१०॥ ततः कृष्णस्तं श्रृंगयोर्धृत्वाऽष्टादश पदानि पश्चादपोवाह ॥११॥ एवमपक्षिप्तः स पुनरुत्थाय क्रोधेन निःश्वसन् कृष्णमुपाद्रवत् ॥१२॥ तदा आगतं तं कृष्णः श्रृंगयोः प्रगृह्य भूतले निपात्य पदाऽऽक्रम्यार्द्रवस्त्रमिव निष्पीडयामास ॥ ततः श्रृंगमुत्पाट्य तेनैव तं जघान । तदा स भूमौ पपात ॥१३॥ ततः स रक्तं वमन् पादान् क्षिपन् शकृन्मूत्रं च समुत्सृजन् मृत्युं प्राप । तदा देवाः पुष्पवृष्टिं कृत्वा कृष्णं तुष्टुवुः ॥१४॥ एवं दैत्यं हत्वा गोपैः स्तूयमानः सबलः कृष्णो व्रजं विवेश ॥१५॥ एवं कृष्णेन दैत्ये हते सति नारदस्तद्दृष्ट्वा मथुरामेत्य कंसाय जगाद ॥१६॥ हे कंस, देवक्या अष्टमगर्भत्वेन प्रसिद्धां कन्यां

अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ॥ कटाक्षिप्याद्रवत्तूर्णमिंद्रमुक्तोऽशनिर्यथा ॥१०॥ गृहीत्वा श्रृंगयोस्तं वा अष्टादश पदानि सः ॥ प्रत्यपोवाह भगवान्गजः प्रतिगजं यथा ॥११॥ सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः ॥ आपतत्स्विन्नसर्वांगो निःश्वसन्क्रोधमूर्छितः ॥१२॥ तमापतंतं स निगृह्य श्रृंगयोः पदा समाक्रम्य निपात्य भूतले ॥ निष्पीडयामास यथाऽऽर्द्रमंबरं कृत्वा विषाणेन जघान सोऽपतत् ॥१३॥ असृग्वमन्मूत्रशकृत्समुत्सृजन्क्षिपंश्च पादाननवस्थितेक्षणः ॥ जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरंतो हरिमीडिरे सुराः ॥१४॥ एवं कुकुद्मिनं हत्वा स्तूयमानः स्वजातिभिः ॥ विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः ॥१५॥ अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा ॥ कंसायाथाह भगवान्नारदो देवदर्शनः ॥१६॥ यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च ॥ रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥१७॥ न्यस्तौ स्वमित्रे नंदे वै याभ्यां ते पुरुषा हताः ॥ निशम्य तद्भोजपतिः कोपात्प्रचलितेंद्रियः ॥१८॥ निशातमसिमादत्त वसुदेवजिघांसया ॥ निवारितो नारदेन तत्सुतौ मृत्युमात्मनः ॥१९॥ ज्ञात्वा लोहमयैः पाशैर्बबंध सह भार्यया ॥ प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ॥२०॥ प्रेषयामास हन्येतां भवता रामकेशवौ ॥ ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥२१॥ अमात्यान्हस्तिपांश्चैव समाहूयाऽह भोजराट् ॥ भो भो निशम्यतामेतद्वीरचाणूरमुष्टिकौ ॥२२॥ ॥ ॥ ॥ ॥

यशोदायाः सुतां जानीहि । यशोदासुतत्वेन प्रसिद्धं कृष्णं च देवक्या अष्टमं पुत्रं जानीहि । रोहिणीपुत्रं रामं च देवक्याः सप्तमं पुत्रं जानीहि ॥१७॥ तौ पुत्रौ भीत्या वसुदेवेन स्वमित्रस्य नंदस्य गृहे स्थापितौ । याभ्यां तवाघासुरादयः । पुरुषा हताः । तच्छ्रुत्वा कोपात्प्रचलितेंद्रियः कंसो वसुदेवं हंतुं खड्गं जगृहे । तदा नारदेन युक्तिं[1] कथयित्वा निवारितः ॥१८॥१९॥ तदा कंसस्तौ स्वमृत्यू ज्ञात्वा वसुदेवं देवकीं च लोहमयैः पाशैर्बबंध । एवं कृत्वा नारदे गते कंसः केशिनमाहूय ॥२०॥ हे केशिन्, त्वया गोकुलं गत्वा रामकृष्णौ हन्येताम् । इत्युक्त्वा तं प्रेषयामास । ततः कंसो मुष्टिक-चाणूर-शल-तोशलकादीन् ॥२१॥ अमात्यान् हस्तिपांश्चाहूयाह । भो भोश्चाणूरमुष्टिकादयः यूयं, मे वचः श्रूयताम् ॥२२॥

१ हते वसुदेवे रामकृष्णौ गोकुलात्पलायेतामतो वसुदेवो न हंतव्यः किंतु बंधनीयः एवं कृते वसुदेवं मोचयितुं तावत्रागच्छेतामिति युक्तिः ।

नंदव्रजे वसुदेवसुतावासाते । ताभ्यां मम मृत्युर्विधात्रा दर्शितः ॥२३॥ अत इह प्राप्तौ तौ भवद्भ्यां मल्ललीलया हन्येताम् । हे सेवकाः, मल्लरंगे विविधा मंचाः क्रियंताम् । तत्रोपविश्य सर्वे पौरा जानपदाश्च यथेच्छं मल्लयुद्धं पश्यंतु ॥२४॥ हे महामात्र, त्वया रंगद्वारि कुवलयापीडो गजो नीयताम् । तेन तौ मम शत्रू तत्र जहि ॥२५॥ किंच । चतुर्दश्यां धनुर्याग आरभ्यताम् । तत्र पशुमांसेन वरदाय रुद्राय बलिं समर्पयत ॥२६॥ एवमाज्ञाय कंसोऽक्रूरमाहूय स्वहस्तेन तस्य हस्तं गृहीत्वा तमाह ॥२७॥ हे अक्रूर, मम मित्रकृत्यं क्रियताम् । भोजवृष्णिषु मे हितकर्ता त्वत्तोऽन्यो नास्ति ॥२८॥ अतो महत्कार्यकर्तारं त्वामाश्रितोऽस्मि । यथेंद्रो वामनरूपं विष्णुमाश्रित्य स्वार्थं साधितवान् ॥२९॥ त्वं नंदव्रजं

नंदव्रजे किलासाते सुतावानकदुंदुभेः ॥ रामकृष्णौ ततो मह्यं मृत्युः किल निदर्शितः ॥२३॥ भवद्भ्यामिह संप्राप्तौ हन्येतां मल्ललीलया ॥ मंचाः क्रियंतां विविधा मल्लरंगपरिश्रिताः ॥ पौरा जानपदाः सर्वे पश्यंतु स्वैरसंयुगम् ॥२४॥ महामात्र त्वया भद्र रंगद्वार्युपनीयताम् ॥ द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥२५॥ आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ॥ विशसंतु पशून्मेध्यान्भूतराजाय मीढुषे ॥२६॥ इत्याज्ञाप्यार्थतंत्रज्ञ आहूय यदुपुंगवम् ॥ गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥२७॥ भो भो दानपते मह्यं क्रियतां मैत्रमादृतः ॥ नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥२८॥ अतस्त्वामाश्रितः सौम्य कार्यगौरवसाधनम् ॥ यथेंद्रो विष्णुमाश्रित्य स्वार्थमध्यगमद्विभुः ॥२९॥ गच्छ नंदव्रजं तत्र सुतावानकदुंदुभेः ॥ आसाते ताविहानेन रथेनानय मा चिरम् ॥३०॥ निसृष्टः किल मे मृत्युर्देवैर्वैकुंठसंश्रयैः ॥ तावानय समं गोपैर्नंदाद्यैः साभ्युपायनैः ॥३१॥ घातयिष्य इहानीतौ कालकल्पेन हस्तिना ॥ यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥३२॥ तयोर्निहतयोस्तप्तान्वसुदेवपुरोगमान् ॥ तद्बंधून्निहनिष्यामि वृष्णिभोजदशार्हकान् ॥३३॥ उग्रसेनं च पितरं स्थविरं राज्यकामुकम् ॥ तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥३४॥ ततश्चैषा मही मित्र भवित्री नष्टकंटका ॥ जरासंधो मम गुरुर्द्विविदो दयितः सखा ॥३५॥ शंबरो नरको बाणो मय्येव कृतसौहृदाः ॥ तैरहं सुरपक्षीयान्हत्वा भोक्ष्ये महीं नृपान् ॥३६॥ एतज्ज्ञात्वाऽऽनय क्षिप्रं रामकृष्णाविहार्भकौ ॥ धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥३७॥ ॥ ॥ ॥ ॥

गच्छ । तत्र वसुदेवस्य पुत्रावासाते । ताविहानेन रथेन शीघ्रमानय ॥३०॥ ताभ्यां मम मृत्युर्देवैर्निर्मितः । अत उपायनसहितैर्नंदादिगोपैः सह ताविहानय ॥३१॥ इहानीतौ तौ मृत्युतुल्येन हस्तिना घातयिष्ये । यदि तस्मान्मुक्तौ तर्हि वज्रतुल्यैर्मल्लैर्घातयिष्ये ॥३२॥ एवं तयोर्हतयोः सतोस्तद्बंधून् वसुदेवमुख्यान् यादवानहं हनिष्यामि ॥३३॥ तथा वृद्धं राज्यकामुकं मे पितरं तद्बंधुं देवकं येऽन्ये च मम शत्रवस्तानपि हनिष्यामि ॥३४॥ ततश्चेयं मही नष्टशत्रुर्भविष्यति । जरासंधो मम गुरुः । द्विविदो वानरो मे मित्रः ॥३५॥ शंबरः नरको बाणश्चैते मम सखायः । तैरहं देवपक्षीयान्नृपान् हत्वा महीं भोक्ष्ये ॥३६॥ हे अक्रूर, एतज्ज्ञात्वा धनुर्मखावलोकनार्थं मथुराशोभां च द्रष्टुं तौ रामकृष्णौ शीघ्रमिहानय ॥३७॥

अक्रूर उवाच। हे राजन्, तवेच्छितं स्वमरणनिवर्तकं सम्यगस्ति। परंतु सिद्ध्यसिद्ध्योः समं कुर्यात्। यतः फलसाधनं दैवमेव ॥३८॥ किंच। अयं जनो दैवहतानपि मनोरथान् करोति। कृत्वा च हर्षशोकाभ्यां युज्यते। तथापि तवाज्ञामहं करोमि ॥३९॥ श्रीशुक उवाच ॥ एवमक्रूरमादिश्य मंत्रिणश्च विसृज्य कंसो गृहं विवेश। अक्रूरोऽपि स्वगृहं ययौ ॥४०॥ इति श्रीद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे अक्रूरसंप्रेषणं नाम षट्त्रिंशोऽध्यायः ॥३६॥ ॥ सप्तत्रिंशे हते केशिन्यच्युतो भाति कर्मभिः। नारदेन स्तुतः क्रीडन् व्योमासुरमथावधीत् ॥१॥ श्रीशुक उवाच। हे नृप, कंसप्रेरितः केशी तु अश्वरूपधरः खुरैर्महीं विदारयन् सटाभिरितस्ततः क्षिप्तैर्मेघैर्विमानैश्च व्याप्तमाकाशं कुर्वन् विश्वं च भीष-

अक्रूर उवाच ॥ राजन्मनीषितं सध्र्यक् तव स्वावद्यमार्जनम् ॥ सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलसाधनम् ॥३८॥ मनोरथान्करोत्युच्चैर्जनो दैवहतानपि ॥ युज्यते हर्षशोकाभ्यां तथाऽप्याज्ञां करोमि ते ॥३९॥ श्रीशुक उवाच ॥ एवमादिश्य चाक्रूरं मंत्रिणश्च विसृज्य सः ॥ प्रविवेश गृहं कंसस्तथाऽक्रूरः स्वमालयम् ॥४०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धेऽक्रूरसंप्रेषणं नाम षट्त्रिंशोऽध्यायः ॥३६॥ ॥ श्रीशुक उवाच ॥ केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन्मनोजवः ॥ सटावधूताभ्रविमानसंकुलं कुर्वन्नभो हेषितभीषिताखिलः ॥१॥ (विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहांबुदोपमः ॥ दुराशयः कंसहितं चिकीर्षुर्व्रजं स नंदस्य जगाम कंपयन् ॥१॥) तं त्रासयंतं भगवान्स्वगोकुलं तद्धेषितैर्वालविघूर्णितांबुदम् ॥ आत्मानमाजौ मृगयंतमग्रणीरुपाह्वयत्स व्यनदन्मृगेंद्रवत् ॥२॥ स तं निशाम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः ॥ जघान पद्भ्यामरविंदलोचनं दुरासदश्चंडजवो दुरत्ययः ॥३॥ तद्वंचयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः ॥ सावज्ञमुत्सृज्य धनुःशतांतरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥४॥ स लब्धसंज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसाऽऽपतद्धरिम् ॥ सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन्प्रवेशयामास यथोरगं बिले ॥५॥ दंता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा ॥ बाहुश्च तद्देहगतो महात्मनो यथाऽऽमयः संववृधे उपेक्षितः ॥६॥ ॥ ॥ ॥

यन् ॥१॥ (विशालनेत्रो नीलमहाघनोपमः स केशी कंसहितं चिकीर्षुः सन् नंदस्य व्रजं जगाम ॥१॥) तदा कृष्णो गोकुलं शब्दैस्त्रासयंतमात्मानं युद्धार्थं मृगयंतं च तं दैत्यं दृष्ट्वा पुरतो भूत्वा तं स्वसमीपमाजुहाव। तच्छ्रुत्वा स दैत्यः सिंह इव ननाद ॥२॥ ततः स केशी कृष्णं दृष्ट्वा मुखेन खं पिबन्निव मुखं विवृत्य कृष्णसंमुखमाजगाम। ततः पश्चात्पद्भ्यां कृष्णं जघान ॥३॥ तद्धननं वंचयित्वा कृष्णो रुषा तं दोर्भ्यां पादयोर्धृत्वा भ्रामयित्वा धनुःशतांतरे त्यक्त्वा तथैव स्थितो बभूव ॥४॥ पुनः सावधानः स उत्थाय मुखं प्रसार्य कृष्णंप्रति प्राद्रवत्। कृष्णोऽपि तन्मुखे दक्षिणभुजं बिले सर्पमिव प्रवेशयामास ॥५॥ ततश्चर्वणाय कृष्णभुजस्पर्शिनस्तस्य दंता निपेतुः। तद्देहगतः कृष्णबाहुश्च जलोदर-

रोग इव ववृधे ॥६॥ एवं वर्धमानेन कृष्णवाहुना रुद्धवायुः स दैत्यश्चरणान् क्षिपन् भ्रमितनेत्रो लेंडं विसृजन् गतप्राणो भूत्वा भूमौ पपात ॥७॥ ततः कृष्णः पक्व-कर्कटिकाफलवद्विदीर्णात्तस्य देहाद्भुजमाकृष्य पुष्पवृष्टिं कुर्वद्भिर्देवैः स्तुतो बभूव ॥८॥ ततो भगवद्भक्तो नारद एत्य कृष्णमेकांते बभाषे ॥९॥ हे कृष्ण, हे योगेश्वर, हे जगदीश्वर, हे वासुदेव, हे प्रभो, ॥१०॥ हे ईश, त्वं सर्वभूतानामात्मा साक्षी असि ॥११॥ भवान् मायया पूर्वं गुणान् ससर्ज । तैर्गुणैरिदं विश्वं सृजसि रक्षसि संहरसि च ॥१२॥ स त्वं दैत्यप्रमथरक्षसां नाशाय धर्म-मर्यादानां च रक्षणायावतीर्णोऽसि ॥१३॥ हे कृष्ण, अयमश्वाकृतिर्दैत्यस्त्वया लीलया हत एतद्दिष्ट्या । यस्य शब्देन त्रस्ता देवाः स्वर्गं त्यजंति ॥१४॥ किंच । अद्यैवात्र गोकु-

समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ॥ प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेंडं विसृजन्क्षितौ व्यसुः ॥७॥ तद्देहतः कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः ॥ अविस्मितोऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिविषद्भिरीडितः ॥८॥ देवर्षिरुपसंगम्य भागवत-प्रवरो नृप ॥ कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥९॥ कृष्ण कृष्णाप्रमेयात्मन्योगेश जगदीश्वर ॥ वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥१०॥ त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् ॥ गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥११॥ आत्मनाऽऽत्माश्रयः पूर्वं मायया ससृजे गुणान् ॥ तैरिदं सत्यसंकल्पः सृजस्यत्स्यवसीश्वरः ॥१२॥ स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम् ॥ अवतीर्णो विनाशाय सेतूनां रक्षणाय च ॥१३॥ दिष्ट्या ते निहतो दैत्यो लीलयाऽयं हयाकृतिः ॥ यस्य हेषितसंत्रस्तास्त्यजंत्यनिमिषा दिवम् ॥१४॥ चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम् ॥ कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥१५॥ तस्यानु शंखयवनमुराणां नरकस्य च ॥ पारिजातापहरणमिंद्रस्य च पराजयम् ॥१६॥ उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणम् ॥ नृगस्य मोक्षणं पापाद्द्वारकायां जगत्पते ॥१७॥ स्यमंतकस्य च मणेरादानं सह भार्यया ॥ मृतपुत्रप्रदानं च ब्राह्मणस्य स्वधामतः ॥१८॥ पौंड्रकस्य वधं पश्चात्काशिपुर्याश्च दीपनम् ॥ दंतवक्रस्य निधनं चैद्यस्य च महाक्रतौ ॥१९॥ यानि चान्यानि वीर्याणि द्वारकामावसन्भवान् ॥ कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि ॥२०॥ अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै ॥ अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः ॥२१॥ ॥ ॥ ॥

लेऽक्रूर एष्यति । त्वं श्वो मथुरां गंताऽसि । परश्वो हस्तिनं चाणूरं मुष्टिकमन्यान् मल्लान् कंसं च त्वया निहतं द्रक्ष्यामि ॥१५॥ तदनंतरं च पंचजन-कालयवनादीनां वधं पारिजातापहरणमिंद्रपराजयम् ॥१६॥ वीरकन्यानामुद्वाहं पापान्नृगस्य मोक्षणम् ॥१७॥ जांबवत्या सह स्यमंतकमणेरानयनं महाकालपुरादानीय ब्राह्मणस्य मृतपुत्रप्रदानं च द्रक्ष्यामि ॥१८॥ ततः पौंड्रकवधं वाराणस्या दहनं दंतवक्रनिधनं, युधिष्ठिरस्य राजसूये यज्ञे शिशुपालस्य नाशम् ॥१९॥ तथा यानि चान्यानि चरित्राणि द्वारकायां वसन् त्वं करिष्यसि तान्यहं द्रक्ष्यामि ॥२०॥ अथ भूभारं हरतः कालरूपस्यार्जुनसारथेस्तवाक्षौहिणीनां निधनं द्रक्ष्यामि ॥२१॥ ॥ ॥ ॥

एवं विज्ञाप्य नमस्करोति । हे कृष्ण, केवलं ज्ञानैकमूर्तिं स्वरूपस्थित्यैव प्राप्तसर्वमनोरथं सत्यसंकल्पं स्वकीयया चैतन्यशक्त्या नित्यनिवृत्तमायागुणप्रवाहं निरतिशयैश्वर्यं भगवंतं त्वां शरणं व्रजेम ॥२२॥ किंच । ईश्वरं क्रीडार्थं स्वीकृतमनुष्यदेहं यदुवृष्णिसात्वतां श्रेष्ठं त्वां नतोऽस्मि ॥२३॥ श्रीशुक उवाच ॥ एवमुक्त्वा नारदः कृष्णं प्रणिपत्य तदनुज्ञातः सन् ययौ ॥२४॥ भगवान् कृष्णोऽपि केशिनं हत्वा प्रीतैर्गोपालैः सह पशून् पालयामास ॥२५॥ एकदा ते गोपा गोवर्धनपर्वतस्य परितः पशून् चारयंतः संतश्चोरपालमिषेण निलायनक्रीडाश्चक्रुः ॥२६॥ तत्र कतिचिच्चोराः कतिचित्पालाः कतिचिन्मेषवच्च संतो निर्भया विजह्रुः ॥२७॥ तत्र मयपुत्रो व्योमासुरो गोपालवेषं धृत्वा चोरवदाचरितः सन् मेषवदाचरितान् गोपानपकृष्य निनाय ॥२८॥ ततः स दैत्यो नीतं नीतं गोपं पर्वतगुहायां निक्षिप्य शिलया द्वारं छादितवान् । एवं पुनःपुनः कृते, स्थले मेषायिता गोपाश्चतुःपंचा-

विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवांछितम् ॥ स्वतेजसा नित्यनिवृत्तमायागुणप्रवाहं भगवंतमीमहि ॥२२॥ त्वामीश्वरं स्वाश्रय-मात्ममायया विनिर्मिताशेषविशेषकल्पनम् ॥ क्रीडार्थमद्यात्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम् ॥२३॥ श्रीशुक उवाच ॥ एवं यदुपतिं कृष्णं भागवतप्रवरो मुनिः ॥ प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः ॥२४॥ भगवानपि गोविंदो हत्वा केशिनमाहवे ॥ पशूनपा-लयत्पालैः प्रीतैर्व्रजसुखावहः ॥२५॥ एकदा ते पशून्पालाश्चारयंतोऽद्रिसानुषु ॥ चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः ॥२६॥ तत्रासन्कतिचि-च्चोराः पालाश्च कतिचिन्नृप ॥ मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥२७॥ मयपुत्रो महामायो व्योमो गोपालवेषधृक् ॥ मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥२८॥ गिरिदर्यां विनिक्षिप्य नीतं नीतं महासुरः ॥ शिलया पिदधे द्वारं चतुःपंचावशेषिताः ॥२९॥ तस्य तत्कर्म विज्ञाय कृष्णः शरणदः सताम् ॥ गोपान्नयंतं जग्राह वृकं हरिरिवौजसा ॥३०॥ स निजं रूपमास्थाय गिरींद्रसदृशं बली ॥ इच्छन्विमोक्तमात्मानं नाशक्नोद्ग्रहणातुरः ॥३१॥ तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले ॥ पश्यतां दिवि देवानां पशुमारममारयत् ॥३२॥ गुहापिधानं निर्भिद्य गोपान्निःसार्य कृच्छ्रतः ॥ स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥३३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे व्योमासुरवधो नाम सप्तत्रिंशोऽध्यायः॥३७॥ ॥ श्रीशुक उवाच ॥ अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः ॥ उषित्वा रथमास्थाय प्रययौ नंदगोकुलम् ॥१॥

वशेषिताः ॥२९॥ कृष्णस्तस्य तत्कर्म ज्ञात्वा सिंहो वृकमिव तं जग्राह ॥३०॥ स पर्वततुल्यं स्वरूपं धृत्वा कृष्णादात्मानं विमोक्तुमिच्छन्नाशक्नोत् ॥३१॥ ततः कृष्णस्तं दोर्भ्यां धृत्वा भूतले निपात्य दिवि देवानां पश्यतां यज्ञे यथा पशुं मारयंति तथा श्वासहीनं तं कृत्वाऽमारयत् ॥३२॥ ततः कृष्णो गुहाया आच्छादनं निर्भिद्य गोपान् निःसार्य ततो गोपैर्देवैश्च स्तूयमानः सन् व्रजं विवेश ॥३३॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे सप्तत्रिंशोऽध्यायः ॥३७॥ अष्टत्रिंशे यथा ध्यायन्नक्रूरो गोकुलं गतः । तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः ॥१॥ श्रीशुक उवाच ॥ हे नृप, अक्रूरोऽपि मथुरायां तां रात्रिमुषित्वा प्रातरेव रथमारुह्य नंदगोकुलं ययौ ॥१॥ ॥ ॥

स पथि गच्छन् कृष्णे परां भक्तिं प्राप्येदमचिंतयत् ॥२॥ मया किं कल्याणकारकं कर्म कृतं किं तपश्चरितं किंवा योग्याय दत्तं यतोऽद्य हरिं द्रक्ष्यामि ॥३॥ विषयासक्तचित्तस्य मम कृष्णदर्शनं दुर्लभं मन्ये ॥४॥ यद्वा नीचस्यापि मम कृष्णदर्शनं स्यात्। यथा कालनद्या ह्रियमाणः कश्चित्पुमान् तरति तद्वत् ॥५॥ किंच। अद्य मम पापं नष्टं जन्म च सफलं जातम्। यतोऽहं हरिं नमस्ये ॥६॥ अद्य कंसो मेऽनुग्रहं कृतवान्। यतस्तेन प्रेरितोऽहं श्रीकृष्णचरणकमलं द्रक्ष्यामि ॥७॥ यच्चरणकमलं ब्रह्मशिवादिभिर्लक्ष्म्या भक्तैश्चाचिंतम्। यच्च गोचारणार्थं गोपालैः सह वनेऽचरत्। तदहं द्रक्ष्यामि ॥८॥ तथा सुकपोलनासिकं हास्यावलोकनसहितं श्रीकृष्णमुखं च द्रक्ष्यामि। यतो हरिणा मम दक्षिणतश्च-

गच्छन्पथि महाभागो भगवत्यंबुजेक्षणे ॥ भक्तिं परामुपगत एवमेतदचिंतयत् ॥२॥ किं मयाऽऽचरितं भद्रं किं तप्तं परमं तपः ॥ किं वाथाऽप्यर्हते दत्तं यद्द्रक्ष्याम्यद्य केशवम् ॥३॥ ममैतद्दुर्लभं मन्य उत्तमश्लोकदर्शनम् ॥ विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥४॥ मैवं ममाधमस्यापि स्यादेवाच्युतदर्शनम् ॥ ह्रियमाणः कालनद्या क्वचित्तरति कश्चन ॥५॥ ममाद्यामंगलं नष्टं फलवांश्चैव मे भवः ॥ यन्नमस्ये भगवतो योगिध्येयांघ्रिपंकजम् ॥६॥ कंसो बताऽद्याकृत मेऽत्यनुग्रहं द्रक्ष्येंऽघ्रिपद्मं प्रहितोऽमुना हरेः ॥ कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन्यन्नखमंडलत्विषा ॥७॥ यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः ॥ गोचारणायानुचरैश्चरद्वने यद्गोपिकानां कुचकुंकुमांकितम् ॥८॥ द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकंजलोचनम् ॥ मुखं मुकुंदस्य गुडालकावृतं प्रदक्षिणं मे प्रचरंति वै मृगाः ॥९॥ अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ॥ लावण्यधाम्नो भवितोपलंभनं मह्यं न न स्यात्फलमंजसा दृशः ॥१०॥ य ईक्षिताऽहंरहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोभिदाभ्रमः ॥ स्वमाययाऽऽत्मन्रचितैस्तदीक्षया प्राणाक्षधीभिः सदनेष्वभीयते ॥११॥ यस्याखिलामीवहभिः सुमंगलैर्वाचो विमिश्रा गुणकर्मजन्मभिः ॥ प्राणंति शुंभंति पुनंति वै जगद्यास्तद्विरक्ताः शवशोभना मताः ॥१२॥ स चावतीर्णः किल सात्वतान्वये स्वसेतुपालामरवर्यशर्मकृत् ॥ यशो वितन्वन्व्रज आस्त ईश्वरो गायंति देवा यदशेषमंगलम् ॥१३॥ ॥

रंति ॥९॥ किं च। स्वेच्छया भूभारदूरीकरणाय मनुष्यत्वं प्राप्तस्य कृष्णस्य दर्शनं मे भविष्यति चेत्तर्हि मे दृष्टेः साफल्यं स्यात् ॥१०॥ यः कार्यकारणयोर्द्रष्टा तथाऽहंकाररहितः सोऽपि कृष्णो गोपीगृहेषु लीलया कर्माणि कुर्वन्नासक्तवत्प्रतीयते ॥११॥ यस्य गुणैर्जन्मकर्मभिर्युक्ता वाचो जगत् जीवयंति शोभयंति पुनंति च। तैर्हीना वाचस्तु अमंगला ज्ञेयाः ॥१२॥ स यादवान्वयेऽवतीर्णः सन् स्वयशो विस्तारयन् गोकुले आस्ते। यस्य सर्वमंगलकारकं यशो देवा गायंति ॥१३॥ ॥ ॥

१ यथा नद्या ह्रियमाणानां तृणादीनां मध्ये किंचित्कदाचित्तरति तीरं च प्राप्नोति। तथा कर्मवशेन कालेन ह्रियमाणानां जीवानां मध्ये कश्चित्तरेदिति संभावना। २ गुणा भक्तवात्सल्यादयः। जन्मानि रामकृष्णादीनि। कर्माण्यहल्योद्धारगोवर्धनोद्धरणादीनि तैर्युक्ताः।

तं सतां गतिमीश्वरमहं नूनं द्रक्ष्यामि । यतो मे प्रभातसमयाः शुभसूचका भवंति ॥१४॥ अथ दर्शनानंतरं तदैव रथादुत्तीर्य रामकृष्णयोश्चरणौ योगिभिरपि धिया धृतावहं नमस्ये । तयोश्च सखीन् गोपान् नमस्यामि ॥१५॥ किंच । कृष्णोऽङ्घ्रिमूले पतितस्य मे शिरसि स्वहस्तकमलं धारयिष्यति किम् ॥१६॥ यत्र हस्तकमले पूजां समर्प्यैंद्रो बलिश्च जगत्रयेंद्रतां प्राप ॥१७॥ यद्यप्यहं कंसेन प्रेरितस्तस्य दूतश्चास्मि तथापि श्रीकृष्णो मयि शत्रुबुद्धिं न करिष्यति । यतः स सर्वज्ञोऽस्ति ॥१८॥ तस्य चरणमूले कृतांजलिं मां स कृष्णः कृपादृष्ट्या द्रक्ष्यति किम् । यदि द्रक्ष्यति तर्ह्यहं परां मुदं प्राप्स्यामि ॥१९॥ कृष्णो यदा मां दोर्भ्यामालिंगयिष्यति तदैव तेन मे देहः पवित्रीकरिष्यते । देहात्कर्मबंधश्च श्लथो

तं त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकांतं दृशिमन्महोत्सवम् ॥ रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥१४॥ अथावरूढः सपदीशयो रथात्प्रधानपुंसोश्चरणं स्वलब्धये ॥ धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन्वनौकसः ॥१५॥ अप्यंघ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपंकजम् ॥ दत्ताभयं कालभुजंगरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥१६॥ समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्रयेंद्रताम् ॥ यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगंधिकगंध्यपानुदत् ॥१७॥ न मय्युपैष्यत्यरिबुद्धिमच्युतः कंसस्य दूतः प्रहितोऽपि विश्वदृक् ॥ योंऽतर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥१८॥ अप्यंघ्रिमूलेऽवहितं कृतांजलिं मामीक्षिता सस्मितमार्द्रया दृशा ॥ सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशंक ऊर्जिताम् ॥१९॥ सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ॥ आत्मा हि तीर्थीक्रियते तदैव मे बंधश्च कर्मात्मक उच्छ्वसित्यतः ॥२०॥ लब्धांगसंगं प्रणतं कृतांजलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ॥ तदा वयं जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥२१॥ न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा ॥ तथाऽपि भक्तान्भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥२२॥ किंचाग्रजो माऽवनतं यदूत्तमः स्मयन्परिष्वज्य गृहीतमंजलौ ॥ गृहं प्रवेश्याप्तसमस्तसत्कृतं संप्रक्ष्यते कंसकृतं स्वबंधुषु ॥२३॥ श्रीशुक उवाच ॥ इति संचिंतयन्कृष्णं श्वफल्कतनयोऽध्वनि ॥ रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप ॥२४॥ ॥ ॥ ॥ ॥

भविष्यति ॥२०॥ श्रीकृष्णः कृतांजलिं नम्रं मां हे अक्रूर, हे तातेति यदा वक्ष्यते तदा वयं सफलजन्मानो भवेम । कृष्णेन योऽनादृतस्तस्य जंतोर्जन्म धिक् ॥२१॥ तस्य हरेः कश्चित्प्रियोऽप्रियो मित्रः शत्रुरुपेक्ष्यश्च नास्ति । तथापि स भक्तान् कल्पवृक्ष इव भजते ॥२२॥ रामश्च नम्रं मामालिंग्यांजलौ धृत्वा गृहं प्रवेश्य स्वबंधुषु यादवेषु कंसकृतमपकारादिकं प्रक्ष्यति किम् ॥२३॥ श्रीशुक उवाच । हे नृप, एवमक्रूरो मार्गे कृष्णं चिंतयन् सायंकाले रथेन गोकुलं प्राप्तः । सूर्यश्चास्तं प्राप्तः ॥२४॥ ॥

ततः सोऽक्रूरो हरेः पदानि पद्म-यवांकुशादिचिह्नैश्चिह्नितानि गोकुले ददर्श ॥२५॥ तद्दर्शनाज्जातसंभ्रमो रोमांचितः प्रेमाश्रुलोचनश्च सोऽक्रूरो रथादवप्लुत्य हरेरमूनि पादरजांसीति दुर्लभतां भावयन् रजस्सु व्यलुठत् ॥२६॥ एतावानेन दंभादीन् हित्वा देहिनां पुरुषार्थः । योऽयं कंसस्याज्ञामारभ्य हरेश्चिह्नदर्शनादिभिरक्रूरस्य वर्णित इति ॥२७॥ ततोऽक्रूरो व्रजे गोदोहनस्थानं प्राप्तौ रामकृष्णौ पीतनीलांवरधरौ ॥२८॥ किशोरवयसौ श्यामलश्वेतौ वालहस्तिपराक्रमौ ॥२९॥ ध्वज-वज्रांकुशादिचिह्नितैरंघ्रिभिर्गोकुलं शोभयंतौ ॥३०॥ उदारसुंदर-क्रीडौ रत्नमालाधरौ वनपुष्पमालिनौ स्नातौ निर्मलवस्त्रधरौ ॥३१॥ प्रधानपुरुषौ पृथिव्या भारापनयनाय मूर्तिभेदेनावतीर्णौ ॥३२॥ स्वतेजसा गतांधकारा दिशः कुर्वाणौ च

पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ॥ ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवांकुशाद्यैः ॥२५॥ तद्दर्शनाह्लादविवृद्ध-संभ्रमः प्रेम्णोर्ध्वरोमाऽश्रुकलाकुलेक्षणः ॥ रथादवस्कंद्य स तेष्वचेष्टत प्रभोरमून्यंघ्रिरजांस्यहो इति ॥२६॥ देहंभृतामियानर्थो हित्वा दंभं भियं शुचम् ॥ संदेशाद्यो हरेर्लिंगदर्शनश्रवणादिभिः ॥२७॥ ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ॥ पीतनीलांवरधरौ शरदंबुरुहेक्षणौ ॥२८॥ किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ ॥ सुमुखौ सुंदरवरौ वालद्विरदविक्रमौ ॥२९॥ ध्वजवज्रांकुशांभोजैश्चिह्नितैरंघ्रिभिर्व्रजम् ॥ शोभ-यंतौ महात्मानावनुक्रोशस्मितेक्षणौ ॥३०॥ उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ ॥ पुण्यगंधानुलिप्तांगौ स्नातौ विरजवाससौ ॥३१॥ प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ॥ अवतीर्णौ जगत्यर्थे स्वांशेन वलकेशवौ ॥३२॥ दिशो वितिमिरा राजन्कुर्वाणौ प्रभया स्वया ॥ यथा मारकतः शैलो रौप्यश्च कनकाचितौ ॥३३॥ रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः ॥ पपात चरणोपांते दंडवद्रामकृष्णयोः ॥३४॥ भगवद्दर्श-नाह्लादवाष्पपर्याकुलेक्षणः ॥ पुलकाचितांग औत्कंठ्यात्स्वाख्याने नाशकन्नृप ॥३५॥ भगवांस्तमभिप्रेत्य रथांगांकितपाणिना ॥ परिरेभेऽभ्यु-पाकृष्य प्रीतः प्रणतवत्सलः ॥३६॥ संकर्षणश्च प्रणतमुपगुह्य महामनाः ॥ गृहीत्वा पाणिना पाणी अनयत्सानुजो गृहम् ॥३७॥ पृष्ट्वाऽथ स्वागतं तस्मै निवेद्य च वरासनम् ॥ प्रक्षाल्य विधिवत्पादौ मधुपर्कार्हणमाहरत् ॥३८॥ निवेद्य गां चातिथये संवाह्य श्रांतमादृतः ॥ अन्नं वहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः ॥३९॥ ॥ ॥ ॥ ॥

रामकृष्णौ ददर्श ॥३३॥ एवंभूतौ तौ दृष्ट्वाऽक्रूरः स्नेहविह्वलो भूत्वा रथादवप्लुत्य तयोश्चरणसमीपे दंडवत्पपात ॥३४॥ भगवद्दर्शनाद्रोमांचितांगो वाष्पलोचनः सन्, हे भगवन्, त्वामहमक्रूरो नमस्करोमीति वक्तुमपि नाशकत् ॥३५॥ भगवानपि तं ज्ञात्वा[1] चक्रचिह्नांकितहस्तेनाभ्युपाकृष्य प्रीतः सन्नालिंगितवान् ॥३६॥ रामश्च तमालिंग्य पाणिना अंजलिरूपेण संहतौ तस्य हस्तौ धृत्वा सकृष्णस्तं गृहं निनाय ॥३७॥ अथ स्वागतं पृष्ट्वा तस्मा आसनं दत्वा पादौ प्रक्षाल्य मधुपर्कादिना पूजां कृतवान् ॥३८॥ तथा तस्मै गां निवेद्य श्रांतं तं

१ अक्रूरोऽयं मे भक्तो मां मधुरां नेतुमागत इति ज्ञात्वा ।

संवाह्य श्रीकृष्णस्तस्मै बहुगुणमन्नं ददौ ॥३९॥ ततो भुक्तवते तस्मै रामो मुखवासैर्गंधमाल्यैः परां प्रीतिं चक्रे ॥४०॥ ततो नंदस्तं पप्रच्छ । हे अक्रूर, निर्दये कंसे जीवति सति यूयं कथं जीवथ ॥४१॥ यः कंसः क्रोशंत्या भगिन्या बालान् जघान । तत्प्रजानां वः किं नु कुशलं विचारयाम ॥४२॥ एवं मधुरया वाचा नंदेन सत्कृतोऽक्रूरस्तत्प्रश्नेन मार्गपरिश्रमं जहौ ॥४३॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे अष्टत्रिंशोऽध्यायः ॥३८॥ ॥ नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोक्तयः । अक्रूरेणाथ कालिंद्यां विष्णुलोकस्य दर्शनम् ॥१॥ श्रीशुक उवाच ॥ हे नृप, रामकृष्णाभ्यां बहुमानितः पर्यंके उपविष्टोऽक्रूरो मार्गे कृतान् सर्वान् मनोरथान् लेभे ॥१॥ हे राजन्, हरौ प्रसन्ने सति किमलभ्यं तथापि

तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् ॥ मुखवासैर्गंधमाल्यैः परां प्रीतिं व्यधात्पुनः ॥४०॥ पप्रच्छ सत्कृतं नंदः कथं स्थ निरनुग्रहे ॥ कंसे जीवति दाशार्ह सौनपाला इवावयः ॥४१॥ योऽवधीत्स्वस्वसुस्तोकान्क्रोशंत्या असुतृप् खलः ॥ किं नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे ॥४२॥ इत्थं सूनृतया वाचा नंदेन सुसभाजितः ॥ अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥४३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धेऽक्रूरागमनं नामाऽष्टत्रिंशत्तमोऽध्यायः ॥३८॥ ॥ श्रीशुक उवाच ॥ सुखोपविष्टः पर्यंके रामकृष्णोरुमानितः ॥ लेभे मनोरथान्सर्वान्पथि यान्स चकार ह ॥१॥ किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ॥ तथापि तत्परा राजन्नहि वांछंति किंचन ॥२॥ सायंतनाशनं कृत्वा भगवान्देवकीसुतः ॥ सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यचिकीर्षितम् ॥३॥ श्रीभगवानुवाच ॥ तात सौम्यागतः कच्चित्स्वागतं भद्रमस्तु वः ॥ अपि स्वज्ञातिबंधूनामनमीवमनामयम् ॥४॥ किं नु नः कुशलं पृच्छे एधमाने कुलामये ॥ कंसे मातुलनाम्न्यंग स्वानां नस्तत्प्रजासु च ॥५॥ अहो अस्मदभूद्भूरि पित्रोर्वृजिनमार्ययोः ॥ यद्धेतोः पुत्रमरणं यद्धेतोर्बंधनं तयोः ॥६॥ दिष्ट्याऽद्य दर्शनं स्वानां मह्यं वः सौम्य कांक्षितम् ॥ संजातं वर्ण्यतां तात तवागमनकारणम् ॥७॥ ॥ श्रीशुक उवाच ॥ पृष्टो भगवता सर्वं वर्णयामास माधवः ॥ वैरानुबंधं यदुषु वसुदेववधोद्यमम् ॥८॥ यत्संदेशो यदर्थं वा दूतः संप्रेषितः स्वयम् ॥ यदुक्तं नारदेनास्य स्वजन्मानकदुंदुभेः ॥ ९ ॥ ॥ ॥

भक्ताः किमपि नेच्छंति ॥२॥ ततः कृष्णः सायंकालेऽशनं कृत्वा यादवेषु कंसस्य वृत्तं अन्यदपि यत्तस्य कर्तुमिष्टं तत्सर्वं पप्रच्छ ॥३॥ श्रीभगवानुवाच ॥ हे तात, तव स्वागतम् । स्वज्ञातिबंधूनामारोग्यमस्ति किम् ॥४॥ हे अक्रूर, कुलस्य रोगरूपे मातुलनाम्नि कंसे वृद्धिंगते सति स्वज्ञातीनां किंनु कुशलं पृच्छामि ॥५॥ अहो अस्मन्निमित्तं निरपराधयोर्देवकीवसुदेवयोर्भूरि दुःखमभूत् । अस्मन्निमित्तं तयोः पुत्रमरणं बंधनं च जातम् ॥६॥ हे अक्रूर, मया बहु कांक्षितं तव दर्शनं जातं तद्भद्रं जातम् । हे तात, तवागमनकारणं वर्ण्यताम् ॥७॥ श्रीशुक उवाच ॥ एवं पृष्टोऽक्रूरो यदुषु कंसस्य वैरानुबंधं वसुदेववधोद्यमं च वर्णयामास ॥८॥ किंच । यदर्थं कंसेन स्वयं प्रेषितस्तत् नारदोक्तं च सर्वं वर्णयामास ॥९॥

१ चाणूरादिभिर्मारयितुं भवंतं नेतुम् । २ वसुदेवाद्भवतो जन्मेत्यादि ।



॥ ६० ॥

कृष्णरामौ तदक्रूरवचः श्रुत्वा प्रहस्य कंसेनाज्ञापितं सर्वं नंदंप्रति विशेषेण ज्ञापयामासतुः ॥१०॥ ततो नंदो गोपानाह । हे गोपाः, क्षीरादिसर्वगोरसो गृह्यताम् । उपायनानि गृह्णीध्वम् । शकटानि च युज्यंताम् ॥११॥ वयं श्वो मथुरां यास्यामः । राज्ञे घृतादीन् रसान् दास्यामः । महत्पर्व द्रक्ष्यामः । सर्वेऽपि देशवासिनो गच्छंति । एवं नंदो गोकुलरक्षणाधिकृतेन पुरुषेण भेरीघोषेण सर्वतो व्रजे घोषितवान् ॥१२॥ ततो गोप्यो रामकृष्णौ नेतुं प्राप्तमक्रूरं श्रुत्वा दुःखिता बभूवुः ॥१३॥ काश्चित् श्वासम्लानमुखश्रियः काश्चन श्लथित-दुकूल-वलय-केशग्रंथ्यो बभूवुः ॥१४॥ अन्याश्च तद्ध्यानेन निवृत्तेंद्रियवृत्तयः सत्यो देहमपि मुक्ता इव न जानंति स्म ॥१५॥ अपरा हरेश्चित्रपदयुक्ता वाचः स्मरंत्यः सत्यो

श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा ॥ प्रहस्य नंदं पितरं राज्ञाऽऽदिष्टं विजज्ञतुः ॥१०॥ गोपान्समादिशत्सोऽपि गृह्यतां सर्वगोरसः ॥ उपायनानि गृह्णीध्वं युज्यंतां शकटानि च ॥११॥ यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान् ॥ द्रक्ष्यामः सुमहत्पर्व यांति जानपदाः किल ॥ एवमाघोषयत्क्षत्रा नंदगोपः स्वगोकुले ॥१२॥ गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम् ॥ रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ॥१३॥ काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः ॥ स्रंसद्दुकूलवलयकेशग्रंथ्यश्च काश्चन ॥१४॥ अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः ॥ नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥१५॥ स्मरंत्यश्चापराः शौरेरनुरागस्मितेरिताः ॥ हृदिस्पृशश्चित्रपदा गिरः संमुमुहुः स्त्रियः ॥१६॥ गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् ॥ शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥१७॥ चिंतयंत्यो मुकुंदस्य भीता विरहकातराः ॥ समेताः संघशः प्रोचुरश्रुमुख्योऽच्युताशयाः ॥१८॥ गोप्य ऊचुः ॥ अहो विधातस्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः ॥ तांश्चाकृतार्थान्वियुनंक्ष्यपार्थकं विक्रीडितं तेऽर्भकचेष्टितं यथा ॥१९॥ यस्त्वं प्रदर्श्यासितकुंतलावृतं मुकुंदवक्त्रं सुकपोलमुन्नसम् ॥ शोकापनोदस्मितलेशसुंदरं करोषि पारोक्ष्यमसाधु ते कृतम् ॥२०॥ क्रूरस्त्वमक्रूरसमाख्यया स्म नश्चक्षुर्हि दत्तं हरसे बताज्ञवत् ॥ येनैकदेशेऽखिलसर्गसौष्ठवं त्वदीयमद्राक्ष्म वयं मधुद्विषः ॥२१॥ न नंदसूनुः क्षणभंगसौहृदः समीक्षते नः स्वकृतातुरा बत ॥ विहाय गेहान्स्वजनान्सुतान्पतींस्तद्दास्यमद्धोपगता नवप्रियः ॥२२॥

मुमुहुः ॥१६॥ एवं सर्वाः कृष्णस्य सुंदरां गतिं हास्यावलोकनं चरितानि च चिंतयंत्यः संघश एकत्र मिलित्वाऽश्रुमुख्यः सत्य ऊचुः ॥१७॥१८॥ गोप्य ऊचुः । हे विधातः, तव केनापि प्रकारेण दया नास्ति । यस्त्वं जीवान् मैत्र्यैकत्र संयोज्याप्राप्तभोगानपि तान् वियुक्तान् करोषि । अतस्तव क्रीडितं बालस्येव व्यर्थम् ॥१९॥ यस्त्वं नीलकुंतलावृतं कृष्णमुखं सकृत् प्रदर्श्य पुनस्तस्यादर्शनतां करोषि । अतस्ते कर्म निंद्यम् ॥२०॥ हे विधातः, अक्रूरनाम्ना क्रूरस्त्वमेवात्रागत्यामर्यादस्मच्चक्षुर्हरसे । येन चक्षुषा हरेरवयवादौ त्वदीयं समग्रं सृष्टिनैपुण्यं वयं दृष्टवत्यः ॥२१॥ अथ परस्परमूचुः । अयं नंदपुत्र एव क्षणिकमख्यो नूतनप्रियोऽस्ति । यतो गृहादीन् विहाय तद्दास्यं प्राप्ता अस्मान् न विलोकयत्यपि ॥२२॥

१ मम सदेह स्यमाभिर्जानभि पमर्पणेव कृष्णं वियोजयतस्मानंधीकरोषि ।

इयं रात्रिर्मथुरायां सुप्रभाता जाताऽस्ति । यतो मथुरास्त्रीणां मनोरथाः सत्या भविष्यंति । याः स्त्रियः तत्र प्रविष्टस्य हरेर्मुखमादरेण द्रक्ष्यंति ॥२३॥ मथुरास्त्रीणां मधुरभाषणैर्वशीकृतचित्तः कृष्णो ग्राम्या अस्मान्प्रति कथं पुनः प्रत्येष्यति । न कथंचित् ॥२४॥ अद्य मथुरायां दाशार्हभोजादीनां दृष्टेर्महोत्सवो भविष्यति । यतस्ते देवकीसुतं द्रक्ष्यंति ॥२५॥ ततोऽक्रूरं शपंत्य आहुः । अस्य निर्दयस्याक्रूर इति शुभं नाम मा भूत् । यो दुःखितं जनमनाश्वास्य प्राणादपि प्रियतरं हरिं दूरं नेष्यति ॥२६॥ अयं कृष्ण एव कठोरबुद्धिर्भूत्वा रथमधिरूढः । एते गोपाश्च त्वरां कुर्वंति । एते वृद्धा अपि न तान्निवारयंति । अतो नो दैवमेव प्रतिकूलं जातम् । धिगस्मज्जीवितम् ॥२७॥ हे स्त्रियः, वयं सर्वा

सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम् ॥ याः संप्रविष्टस्य मुखं व्रजस्पतेः पास्यंत्यपांगोत्कलितस्मितासवम् ॥२३॥ तासां मुकुंदो मधुमंजुभाषितैर्गृहीतचित्तः परवान्मनस्व्यपि ॥ कथं पुनर्नः प्रतियास्यतेऽबला ग्राम्याः सलज्जस्मितविभ्रमैर्भ्रमन् ॥२४॥ अद्य ध्रुवं तत्र दृशो भविष्यते दाशार्हभोजांधकवृष्णिसात्वताम् ॥ महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यंति ये चाध्वनि देवकीसुतम् ॥२५॥ मैतद्विधस्याकरुणस्य नामभूदक्रूर इत्येतदतीव दारुणः ॥ योऽसावनाश्वास्य सुदुःखितं जनं प्रियात्प्रियं नेष्यति पारमध्वनः ॥२६॥ अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयंति दुर्मदाः ॥ गोपा अनोभिः स्थविरैरुपेक्षितं दैवं च नोऽद्य प्रतिकूलमीहते ॥२७॥ निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन्कुलवृद्धबांधवाः॥ मुकुंदसंगान्निमिषार्धदुस्त्यजाद्दैवेन विध्वंसितदीनचेतसाम् ॥२८॥ यस्यानुरागललितस्मितवल्गुमंत्रलीलावलोकपरिरंभणरासगोष्ठ्याम् ॥ नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वतितरेम तमो दुरंतम्॥२९॥ योऽह्नः क्षये व्रजमनंतसखः परीतो गोपैर्विशन्खुररजश्छुरितालकस्रक् ॥ वेणुं क्वणन्स्मितकटाक्षनिरीक्षणेन चित्तं क्षिणोत्यमुमृते नु कथं भवेम ॥३०॥ ॥ श्रीशुक उवाच ॥ एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः ॥ विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविंद दामोदर माधवेति ॥३१॥ स्त्रीणामेवं रुदंतीनामुदिते सवितर्यथ ॥ अक्रूरश्चोदयामास कृतमैत्रादिको रथम् ॥३२॥ ॥ ॥

मिलित्वा कृष्णं निवारयामः । वृद्धा बांधवाश्च नः किं करिष्यंति ॥२८॥ हे गोप्यः, येन सह रासक्रीडायामस्माभिः क्षण इव रात्रयो नीतास्तं कृष्णं विना दुरंतं वियोगदुःखं कथं नु तरेम न कथंचिदपि ॥२९॥ किंच । यः कृष्णः सायंकाले रामगोपैः सह वेणुं क्वणयन् व्रजं विशन् स्वावलोकनेन नश्चित्तं हरति तं विना कथं जीवेम ॥३०॥ श्रीशुक उवाच ॥ एवं ब्रुवाणा विरहातुरा गोप्यो लज्जां त्यक्त्वा हे गोविंद, हे दामोदर, हे माधव, इत्युच्चै रुरुदुः ॥३१॥ एवं तासां रुदंतीनां सतीनां ता अनादृत्य, सूर्ये उदिते सति संध्योपासनादि कर्म कृत्वाऽक्रूरो रथं प्रेषयामास ॥३२॥ ॥ ॥ ॥ ॥ ॥

१ यदि दैवमस्माकमनुकूलं भवेत्तर्हि विघ्नैः कश्चिदेषां मध्ये प्रतिहन्येत । अकस्माद्वज्रपातो वा भवेत् अन्यद्वा किंचिदनिष्टं स्यान्न तु तात्किंचिदप्यस्तीति । २ एवंभूतानामस्माकं न मृत्योरपि भयमित्यर्थः ।

तमनु नंदादिगोपा भूर्युपायनं घृतादिभिः पूर्णान् कुंभांश्च गृहीत्वा शकटैरगच्छन् ॥३३॥ तदा कृष्णेन परावृत्य निरीक्षणादिभिः किंचिदानंदिता गोप्यश्च तमनुव्रज्य कृष्णस्य प्रतिसांत्वनमिच्छंत्योऽवतस्थिरे ॥३४॥ तदा कृष्णः स्वप्रस्थाने तप्यतीस्ता दृष्ट्वा सप्रेमैर्दूतवाक्यैरहं शीघ्रमागमिष्यामीति सांत्वयामास ॥३५॥ ततस्ता यावद्रथस्य ध्वजो रेणुश्च दृश्यते तावच्चित्रमयपुत्तलिका इव निश्चलाः स्थिताः ॥३६॥ ततो गोविंदनिवर्तने निराशा भूत्वा परावृत्त्य तच्चेष्टितं गायंत्यो दिनानि निन्युः ॥३७॥ अथ कृष्णो रामाक्रूरयुतो वायुवेगेन रथेन यमुनातीरं प्राप्तः ॥३८॥ तत्र रथादुत्तीर्य यमुनाजलेन हस्तौ पादौ मुखं च प्रक्षाल्य तज्जलं पीत्वा वृक्षसमूहं गत्वा पुनः सरामः कृष्णो रथमाविशत् ॥३९॥

गोपास्तमन्वसज्जंत नंदाद्याः शकटैस्ततः ॥ आदायोपायनं भूरि कुंभान्गोरससंभृतान् ॥३३॥ गोप्यश्च दयितं कृष्णमनुव्रज्यानुरंजिताः ॥ प्रत्यादेशं भगवतः कांक्षंत्यश्चावतस्थिरे ॥३४॥ तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ॥ सांत्वयामास सप्रेमैरायास्य इति दौत्यकैः ॥३५॥ यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च ॥ अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः ॥३६॥ ता निराशा निववृतुर्गोविंदविनिवर्तने ॥ विशोका अहनी निन्युर्गायंत्यः प्रियचेष्टितम् ॥३७॥ भगवानपि संप्राप्तो रामाक्रूरयुतो नृप ॥ रथेन वायुवेगेन कालिंदीमघनाशिनीम् ॥३८॥ तत्रोप-स्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम् ॥ वृक्षखंडमुपव्रज्य सरामो रथमाविशत् ॥३९॥ अक्रूरस्तावुपामंत्र्य निवेश्य च रथोपरि ॥ कालिंद्या ह्रदमागत्य स्नानं विधिवदाचरत् ॥४०॥ निमज्ज्य तस्मिन्सलिले जपन्ब्रह्म सनातनम् ॥ तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥४१॥ तौ रथस्थौ कथमिह सुतावानकदुंदुभेः ॥ तर्हि स्वित्स्यंदने न स्त इत्युन्मज्ज्य व्यचष्ट सः ॥४२॥ तत्रापि च यथापूर्वमासीनौ पुनरेव सः ॥ न्यम-ज्जद्दर्शनं यन्मे मृषा किं सलिले तयोः ॥४३॥ भूयस्तत्रापि सोऽद्राक्षीत्स्तूयमानमहीश्वरम् ॥ सिद्धचारणगंधर्वैरसुरैर्नतकंधरैः ॥४४॥ सहस्र-शिरसं देवं सहस्रफणमौलिनम् ॥ नीलांबरं विसश्वेतं शृंगैः श्वेतमिव स्थितम् ॥४५॥ तस्योत्संगे घनश्यामं पीतकौशेयवाससम् ॥ पुरुषं चतु-र्भुजं शांतं पद्मपत्रारुणेक्षणम् ॥४६॥ चारुप्रसन्नवदनं चारुहासनिरीक्षणम् ॥ सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥४७॥ ॥

अक्रूरस्तौ रथोपरि निवेश्य तयोराज्ञां गृहीत्वा कालिंद्या ह्रदं गत्वा स्नानं चकार ॥४०॥ तत्र निमज्ज्य प्रणवादिकं जपन् तत्र तौ रामकृष्णौ ददर्श ॥४१॥ तौ रथस्थाविह कथम् । एवं सति रथे न स्तः । इत्युन्मज्ज्य सोऽपश्यत् ॥४२॥ तदा पूर्ववद्रथे तौ दृष्ट्वा तयोर्जले यन्मे दर्शनं जातं तन्मृषा वा सत्यं वेति ज्ञातुं पुनर्ममज्ज ॥४३॥ पुनश्च स जले सिद्ध-चारणगंधर्वैः स्तूयमानम् ॥ ४४ ॥ सहस्रशिरसं सहस्रफणायुक्तमौलिनं नीलांबरं श्वेतमनंतं दृष्ट्वा ॥४५॥ तस्य कुंडलीकृतदेहस्यार्धे घनश्यामं पीतांबरधरं चतुर्भुजं ॥४६॥ सुंदर-प्रसन्नमुखं शोभमानाभ्यां भ्रूभ्यामुन्नतया नासिकया च युक्तं सुकपोलं रक्ताधरोष्ठम् ॥४७॥ ॥ ॥ ॥

1 कर्मी वार्तां क तौ मत्वाविति शंकितचित्ताय अक्रूराय जलेऽत्याश्चर्यकरं स्वरूपं श्रीकृष्णो दर्शयामास ।

दीर्घमांसलभुजं कंबुकंठं निम्ननाभिम् ॥४८॥ बृहत्कटितटं मांसलोरुद्वयं सुंदरजानुजंघायुगम् ॥४९॥ ईषदुन्नतगुल्फं कोमलांगुल्यंगुष्ठदलैः शोभितपादपद्मम् ॥५०॥ अमोल्य-किरीट-कटकांगदैः कटिसूत्र-यज्ञोपवीत-हार-नूपुर-कुंडलैः ॥५१॥ शोभमानं शंखचक्रगदापद्मधरं श्रीवत्सवक्षसं कौस्तुभवनमालाधरम् ॥५२॥ सुनंदनंदादिभिः पार्षदैः स्वामीति स्तूयमानं, सनकादिभिर्ब्रह्मेति, ब्रह्मादिभिर्देवैर्महेश्वर इति,॥५३॥ मरीच्यादिभिर्ब्राह्मणैः परः प्रजापतिरिति, प्रह्लाद-नारदमुख्यैर्भक्तैः परं दैवतमिति च स्तूयमानम् ॥५४॥ लक्ष्म्या पुष्ट्या वाण्या कांत्या कीर्त्या तुष्ट्या इत्यादिभिः शक्तिभिः सेवितम् ॥५५॥ एवंभूतं श्रीहरिं दृष्ट्वा प्रीतोऽक्रूरो रोमांचितः सन् ॥५६॥ हरिं नत्वा कृतांजलिर्गद्गदया वाचा तुष्टाव ॥५७॥ इति

प्रलंबपीवरभुजं तुंगांसोरस्थलश्रियम् ॥ कंबुकंठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥४८॥ बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ॥ चारुजानुयुगं चारुजंघायुगलसंयुतम् ॥४९॥ तुंगगुल्फारुणनखव्रातदीधितिभिर्वृतम् ॥ नवांगुल्यंगुष्ठदलैर्विलसत्पादपंकजम् ॥५०॥ सुमहार्हमणिव्रातकिरीटकट-कांगदैः ॥ कटिसूत्रब्रह्मसूत्रहारनूपुरकुंडलैः ॥५१॥ भ्राजमानं पद्मकरं शंखचक्रगदाधरम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥५२॥ सुनंदनंदप्रमुखैः पार्षदैः सनकादिभिः ॥ सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥५३॥ प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः ॥ स्तूयमानं पृथग्भा-वैर्वचोभिरमलात्मभिः ॥५४॥ श्रिया पुष्ट्या गिरा कांत्या कीर्त्या तुष्ट्येलयोर्जया ॥ विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥५५॥ विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ॥ हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥५६॥ गिरा गद्गदयाऽस्तौषीत्सत्वमालंब्य सात्वतः ॥ प्रणम्य मूर्ध्नाऽवहितः कृतांजलिपुटः शनैः ॥५७॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धेऽक्रूरप्रतियाने एकोनचत्वारिंशोऽध्यायः ॥ ॥३९॥ अक्रूर उवाच ॥ नतोऽस्म्यहं त्वाऽखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम् ॥ यन्नाभिजातादरविंदकोशाद्ब्रह्माऽऽविरासीद्यत एष लोकः ॥१॥ भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इंद्रियाणि ॥ सर्वेंद्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽगभूताः ॥२॥ नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः ॥ अजोऽनुबद्धः स गुणैरजाया गुणात्परं वेद न ते स्वरूपम् ॥३॥ त्वां योगिनो यजंत्यद्धा महा-पुरुषमीश्वरम् ॥ साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥४॥ ॥ ॥ ॥

श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे एकोनचत्वारिंशोऽध्यायः ॥३९॥ ॥ चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरम् । प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः ॥१॥ अक्रूर उवाच ॥ हे कृष्ण, त्वामाद्यं पुरुषमव्ययं नारायणं नतोऽस्मि । यन्नाभिजातात्कमलकोशाद्ब्रह्माऽऽविरासीत् ॥१॥ हे हरे, पृथिव्यप्तेजो-वाय्वाकाशाहंकार-महत्तत्व-माया-पुरु-षरूपा ये जगतो हेतवस्ते सर्वे त्वत्त एव जाताः ॥२॥ एते मायाद्या जडास्तव सर्वात्मनः स्वरूपं न विदुः । ब्रह्मापि तव स्वरूपं न वेद । अन्यो जीवः कुतो ज्ञास्यति ॥३॥ एवं-भूतं महापुरुषमंतर्यामिणं च त्वां योगिनः साधवश्च यजंति ॥४॥ ॥ ॥ ॥ ॥

केचित्कर्मयोगिनो यज्ञैरिंद्रवरुणाद्यनेकदेवतारूपं त्वामेव यजंति ॥५॥ एक ज्ञानिनः सर्वकर्माणि संन्यस्य उपशमं गताः संतः समाधिना ज्ञानरूपिणं त्वां यजंति ॥ ६ ॥ अन्ये वैष्णवदीक्षया दीक्षिताः संतस्तदुक्तपंचरात्रविधिना संकर्षणवासुदेवप्रद्युम्नानिरुद्धमूर्तिं नारायणरूपेणैकमूर्तिं च त्वामेव यजंति ॥ ७ ॥ तथाऽपरे शिवोक्तमार्गेण शिवरूपिणं त्वामुपासते ॥ ८ ॥ ये च क्षुद्रदेवताभक्तास्तेऽपि सर्वदेवमयं त्वां यजंति ॥ ९ ॥ एवं सर्वे मार्गास्त्वयि प्रविशंति । यथा पर्जन्यापूरिता नद्यः सर्वतः समुद्रमेव प्रविशंति तद्वत् ॥ १० ॥ अत्र कारणमाह । भवन्मायायाः सत्वं रजस्तम इति त्रयो गुणास्तेषु सर्वे आब्रह्मस्थावरादयो जीवाः प्रोताः संति । अतस्ते सर्वे नानोपासनया त्वामेव प्रविशंति ।

त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः ॥ यजंते विततैर्यज्ञैर्नानारूपामराख्यया ॥५॥ एके त्वाखिलकर्माणि संन्यस्योपशमं गताः ॥ ज्ञानिनो ज्ञानयज्ञेन यजंति ज्ञानविग्रहम् ॥६॥ अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते ॥ यजंति त्वन्मयास्त्वां वै वहुमूर्त्येकमूर्तिकम् ॥७॥ त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ॥ वह्वाचार्यविभेदेन भगवन्समुपासते ॥८॥ सर्व एव यजंति त्वां सर्वदेवमयेश्वरम् ॥ येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ॥९॥ यथाऽद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो ॥ विशंति सर्वतः सिंधुं तद्वत्त्वां गतयोंऽततः ॥१०॥ सत्वं रजस्तम इति भवतः प्रकृतेर्गुणाः ॥ तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः ॥११॥ तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियां च साक्षिणे ॥ गुणप्रवाहोऽयमविद्यया कृतः प्रवर्तते देवनृतिर्यगात्मसु ॥१२॥ अग्निर्मुखं तेऽवनिरंघ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः ॥ द्यौः कं सुरेंद्रास्तव बाहवोऽर्णवाः कुक्षिर्मरुत्प्राणबलं प्रकल्पितम् ॥१३॥ रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः ॥ निमेषणं रात्र्यहनी प्रजापतिर्मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते ॥१४॥ त्वय्यव्ययात्मन्पुरुषे प्रकल्पिता लोकाः सपाला वहुजीवसंकुलाः ॥ यथा जले संजिहते जलौकसोऽप्युदुंबरे वा मशका मनोमये ॥१५॥ यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि ॥ तैरामृष्टशुचो लोका मुदा गायंति ते यशः ॥१६॥ नमः कारणमत्स्याय प्रलयाब्धिचराय च ॥ हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥१७॥ ॥ ॥

अतस्त्वमेव सर्वदेवमयोऽसि ॥११॥ एवंभूताय सर्वधियां साक्षिणे तुभ्यं नमोऽस्तु ॥१२॥ अथ सगुणं स्तौति । हे हरे, तत्र मुखमग्निः । भूमिश्चरणः । सूर्यो नेत्रम् । नभो नाभिः । दिशः श्रोत्रम् । स्वर्गः शिरः । देवा भुजाः । सागराः कुक्षिः । वायुः प्राणबले ॥१३॥ वृक्षौषधयो रोमाणि । केशा मेघाः । अस्थिनखानि पर्वताः । निमेषणं रात्रिदिवसौ । प्रजापतिः शिश्नम् । वीर्यं च वृष्टिरस्ति ॥१४॥ एवं सर्वे लोकास्त्वयि कल्पिताः संतः प्रचलंति । यथा उदुंबरफलेषु परस्परवार्तानभिज्ञा मशकाः संति तद्वत् ॥१५॥ हे देव, इह लोके क्रीडार्थं त्वं यानि यानि रूपाणि बिभर्षि तैर्दूरीकृतशोका लोकास्तव यशो गायंति ॥१६॥ अथ प्रलयाब्धिचराय कारणमत्स्याय ते नमः । तथा मधुकैटभहंत्रे हयग्रीवाय ते

नमः ॥१७॥ मंदरधारिणे कूर्माय भूम्युद्धारकर्त्रे वराहमूर्तये च ते नमः ॥१८॥ आश्चर्यकारकाय नृसिंहरूपाय व्याप्तत्रैलोक्याय वामनाय च ते नमः ॥१९॥ क्षत्रियहंत्रे परशुरामाय रावणहंत्रे रामाय च ते नमः ॥२०॥ वासुदेवसंकर्षणप्रद्युम्नानिरुद्धेति चतुर्मूर्तये ते कृष्णाय नमः ॥२१॥ दैत्यदानवमोहकर्त्रे बुद्धाय म्लेच्छप्रायक्षत्रियहंत्रे कल्किरूपिणे च ते नमोऽस्तु ॥२२॥ हे भगवन्, अयं लोकस्तव मायया मोहितः सन् कर्ममार्गेषु भ्राम्यति ॥२३॥ अहमपि स्वप्नतुल्येषु देह-पुत्र-गृहादिषु सत्यबुद्ध्या भ्रमामि ॥२४॥ एवमनित्यानात्मदुःखरूपेषु देहपुत्रादिषु नित्यात्मसुखबुद्धिरहं आत्मानं प्रेमास्पदं त्वां न जाने ॥२५॥ यथाऽज्ञस्तृणादिभिर्गुप्तं जलं हित्वा मृगजलमभिगच्छति तथा त्वां हित्वाऽहं देहाभिमुखो

अकूपाराय बृहते नमो मंदरधारिणे ॥ क्षित्युद्धारविहाराय नमः सूकरमूर्तये ॥१८॥ नमस्तेऽद्भुतसिंहाय साधुलोकभयापह ॥ वामनाय नमस्तुभ्यं क्रांतत्रिभुवनाय च ॥१९॥ नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे ॥ नमस्ते रघुवर्याय रावणांतकराय च ॥२०॥ नमस्ते वासुदेवाय नमः संकर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥२१॥ नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने ॥ म्लेच्छप्रायक्षत्रहंत्रे नमस्ते कल्किरूपिणे ॥२२॥ भगवन्जीवलोकोऽयं मोहितस्तव मायया ॥ अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥२३॥ अहं चात्मात्मजागारदारार्थस्वजनादिषु ॥ भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो ॥२४॥ अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् ॥ द्वंद्वारामस्तमोविष्टो न जाने त्वाऽऽत्मनः प्रियम् ॥२५॥ यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः ॥ अभ्येति मृगतृष्णां वै तद्वत्त्वाऽहं पराङ्मुखः ॥२६॥ नोत्सहेऽहं कृपणधीः कामकर्महतं मनः ॥ रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः॥२७॥ सोऽहं तवांघ्र्युपगतोऽस्म्यसतां दुरापं तच्चाप्यहं भवदनुग्रह ईश मन्ये ॥ पुंसो भवेद्यर्हि संसरणापवर्गस्त्वय्यब्जनाभ सदुपासनया मतिः स्यात् ॥२८॥ नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे ॥ पुरुषेशप्रधानाय ब्रह्मणेऽनंतशक्तये ॥२९॥ नमस्ते वासुदेवाय सर्वभूतक्षयाय च ॥ हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥३०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धेऽक्रूरस्तुतिर्नाम चत्वारिंशत्तमोऽध्यायः ॥४०॥ ॥ श्रीशुक उवाच ॥ स्तुवतस्तस्य भगवान्दर्शयित्वा जले वपुः ॥ भूयः समाहरत्कृष्णो नटो नाट्यमिवात्मनः ॥१॥ सोऽपि चांतर्हितं वीक्ष्य जलादुन्मज्ज्य सत्वरः ॥ कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत् ॥२॥ ॥

वर्ते ॥२६॥ विषयवासनाबुद्धियुक्तैरिंद्रियैरितस्तत आकृष्यमाणं मे मनो रोद्धुं न शक्नोमि ॥२७॥ सोऽहं दुष्टानां दुर्लभं तव चरणं शरणं प्राप्तोऽस्मि । इदमपि तवानुग्रहेणैव जातमिति मन्ये । यदा जीवस्य संसारसमाप्तिस्त्वत्कृपया भवेत्तदा सत्समागमेन त्वयि बुद्धिर्भवेत् ॥२८॥ अतोऽपरोक्षज्ञानरूपाय कालकर्मस्वभावादीनां नियंत्रे ब्रह्मणेऽनंतशक्तये ॥२९॥ वासुदेवाय सर्वभूताश्रयाय तुभ्यं नमः ॥ ३० ॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे चत्वारिंशोऽध्यायः ॥४०॥ ॥ एकचत्वारिंशकेऽथ रजकं प्रविशन् पुरीम् । ततो वरानदात्तुष्टः सुदाम्नो वायकस्य च ॥१॥ श्रीशुक उवाच ॥ एवमक्रूरस्य स्तुवतः सतः कृष्णो जले वपुर्दर्शयित्वा पुनरुपसंजहार ॥१॥ सोऽपि तत्स्वरूपमंतर्हितं दृष्ट्वा जलादुन्मज्ज्या

वश्यकं कर्म कृत्वा रथमागमत् ॥२॥ तदा हरिस्तमाह । हे अक्रूर, त्वयाऽद्भुतं भूमौ जले आकाशे वा किं दृष्टम् ॥३॥ अक्रूर उवाच । हे हरे, भूमिजलादिषु यावंत्यद्भुतानि संति तानि सर्वाणि त्वय्येव संति । तं त्वां पश्यता मया सर्वमपि दृष्टम् ॥४॥ हे परमेश्वर, त्वयि सर्वाण्यद्भुतानि संति तं त्वामिह रथे पश्यता मया, त्वां विनाऽन्यत् जले किमपि नाद्भुतं दृष्टम् किं तु त्वामेव दृष्टवानस्मि ॥ ५ ॥ एवमुक्त्वाऽक्रूरो रथं प्रेरयामास । ततो रामं कृष्णं चापराह्णकाले मथुरासमीपमनयत् ॥६॥ तदा मार्गे जनास्तत्र तत्र तौ रामकृष्णौ दृष्ट्वा प्रीताः संतः पश्यंत एव स्थिताः ॥७॥ तावन्नंदादयो मथुरायाः पुरोपवनं प्राप्य रामकृष्णागमनं प्रतीक्षमाणाः संतः स्थिताः ॥८॥ ततः कृष्णो नंदादीन् प्राप्य स्वहस्ते-

तमपृच्छद्धृषीकेशः किं ते दृष्टमिवाद्भुतम् ॥ भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥३॥ अक्रूर उवाच ॥ अद्भुतानीह यावंति भूमौ वियति वा जले ॥ त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥४॥ यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले ॥ तं त्वाऽनुपश्यतो ब्रह्मन्किं मे दृष्टमिहाद्भुतम् ॥५॥ इत्युक्त्वा चोदयामास स्यंदनं गांदिनीसुतः ॥ मथुरामनयद्रामं कृष्णं चैव दिनात्यये ॥६॥ मार्गे ग्रामजना राजंस्तत्र-तत्रोपसंगताः ॥ वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥७॥ तावद्व्रजौकसस्तत्र नंदगोपादयोऽग्रतः ॥ पुरोपवनमासाद्य प्रतीक्षंतोऽवतस्थिरे ॥८॥ तान्समेत्याह भगवानक्रूरं जगदीश्वरः ॥ गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥९॥ भवान्प्रविशतामग्रे सहयानः पुरीं गृहम् ॥ वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥१०॥ अक्रूर उवाच ॥ नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ॥ त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥११॥ आगच्छ याम गेहान्नः सनाथान्कुर्वधोक्षज ॥ सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम ॥१२॥ पुनीहि पादरजसा गृहान्नो गृहमेधिनाम् ॥ यच्छौचेनानुतृप्यंति पितरः साग्नयः सुराः ॥१३॥ अवनिज्यांघ्रियुगलमासीच्छ्लोक्यो बलिर्महान् ॥ ऐश्वर्यमतुलं लेभे गतिं चैकांतिनां तु या ॥१४॥ आपस्तेंऽघ्र्यवनेजन्यस्त्रीँल्लोकान् शुचयोऽपुनन् ॥ शिरसाऽधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥१५॥ देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ॥ यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥१६॥ श्रीभगवानुवाच ॥ आयास्ये भवतो गेहमहमार्यसमन्वितः ॥ यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥१७॥ ॥ ॥ ॥

नाक्रूरहस्तं गृहीत्वा प्रहसन्निवाह ॥९॥ हे सखे, त्वं सरथोऽग्रे पुरीं गृहं च गच्छ । वयं त्विह विश्रांतिं गृहीत्वा ततः पुरीं द्रक्ष्यामहे ॥१०॥ अक्रूर उवाच । हे प्रभो, भवद्भ्यां विनाऽहं पुरीं न प्रवेक्ष्ये । हे नाथ, ते भक्तं मां त्यक्तुं नार्हसि ॥११॥ किंच सबलो । गोपैः सह त्वं नो गृहानेत्य नः सनाथान् कुरु ॥१२॥ तथा नो गृहान् पादरजसा पुनीहि । तव पादक्षालनोदकेन देवपित्रादयस्तृप्यंति ॥१३॥ तव चरणयुगलं प्रक्षाल्य बलिरतुलमैश्वर्यमेकांतभक्तानां गतिं च लेभे ॥१४॥ तव पादक्षालनोदकानि त्रैलोक्यं पुनंति । यानि शिवः शिरसा दधार । सगरपुत्राश्च यैः स्वर्गं याताः ॥१५॥ हे देवदेव, हे जगन्नाथ, हे पुण्यश्रवणकीर्तन, हे नारायण, ते नमोऽस्तु ॥१६॥ श्रीभगवानुवाच । हे अक्रूर, आदौ

कंसं हत्वा ततः सबलस्तव गृहमेत्य तवेतरेषां च सुहृदां प्रियं करिष्यामि ॥१७॥ श्रीशुक उवाच ॥ एवमुक्तोऽक्रूरो विमना इव पुरीं प्रविश्य कृतं कर्म कंसाय निवेद्य स्वगृहं ययौ ॥१८॥ अथापराह्णे कृष्णो रामगोपैः सह मथुरां विवेश ॥१९॥ कथंभूतां ताम् । स्फाटिक-तुंग-गोपुर-गृहद्वाराम् । सुवर्णकपाट-तोरणाम् । परितः खातगर्तैर्दुर्गमाम् ॥२०॥ सुवर्णनिर्मितैश्चतुष्पथैर्धनिनां गृहादिभिश्चालंकृताम् । वैदूर्यादिरत्नैर्जुष्टेषुवलभीवेद्यादिषूपविष्टैः पारावत-मयूरादिभिर्नादिताम् । संसिक्तराजमार्गादिभिर्युक्ताम् ॥२१॥२२॥ आपूर्णकुंभैः कदलीस्तंभैर्ध्वजपताकादिभिः प्रतिद्वारं शोभिताम् ॥२३॥ एवंभूतां तां मथुरां राजमार्गेण प्रविष्टौ रामकृष्णौ प्रति द्रष्टुं पुरस्त्रियः समीयुः । हर्म्याण्यारुरुहुश्च ॥२४॥ काश्चिद्विपरीतधृतवस्त्रभूषणा ईयुः ।

श्रीशुक उवाच ॥ एवमुक्तो भगवता सोऽक्रूरो विमना इव ॥ पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ ॥१८॥ अथापराह्णे भगवान्कृष्णः संकर्षणान्वितः ॥ मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः ॥१९॥ ददर्श तां स्फाटिकतुंगगोपुरद्वारां बृहद्धेमकपाटतोरणाम् ॥ ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्योपवनोपशोभिताम् ॥२०॥ सौवर्णशृंगाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् ॥ वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥२१॥ जुष्टेषु जालामुखरंध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ॥ संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्यांकुरलाजतंडुलाम् ॥२२॥ आपूर्णकुंभैर्दधिचंदनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ॥ सवृंदरंभाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः ॥२३॥ तां संप्रविष्टौ वसुदेवनंदनौ वृतौ वयस्यैर्नरदेववर्त्मना ॥ द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥२४॥ काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः ॥ कृतैकपत्रश्रवणैकनूपुरा नांक्त्वा द्वितीयं त्वपराश्च लोचनम् ॥२५॥ अश्नंत्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः ॥ स्वपंत्य उत्थाय निशम्य निःस्वनं प्रपाययंत्योऽर्भमपोह्य मातरः ॥२६॥ मनांसि तासामरविंदलोचनः प्रगल्भलीलाहसितावलोकनैः ॥ जहार मत्तद्विरदेंद्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् ॥२७॥ दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः ॥ आनंदमूर्तिमुपगुह्य दृशाऽऽत्मलब्धं हृष्यत्त्वचो जहुरनंतमरिंदमाधिम् ॥२८॥ प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखांबुजाः ॥ अभ्यवर्षन्सौमनस्यैः प्रमदा बलकेशवौ ॥२९॥ दध्यक्षतैः सोदपात्रैः स्रग्गंधैरभ्युपायनैः ॥ तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः ॥३०॥ ॥

काश्चिदेकमेव नूपुरं धृत्वा ययुः । अपराः एकनेत्रेऽजनं निधाय ययुः ॥२५॥ काश्चिद्भोजनं हित्वा ययुः । काश्चिद्बालं पाययंत्यस्तं निरस्य ययुः । काश्चिन्निद्रितास्त्वरयोत्थाय ययुः ॥२६॥ तासां मनांसि कृष्णो हास्यावलोकनादिभिर्जहार ॥२७॥ ताः स्त्रियः कृष्णं दृष्ट्वा नेत्रद्वारेण मनसि प्राप्तं तमानंदमूर्तिमालिंग्य रोमांचयुक्ताः सत्योऽनंतां मानसीं व्यथां जहुः ॥२८॥ ततः प्रासादशिखरारूढाः स्त्रियस्तौ प्रति पुष्पसमूहानां वृष्टिं चक्रुः ॥२९॥ तत्र तत्र ब्राह्मणा दध्यक्षतैर्गंधैर्मालाभिरुपायनैश्च तावानर्चुः ॥३०॥ ॥

ततः पुरस्त्रिय ऊचुः। अहो गोप्यः किं तप आचरन्। या गोप्य एतौ नित्यं पश्यंति ॥३१॥ तावत्कृष्णो मार्गेणागच्छंतं रजकं रंगकारं दृष्ट्वा तंप्रति धौतानि श्रेष्ठानि वस्त्राणि ययाचे ॥३२॥ हे रजक, आवयोर्योग्यानि वस्त्राणि देहि। दातुस्ते परमं कल्याणं भविष्यति। अत्र संशयो नास्ति ॥३३॥ एवं भगवता याचितः स दुर्मदः कंससेवको रजकः कुपितः सन् सनिंदं जगाद ॥३४॥ हे उद्धताः ये यूयं राजधार्याणि वस्त्राणि याचितवंतस्ते पर्वतवनसंचारिणो यूयमीदृशानि वस्त्राणि परिधत्त किम् ॥३५॥ हे वालिशाः, यात यात। यदि वो जीवितुमिच्छास्ति तर्ह्येवं न प्रार्थ्यम्। यतो गर्विष्ठं राजदूता बध्नंति घ्नंति द्रव्यं गृहीत्वा निर्धनं च कुर्वंति ॥३६॥ एवमुक्तो हरिः कुपितः सन् तस्य शिरः कराग्रेण

ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत् ॥ या ह्येतावनुपश्यंति नरलोकमहोत्सवौ ॥३१॥ रजकं कंचिदायांतं रंगकारं गदाग्रजः ॥ दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥३२॥ देह्यावयोः समुचितान्यंग वासांसि चार्हतोः ॥ भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥३३॥ स याचितो भगवता परिपूर्णेन सर्वतः ॥ साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥३४॥ ईदृशान्येव वासांसि नित्यं गिरिवनेचराः ॥ परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥३५॥ याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा ॥ बध्नंति घ्नंति लुंपंति दृप्तं राजकुलानि वै ॥३६॥ एवं विकत्थमानस्य कुपितो देवकीसुतः ॥ रजकस्य कराग्रेण शिरः कायादपातयत् ॥३७॥ तस्यानुजीविनः सर्वे वासःकोशान्विसृज्य वै ॥ दुद्रुवुः सर्वतो मार्गं वासांसि जगृहेऽच्युतः ॥३८॥ वसित्वाऽऽत्मप्रिये वस्त्रे कृष्णः संकर्षणस्तथा ॥ शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥३९॥ ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् ॥ विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ॥४०॥ नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः ॥ स्वलंकृतौ बालगजौ पर्वणीव सितेतरौ ॥४१॥ तस्य प्रसन्नो भगवान्प्रादात्सारूप्यमात्मनः ॥ श्रियं च परमां लोके बलैश्वर्यस्मृतींद्रियम् ॥४२॥ ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः ॥ तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥४३॥ तयोरासनमानीय पाद्यं चार्थार्हणादिभिः ॥ पूजां सानुगयोश्चक्रे स्रक्तांबूलानुलेपनैः ॥४४॥ प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो ॥ पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥४५॥

देहाद्भूमौ पातयामास ॥३७॥ ततः सर्वे तत्सेवका वस्त्रपुटकान् हित्वा सर्वतो मार्गं दुद्रुवुः ॥३८॥ ततः कृष्णो रामश्च स्वप्रिये वस्त्रे वसित्वा शेषाणि गोपेभ्यो ददतुः ॥३९॥ ततस्तंतुवायकः प्रीतः सन् वस्त्रमयैर्भूषणैस्तयोर्वेषं चकार ॥४०॥ तदा नानालक्षणवेषाभ्यां स्वलंकृतौ तौ, उत्सवे स्वलंकृतौ बालगजाविव विरेजतुः ॥४१॥ तस्य प्रसन्नो हरिरिह परमां संपत्तिं बलमैश्वर्यं स्मृतिमिंद्रियपाटवं च परत्र स्वसारूप्यं च ददौ ॥४२॥ ततो रामकृष्णौ सुदाम्नो मालकारस्य गृहं जग्मतुः। तौ दृष्ट्वा स उत्थाय शिरसा भूमौ नत्वा ॥४३॥ आसनं दत्वा सगोपयोस्तयोर्माला-तांबूलानुलेपनैः पूजां कृत्वा ॥४४॥ प्राह। हे प्रभो, मम जन्म सार्थकं जातम्। कुलं च पावितम्। अद्य युवयोरागमनेन मह्यं देवपित्रादयस्तुष्टाः ॥४५॥

१ वस्त्रनिर्णेजक एव वस्त्राणां रंगमपि कुर्वन् रंगकारस्तम्।

भवंतौ विश्वस्य परं कारणं, जगत उत्कर्षार्थं कल्याणार्थं चावतीर्णौ स्तः ॥४६॥ जगदात्मनोर्युवयोर्मित्रं शत्रुरिति विषमा दृष्टिर्नास्ति ॥४७॥ तौ भृत्यं मामाज्ञापयतम् । युवयोर्दास्यमहं किं करवाणि । भवद्भिः पुंसो यदाज्ञाप्यते स महाननुग्रह एव ॥४८॥ एवं विज्ञापयन् सुदामा तयोर्मतं ज्ञात्वा ताभ्यां सुगंधपुष्पैर्विरचिता माला ददौ ॥४९॥ ततस्ताभिः स्वलंकृतौ प्रीतौ तौ रामकृष्णौ प्रपन्नाय तस्मै वरान् ददतुः ॥५०॥ सोऽपि हरौ भक्तिं तद्भक्तेषु स्नेहं भूतेषु दयां च वव्रे ॥५१॥ तदा कृष्णस्तथेत्युक्त्वा तद्वंशे वृद्धिमतीं श्रियमायुर्यशआदिकं च दत्वा पुरतो निर्जगाम ॥५२॥ इति श्रीमद्भा० चू० दश० पू० एकचत्वारिंशोऽध्यायः ॥४१॥ ॥ द्विचत्वारिंशके कुब्जोन्नमनं धनुषो भिदा ॥ वधस्तद्रक्षिणां कंसारिष्टं रंगोत्सवादि

भवंतौ किल विश्वस्य जगतः कारणं परम् ॥ अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥४६॥ नहि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः ॥ समयोः सर्वभूतेषु भजंतं भजतोरपि ॥४७॥ तावाज्ञापयतं भृत्यं किमहं करवाणि वाम् ॥ पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥४८॥ इत्यभिप्रेत्य राजेंद्र सुदामा प्रीतमानसः ॥ शस्तैः सुगंधैः कुसुमैर्माला विरचिता ददौ ॥४९॥ ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ ॥ प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥५०॥ सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि ॥ तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥५१॥ इति तस्मै वरं दत्वा श्रियं चान्वयवर्धिनीम् ॥ बलमायुर्यशः कांतिं निर्जगाम सहाग्रजः ॥५२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे पुरप्रवेशो नाम एकचत्वारिंशोऽध्यायः ॥४१॥ श्रीशुक उवाच ॥ अथ व्रजन्राजपथेन माधवः स्त्रियं गृहीतांगविलेपभाजनाम् ॥ विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यांतीं प्रहसन्रसप्रदः ॥१॥ का त्वं वरोर्वेतदुहानुलेपनं कस्यांगने वा कथयस्व साधु नः ॥ देह्यावयोरंगविलेपमुत्तमं श्रेयस्ततस्ते न चिराद्भविष्यति ॥२॥ सैरंध्र्युवाच ॥ दास्यस्म्यहं सुंदर कंससंमता त्रिवक्रनामा ह्यनुलेपकर्मणि ॥ मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥३॥ रूपपेशलमाधुर्यहसितालापवीक्षितैः ॥ धर्षितात्मा ददौ सांद्रमुभयोरनुलेपनम् ॥४॥ ततस्तावंगरागेण स्ववर्णेतरशोभिना ॥ संप्राप्तपरभागेन शुशुभातेऽनुरंजितौ ॥५॥ प्रसन्नो भगवान्कुब्जां त्रिवक्रां रुचिराननाम् ॥ ऋज्वीं कर्तुं मनश्चक्रे दर्शयन्दर्शने फलम् ॥६॥

च ॥१॥ श्रीशुक उवाच ॥ हे नृप, ततः कृष्णो राजमार्गेण गच्छन्, गृहीतांगविलेपभाजनां[1] यांतीं तरुणीं कुब्जां स्त्रियं दृष्ट्वा प्रहसन्नुवाच ॥१॥ हे वरोरु, त्वं का । इदमंगविलेपनं कस्येति नः वद । आवयोरिदमंगविलेपनं देहि । ततस्तव श्रेयः शीघ्रं भविष्यति ॥२॥ सैरंध्र्युवाच ॥ हे सुंदर, अहं त्रिवक्रानाम्नी दासी कंसस्यानुलेपकर्मणि बहुमान्याऽस्मि । मत्कृतमंगविलेपनं तस्यातिप्रियं भवति । तद्युवां विना कोऽन्योऽर्हति ॥३॥ एवमुक्त्वा सा हरे रूपादिभिर्मोहिता सत्युभयोरप्यनुलेपनं ददौ ॥४॥ ततस्तौ रामकृष्णौ स्ववर्णाभ्यामितरवर्णेनांगरागेण रंजितौ संतौ शुशुभाते ॥५॥ ततः प्रसन्नः कृष्णः स्वदर्शने सद्यः फलं दर्शयन् तां त्रिवक्रां सरलां कर्तुं मनश्चक्रे ॥६॥ ॥ ॥

१ गृहीतानि अंगविलेपनानां चंदनादीनां भाजनानि पात्राणि यया ताम् ।

तदा कृष्णः स्वपद्भ्यां तस्याः पादाग्रद्वयमाक्रम्य द्व्यंगुल्युत्तानहस्तेन मुखस्याधोभागे धृत्वा देहमुन्नमयामास ॥७॥ सा तदैव कृष्णस्पर्शादृजुसमानांगी प्रमदोत्तमा बभूव ॥८॥ ततो रूप-गुणौदार्य-संपन्ना जातमदना सा कृष्णस्योत्तरीयवस्त्रमाकृष्य तं जगाद ॥९॥ हे वीर, एहि गृहं यामः । त्वामिह त्यक्तुमहं नोत्सहे । हे पुरुषश्रेष्ठ, त्वं मे प्रसीद ॥१०॥ एवं तया याच्यमानः कृष्णो रामादीनां मुखं वीक्ष्य प्रहसन् तामुवाच ॥११॥ हे सुभ्रूः, अहं कंसवधेन साधितसुहृत्प्रयोजनः सन् तव गृहमेष्यामि । यतस्त्वमकृतदाराणां प्रवासिनां नः परमाश्रयोऽसि ॥१२॥ एवं मधुरया वाचा तां प्रस्थाप्य व्रजन् मार्गे वणिग्भिर्नानोपायन-तांबूल-माला-गंधैः साग्रजोऽर्चितः ॥१३॥ तदा तद्दर्शनेनोत्पन्नान्मदनस्य क्षोभात् स्त्रियो

पद्भ्यामाक्रम्य प्रपदे द्व्यंगुल्युत्तानपाणिना ॥ प्रगृह्य चुबुकेऽध्यात्ममुदनीनमदच्युतः ॥७॥ सा तदर्जुसमानांगी बृहच्छ्रोणिपयोधरा ॥ मुकुंदस्पर्शनात्सद्यो बभूव प्रमदोत्तमा ॥८॥ ततो रूपगुणौदार्यसंपन्ना प्राह केशवम् ॥ उत्तरीयांतमाकृष्य स्मयंती जातहृच्छया ॥९॥ एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे ॥ त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ ॥१०॥ एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः ॥ मुखं वीक्ष्यानुगानां च प्रहसंस्तामुवाच ह ॥११॥ एष्यामि ते गृहं सुभ्रूः पुंसामाधिविकर्शनम् ॥ साधितार्थोऽगृहाणां नः पांथानां त्वं परायणम् ॥१२॥ विसृज्य माध्व्या वाण्या तां व्रजन्मार्गे वणिक्पथैः ॥ नानोपायनतांबूलस्रग्गंधैः साग्रजोऽर्चितः ॥१३॥ तद्दर्शनस्मरक्षोभादात्मानं नाविदन्स्त्रियः ॥ विस्रस्तवासःकवरवलयालेख्यमूर्तयः ॥१४॥ ततः पौरान्पृच्छमानो धनुषः स्थानमच्युतः ॥ तस्मिन्प्रविष्टो ददृशे धनुरैंद्रमिवाद्भुतम् ॥१५॥ पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् ॥ वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ॥१६॥ करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् ॥ नृणां विकृष्य प्रबभंज मध्यतो यथेक्षुदंडं मदकर्युरुक्रमः ॥१७॥ धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ॥ पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥१८॥ तद्रक्षिणः सानुचराः कुपिता आततायिनः ॥ ग्रहीतुकामा आवव्रुर्गृह्यतां वध्यतामिति ॥१९॥ अथ तान्दुरभिप्रायान्विलोक्य बलकेशवौ ॥ क्रुद्धौ धन्वन आदाय शकले तांश्च जघ्नतुः ॥२०॥ बलं च कंसप्रहितं हत्वा शालामुखात्ततः ॥ निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसंपदः ॥२१॥ तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः ॥ तेजः प्रागल्भ्यं रूपं च मेनिरे विबुधोत्तमौ ॥२२॥ ॥

विह्वलिताः सत्य आत्मानं न विदुः ॥१४॥ ततः कृष्णः पौरान्प्रति धनुर्मखशालां पृष्ट्वा तत्र च गत्वा धनुर्ददृशे ॥१५॥ तद्बहुभिः पुरुषै रक्षितं धनुर्मनुष्यैर्निवारितोऽपि कृष्णो बलाददे ॥१६॥ ततो वामकरेण तत्सज्यं कृत्वा सर्वेषां पश्यतां सतामिक्षुदंडं गज इव तन्मध्यतो बभंज ॥१७॥ तदा भज्यमानस्य धनुषः शब्द आकाशं द्यावापृथिव्यौ दिशश्च पूरयामास । तं शब्दं श्रुत्वा कंसस्त्रासं प्राप ॥१८॥ तदा धनुषो रक्षकाः क्रुद्धाः संतो गृह्यतां वध्यतामिति ब्रुवंतः संतः कृष्णं वेष्टितवंतः ॥१९॥ तान् दृष्ट्वा रामकृष्णौ धनुषः शकले गृहीत्वा तान् जघ्नतुः ॥२०॥ तथा कंसप्रेरितं सैन्यं च हत्वा ततः शालामुखान्निर्गम्य पुरसंपदो दृष्ट्वा चेरतुः ॥२१॥ तयोस्तमद्भुतं पराक्रमं तेजः प्रौढत्वं स्वरूपं च दृष्ट्वा

पुरवासिनो जनास्तौ देवश्रेष्ठौ मेनिरे ॥२२॥ एवं तयोर्मथुरायां स्वैरं विचरतोः सतोः सूर्योऽस्तं जगाम । तदा कृष्णरामौ गोपैः सह पुराच्छकटावमोचनस्थानं जग्मतुः ॥२३॥ हे नृप, गोप्यो व्रजाद्धरेर्निर्गमनसमये या आशिष आशासत । ता मथुरायां हरिमूर्तिशोभां पश्यतां सत्या अभूवन् ॥२४॥ ततः कृष्णरामौ पादौ प्रक्षाल्य दुग्धमिश्रितमन्नं भुक्त्वा तां रात्रिं सुखं न्यवसताम् ॥२५॥ कंसस्तु धनुर्भंगं रक्षकाणां सैन्यस्य च वधं केवलं कृष्णरामयोर्विक्रीडितरूपं श्रुत्वा ॥२६॥ भीतः सन् दीर्घप्रजागरो भूत्वा स्वप्नजागरितभेदेन बहूनि मृत्युसूचकानि दुश्चिह्नानि ददर्श ॥२७॥ तान्याह । जलदर्पणादौ प्रतिबिंबे दृश्यमानेऽपि स्वशिरसोऽदर्शनं ददर्श । तथा चंद्रादीनां ज्योतिषां द्वैरूप्यम् ॥२८॥ छायायां

तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान् ॥ कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥२३॥ गोप्यो मुकुंदविगमे विरहातुरा या आशासताऽशिष ऋता मधुपुर्यभूवन् ॥ संपश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरान्नु भजतश्चकमेऽयनं श्रीः ॥२४॥ अवनिक्तांघ्रियुगलौ भुक्त्वा क्षीरोपसेचनम् ॥ ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥२५॥ कंसस्तु धनुषो भंगं रक्षिणां स्वबलस्य च ॥ वधं निशम्य गोविंदरामविक्रीडितं परम् ॥२६॥ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ॥ बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥२७॥ अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि ॥ असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥२८॥ छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ॥ स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥२९॥ स्वप्ने प्रेतपरिष्वंगः खरयानं विषादनम् ॥ यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगंबरः ॥३०॥ अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च ॥ पश्यन्मरणसंत्रस्तो निद्रां लेभे न चिंतया ॥३१॥ व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते ॥ कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥३२॥ आनर्चुः पुरुषा रंगं तूर्यभेर्यश्च जघ्निरे ॥ मंचाश्चालंकृताः स्रग्भिः पताकाचैलतोरणैः ॥३३॥ तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः ॥ यथोपजोषं विविशू राजानश्च कृतासनाः ॥३४॥ कंसः परिवृतोऽमात्यै राजमंच उपाविशत् ॥ मंडलेश्वरमध्यस्थो हृदयेन विदूयता ॥३५॥ ॥ ॥ ॥

छिद्रप्रतीतिः, प्राणघोषस्याश्रवणं, वृक्षेषु सुवर्णप्रतीतिः, रजःकर्दमादिषु स्वपादानामदर्शनम् ॥२९॥ स्वप्ने प्रेतालिंगनं, खरमारुह्य यानं, विषभक्षणं, जपाकुसुममालाधारणं, तैलाभ्यक्तस्य दिगंबरस्य चात्मनो गमनम् ॥३०॥ इत्यादीनि दुश्चिह्नानि दृष्ट्वा कंसो मरणत्रस्तः सन् चिंतया निद्रां न लेभे ॥३१॥ ततश्चतुर्दश्यां प्रातः कंसो मल्लक्रीडामहोत्सवं कारयामास ॥३२॥ तदा पुरुषा रंगमानर्चुः । तूर्यभेर्यो जघ्निरे । मंचाश्च मालापताकादिभिरलंकृताः ॥३३॥ तेषु मंचेषु पुर-देशवासिनः सर्वे जना राजानश्च यथासुखमुपविविशुः ॥३४॥ अमात्यसहितः कंसश्च कंपितेन हृदयेन मंडलेश्वरमध्ये राजमंचे उपविवेश ॥३५॥ ॥ ॥ ॥ ॥

तदा मल्लतालः उच्चैः श्रूयते येषु तेषु तूर्येषु वाद्यमानेषु सत्सु गुरुसहिता मल्लाश्चाणूर-मुष्टिक-कूट-शल-तोशला वल्गुवाद्यहर्षिताः संतो मल्लरंगमासेदुः ॥३६॥३७॥ तदा कंसेनाहूता नंदादयो गोपाः कंसायोपायनानि दत्वैकस्मिन् मंचे आविशन् ॥३८॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे द्विचत्वारिंशः ॥४२॥ ॥ त्रिचत्वारिंशके हत्वा गजेंद्रं रामकृष्णयोः । रंगप्रवेशसौभाग्यं चाणूरेण च भाषणम् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, अथ कृतशौचौ रामकृष्णौ मल्लदुंदुभिनादं श्रुत्वा तन्मल्लयुद्धं द्रष्टुमुपेयतुः ॥१॥ तौ रंगद्वारं गत्वा तस्मिन् महामात्रप्रेरितं कुवलयापीडं गजं ददृशतुः ॥२॥ तदा कृष्णः परिकरं बद्ध्वा कुटिलकुंतलान्निबद्ध्य गंभीरवाण्या हस्तिपं जगाद ॥३॥ हे अंबष्ठांबष्ठ, आव-

वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च ॥ मल्लाः स्वलंकृता दृप्ताः सोपाध्यायाः समागताः ॥३६॥ चाणूरो मुष्टिकः कूटः शलस्तोशल एव च ॥ त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥३७॥ नंदगोपादयो गोपा भोजराजसमाहुताः ॥ निवेदितोपायनास्ते एकस्मिन्मंच आविशन् ॥३८॥ इति श्रीमद्भा० महा० दश० पू० मल्लरंगोपवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥४२॥ श्रीशुक उवाच ॥ अथ कृष्णश्च रामश्च कृतशौचौ परंतप ॥ मल्लदुंदुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥१॥ रंगद्वारं समासाद्य तस्मिन्नागमवस्थितम् ॥ अपश्यत्कुवलयापीडं कृष्णोऽंबष्ठप्रचोदितम् ॥२॥ बद्ध्वा परिकरं शौरिः समुह्य कुटिलालकान् ॥ उवाच हस्तिपं वाचा मेघनादगभीरया ॥३॥ अंबष्ठांबष्ठ मार्गं नौ देह्यपक्रम मा चिरम् ॥ नो चेत्सकुंजरं त्वाद्य नयामि यमसादनम् ॥४॥ एवं निर्भर्त्सितोऽंबष्ठः कुपितः कोपितं गजम् ॥ चोदयामास कृष्णाय कालांतकयमोपमम् ॥५॥ करींद्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् ॥ कराद्विगलितः सोऽमुं निहत्यांघ्रिष्वलीयत ॥६॥ संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् ॥ परामृशत्पुष्करेण स प्रसह्य विनिर्गतः॥७॥पुच्छे प्रगृह्यातिबलं धनुषः पंचविंशतिम् ॥ विचकर्ष यथा नागं सुपर्ण इव लीलया ॥८॥ स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः॥बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः॥९॥ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम् ॥प्राद्रवन्पातयामास स्पृश्यमानः पदे पदे १०

योर्मार्गं देहि । नो चेत्सगजं त्वामद्य यमगृहं नयामि ॥४॥ एवं निर्भर्त्सितोऽंबष्ठः क्रुद्धः सन् कृष्णाय कोपितं गजं प्रेरयामास ॥५॥ ततो गजः कृष्णं शुंडया जग्राह । ततः शुंडाया विगलितः कृष्णो मुष्टिना तं हत्वा तस्य चरणेष्वदृश्यो बभूव ॥६॥ ततो गजस्तमपश्यन् घ्राणदृष्टिर्भूत्वा तं शुंडया धृतवान् । ततः कृष्णो बलाच्छुंडायाः सकाशान्निर्गतः सन् ॥७॥ तं गजं पुच्छे धृत्वा पंचविंशतिधनुष्यपर्यंतं देशं, नागं गरुड इवाकृष्य नीतवान् ॥८॥ ततः कृष्णः सव्यंदक्षिणतो भ्राम्यमाणेन तेन गजेन सह, गोवत्सेन सह बालक इव बभ्राम ॥९॥ ततो गजसंमुखं गत्वा तं हस्तेन प्रताड्य धावन् तं पदेपदे स्पृश्यमानः सन् पातयामास ॥१०॥ ॥ ॥ ॥

१ पूर्वेद्युरेव कृतं शौचं शुद्धत्वं निरपराधत्वं याभ्यां तौ । एतदुक्तं भवति । धनुर्भंगादिनाऽऽवाभ्यां निजैश्वर्ये सूचितेऽपि पितरौ न मुंचति आवां च पुनर्जिघांसति अतोऽस्य मातुलस्यापि वधे नावयोर्दोष इत्येवं कृतापराधपरिहाराविति । २ शतहस्तप्रमाणं देशम् । ३ पुच्छग्राहिणं श्रीकृष्णं ग्रहीतुं यदि दक्षिणतो गजः परिवर्तते तर्हि कृष्णः सव्यतस्तं भ्रामयति । यदि च सव्यतः परिवर्तते तर्हि दक्षिणतस्तं भ्रामयन् तेन सह बभ्राम ।

धावन् कृष्णः क्रीडया भूमौ पतित्वा सहसोत्थितः । तदा गजस्तं पतितं मत्वा दंताभ्या भूमिं जघान ॥११॥ एवं पराक्रमे व्यर्थे जाते क्रुद्धो महामात्रैश्च प्रेर्यमाणो गजः कृष्ण-मभ्यद्रवत् ॥१२॥ तदा कृष्णस्तं गजमागतं दृष्ट्वा हस्तेन शुंडां धृत्वा भूतले निपात्य ॥१३॥ पतितस्य तस्य देहं पदाऽऽक्रम्य दंतमुत्पाट्य तेनैव तं हस्तिनं हस्तिपांश्च जघान ॥१४॥ ततो मृतं गजमुत्सृज्य दंतहस्तः कृष्णो गज-रुधिर-मद-बिंदुभिरंकितः सन् बभौ ॥१५॥ ततो गजदंतवरायुधौ रामकृष्णौ कतिपयैर्गोपैः सह रंगमंडपं विविशतुः ॥१६॥ तदा शृंगा-रादि-सर्वरस-कदंबमूर्तिः कृष्णः पश्यतां तत्तदभिप्रायानुसारेण ज्ञातो बभूव । तदाह । मल्लानां वज्रसदृशः, नृणां राजसदृशः, स्त्रीणां मदनः, गोपानां स्वजनः, दुष्टानां राज्ञां शास्ता,

स धावन्क्रीडया भूमौ पतित्वा सहसोत्थितः ॥ तं मत्वा पतितं क्रुद्धो दंताभ्यां सोऽहनत्क्षितिम् ॥११॥ स्वविक्रमे प्रतिहते कुंजरेंद्रोऽत्यम-र्षितः ॥ चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रुषा ॥१२॥ तमापतंतमासाद्य भगवान्मधुसूदनः ॥ निगृह्य पाणिना हस्तं पातयामास भूतले ॥१३॥ पतितस्य पदाऽऽक्रम्य मृगेंद्र इव लीलया ॥ दंतमुत्पाट्य तेनेभं हस्तिपांश्चाहनद्धरिः ॥१४॥ मृतकं द्विपमुत्सृज्य दंतपाणिः समाविशत् ॥ अंसन्यस्तविषाणोऽसृङ्मदबिंदुभिरंकितः ॥ विरूढस्वेदकणिकावदनांबुरुहो बभौ ॥१५॥ वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ ॥ रंगं विविशतू राजन्गजदंतवरायुधौ ॥१६॥ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ॥ मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रंगं गतः साग्रजः ॥१७॥ हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ ॥ कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥१८॥ तौ रेजतू रंगगतौ महाभुजौ विचित्रवेषाभरणस्रगंबरौ ॥ यथा नटावुत्तमवेषधारिणौ मनः क्षिपंतौ प्रभया निरीक्षताम् ॥१९॥ निरीक्ष्य तावुत्तमपूरुषौ जना मंचस्थिता नागरराष्ट्रका नृप ॥ प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम् ॥२०॥ पिबंत इव चक्षुर्भ्यां लिहंत इव जिह्वया ॥ जिघ्रंत इव नासाभ्यां श्लिष्यंत इव बाहुभिः ॥२१॥ ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् ॥ तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥२२॥ ॥ ॥ ॥ ॥

पित्रोः शिशुः, कंसस्य मृत्युः, अज्ञानामपर्याप्तः, योगिनां परं तत्त्वं, यादवानां च परदेवतेति च विदितः सन् साग्रजः कृष्णो रंगं गतः ॥१७॥ एवं हतं गजं तौ च दुर्जयौ दृष्ट्वा शूरोऽपि कंसोऽत्यंतं भयं प्राप ॥१८॥ तदा रंगगतौ तौ रामकृष्णौ विचित्रवेषालंकार-माला-वस्त्रधरौ नटाविव विरेजतु ॥१९॥ तावुत्तमपुरुषौ दृष्ट्वा मंचस्थाः सर्वे जनास्तन्मुखं नयनैः पीत्वा तृप्तिं न प्रापुः ॥२०॥ ते जनाश्चक्षुर्भ्यां पिबंत इव बाहुभिरालिंगंत इव जिह्वया लिहंत इव ॥२१॥ तयोर्यथादृष्टं यथाश्रुतं रूप-गुण-माधुर्य-धार्ष्ट्यादिकं वीक्ष्य पर-

१ रौद्ररसरूपः । २ अद्भुतरसरूपः । ३ शृंगाररसरूपः । ४ हास्यरसरूपः । ५ वीररसरूपः । ६ करुणारसरूपः । ७ भयानकरसरूपः । ८ बीभत्सरसरूपः । ९ शांतरसरूपः । १० भक्तिरसरूपः । ११ अनेन निर्भयत्वं दार्ढ्यं तम् । १२ धनुर्भंगादि । १३ गोवर्धनोद्धरणादि ।

स्परमूचुः ॥२२॥ एतौ हरेर्नारायणस्यांशौ वसुदेवगृहेऽवतीर्णौ स्तः ॥२३॥ एष कृष्णो देवक्यां किल जातः । ततो गोकुलं नीतः । एतावंतं कालं नंदगृहे गुप्तः सन् ववृधे ॥२४॥ अनेन पूतना चक्रवातो यमलार्जुनौ शंखचूडः केशी धेनुकः अन्ये चाघासुरादयो मारिताः ॥२५॥ एतेन दावाग्नेः सकाशात् गोपसहिता गावो मोचिताः । कालियः सर्पो दमितः । इंद्रश्च विमदः कृतः ॥२६॥ अनेन सप्ताहमेकहस्तेन गोवर्धनो धृतः । वातवर्षादिभ्यो गोकुलं च रक्षितम् ॥२७॥ तथा गोप्योऽस्य मुखं पश्यंत्यस्तापान् जहुः ॥२८॥ तथाऽनेन परिरक्षितो यदोर्वंशो विख्यातः सन् श्रियं यशो महत्त्वं च लप्स्यते ॥२९॥ अयं चास्याग्रजो रामः । अनेन प्रलंबो वत्सको बकादयश्च हताः ॥३०॥ एवं जनेषु ब्रुवाणेषु तूर्येषु च

एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि ॥ अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥२३॥ एष वै किल देवक्यां जातो नीतश्च गोकुलम् ॥ कालमेतं वसन्गूढो ववृधे नंदवेश्मनि ॥२४॥ पूतनाऽनेन नीतांतं चक्रवातश्च दानवः ॥ अर्जुनौ गुह्यकः केशी धेनुकोऽन्ये च तद्विधाः ॥२५॥ गावः सपाला एतेन दावाग्नेः परिमोचिताः ॥ कालियो दमितः सर्प इंद्रश्च विमदः कृतः ॥२६॥ सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना ॥ वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥२७॥ गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम् ॥ पश्यंत्यो विविधांस्तापांस्तरंति स्माश्रमं मुदा ॥२८॥ वदंत्यनेन वंशोऽयं यदोः सुबहु विश्रुतः ॥ श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥२९॥ अयं चास्याग्रजः श्रीमान्रामः कमललोचनः ॥ प्रलंबो निहतो येन वत्सको ये बकादयः ॥३०॥ जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च ॥ कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥३१॥ हे नंदसूनो हे राम भवंतौ वीरसंमतौ ॥ नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा ॥३२॥ प्रियं राज्ञः प्रकुर्वंत्यः श्रेयो विंदंति वै प्रजाः ॥ मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥३३॥ नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् ॥ वनेषु मल्लयुद्धेन क्रीडंतश्चारयंति गाः ॥३४॥ तस्माद्राज्ञः प्रियं यूयं वयं च करवामहे ॥ भूतानि नः प्रसीदंति सर्वभूतमयो नृपः ॥३५॥ तन्निशम्याब्रवीत्कृष्णो देशकालोचितं वचः ॥ नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनंद्य च ॥३६॥ प्रजा भोजपतेरस्य वयं चापि वनेचराः ॥ करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥३७॥ बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् ॥ भवेन्नियुद्धं माऽधर्मः स्पृशेन्मल्लसभासदः ॥३८॥ ॥ ॥

निनदत्सु सत्सु कृष्णरामौ संबोध्य चाणूरो वाक्यमब्रवीत् ॥३१॥ हे कृष्ण, हे राम, युवां वीरमान्यौ युद्धनिपुणौ ज्ञात्वा कंसेनाहूतौ स्थः ॥३२॥ किंच । राज्ञः प्रियं कुर्वंत्यः प्रजाः कल्याणं प्राप्नुवंति । अन्यथा बंधनादिकं प्राप्नुवंति ॥३३॥ किंच । गोपा नित्यं वनेषु मल्लयुद्धेन क्रीडंतो गाश्चारयंति ॥३४॥ तस्माद्राज्ञः प्रियं यूयं वयं च करवाम । राज्ञि प्रीते सति सर्वे लोका नः प्रसीदंति । यतः सर्वभूतमयो नृपः ॥३५॥ एवं श्रुत्वा कृष्णो देशकालयोग्यं वच आह ॥३६॥ हे मल्ल, अस्य राज्ञो यूयं वयं च प्रजाः । अतोऽस्य प्रियं करवाम ॥३७॥ वयं बालास्तुल्यबलैः क्रीडिष्यामश्चेत्तर्हि योग्यं बाहुयुद्धं स्यात् । अत्र सभास्थितान् जनान्प्रत्यधर्मो मा स्पृशेत् ॥३८॥ ॥ ॥

चाणूर उवाच ॥ त्वं बालः किशोरश्च नासि । येन सहस्रगज-बलधारकः कुवलयापीडो हतः ॥३९॥ तस्माद्भवद्भ्यां मत्सदृशैर्बलिभिः सह योद्धव्यम् । अत्राधर्मो नास्ति । अतस्त्वं मया सह पराक्रमं कुरु । बलेन सह मुष्टिकः पराक्रमं करोतु ॥४०॥ इति श्रीमद्भागवतचूर्णि० दश० पूर्वार्धे त्रिचत्वारिंशोऽध्यायः ॥४३॥ चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् । कंसयोपित्समाश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥१॥ श्रीशुक उवाच ॥ एवं निश्चितसंकल्पो भगवान् चाणूरेण सह युद्धं कर्तुं सिद्धो बभूव । रामश्च मुष्टिकेन सह योद्धुं प्रवृत्तः ॥१॥ ( तौ हस्ताभ्यां हस्तौ ऊरुभ्यां चोरू आस्फोट्य ॥१॥ ) परस्परं हस्ताभ्यां हस्तौ धृत्वा पद्भ्यां पादौ परिवेष्ट्य परस्परं जेतुमिच्छयाऽऽकर्षतुः ॥२॥ ततो जानुभ्यां जानुनी शीर्ष्णा शिरः वक्षसा वक्षश्चान्योन्यं जघ्नतुः ॥३॥ ततो हस्तादिषु गृहीत्वा परितश्चालनं, प्रेरणं, बाहुभ्यां निष्पीडनं, अधः क्षेपः, उत्सृज्य पुरतो गमनं, पृष्ठतो गमनं चैतैः प्रकारैः

चाणूर उवाच ॥ न बालो न किशोरस्त्वं बलश्च बलिनां वरः ॥ लीलयेभो हतो येन सहस्रद्विपसत्वभृत् ॥३९॥ तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नाऽनयोऽत्र वै ॥ मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥४०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे कुवलयापीडवधो नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥ श्रीशुक उवाच ॥ एवं चर्चितसंकल्पो भगवान्मधुसूदनः ॥ आससादाथ चाणूरं मुष्टिकं रोहिणीसुतः ॥१॥ ( आस्फोट्य हस्तौ हस्ताभ्यामूरू चैव पुनः पुनः ॥ विसृज्य भूयः संगृह्य परिक्रम्य परस्परम् ॥१॥ ) हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः ॥ विचकर्षतुरन्योऽन्यं प्रसह्य विजिगीषया ॥२॥ अरत्नी द्वे अरत्नीभ्यां जानुभ्यां चैव जानुनी ॥ शिरः शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥३॥ परिभ्रामणविक्षेपपरिरंभावपातनैः ॥ उत्सर्पणापसर्पणैश्चाऽन्योन्यं प्रत्यरुंधताम् ॥४॥ उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ॥ परस्परं जिगीषंतावपचक्रतुरात्मनः ॥५॥ तद्बलाबलवद्युद्धं समेताः सर्वयोषितः ॥ ऊचुः परस्परं राजन्सानुकंपा वरूथशः ॥६॥ महानयं बताधर्म एषां राजसभासदाम् ॥ ये बलाबलवद्युद्धं राज्ञोऽन्विच्छंति पश्यतः ॥७॥ क्व वज्रसारसर्वांगौ मल्लौ शैलेंद्रसंनिभौ ॥ क्व चातिसुकुमारांगौ किशोरौ नाप्तयौवनौ ॥८॥ धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत् ॥ यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥९॥ न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन् ॥ अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ॥१०॥ ॥ ॥ ॥ ॥

परस्परं मल्लयुद्धं चक्रतुः ॥४॥ ततो जानुनी पादौ च पिंडीकृत्य पतितस्योच्चाटनं, हस्ताभ्यामुद्धृत्य नयनं, कंठादिलग्नस्य निःसारणं चैतैः प्रकारैः परस्परं देहस्यापकारं कृतवंतौ ॥५॥ तद्बलाबलवद्युद्धं दृष्ट्वा सर्वस्त्रियो मिथ ऊचुः ॥६॥ अहो एषां सभासदां महानधर्मोऽस्ति । ये बलाबलवतोर्युद्धं राज्ञः पश्यतः सतः स्वयमप्यनुमन्यंते ॥७॥ वज्रशरीरौ पर्वततुल्यौ चाणूरमुष्टिकौ क्व । अतिसुकुमारांगौ किशोरौ रामकृष्णौ च क्व ॥८॥ अतोऽस्याः सभाया धर्मोल्लंघनं भवेत् । यत्राधर्मः प्रवर्तते तत्र कदापि सभ्येन न स्थेयम् ॥९॥ किंच । सभासदां दोषान् स्मरन् प्राज्ञ आदौ सभामेव न प्रविशेत् । यतः सभ्यदोषान् ज्ञात्वा तूष्णीं तिष्ठन् धर्मविरुद्धं च ब्रुवन् नरः पापं प्राप्नोति ॥१०॥ ॥ ॥

हे स्त्रियः, शत्रुं सर्वतो धावतः कृष्णस्य श्रमबिंदुव्याप्तं मुखकमलं पश्यत ॥११॥ अन्या ऊचुः । अहो मुष्टिकंप्रति सक्रोधमारक्तनेत्रं रामस्य मुखं किं न पश्यत ॥१२॥ अपरा ऊचुः । अहो गोकुलभूमयः पुण्याः । यास्वयं मनुष्यदेहेन गूढः पुराणपुरुषो गाः पालयन् वेणुं च क्वणयन् विविधक्रीडया गच्छति ॥१३॥ हे स्त्रियः, गोप्यः किं तप आचरन् । या अस्य लावण्यसारं रूपं नित्यं दृग्भिः पिबंति ॥१४॥ या गोप्यो दोहने कंडने मथने उपलेपे दोलांदोलने बालकरुदिते सेचन-मार्जनादौ च अनुरक्तधियो गद्गदितकंठ्यः सत्यः कृष्णं गायंति ता धन्याः ॥१५॥ किंच । प्रातर्गोकुलाद्वनं गच्छतः सायं गोकुले प्रविशतश्च कृष्णस्य वेणुनादं श्रुत्वा गृहात्तूर्णं निर्गम्य गोप्यः पथि सस्मितं तन्मुखं पश्यंति । अतस्ता

वल्गतः शत्रुमभितः कृष्णस्य वदनांबुजम् ॥ वीक्षतां श्रमवार्युप्तं पद्मकोशमिवांबुभिः ॥११॥ किं न पश्यत रामस्य मुखमाताम्रलोचनम् ॥ मुष्टिकंप्रति सामर्ष हाससंरंभशोभितम् ॥१२॥ पुण्या बत व्रजभुवो यदयं नृलिंगगूढः पुराणपुरुषो वनचित्रमाल्यः ॥ गाः पालयन्सहबलः क्वणयंश्च वेणुं विक्रीडयाऽञ्चति गिरित्ररमार्चितांघ्रिः ॥१३॥ गोप्यस्तपः किमचरन्यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ॥ दृग्भिः पिबंत्यनुसवाभिनवं दुरापमेकांतधाम यशसः श्रिय ऐश्वरस्य ॥१४॥ या दोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ ॥ गायंति चैनमनुरक्तधियोऽश्रुकंठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥१५॥ प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ॥ निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यंति सस्मितमुखं सदयावलोकम् ॥१६॥ एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः ॥ शत्रुं हंतुं मनश्चक्रे भगवान्भरतर्षभ ॥१७॥ सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचाऽऽतुरौ ॥ पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥१८॥ तैस्तैर्नियुद्ध-विधिभिर्विविधैरच्युतेतरौ ॥ युयुधाते यथाऽन्योन्यं तथैव बलमुष्टिकौ ॥१९॥ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ॥ चाणूरो भज्यमानांगो मुहुर्ग्लानिमवाप ह ॥२०॥ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ ॥ भगवंतं वासुदेवं क्रुद्धो वक्षस्यबाधत ॥२१॥ नाचलत्तत्प्रहारेण माला-हत इव द्विपः ॥ बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्हरिः ॥२२॥ भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ॥ विस्रस्ताकल्पकेशस्रगिंद्रध्वज इवापतत् ॥२३॥ तथैव मुष्टिकः पूर्वं स्वमुष्ट्याऽभिहतेन वै ॥ बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥२४॥ ॥ ॥

बहुपुण्याः ॥१६॥ एवं सभयं स्त्रीषु ब्रुवतीषु सतीषु श्रीकृष्णस्तासां भयनिवृत्तये शत्रुं हंतुं मनश्चक्रे ॥१७॥ एवं स्त्रीणां गिरः श्रुत्वा पुत्रयोर्बलमजानंतौ देवकीवसुदेवावनुतापं प्राप्तौ ॥१८॥ रामकृष्णौ तु तैस्तैर्युद्धमार्गैश्चाणूरमुष्टिकाभ्यां सह यथान्यायं युयुधाते ॥१९॥ ततो वज्रपातनिष्ठुरैर्भगवतो हस्तजान्वादिप्रहारैः श्लथांगश्चाणूरो मुहुर्ग्लानिं प्राप ॥२०॥ ततः स मुष्टिं बद्ध्वोत्पत्य च क्रुद्धः कृष्णं वक्षसि ताडयामास ॥२१॥ तत्प्रहारेण कृष्णोऽचलितः सन् तं बाह्वोर्निगृह्य बहुशो भ्रामयन् ॥२२॥ भ्रामणेनैव गतप्राणं तं भूपृष्ठे पोथ-यामास । तदा स वज्र इव पपात ॥२३॥ तथैव बलभद्रेण हस्ततलेन ताडितो मुष्टिको रक्तं वमन् गतप्राणः सन् भूतले पपात ॥२४॥ ॥ ॥

॥२५॥ततः प्राप्तं कूटं रामो लीलया सावज्ञं वाममुष्टिना जघान॥२६॥तर्ह्येव शलः कृष्णपादाग्रेण हतमस्तकस्तोशलकश्च द्विधा विदीर्णः संस्तावुभावपि निपेततुः ॥२७॥ एवं चाणूर-मुष्टिक-कूट-शल-तोशलकेषु हतेषु शेषा मल्लाः स्वप्राणरक्षणार्थं दुद्रुवुः ॥२८॥ ततो रामकृष्णौ धृतनूपुरौ भूत्वा गोपानाहूय तैः सह वाद्यगतिसमं नृत्यादि कुर्वंतौ संतौ विजह्रतुः ॥२९॥ तदा कंसं विना सर्वे जना हर्षं प्रापुः । साधवश्च साध्वित्यूचुः ॥३०॥ एवं मल्लवर्येषु हतेष्वन्येषु च पलायितेषु सत्सु कंसो वाद्यानि निवार्य जगाद॥३१॥ हे दूताः, एतौ दुर्वृत्तौ वसुदेवसुतौ पुरान्निःसारयत । गोपानां धनं हरत । दुर्मतिं नंदं च बध्नीत ॥३२॥ दुर्बुद्धिर्वसुदेवो हन्याताम् । तथा परपक्षगामी नः पितोग्रसेनो हन्यताम् ॥३३॥ एवं कंसे विक-

प्रवेपितः स रुधिरमुद्वमन्मुखतोऽर्दितः ॥ व्यसुः पपातोर्व्युपस्थे वाताहत इवांघ्रिपः ॥२५॥ ततः कूटमनुप्राप्तं रामः प्रहरतां वरः ॥ अवधीलीलया राजन्सावज्ञं वाममुष्टिना ॥२६॥ तर्ह्येव हि शलः कृष्णप्रपदाऽऽहतशीर्षकः ॥ द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥२७॥ चाणूरे मुष्टिके कूटे शले तोशलके हते ॥ शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥२८॥ गोपान्वयस्यानाकृष्य तैः संसृज्य विजह्रतुः ॥ वाद्यमानेषु तूर्येषु वल्गंतौ धृतनूपुरौ ॥२९॥ जनाः प्रजाहृषुः सर्वे कर्मणा रामकृष्णयोः ॥ ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति ॥३०॥ हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् ॥ न्यवारयत्स्वतूर्याणि वाक्यं चेदमुवाच ह ॥३१॥ निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ॥ धनं हरत गोपानां नंदं बध्नीत दुर्मतिम् ॥३२॥ वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः ॥ उग्रसेनः पिता चापि सानुगः परपक्षगः ॥३३॥ एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ॥ लघिम्नोत्पत्य तरसा मंचमुत्तुंगमारुहत् ॥३४॥ तमाविशंतमालोक्य मृत्युमात्मन आसनात् ॥ मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥३५॥ तं खड्गपाणिं विचरंतमाशु श्येनं यथा दक्षिणसव्यमंबरे ॥ समग्रहीद्दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ॥३६॥ प्रगृह्य केशेषु चलत्किरीटं निपात्य रंगोपरि तुंगमंचात् ॥ तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतंत्रः ॥३७॥ तं संपरेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ॥ हाहेति शब्दः सुमहांस्तदाभूदुदीरितः सर्वजनैर्नरेंद्र ॥३८॥ स नित्यदोद्विग्नधिया तमीश्वरं पिबन्वदन्वा विचरन्स्वपन्श्वसन् ॥ ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप ॥३९॥ ॥ ॥ ॥

त्थमाने सति क्रुद्धः कृष्ण उड्डाणं कृत्वोच्चं मंचमारुहत् ॥३४॥ तदा तं स्वमृत्युं प्राप्तं दृष्ट्वा कंस आसनादुत्थाय खड्गचर्मणी जगृहे ॥३५॥ तदा खड्गपाणिं दक्षिणतो वामत आकाशे च श्येनवत्संचरंतं तं कंसमविपह्यतेजाः कृष्णो गरुडः सर्पमिव शीघ्रं समग्रहीत् ॥३६॥ तं च केशेषु धृत्वा मंचाद्रंगोपरि निपात्य तस्योपरि विश्वाश्रयः स्वयं पपात ॥३७॥ तावता मृतं तं कंसं सिंहो गजमिव विचकर्ष । तदा सर्वजनैरुच्चारितो हा हेति महान् शब्दो जातः ॥३८॥ हे नृप, स कंसो नित्यं भीतया बुद्ध्या तं श्रीकृष्णं भक्षण-पान-भाषण-शयना-

१ गरिष्ठत्वाय विश्वाश्रयत्वमुक्तम् ।

दिष्वग्रतो ददर्श । अतोऽते तदेव दुर्लभं स्वरूपं प्राप ॥३९॥ ततस्तद्भ्रातरोऽष्टौ कंकन्यग्रोधादयः क्रुद्धा भ्रातुरानृण्यं कर्तुं कृष्णमभ्यधावन् ॥४०॥ ततोऽतिवेगवत्तरांस्तान् रामः परिघमुद्यम्य जघान ॥४१॥ तदा व्योम्नि दुंदुभयो नेदुः । ब्रह्मादिदेवाः पुष्पवृष्टिं कुर्वंतः संतः कृष्णं प्रशशंसुः । अप्सरसश्च ननृतुः ॥४२॥ हे नृप, ततः कंसादीनां स्त्रियः पतिमरणदुःखिता मस्तकानि निघ्नंत्योऽश्रुलोचनाः सत्यस्तत्राजग्मुः ॥४३॥ तदा वीरशय्यायां शयानान् स्वपतीनालिंग्य सुस्वरं विलापं चक्रुः ॥४४॥ हा नाथ, हे प्रिय, हे धर्मज्ञ, हे करुणानाथ हे वत्सल, त्वया हतेन वयं गृहपुत्रादिभिः सह मृततुल्या जाताः ॥४५॥ हे पुरुषश्रेष्ठ, इयं पुरी त्वया पत्या हीना सती वयमिव न शोभते ॥४६॥ हे कंस, त्वं निरपराधिनां भूतानां द्रोहं कृतवान् । तेनेमां दशां प्रापितोऽसि ॥४७॥ एष कृष्णः सर्वेषां गोप्ता जन्ममरणयोश्च कारणमस्ति । अस्यावज्ञाकर्ता पुमान् क्वापि सुखं न प्राप्नोति ॥४८॥

तस्यानुजा भ्रातरोऽष्टौ कंकन्यग्रोधकादयः ॥ अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥४०॥ तथाऽतिरभसांस्तांस्तु संयत्तान्रोहिणीसुतः ॥ अहन्परिघमुद्यम्य पशूनिव मृगाधिपः ॥४१॥ नेदुर्दुंदुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः ॥ पुष्पैः किरंतस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः ॥४२॥ तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः ॥ तत्राभीयुर्विनिघ्नंत्यः शीर्षाण्यश्रुविलोचनाः ॥४३॥ शयानान्वीरशय्यायां पतीनालिंग्य शोचतीः ॥ विलेपुः सुस्वरं नार्यो विसृजंत्यो मुहुः शुचः ॥४४॥ हा नाथ प्रिय धर्मज्ञ करुणानाथवत्सल ॥ त्वया हतेन निहता वयं ते सगृहप्रजाः ॥४५॥ त्वया विरहिता पत्या पुरीयं पुरुषर्षभ ॥ न शोभते वयमिव निवृत्तोत्सवमंगला ॥४६॥ अनागसां त्वं भूतानां कृतवान्द्रोहमुल्बणम् ॥ तेनेमां भो दशां नीतो भूतध्रुक्को लभेत शम् ॥४७॥ सर्वेषामिह भूतानामेष हि प्रभवाप्ययः ॥ गोप्ता च तदवध्यायी न क्वचित्सुखमेधते ॥४८॥ श्रीशुक उवाच ॥ राजयोषित आश्वास्य भगवाँल्लोकभावनः ॥ यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥४९॥ मातरं पितरं चैव मोचयित्वाऽथ बंधनात् ॥ कृष्णरामौ ववंदाते शिरसाऽऽस्पृश्य पादयोः ॥५०॥ देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ ॥ कृतसंवंदनौ पुत्रौ सस्वजाते न शंकितौ ॥५१॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे कंसवधो नाम चतुश्चत्वारिंशोऽध्यायः ॥४४॥ ॥ श्रीशुक उवाच ॥ पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ॥ मा भूदिति निजां मायां ततान जनमोहिनीम् ॥१॥ ॥ ॥

श्रीशुक उवाच ॥ ततः कृष्णो राजपत्नीराश्वास्य हतानां कंसादीनां पारलौकिकीं क्रियां कारयामास ॥४९॥ ततो रामकृष्णौ मातरं पितरं च बंधनान्मोचयित्वा तौप्रति ववंदाते ॥५०॥ तदा देवकी वसुदेवश्च कृतवंदनौ पुत्रौ जगदीश्वराविति ज्ञात्वा नालिंगितवंतौ । किं तु बद्धांजली तस्थतुः ॥५१॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे कंसवधो नाम चतुश्चत्वारिंशोऽध्यायः ॥४४॥ पंचचत्वारिंशकेऽथ पितृनंदादिसांत्वनम् । उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः ॥१॥ श्रीशुक उवाच ॥ कृष्णः पितरौ प्राप्तज्ञानौ ज्ञात्वेदानीं तज्ज्ञानं मा भूदिति स्वमायां तयोरुपरि प्रसारितवान् ॥१॥ ॥ ॥ ॥ ॥ ॥

ततः सबलः कृष्णः हे अंब, हे तातेति मातापितरौ प्रीणयन् जगाद ॥२॥ हे पितरौ, अस्मत्तो युवयोर्बाल्य-पौगंड-कैशोरावस्थानुभवसुखानि नाभवन् ॥३॥ किंच । दैवहीनयोरावयोर्वासो भवतां समीपे न जातः । पितृगेहस्था बाला यां मुदं विंदंते सा चावयोर्न लब्धा ॥४॥ अयं देहो याभ्यां जनितः पोषितश्च तयोः पित्रोरानृण्यं मर्त्यः शतवर्षेणायुष्येणापि नाप्नोति ॥५॥ यः सुतः समर्थः सन् देहेन धनेन च पित्रोर्जीविकां न संपादयेत्तं लोकांतरे यमदूताः तस्यैव मांसं खादयंति ॥६॥ वृद्धौ मातापितरौ पतिव्रतां-स्त्रियं, बालं-सुतं गुरुं विप्रं शरणागतं च यः समर्थो न पोषयति स जीवन्मृततुल्यः ॥७॥ तस्मात्कंसाद्भीतयोर्युवयोरपूजयतोश्चावयोरेते दिवसा व्यर्थं गताः ॥८॥ अतो हे पितरौ,

उवाच पितरावेत्य साग्रजः सात्वतर्षभः ॥ प्रश्रयावनतः प्रीणन्नंब तातेति सादरम् ॥२॥ नास्मत्तो युवयोस्तात नित्योत्कंठितयोरपि ॥ बाल्य-पौगंडकैशोराः पुत्राभ्यामभवन्कचित् ॥३॥ न लब्धो दैवहतयोर्वासो नौ भवदंतिके ॥ यां बालाः पितृगेहस्था विंदंते लालिता मुदम् ॥४॥ सर्वार्थसंभवो देहो जनितः पोषितो यतः ॥ न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥५॥ यस्तयोरात्मजः कल्प आत्मना च धनेन च ॥ वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयंति हि ॥६॥ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ॥ गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ॥७॥ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ॥ मोघमेते व्यतिक्रांता दिवसा वामनर्चतोः ॥८॥ तत्क्षंतुमर्हथस्तात मातर्नौ परतंत्रयोः ॥ अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥९॥ श्रीशुक उवाच ॥ इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ॥ मोहितावंकमारोप्य परिष्वज्यापतुर्मुदम् ॥१०॥ सिंचंतावश्रुधाराभिः स्नेहपाशेन चावृतौ ॥ न किंचिदूचतू राजन्बाष्पकंठौ विमोहितौ ॥११॥ एवमाश्वास्य पितरौ भगवान्देवकीसुतः ॥ मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥१२॥ आह चास्मान्महाराज प्रजाश्चाज्ञप्तुमर्हसि ॥ ययातिशापाद्यदुभिर्नासितव्यं नृपासने ॥१३॥ मयि भृत्य उपासीने भवतो विबुधादयः ॥ बलिं हरंत्यवनताः किमुतान्ये नराधिपाः ॥१४॥ सर्वान्स्वान्ज्ञातिसंबंधान्दिग्भ्यः कंसभयाकुलान् ॥ यदुवृष्ण्यंधकमधुदाशार्हकुकुरादिकान् ॥१५॥ ॥ ॥ ॥

युवयोः शुश्रूषामकुर्वतोः परतंत्रयोरावयोरपराधान् क्षंतुमर्हथः ॥९॥ श्रीशुक उवाच ॥ एवं मायामनुष्यस्य हरेर्वाण्या मोहितौ पितरौ सुतावंकमारोप्यालिंग्य मुदं प्रापतुः ॥१०॥ किंच । स्नेहाश्रुधाराभिः सिंचंतौ गद्गदकंठौ तौ किंचन नोचतुः ॥११॥ एवं कृष्णः पितरावाश्वास्य मातामहमुग्रसेनं यदूनां राजानमकरोत् ॥१२॥ आह च । हे महाराज, त्वमस्मान् प्रजाश्चाज्ञां कर्तुमर्हसि । ययातिशापाद्यदुभिरस्माभिर्नृपासने न स्थेयम् । तव तु यादवत्वेऽपि ममाज्ञया न दोषः ॥१३॥ किंच । भृत्ये मयि समीपे सति भवतो देवादय उपायनानि समर्पयिष्यंति । अन्ये नृपाः समर्पयिष्यंतीति किमु वक्तव्यम् ॥१४॥ ततः कृष्णः कंसभयव्याप्तान् सर्वान् स्वज्ञातिसंबंधान् यदुवृष्ण्यंधकादींश्च

१ अत्र स्वस्मिन्, कर्तुं अकर्तुं अन्यथाकर्तुं च समर्थत्वमीश्वरत्वं च सूचितम् ।

दिरभ्य आनाय्य ॥१५॥ वित्तैः संतर्प्य स्वस्वगेहेषु स्थापयामास ॥१६॥ ततः सर्वे यादवा रामकृष्णभुजे रक्षिताः प्राप्तमनोरथा नित्यं कृष्णमुखांबुजं वीक्षमाणाश्च संतो गृहेषु रेमिरे ॥१७॥१८॥ तत्र ये वृद्धास्तेऽपि नेत्रैः कृष्णमुखामृतं पिबंतः संतस्तरुणा इवातिबलिष्ठाः पराक्रमिणश्चासन् ॥१९॥ अथ रामकृष्णौ नंदंप्रति गत्वाऽऽलिंग्योचतुः ॥२०॥ हे पितः, युवाभ्यामावामत्यंतं लालितौ पालितौ च । यतः पित्रोः स्वदेहादपि पुत्रेष्वधिका प्रीतिरुत्पद्यते ॥२१॥ किंच । स पिता सा च माता । यौ स्वपुत्रवत् बंधुभिस्त्यक्तान् शिशून् पुष्णीताम् ॥२२॥ हे तात नंद यूयं व्रजं यात । वयमत्रस्थानां सुहृदां सुखमुत्पाद्य युष्मान् स्नेहदुःखितान् ज्ञातीन् द्रष्टुमेष्यामः ॥२३॥ एवं कृष्णः सगोपं नंदं सांत्वयित्वा

सभाजितान्समाश्वास्य विदेशावासकर्शितान् ॥ न्यवासयत्स्वगेहेषु वित्तैः संतर्प्य विश्वकृत् ॥१६॥ कृष्णसंकर्षणभुजैर्गुप्ता लब्धमनोरथाः ॥ गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥१७॥ वीक्षंतोऽहरहः प्रीता मुकुंदवदनांबुजम् ॥ नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥१८॥ तत्र प्रवयसोऽप्यासन्युवानोऽतिबलौजसः ॥ पिबंतोऽक्षैर्मुकुंदस्य मुखांबुजसुधां मुहुः ॥१९॥ अथ नंदं समासाद्य भगवान्देवकीसुतः ॥ संकर्षणश्च राजेंद्र परिष्वज्येदमूचतुः ॥२०॥ पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ॥ पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥२१॥ स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ॥ शिशून्बंधुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥२२॥ यात यूयं व्रजं तात वयं च स्नेहदुःखितान् ॥ ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥२३॥ एवं सांत्वय्य भगवान्नंदं सव्रजमच्युतः ॥ वासोलंकारकुप्याद्यैरर्हयामास सादरम् ॥२४॥ इत्युक्तस्तौ परिष्वज्य नंदः प्रणयविह्वलः ॥ पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥२५॥ अथ शूरसुतो राजन्पुत्रयोः समकारयत् ॥ पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम् ॥२६॥ तेभ्योऽदाद्दक्षिणा गावो रुक्ममालाः स्वलंकृताः ॥ स्वलंकृतेभ्यः संपूज्य सवत्साः क्षौममालिनीः ॥२७॥ याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ॥ ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥२८॥ ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ ॥ गर्गाद्यदुकुलाचार्याद्गायत्रं व्रतमास्थितौ ॥२९॥ प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ॥ नान्यसिद्धामलज्ञानं गूहमानौ नरेहितैः ॥३०॥ अथो गुरुकुले वासमिच्छंतावुपजग्मतुः ॥ काश्यं सांदीपनिं नाम ह्यवंतिपुरवासिनम् ॥३१॥ ॥ ॥

वस्त्रालंकारकांस्यादिपात्रादिभिः सादरं पूजयामास ॥२४॥ एवमुक्तो नंदोऽश्रुभिर्नेत्रे आपूर्य प्रेमविह्वलस्तावालिंग्य गोपैः सह व्रजं ययौ ॥२५॥ हे राजन्, अथ वसुदेवः रामकृष्णयोः पुत्रयोर्व्रतबंधं पुरोहितेन गर्गेण ब्राह्मणैश्च कारयित्वा ॥२६॥ स्वलंकृतेभ्यस्तेभ्यो दक्षिणाः स्वलंकृताः सवत्सा गाश्च ददौ ॥२७॥ किंच । रामकृष्णयोर्जन्मनि या मनोदत्तास्ता गा अपि स्मृत्वा ददौ ॥२८॥ ततः कृष्णरामौ द्विजत्वं प्राप्य स्वकुलाचार्याद्गर्गाद्ब्रह्मचर्यव्रतं स्वीकृतवंतौ ॥२९॥ ततः सर्वज्ञौ सर्वविद्याप्रवर्तकौ जगदीश्वरावपि तौ ॥३०॥ गुरुकुले वासमिच्छंतौ संतौ अवंतिपुरस्थं काशगोत्रोत्पन्नं सांदीपनिं नाम गुरुमुपजग्मतुः ॥३१॥ ॥ ॥ ॥ ॥

ततस्तौ गुरौ वर्तनमन्यान् ग्राहयंतौ संतौ गुरुं भक्त्या देवमिव सेवितवंतौ ॥३२॥ तयोस्तुष्टो गुरुः शिक्षाद्यंगैरुपनिषद्भिश्च सहितान् चतुरो वेदान् प्रोवाच ॥३३॥ धनुर्वेदं धर्मशास्त्राणि मीमांसां तर्कविद्यां षड्विधां राजनीतिं च प्रोवाच ॥३४॥ तदा सर्वविद्याप्रवर्तकौ तौ एकवारं गुरोरुच्चारणमात्रेण सर्वं जगृहतुः ॥३५॥ ततश्चतुःषष्ट्याऽहोरात्रैर्गीत-वाद्य-नृत्यादयश्चतुःषष्टिकलाश्चतुर्दश विद्याश्च जगृहतुः ॥ ततो रामकृष्णौ गुरुं दक्षिणार्थमुपलोभितवंतौ ॥३६॥ तदा गुरुस्तयोरद्भुतं महिमानं दृष्ट्वा पत्न्या सह विचार्य प्रभासक्षेत्रे समुद्रे मृतं वालं वरयामास ॥३७॥ तदा तथेत्युक्त्वा तौ रथमारुह्य प्रभासे समुद्रतटे गत्वा स्थितौ ॥ तदा तावीश्वराविति ज्ञात्वा समुद्रस्तयोः पूजनं चकार ॥३८॥ तं कृष्ण आह।

यथोपसाद्य तौ दांतौ गुरौ वृत्तिमनिंदिताम् ॥ ग्राहयंतावुपेतौ स्म भक्त्या देवमिवादृतौ ॥३२॥ तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः ॥ प्रोवाच वेदानखिलान्सांगोपनिषदो गुरुः ॥३३॥ सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा ॥ तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥३४॥ सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ॥ सकृन्निगदमात्रेण तौ संजगृहतुर्नृप ॥३५॥ अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः ॥ गुरुदक्षिणयाऽऽचार्यं छंदयामासतुर्नृप ॥३६॥ द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषीं मतिम् ॥ संमंत्र्य पत्न्या स महार्णवे मृतं वालं प्रभासे वरयांबभूव ह ॥३७॥ तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरंतविक्रमौ ॥ वेलामुपव्रज्य निषीदतुः क्षणं सिंधुर्विदित्वाऽर्हणमाहरत्तयोः ॥३८॥ तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् ॥ योऽसाविह त्वया ग्रस्तो वालको महतोर्मिणा ॥३९॥ समुद्र उवाच ॥ नैवाहार्षमहं देव दैत्यः पंचजनो महान् ॥ अंतर्जलचरः कृष्ण शंखरूपधरोऽसुरः ॥४०॥ आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः ॥ जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम् ॥४१॥ तदंगप्रभवं शंखमादाय रथमागमत् ॥ ततः संयमनीं नाम यमस्य दयितां पुरीम् ॥४२॥ गत्वा जनार्दनः शंखं प्रदध्मौ सहलायुधः ॥ शंखनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ॥४३॥ तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम् ॥ उवाचावनतः कृष्णं सर्वभूताशयालयम् ॥ लीलामनुष्य हे विष्णो युवयोः करवाम किम् ॥४४॥ श्रीभगवानुवाच ॥ गुरुपुत्रमिहानीतं निजकर्मनिबंधनम् ॥ आनयस्व महाराज मच्छासनपुरस्कृतः ॥४५॥ ॥ ॥ ॥ ॥

हे सिंधो, त्वया यो मद्गुरुवाल इहोर्मिणा ग्रस्तः स दीयताम् ॥३९॥ समुद्र उवाच ॥ हे देव, अहं वालं नाहार्षम् । किंतु ममांतर्जले पंचजननामा शंखरूपधरोऽसुर आस्ते ॥४०॥ तेन नूनं हृतः । तच्छ्रुत्वा प्रभुर्जलं प्रविश्य दैत्यं हत्वा तदुदरे वालं नापश्यत् ॥४१॥ ततस्तदंगजं शंखमादाय रथमागमत् । ततः संयमिनीं यमपुरीं गत्वा ॥४२॥ सरामः कृष्णः शंखं दध्मौ । तं नादं श्रुत्वा यमः ॥४३॥ तयोर्महापूजां कृत्वा सर्वभूतहृदयनिवासं कृष्णं जगाद । हे विष्णो, हे राम, युवयोः किं करवाम ॥४४॥ श्रीभगवानुवाच ॥ हे यम, स्वकर्म-

१ संधिश्च विग्रहो यानमासनं द्वैधमाश्रय इत्येवं षड्विधाम् ।२ ऋग्वेदादयश्चत्वारो वेदाः । शिक्षादीनि षडंगानि । मीमांसा, धर्मशास्त्रं, न्यायः पुराणानि चेति चत्वार्युपांगानि । एवं चतुर्दश विद्याः ।

बद्धस्त्वद्दूतैरिहानीतो गुरुपुत्रो मदाज्ञया त्वया प्रत्यर्प्यताम् ॥४५॥ तथेति तेन प्रत्यर्पितं बालं गृहीत्वा गुरवे दत्वा रामकृष्णौ पुनर्वरं वृणीष्वेत्यूचतुः ॥४६॥ ततो गुरुराह। हे वत्सौ, युवाभ्यां गुरुदक्षिणा सम्यक् संपादिता। युष्मद्विधयोर्गुरोर्मम कामानां मध्ये को नु कामोऽवशिष्टः स्यान्न कोऽपि ॥४७॥ अतो हे वीरौ, युवां स्वगृहं गच्छतम्। वां कीर्तिः पावनी भवतु। तथेह परत्र च वेदा अगतसाराः संतु ॥४८॥ एवं गुरुणानुऽज्ञातौ तौ वायुवेगेन मेघनादेन रथेन मथुरां प्राप्तौ ॥४९॥ तौ दृष्ट्वा बहूनि दिनानि न पश्यंत्यः प्रजा नष्टलब्धधना इवानंदं प्रापुः ॥५०॥ इति श्रीमद्भा० चू० दश० पूर्वार्धे पंचचत्वारिंशोऽध्यायः ॥४५॥ षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा। यशोदानंदयोश्चक्रे कृष्णः शोकापनोदनम् ॥१॥ श्रीशुक उवाच॥ हे नृप, यादवानां श्रेष्ठो बृहस्पतेः शिष्यो बुद्ध्याऽतिश्रेष्ठ उद्धवः कृष्णस्यातिप्रियो मित्रं आसीत् ॥१॥ तमेकांतिनं प्रियं भक्तं हरिर्हस्तेन

तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ॥ दत्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ॥४६॥ गुरुरुवाच॥ सम्यक्संपादितो वत्स भवद्भ्यां गुरुनिष्क्रयः॥ को नु युष्मद्विधगुरोः कामानामवशिष्यते ॥४७॥ गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी॥ छंदांस्ययातयामानि भवंत्विह परत्र च ॥४८॥ गुरुणैवमनुज्ञातौ रथेनानिलरंहसा॥ आयातौ स्वपुरं तात पर्जन्यनिनदेन वै ॥४९॥ समनंदन्प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ॥ अपश्यंत्यो बह्वहानि नष्टलब्धधना इव ॥५०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे गुरुपुत्रानयनं नाम पंचचत्वारिंशोऽध्यायः ॥४५॥ श्रीशुक उवाच॥ वृष्णीनां प्रवरो मंत्री कृष्णस्य दयितः सखा॥ शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥१॥ तमाह भगवान्प्रेष्ठं भक्तमेकांतिनं क्वचित्॥ गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥२॥ गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह॥ गोपीनां मद्वियोगाधिं मत्संदेशैर्विमोचय ॥३॥ ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः॥ ( मामेव दयितं प्रेष्ठमात्मानं मनसा गताः॥ ) ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ॥४॥ मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः॥ स्मरंत्योंऽग विमुह्यंति विरहौत्कंठ्यविह्वलाः ॥५॥ धारयंत्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन॥ प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥६॥ श्रीशुक उवाच॥ इत्युक्त उद्धवो राजन्संदेशं भर्तुरादृतः॥ आदाय रथमारुह्य प्रययौ नंदगोकुलम् ॥७॥ प्राप्तो नंदव्रजं श्रीमान्निम्लोचति विभावसौ॥ छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥८॥ ॥

हस्तं गृहीत्वाऽऽह ॥२॥ हे उद्धव, त्वं व्रजं गत्वा, आवयोः पित्रोः प्रीतिं कुरु। गोपीनां च मम वियोगजं दुःखं मत्संदेशैर्दूरीकुरु ॥३॥ यतस्ता अहमेव प्राणो यासां ता मदर्थे च त्यक्तपतिपुत्राद्याः ( मामेव प्रियमात्मानं मनसा प्राप्ताः संति ) ये मदर्थे त्यक्तलोकधर्मास्तानहं सुखयामि ॥४॥ अतिप्रिये मयि दूरस्थे सति मां स्मरंत्यो मदात्मिकास्ता गोप्योऽतिमुह्यंति ॥५॥ गोकुलनिर्गमनसमये शीघ्रमहमागमिष्यामीति मम प्रत्यागमनसंदेशैरतिदुःखेन प्राणान् धारयंति ॥६॥ श्रीशुक उवाच। एवमुक्त उद्धवो रथमारुह्य सूर्यास्तसमये प्रविशतां खुररजोभिश्छन्नरजः सन् गोकुलं प्राप्तः ॥७॥८॥ ॥ ॥ ॥ ॥ ॥

कथंभूतं गोकुलम् । पुष्पवतीनां गवां निमित्तं युद्ध्यद्भिर्मत्तैर्वृषैस्तथा स्ववत्सान् धावंतीभिर्गोभिर्नादितम् ॥९॥ इतस्तत उत्पतद्भिर्वत्सैर्मंडितम् ॥ किंच । गोदोहशब्दैर्वेणूनां निःस्वनेन च मंडितम् ॥१०॥ रामकृष्णयोः कर्माणि गायंतीभिर्गोपैश्च विराजितम् ॥११॥ अग्नि-सूर्यातिथि-गो-ब्राह्मण-पितृ-देवादीनां पूजान्वितैर्धूपदीपादिभिश्च युक्तैर्गोपगृहैर्मनोरमम् ॥१२॥ सर्वतः पुष्पितवनं भ्रमरपक्षिनादितम् ॥१३॥ एवंभूतं गोकुलं प्राप्तमुद्धवं दृष्ट्वा नंदः प्रीतः सन् तमालिंग्य वासुदेवबुद्ध्या पूजयामास ॥१४॥ ततः पायसादिना भोजितं शय्यायामुपविष्टं पादसंवाहनादिना विश्रांतं तं नंदः पप्रच्छ ॥१५॥ हे उद्धव, नः सखा वसुदेवो बंधान्मुक्तः पुत्रादिभिर्युक्तश्च सन् सुखी आस्ते कच्चित् ॥१६॥ किंच । पापः कंसः

वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः ॥ धावंतीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥९॥ इतस्ततो विलंघद्भिर्गोवत्सैर्मंडितं सितैः ॥ गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च ॥१०॥ गायंतीभिश्च कर्माणि शुभानि बलकृष्णयोः ॥ स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥११॥ अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः ॥ धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥१२॥ सर्वतः पुष्पितवनं द्विजालिकुलनादितम् ॥ हंसकारंडवाकीर्णैः पद्मखंडैश्च मंडितम् ॥१३॥ तमागतं समागम्य कृष्णस्यानुचरं प्रियम् ॥ नंदः प्रीतः परिष्वज्य वासुदेवधियाऽर्चयत् ॥१४॥ भोजितं परमान्नेन संविष्टं कशिपौ सुखम् ॥ गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः ॥१५॥ कच्चिदंग महाभाग सखा नः शूरनंदनः ॥ आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥१६॥ दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना ॥ साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥१७॥ अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् ॥ गोपान्व्रजं चात्मनाथं गावो वृंदावनं गिरिम् ॥१८॥ अप्यायास्यति गोविंदः स्वजनान्सकृदीक्षितुम् ॥ तर्हि द्रक्ष्यामस्तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥१९ ॥ दावाग्नेर्वातवर्षाच्च विषसर्पाच्च रक्षिताः ॥ दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥२०॥ स्मरतां कृष्णवीर्याणि लीलापांगनिरीक्षितम् ॥ हसितं भाषितं चांग सर्वा नः शिथिलाः क्रियाः ॥२१॥ सरिच्छैलवनोद्देशान्मुकुंदपदभूषितान् ॥ आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥२२॥ मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ॥ सुराणां महदर्थाय गर्गस्य वचनं यथा ॥२३॥ ॥ ॥ ॥ ॥ ॥

स्वेन पापेन मृतः पतद्दिष्ट्या । यो यदूनां सदा द्वेष्टा आस ॥१७॥ कृष्णः, आवां पितरौ सखीन् गोपान् गोकुलं गा वृंदावनं गोवर्धनं च स्मरति किम् ॥१८॥ स गोविंदः स्वजनान् सकृद्द्रष्टुं चैष्यति किम्। तर्हि तन्मुखं वयं द्रक्ष्यामः॥१९॥ किंच। कृष्णेन दावाग्नेर्वातवर्षादिभ्यो दुस्तरेभ्यो मृत्युभ्यश्च वयं रक्षिताः स्मः ॥२०॥ अतस्तद्वीर्य-लीलावलोकन-हास्य-भाषणानि स्मरतां नः सर्वाः क्रियाः शिथिला भवंति ॥२१॥ तथा कृष्णपदभूषितान् सरिच्छैल-वनोद्देशान् वीक्षमाणानां नो मनस्तन्मयतां याति ॥२२॥ एतौ देवोत्तमौ देवकार्यार्थमिहावतीर्णौ

१ मुंच मा मुंच नय आनय देहि गृहाणेत्यादिभिर्गोदोहसंबंधिभिः शब्दैः ।

इति मन्ये ॥२३॥ किंच । यौ रामकृष्णौ लीलया कुवलयापीडं गजं चाणूरमुष्टिकौ मल्लौ दशसहस्रगजबलं कंसं चावधिष्टाम् ॥२४॥ किंच । यः कृष्णस्तालत्रयमितं धनुर्बभंज । एकेन हस्तेन च गिरिं सप्ताहं दधौ ॥२५॥ प्रलंब-धेनक-वृषासुर-तृणावर्त-बकादयो याभ्यां हताः । अतस्तौ देवावेव स्तः ॥२६॥ श्रीशुक उवाच ॥ एवं कृष्णं संस्मृत्य संस्मृत्य नंदोऽतिप्रेमविह्वलः सन् तूष्णीमभवत् ॥२७॥ एवं यशोदा पुत्रचरितानि शृण्वंती सती अश्रूणि मुमोच ॥२८॥ एवं कृष्णे यशोदानंदयोः प्रीतिं दृष्ट्वोद्धवो नंदमाह ॥२९॥ उद्धव उवाच । नूनं युवां यशोदानंदौ मनुष्येष्वतिश्रेष्ठौ । यतो युवाभ्यामीदृशी बुद्धिर्हरौ कृताऽस्ति ॥३०॥ एतौ रामकृष्णौ निश्चयेन जगतो निमित्तोपादानरूपौ

कंसं नागायुतप्राणं मल्लौ गजपतिं तथा ॥ अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥२४॥ तालत्रयं महासारं धनुर्यष्टिमिवेभराट् ॥ बभंजैकेन हस्तेन सप्ताहमदधाद्गिरिम् ॥२५॥ प्रलंबो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ॥ दैत्याः सुरासुरजितो हता येनेह लीलया ॥२६॥ श्रीशुक उवाच ॥ इति संस्मृत्य संस्मृत्य नंदः कृष्णानुरक्तधीः ॥ अत्युत्कंठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः ॥२७॥ यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ॥ शृण्वंत्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा ॥२८॥ तयोरित्थं भगवति कृष्णे नंदयशोदयोः ॥ वीक्ष्यानुरागं परमं नंदमाहोद्धवो मुदा ॥२९॥ उद्धव उवाच ॥ युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ॥ नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥३०॥ एतौ हि विश्वस्य च बीजयोनी रामो मुकुंदः पुरुषः प्रधानम् ॥ अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ ॥३१॥ यस्मिन्जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् ॥ निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ॥३२॥ तस्मिन्भवंतावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ॥ भावं विधत्तां नितरां महात्मन्किंवाऽवशिष्टं युवयोः सुकृत्यम् ॥३३॥ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ॥ प्रियं विधास्यते पित्रोर्भगवान्सात्वतां पतिः ॥३४॥ हत्वा कंसं रंगमध्ये प्रतीपं सर्वसात्वताम् ॥ यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥३५॥ मा खिद्यतं महाभागौ द्रक्ष्यथः कृष्णमंतिके ॥ अंतर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥३६॥ ॥ ॥ ॥

प्रधानपुरुषौ स्तः । किंच । एतौ भूतेष्वनुप्रविश्य नानाभेदयुक्तस्य ज्ञानस्य जीवस्य च नियंतारौ भवतः ॥३१॥ यस्मिन् जनः प्राणवियोगकाले क्षणं मन आवेश्य कर्मवासनां त्यक्त्वा स्वरूपज्ञानवान् सन् परां गतिं प्राप्नोति ॥३२॥ तस्मिन् मनुष्याकृतौ नारायणे युवां भक्तिं कुरुतः । अतो युवां कृतकृत्यौ ॥३३॥ हे नंद, स भगवान् कृष्णः स्वल्पेन कालेन गोकुलमेत्य युवयोः प्रियं करिष्यति ॥३४॥ किंच । कंसं हत्वा वः समीपमागत्य कृष्णो यदाह तदपि सत्यं करिष्यति ॥३५॥ हे महाभागौ, युवां कृष्णं समीपे द्रक्ष्यथः । यतः स सर्वभूतानामंतर्हृदये काष्ठेऽग्निरिवास्ते ॥३६॥ ॥ ॥ ॥ ॥ ॥

१ नवशतहस्तपरिमितम् । २ पुरुषोऽशो बीजं निमित्तकारणं, प्रधानं शक्तियोंनिरुपादानकारणमिति ।

तस्य निरहंकारिणः कृष्णस्य प्रियोऽप्रिय उत्तमाधममध्यमाश्च न संति ॥३७॥ तस्य माता-पिता-भार्या-पुत्रादयः स्वकीयः परकीयो देहः जन्म कर्म च न संति । तथाऽपि स साधूनां रक्षणार्थं सात्विक-राजस-तामसयोनिषु प्रादुर्भवति ॥३८॥३९॥ स निर्गुणोऽपि सन् सत्वादीन् गुणान् सेवते । तैश्च विश्वं सृजति रक्षति संहरति च ॥४०॥ हे नंद, भ्रमणं प्राप्तया दृष्ट्या भूमिरपि भ्राम्यतीव यथा प्रतीयते एवं चित्ते कर्तरि सति तत्राध्यासेनात्मा कर्तेव स्मृतः ॥४१॥ किंच । अयं हरिर्युवयोरेव पुत्रो नास्ति । किंतु सर्वेषामपि पुत्र आत्मा पिता माता ईश्वरश्चास्ति ॥४२॥ दृष्टं श्रुतं भूतं भविष्यं वर्तमानं अल्पं महच्च श्रीकृष्णाद्भिन्नं किमपि नास्ति । स एव सर्वेषां परमार्थरूपोऽस्ति ॥४३॥ हे राजन्, एवं नंदोद्धवयोर्ब्रुवतोः सतोः सा रात्रिर्गता । तदा गोप्य उत्थाय दीपान् प्रज्वाल्यांऽगणादीन्यभ्यर्च्य दधीनि ममंथुः ॥४४॥ तदा ता गोप्यो रज्जूर्विकर्षत्सु भुजेषु कंकणानां माला

न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वास्त्यमानिनः ॥ नोत्तमो नाधमो वापि समानस्य समोऽपि वा ॥३७॥ न माता न पिता तस्य न भार्या न सुतादयः ॥ नात्मीयो न परश्चापि न देहो जन्म एव च ॥३८॥ न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु ॥ क्रीडार्थः सोऽपि साधूनां परित्राणाय कल्पते ॥३९॥ सत्वं रजस्तम इति भजते निर्गुणो गुणान् ॥ क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हंत्यजः ॥४०॥ यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते ॥ चित्ते कर्तरि तत्रात्मा कर्तेवाहंधिया स्मृतः ॥४१॥ युवयोरेव नैवायमात्मजो भगवान्हरिः ॥ सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥४२॥ दृष्टं श्रुतं भूतभवद्भविष्यत्स्थास्नुश्चरिष्णुर्महदल्पकं च ॥ विनाच्युताद्वस्तुतरां न वाच्यं स एव सर्वं परमार्थभूतः ॥४३॥ एवं निशा सा ब्रुवतोर्व्यतीता नंदस्य कृष्णानुचरस्य राजन् ॥ गोप्यः समुत्थाय निरूप्य दीपान्वास्तून्समभ्यर्च्य दधीन्यमंथन् ॥४४॥ ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकंकणस्रजः ॥ चलन्नितंबस्तनहारकुंडलत्विषत्कपोलारुणकुंकुमाननाः ॥४५॥ उद्गायतीनामरविंदलोचनं व्रजांगनानां दिवमस्पृशद्ध्वनिः ॥ दध्नश्च निर्मंथनशब्दमिश्रितो निरस्यते येन दिशाममंगलम् ॥४६॥ भगवत्युदिते सूर्ये नंदद्वारि व्रजौकसः ॥ दृष्ट्वा रथं शातकौंभं कस्यायमिति चाब्रुवन् ॥४७॥ अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः ॥ येन नीतो मधुपुरीं कृष्णः कमलोचनः ॥४८॥ किं साधयिष्यत्यस्माभिर्भर्तुः प्रीतस्य निष्कृतिम् ॥ इति स्त्रीणां वदंतीनामुद्धवोऽगात्कृताह्निकः ॥ ४९ ॥ ॥ इति श्रीम० महा० दश० पू० नंदशोकापनयनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

यासां ताश्चंचलनितंबस्तनहाराः सत्यो विरेजुः ॥४५॥ एवं गायंतीनां तासां शब्दो दधिमंथनशब्दमिश्रितः सन् स्वर्गं पस्पर्श । येन दिशां पापं नश्यति ॥४६॥ तावत्सूर्य उदिते सति नंदद्वारि सुवर्णमयं रथं दृष्ट्वा जनाः कस्यायं रथ इत्यादि जगदुः ॥४७॥ येन मथुरांप्रति कृष्णो नीतः स कंसार्थसाधकोऽक्रूर आगतः किम् ॥४८॥ किंच । अयमक्रूरः साधितेन कार्येण मृतस्य भर्तुरौर्ध्वदेहिकमस्मन्मांसैः पिंडान् कृत्वा साधयिष्यति किम् । एवं स्त्रीणां वदंतीनां सतीनामुद्धवो यमुनायां स्नानादिनियमं कृत्वाऽऽजगाम ॥४९॥
॥ इति श्रीमद्भागवतचू० दश०पूर्वार्धे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ ॥ ॥ ॥ ॥

सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिकाः । बोधयित्वोद्धवस्तत्त्वमनुज्ञाप्यागमत्पुरीम् ॥१॥ श्रीशुक उवाच ॥ ततो गोप्यो हरिदासं प्रलंबबाहुं पीतांबरं कमलमालिनं तं दृष्ट्वा ॥१॥ शुचिस्मिताः सत्यः कृष्णवेषभूषणः कोऽयं कस्य कुतो वा देशादागत इति वदंत्यस्तं सर्वतो वेष्टितवत्यः ॥२॥ ततश्च तं हरेः संदेशहरं ज्ञात्वा गोप्यस्तमेकांते नीत्वा सलज्जहास्यमधुरभाषणादिना सत्कृत्यासने उपविष्टं तं नम्रतया युक्ताः सत्यः पप्रच्छुः ॥३॥ हे उद्धव, त्वां हरेः सेवकमागतं वयं जानीमः । इह कृष्णेन यशोदानंदयोः प्रियं कर्तुं भवान् प्रेषितः किम् ॥४॥ अन्यथा तस्य गोकुले स्मरणीयं न पश्यामः । मातृपित्रादीनां स्नेहसंबंधस्तु मुनेरपि दुस्त्यजोऽस्ति ॥५॥ बंधुभ्योऽन्येषु मैत्री कार्यनिमित्ता सती अनुकरणमात्रं न सत्या । पुष्पेषु भ्रमराणामिव ॥६॥ अस्यैव विस्तारः । वेश्या निर्द्रव्यं पुरुषं त्यजंति । प्रजा असमर्थं राजानं त्यजंति । प्राप्तविद्याः शिष्या गुरुं त्य० । ऋत्विजो दत्तदक्षिणं यज-

॥ श्रीशुक उवाच ॥ तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलंबबाहुं नवकंजलोचनम् ॥ पीतांबरं पुष्करमालिनं लसन्मुखारविंदं मणिमृष्टकुंडलम् ॥१॥ शुचिस्मिताः कोऽयमपीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः ॥ इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदांबुजाश्रयम् ॥२॥ तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः ॥ रहस्यपृच्छन्नुपविष्टमासने विज्ञाय संदेशहरं रमापतेः ॥३॥ जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ॥ भर्त्रेह प्रेषितः पित्रोर्भवान्प्रियचिकीर्षया ॥४॥ अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ॥ स्नेहानुबंधो बंधूनां मुनेरपि सुदुस्त्यजः ॥५॥ अन्येष्वर्थकृता मैत्री यावदर्थविडंबनम् ॥ पुंभिः स्त्रीषु कृता यद्वत्सुमनस्स्विव षट्पदैः ॥६॥ निःस्वं त्यजंति गणिका अकल्पं नृपतिं प्रजाः ॥ अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥७॥ खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ॥ दग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा रतां स्त्रियम् ॥८॥ इति गोप्यो हि गोविंदे गतवाक्कायमानसाः ॥ कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ॥९॥ गायंत्यः प्रियकर्माणि रुदत्यश्च गतह्रियः ॥ तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥१०॥ काचिन्मधुकरं दृष्ट्वा ध्यायंती कृष्णसंगमम् ॥ प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥११॥ गोप्युवाच ॥ मधुप कितवबंधो मा स्पृशांघ्रिं सपत्न्याः कुचविलुलितमालाकुंकुमश्मश्रुभिर्नः ॥ वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडंब्यं यस्य दूतस्त्वमीदृक् ॥१२॥ ॥ ॥ ॥

मानं त्य० ॥७॥ पक्षिणो निष्फलं वृक्षं त्य० । अतिथयो भुक्त्वा गृहं त्यजंति । मृगा दग्धं वनं त्य० । जारो रतां स्त्रियं भुक्त्वा त्यजति ॥८॥ एवं गोप्यो गोविंदे गतवाक्कायमानसाः त्यक्तलोकव्यवहाराः सत्यः ॥९॥ हरेः कर्माणि संस्मृत्य संस्मृत्य गायंत्यो रुदंत्यश्च सत्यस्तमुद्धवमपृच्छन् ॥१०॥ तावत्काचिद्गोपी भ्रमरं दृष्ट्वा कृष्णेन प्रस्थापितं दूतं कल्पयित्वा जगाद ॥११॥ गोप्युवाच ॥ हे धूर्तबंधो, भ्रमर, त्वं मम पादं मा स्पृश । यतस्त्वं सपत्न्याः कुचसंमर्दितकृष्णमालायाः कुंकुमयुतश्मश्रुभिर्युक्तोऽसि । किंतु । तव स सखा तासामेव स्त्रीणां प्रसादं वहतु ॥१२॥ ॥ ॥ ॥ ॥ ॥ ॥

स कृष्णः स्वकीयमधरामृतं सकृत्पाययित्वा नस्तत्यजे । एवंभूतस्य तस्य चरणकमलं लक्ष्मीः कथं सेवते । ज्ञातं मया । सा भगवतो मिथ्याकथाभिर्मोहितचित्ता जाता ॥१३॥ हे भ्रमर, त्वमिह कृष्णं किमिति वहु गायसि । या इदानीं तत्प्रियास्तदग्रे तत्कथा गीयताम् । ता एव तवापेक्षितं दास्यंति ॥१४॥ किंच । तस्य हरेस्त्रैलोक्ये दुरापाः स्त्रियः काः । न का अपि । यस्य चरणरजो लक्ष्मीः सेवते तत्र वयं काः । तथापि दीनदयालोरेवोत्तमश्लोकशब्दो भवति । एवं तदग्रे त्वया कथनीयम् ॥१५॥ हे भ्रमर, मे शिरसि स्थापितं पादं विसृज । कृष्णाच्छिक्षित्वाऽऽगत्य प्रियोक्तिभिः प्रार्थनाचतुरस्य तव सर्वं कपटमहं वेद्मि । कृष्णवत्त्वमपि न विश्वसनीयः । अहो या वयं त्यक्तपतिपुत्रास्ता नो यः कृष्णस्तत्याज । अधुना तेन सहैक्यं कृत्वा किं कर्तव्यम् । न किमपि ॥१६॥ किंच । यो रामावतारे वालिनं लुब्धक इव विव्याध । तथा स्त्रीजितः सन् शूर्पणखां विरूपां चक्रे ।

सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान्भवादृक् ॥ परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥१३॥ किमिह बहु षडंघ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ॥ विजयसख सखीनां गीयतां तत्प्रसंगः क्षपितकुचरुजस्ते कल्पयंतीष्टमिष्टाः ॥१४॥ दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृंभस्य याः स्युः ॥ चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥१५॥ विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुंदात् ॥ स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किं नु संधेयमस्मिन् ॥१६॥ मृगयुरिव कपींद्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ॥ बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वांक्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥१७॥ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वंद्वधर्मा विनष्टाः ॥ सपदि गृहकुटुंबं दीनमुत्सृज्य दीना बहव इह विहंगा भिक्षुचर्यां चरंति ॥१८॥ वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ॥ ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमंत्रिन्भण्यतामन्यवार्ता ॥१९॥ प्रियसख पुनरागाः प्रेयसा प्रेषितः किं वरय किमनुरुंधे माननीयोऽसि मेंऽग ॥ नयसि कथमिहास्मान्दुस्त्यजद्वंद्वपार्श्वं सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥२०॥ ॥ ॥ ॥ ॥ ॥

वामनावतारेऽपि वलेः सकाशात्पूजां गृहीत्वा तं वलिं वारुणपाशैर्ववंध । तस्य कृष्णस्य सख्यैरलम् । परंतु तत्कथार्थो दुस्त्यजः ॥१७॥ यस्य चरितलीलामृतलेशस्यैकवारं सेवनाद्गतरागद्वेषादिधर्मा वहवः परमहंसा गृहसहितं कुटुंबं हित्वा भोगहीनाः संतः प्राणवृत्तिमात्रं चरंति ॥१८॥ हे दूत, वयं तस्यानृतं वचः सत्यमिव श्रद्दधानाः सत्यः तन्नखस्पर्शेन प्राप्तस्य तीव्रमदनस्य पीडादुःखं वारंवारं दृष्टवत्यः स्मः । अतः कृष्णकथां विनान्यवार्ता कथ्यताम् ॥१९॥ हे भ्रमर, त्वं कृष्णेन प्रेषितः किम् । किं प्राप्तुमिच्छसि तद्वरय । हे दूत, कथमस्मान् कृष्णसमीपं नेष्यसि ॥२०॥ ॥ ॥ ॥ ॥ ॥

हे द्विरेफ, श्रीकृष्णो गुरुकुलादागत्य अधुना मथुरायां सुखमास्ते कच्चित् । सोऽस्माकं वार्तां ब्रूते किम् । स च स्वभुजं नो मस्तके कदा धास्यति ? ॥२१॥ श्रीशुक उवाच । एवं श्रुत्वोद्धवः कृष्णसंदेशैस्ता गोपीः सांत्वयन् सन् जगाद ॥२२॥ उद्धव उवाच । हे गोप्यः, यूयं कृतार्थाः पूज्याः स्थ । यासां वो मनो भगवति वासुदेवे समर्पितमस्ति ॥२३॥ दान-व्रत-तपोहोमादिभिः साधनैः कृष्णे भक्तिरेव साध्यते ॥२४॥ हे गोप्यः । भवतीभिः कृष्णे याऽतिश्रेष्ठा भक्तिः प्रवर्तिता सा मुनीनामपि दुर्लभाऽस्ति ॥२५॥ भवतीभिः पतिपुत्रगृहादीन् हित्वा यः श्रीकृष्णः परः पुरुषो वृतः एतद्भद्रं जातम् ॥२६॥ हे महाभागाः, युष्माकं भगवति विरहेण यत्प्रेमसुखं प्राप्तं तद्दर्शयित्वा युष्माभिर्ममोपरि महान-

अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान्सौम्य बंधूंश्च गोपान् ॥ क्वचिदपि स कथा नः किंकरीणां गृणीते भुजमगुरुसुगंधं मूर्ध्न्यधास्यत्कदा नु ॥२१॥ श्रीशुक उवाच ॥ अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ॥ सांत्वयन्प्रियसंदेशैर्गोपीरिदमभाषत ॥२२॥ उद्धव उवाच ॥ अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ॥ वासुदेवे भगवति यासामित्यर्पितं मनः ॥२३॥ दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥२४॥ भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ॥ भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥२५॥ दिष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च ॥ हित्वा वृणीत यूयं यत्कृष्णाख्यं पुरुषं परम् ॥२६॥ सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ॥ विरहेण महाभागा महान्मेऽनुग्रहः कृतः ॥२७॥ श्रूयतां प्रियसंदेशो भवतीनां सुखावहः ॥ यमादायागतो भद्रा अहं भर्तू रहस्करः ॥२८॥ श्रीभगवानुवाच ॥ भवतीनां वियोगो मे नहि सर्वात्मना क्वचित् ॥ यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥ तथाऽहं च मनःप्राणभूतेंद्रियगुणाश्रयः ॥२९॥ आत्मन्येवात्मनाऽऽत्मानं सृजे हन्म्यनुपालये ॥ आत्ममायानुभावेन भूतेंद्रियगुणात्मना ॥३०॥ आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ॥ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥३१॥ येनेंद्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः ॥ तन्निरुंध्यादिंद्रियाणि विनिद्रः प्रत्यपद्यत ॥३२॥ एतदंतः समाम्नायो योगः सांख्यं मनीषिणाम् ॥ त्यागस्तपो दमः सत्यं समुद्रांता इवापगाः ॥३३॥

नुग्रहः कृतः ॥२७॥ अतः परं हे कल्याण्यः, यं कृष्णसंदेशं गृहीत्वाऽहमत्रागतस्तं मत्तः श्रूयताम् ॥२८॥ श्रीभगवानुवच ॥ हे गोप्यः, युष्माकं सर्वात्मना मया सह क्वापि वियोगो नास्ति । यथा पृथिव्यादीनि भूतानि चराचरेषु भूतेषु संति तथाऽहमुपादानकारणत्वेन सर्वकार्येषु स्थितोऽस्मि ॥२९॥ अहं मायासामर्थ्येनात्मन्येव भूतेंद्रियगुणरूपेणात्मनाऽऽत्मानं सृजे पालये हन्मि च ॥३०॥ आत्मा तु शुद्धः ज्ञानमयोऽस्ति । स मायाकार्यरूपैर्मनोवृत्तिभिर्विश्वतैजसप्राज्ञरूपेण प्रतीयते ॥३१॥ किंच । पुरुषो येन मनसा विषयान् चिंतयति प्राप्नोति च तन्मन आलस्यरहितः सन् स्वाधीनं कुर्यात् ॥३२॥ मनोनिग्रहपर्यवसाना एव वेदः योगः सांख्यं त्यागतपोदमाश्च संति यथा समुद्रपर्यवसाना एव नद्यस्तद्वत् ॥३३॥

१ भगवत्प्रेमसुखं दृष्ट्वाऽहमपि कृतार्थो जातोऽस्मीति भावः ।

अहं युष्माकं दृष्टीनां यद्दूरे तिष्ठामि तन्मदनुध्यानेन मनसः सन्निकर्षार्थम् ॥३४॥ यथा दूरचरेऽतिप्रिये मनः प्रविश्य निश्चलं तिष्ठति तथा समीपस्थिते न तिष्ठति ॥३५॥ अतो यूयं मयि मनो निधाय मां स्मरंत्यः शीघ्रं मां प्राप्स्यथ ॥३६॥ किंच । हे कल्याण्यः, रासक्रीडासमये स्वपतिभिः प्रतिबद्धा या गोप्यस्ता गोकुलस्थिता एव मच्चिंतया तदैव मत्स्वरूपं प्रापुः ॥३७॥ श्रीशुक उवाच ॥ एवं कृष्णसंदेशमुद्धवमुखतः श्रुत्वा प्रीता गोप्य उद्धवं प्राहुः ॥३८॥ गोप्य ऊचुः । हे उद्धव, पापी कंसः कृष्णेन हतः एतद्भद्रं जातम् । तथा प्राप्तसर्वमनोरथैर्यादवैः सह कृष्णोऽधुना सुखी आस्ते एतदपि समीचीनम् ॥३९॥ अधुना कृष्णः सलज्जहास्यादिभिर्मथुरास्त्रीणां प्रीतिं करोति किम् ॥४०॥ अन्या ऊचुः ॥

यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् ॥ मनसः संनिकर्षार्थं मदनुध्यानकाम्यया ॥३४॥ यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ॥ स्त्रीणां च न तथा चेतः संनिकृष्टेऽक्षगोचरे ॥३५॥ मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ॥ अनुस्मरंत्यो मां नित्यमचिरान्मामुपैष्यथ ॥३६॥ या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः ॥ अलब्धरासाः कल्याण्यो माऽपुर्मद्वीर्यचिंतया ॥३७॥ श्रीशुक उवाच ॥ एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ॥ ता ऊचुरुद्धवं प्रीतास्तत्संदेशाऽऽगतस्मृतीः ॥३८॥ गोप्य ऊचुः ॥ दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ॥ दिष्ट्याप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ॥३९॥ कच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम् ॥ प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥४०॥ कथं रतिविशेषज्ञः प्रियश्च वरयोषिताम् ॥ नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ॥४१॥ अपि स्मरति नः साधो गोविंदः प्रस्तुते क्वचित् ॥ गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथांतरे ॥४२॥ ताः किं निशाः स्मरति यासु तदा प्रियाभिर्वृंदावने कुमुदकुंदशशांकरम्ये ॥ रेमे क्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित् ॥४३॥ अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ॥ संजीवयन्नु नो गात्रैर्यथेंद्रो वनमंबुदैः ॥४४॥ कस्मात्कृष्ण इहायाति प्राप्तराज्यो हताहितः ॥ नरेंद्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥४५॥ किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः ॥ श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः ॥४६॥ परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिंगला ॥ तज्जानतीनां नः कृष्णे तथाऽप्याशा दुरत्यया ॥४७॥ ॥ ॥ ॥ ॥

अहो रतिविशेषज्ञः सः पुरस्त्रीणां वाक्यैर्विलासैश्च सत्कृतः सन् तासु कथमासक्तो न भवेत् । अपितु भवेदेव ॥४१॥ अपरा ऊचुः । हे साधो, पुरस्त्रीणां वार्तामध्ये कदाचित् कृष्णो नः स्मरति किम् ॥४२॥ अन्या ऊचुः । यासु रात्रिष्वस्माभिः सह कृष्णो वृंदावने रेमे । ता रात्रीः क्वचित्स्मरति किम् ॥४३॥ किंच । कृष्णः स्वनिमित्तेन शोकेन तप्ता नो हस्तस्पर्शादिभिर्जीवयन् पुनरिहागच्छति किम् ॥४४॥ इतरा ऊचुः । अहो कस्मात्स इहागच्छति । यतो महदैश्वर्यं प्राप्तः । तेन राजकन्याश्च परिणीताः ॥४५॥ अन्या ऊचुः । पूर्णकामस्य तस्य श्रीपतेर्वनचरीभिरस्माभिरन्याभिर्वा राजकन्याभिः कः कार्यभागः साध्योऽस्ति न कोऽपि ॥४६॥ किंच। कामचारिण्यपि पिंगला नैराश्यं परं सौख्यमाह । तज्जानती-

नामपि नः कृष्णे आशाऽतिरिक्ता वर्तते किं कुर्मः ॥ ४७ ॥ तस्यैकांतवार्तां त्यक्तुं कः पुमान् समर्थो भवेन्न कोऽपि । यस्य वक्षःस्थले लक्ष्मीरपि निरंतरं तिष्ठति ॥ ४८ ॥ हे उद्धव एते नदी-पर्वत-वनोद्देशा गावो वेणुनादाश्च रामकृष्णाभ्यां सेविताः संति । ते मुहुर्मुहुरस्माकं श्रीकृष्णं स्मारयंति । अतस्तं विस्मर्तुं न शक्नुमः ॥४९॥५०॥ हरेर्गतिहास्यावलोकनादिभिर्हृतबुद्धयो वयं कथं तं विस्मरामः ॥५१॥ हे नाथ हे रमानाथ, हे गोकुलनाथ, हे दुःखनाशक, त्वं दुःखसमुद्रे निमग्नं गोकुलमुद्धर ॥५२॥ श्रीशुक उवाच ॥ ततस्ताः कृष्णसंदेशैः श्रीकृष्णमधोक्षजं ज्ञात्वा तं च स्वात्मानं ज्ञात्वोद्धवं पूजयांचक्रुः ॥५३॥ तत उद्धवस्तत्र कतिचिन्मासान् स्थित्वा कृष्णलीलां गायन् गोकुलं रमयामास ॥५४॥ उद्धवो यावंति

क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम् ॥ अनिच्छतोऽपि यस्य श्रीरंगान्न च्यवते क्वचित् ॥४८॥ सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ॥ संकर्षणसहायेन कृष्णेनाचरिताः प्रभो ॥४९॥ पुनः पुनः स्मारयंति नंदगोपसुतं बत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥५०॥ गत्या ललितयोदारहासलीलावलोकनैः ॥ माध्व्या गिरा हृतधियः कथं तं विस्मराम हे ॥५१॥ हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ॥ मग्नमुद्धर गोविंद गोकुलं वृजिनार्णवात् ॥५२॥ श्रीशुक उवाच ॥ ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः ॥ उद्धवं पूजयांचक्रुर्ज्ञात्वाऽऽत्मानमधोक्षजम् ॥५३॥ उवास कतिचिन्मासान्गोपीनां विनुदन् शुचः ॥ कृष्णलीलाकथां गायन्रमयामास गोकुलम् ॥५४॥ यावंत्यहानि नंदस्य व्रजेऽवात्सीत्स उद्धवः ॥ व्रजौकसां क्षणप्रायाण्यासन्कृष्णस्य वार्तया ॥५५॥ सरिद्वनगिरिद्रोणीर्वीक्षन्कुसुमितान्द्रुमान् ॥ कृष्णं संस्मारयन्रेमे हरिदासो व्रजौकसाम् ॥५६॥ दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवम् ॥ उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥५७॥ एताः परं तनुभृतो भुवि गोपवध्वो गोविंद एव निखिलात्मनि रूढभावाः ॥ वांछंति यद्भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनंतकथारसस्य ॥५८॥ क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ॥ नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥५९॥ नायं श्रियोऽंग उ नितांतरतेः प्रसादः स्वर्योषितां नलिनगंधरुचां कुतोऽन्याः ॥ रासोत्सवेऽस्य भुजदंडगृहीतकंठलब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥६०॥ ॥

दिनानि तत्र स्थितस्तावंति दिनानि व्रजौकसां क्षणप्रायाण्यासन् ॥५५॥ एवं कृष्णसेवकः सरिद्वन-पर्वतवृक्षान् दृष्ट्वा तेषु प्रत्येकं व्रजौकसां लीलासंप्रश्नादिभिः । श्रीकृष्णं स्मारयन् रेमे ॥५६॥ हे नृप, एवं गोपीनां कृष्णावेशेन मनोवैक्लव्यं दृष्ट्वा परमप्रीत उद्धवस्ता नमस्यन्निदमुवाच ॥५७॥ इह भुवि गोपस्त्रिय एव सफलजन्मानः । यतः कृष्णे परमप्रेमवत्यः । यत्प्रेम मुमुक्षवो मुक्ता वयं भक्ताश्चेच्छामः ॥५८॥ किंच । इमा व्यभिचारदुष्टा वनचरीः स्त्रियः क्व । कृष्णे दृढभावश्च क्व । अथापि भगवान् भजतः पुंसः परमं कल्याणं करोति । अज्ञात्वाऽपि सेवितममृतं यथाऽमरत्वं संपादयति तद्वत् ॥५९॥ अयं भगवतः प्रसादो लक्ष्म्या देवस्त्रीणामपि न प्राप्तः । यो रासोत्सवे व्रजगोपीनां प्राप्तः ॥६०॥ ॥

अतएव गोपीपादरजःसेविनि वृक्षलतादीनां मध्येऽहं किमपि स्यामितीच्छामि ॥६१॥ किंच । या गोप्यो हरेश्चरणकमलं ब्रह्मादिभिरर्चितं योगिभिश्च हृदये स्थापितं तत्स्तनेषु धारयित्वाऽऽलिंग्य तापं जहुः ॥६२॥ अत एव नंदव्रजस्त्रीणां पादरेणुमहं वंदे । यासां हरिकथोद्गीतं जगत्पुनाति ॥६३॥ श्रीशुक उवाच ॥ अथोद्धवो गोपीर्यशोदां नंदं गोपांश्चाज्ञाप्य मथुरां गमिष्यन् सन् रथमारुरोह ॥६४॥ ततो नानोपायनपाणयो नंदादयो गोपाः प्रेम्णाऽश्रुनेत्राः संत ऊचुः ॥६५॥ हे उद्धव, अस्माकं मनसो वृत्तयः कृष्णचरणकमलाश्रया भवेयुः । तथा वाचः कृष्णनामसंकीर्तनं कुर्वत्यः संतु । देहश्च कृष्णनमस्कारादिषु तत्परोऽस्तु ॥६६॥ किंच । कर्मभिर्देवमनुष्यादियोनिषु यत्रकुत्रापि भ्राम्यमाणानामस्माकं जन्मांतरकृतैर्मंगलाचरणैः कृष्णे प्रीतिरस्तु ॥६७॥ एवं नंदादिभिर्गोपैः कृष्णभक्त्या सत्कृत उद्धवः पुनर्मथुरामागच्छत् ॥६८॥ तत उद्धवः कृष्णं प्रणिपत्य व्रजौकसां भक्त्युद्रेकं कथयामास । उग्रसेन-वसुदेव-रामेभ्यश्चोपायनानि ददौ ॥६९॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे सप्तचत्वारिंशोऽध्यायः ॥४७॥ ॥ अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत् । अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत् ॥१॥ श्रीशुक उवाच ॥ अथ सर्वात्मा भगवान् कामतप्तायाः कुब्जायाः प्रियमिच्छन् तद्गृहं ययौ ॥१॥ कथंभूतं गृहम् । अमौल्यगृहसाहित्यैः कामोद्दीपक-सुरतबंधादिचित्रैर्मुक्तादामपताकाभिर्धूपदीपादिभिश्च युक्तम् ॥२॥ गृहमागतं कृष्णं दृष्ट्वा कुब्जा शीघ्रमुत्थाय समीपं गत्वा तमुत्तमासनदानादिना संमानयामास॥३॥

आसामहो चरणरेणुजुषामहं स्यां वृंदावने किमपि गुल्मलतौषधीनाम् ॥ या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुंदपदवीं श्रुतिभिर्विमृग्याम् ॥६१॥ या वै श्रियाऽर्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ॥ कृष्णस्य तद्भगवतश्चरणारविंदं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥६२॥ वंदे नंदव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ॥ यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥६३॥ श्रीशुक उवाच ॥ अथ गोपीरनुज्ञाप्य यशोदां नंदमेव च ॥ गोपानामंत्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥६४॥ तं निर्गतं समासाद्य नानोपायनपाणयः ॥ नंदादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥६५॥ मनसो वृत्तयो नः स्युः कृष्णपादांबुजाश्रयाः ॥ वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥६६॥ कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ॥ मंगलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥६७॥ एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ॥ उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥६८॥ कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ॥ वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥६९॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे उद्धवप्रतियाने सप्तचत्वारिंशोऽध्यायः ॥४७॥ ॥ श्रीशुक उवाच ॥ अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः ॥ सैरंध्र्याः कामतप्तायाः प्रियमिच्छन्गृहं ययौ ॥१॥ महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ॥ मुक्तादामपताकाभिर्वितानशयनासनैः ॥ धूपैः सुरभिभिर्दीपैः स्रग्गंधैरपि मंडितम् ॥२॥ गृहं तमायांतमवेक्ष्य साऽऽसनात्सद्यः समुत्थाय हि जातसंभ्रमा ॥ यथोपसंगम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः ॥३॥ ॥ ॥ ॥

तथैव तया पूजित उद्धव आसनं स्पृष्ट्वा भुवि स्थितः। कृष्णस्तु तस्या महाधनं शयनं विवेश ॥४॥ तदा कुब्जापि स्नानानुलेप-वस्त्र-भूषण-स्रग्गंध-तांबूलादिभिर्योग्यं स्वदेहं कृत्वा सलज्जमंदहास्ययुक्ता कृष्णसमीपं जगाम ॥५॥ ततः कृष्णो नवसंगमलज्जया शंकितां तां करे धृत्वा शय्यां निवेश्य तया सह रेमे ॥६॥ तदा कुब्जा स्तनांतरगतं कृष्णं दोर्भ्यामालिंग्य बहुदिनस्थितं तापं जहौ ॥७॥ हे नृप, एवं सा मोक्षदं दुष्प्रापं श्रीकृष्णं चंदनार्पणेन प्राप्य भाग्यहीना सेदं ययाचे ॥८॥ हे कृष्ण, इह कतिचिद्दिनानि स्थित्वा मया सह त्वं रमस्व। त्वां त्यक्तुमहं नोत्सहे ॥९॥ ततः कृष्णस्तस्या इच्छितं वरं दत्वाऽलंकारादिदानैस्तां संतोष्य सोद्धवः स्वगृहं जगाम ॥१०॥ हे नृप, एवं दुराराध्यं विष्णुमाराध्य यो

तथोद्धवः साधु तयाऽभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ॥ कृष्णोऽपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥४॥ सा मज्जनालेपदुकूलभूषणस्रग्गंधतांबूलसुधासवादिभिः ॥ प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥५॥ आहूय कांतां नवसंगमह्रिया विशंकितां कंकणभूषिते करे ॥ प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ॥६॥ साऽनंगतप्तकुचयोरुरसस्तथाक्ष्णोर्जिघ्रंत्यनंतचरणेन रुजो मृजंती ॥ दोर्भ्यां स्तनांतरगतं परिरभ्य कांतमानंदमूर्तिमजहादतिदीर्घतापम् ॥७॥ सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ॥ अंगरागार्पणेनाहो दुर्भगेदमयाचत ॥८॥ आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया ॥ रमस्व नोत्सहे त्यक्तुं संगं तेऽम्बुरुहेक्षण ॥९॥ तस्यै कामवरं दत्वा मानयित्वा च मानदः ॥ सहोद्धवेन सर्वेशः स्वधामागमदर्चितम् ॥१०॥ दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ॥ यो वृणीते मनोग्राह्यमसत्त्वात्कुमनीष्यसौ ॥११॥ अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ॥ किंचिच्चिकीर्षयन्प्रागादक्रूरप्रियकाम्यया ॥१२॥ स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबांधवान् ॥ प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनंद्य च ॥१३॥ ननाम कृष्णं रामं च स तैरप्यभिवादितः ॥ पूजयामास विधिवत्कृतासनपरिग्रहान् ॥१४॥ पादावनेजनीरापो धारयन् शिरसा नृप ॥ अर्हणेनांबरैर्दिव्यैर्गंधस्रग्भूषणोत्तमैः ॥१५॥ अर्चित्वा शिरसाऽऽनम्य पादावंकगतौ मृजन् ॥ प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥१६॥ दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम् ॥ भवद्भ्यामुद्धृतं कृच्छ्राद्दुरंताच्च समेधितम् ॥१७॥ ॥ ॥ ॥ ॥ ॥

विषयसुखं वृणीते स दुर्मतिः ॥११॥ अथ रामोद्धवसहितः श्रीकृष्णः किंचिच्चिकीर्षयाऽक्रूरप्रियकाम्यया चाक्रूरगृहं जगाम ॥१२॥ ततोऽक्रूरस्तान् दृष्ट्वोत्थायालिंग्याभिनंद्य च ॥१३॥ रामं कृष्णमुद्धवं च प्रणम्य तैर्नमस्कृतः सन् तान्विधिवत्पूजयामास ॥१४॥ ततस्तत्पादप्रक्षालनजलानि शिरसा धारयन् वस्त्रभूषणगंधादिभिस्तान् ॥१५॥ संपूज्य रामकृष्णौ पुनर्नत्वोत्संगे स्थापितौ तत्पादौ मृजन् सन् तौ जगाद ॥१६॥ हे कृष्ण, हे राम, अयं सानुगः पापः कंसो हतः एतद्भद्रं जातम्। तथेदं यादवकुलं च भवद्भ्यां दुरंतदुःखात्समुद्धृतं

१ कतिचिद्दिनानि तस्या गृहे स्थित्वेत्यर्थः। २ अक्रूरस्य हस्तिनापुरप्रस्थापनं कारयितुमित्यर्थः।

सद्बुद्धिं गतमभूत् ॥१७॥ किंच । युवां प्रधानपुरुषौ । भवद्भ्यां विना कार्यं कारणं च किंचिदपि नास्ति ॥१८॥ हे भगवन्, भवान् इदं स्वसृष्टं विश्वमनुप्रविश्य स्थितः सन् स्वशक्तिभिर्देवमनुष्यादिरूपेण बहुधा प्रतीयते ॥१९॥ यथा चराचरेषु भूतेषु पृथिव्यादिपंचभूतानि नाना भांति तथा त्वं नर-मृगादिशरीरेषु बहुधा भासि ॥२०॥ किंच । इदं जगत्स्वशक्तिभिस्त्वं सृजसि पासि हरसि । तथापि तद्गुणकर्मभिर्न बद्ध्यसे ॥२१॥ आत्मनस्तव केनापि प्रकारेण देहाद्युपाधेर्निरूपयितुमशक्यत्वान्न बंधः न च मोक्षः । तत्र बंधमोक्षौ स्यातामिति यत्तदस्माकमज्ञानमेव नान्यत्किंचिदपि ॥२२॥ हे कृष्ण, अयं पुराणो वेदमार्गो यदा पाखंडमार्गैर्बाध्येत तदा त्वं सत्वं गुणं बिभर्षि ॥२३॥ एवं भूतस्त्वमद्य दुष्टानां राज्ञामसंख्याता-

युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ॥ भवद्भ्यां न विना किंचित्परमस्ति न चापरम् ॥१८॥ आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः ॥ ईयते बहुधा ब्रह्मन् श्रुतप्रत्यक्षगोचरम् ॥१९॥ यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भांति नाना ॥ एवं भवान्केवल आत्मयोनिष्वात्माऽऽत्मतंत्रो बहुधा विभाति ॥२०॥ सृजस्यथो लुंपसि पासि विश्वं रजस्तमःसत्वगुणैः स्वशक्तिभिः ॥ न बद्ध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बंधहेतुः ॥२१॥ देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदाऽऽत्मनः स्यात् ॥ अतो न बंधस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः ॥२२॥ त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः ॥ बाध्येत पाखंडपथैरसद्भिस्तदा भवान्सत्वगुणं बिभर्ति ॥२३॥ सत्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः स्वांशेन भारमपनेतुमिहासि भूमेः ॥ अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥२४॥ अद्येश नो वसतयः खलु भूरिभागा यः सर्वदेवपितृभूतनृदेवमूर्तिः ॥ यत्पादशौचसलिलं त्रिजगत्पुनाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥२५॥ कः पंडितस्त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ॥ सर्वान्ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ न यस्य ॥२६॥ दिष्ट्या जनार्दन भवानिह नः प्रतीतो योगेश्वरैरपि दुरापगतिः सुरेशैः ॥ छिंध्याशु नः सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायाम् ॥२७॥ इत्यर्चितः संस्तुतश्च भक्तेन भगवान्हरिः ॥ अक्रूरं सस्मितं प्राह गीर्भिः संमोहयन्निव ॥२८॥ ॥ ॥

क्षौहिणी-सेनावधेन भूभारं हर्तुं वसुदेवगृहेऽवतीर्णोऽसि ॥२४॥ किंच । हे कृष्ण, अद्यास्माकं गृहास्तपोवनादपि बहुपुण्याः । यस्य तव पादक्षालनोदकं (गंगा) त्रैलोक्यं पुनाति । यश्च त्वं पंचयज्ञदेवतामूर्तिः स त्वं यान् प्रविष्टोऽसि ॥२५॥ हे ईश, कः पंडितो भक्तप्रियात् सत्यवचसस्त्वत्तः परं शरणं गच्छेत् । यतो भवान् भजतः सर्वकामान् आत्मानमपि ददाति ॥२६॥ हे जनार्दन, देवादिभिर्दुर्दर्शोऽपि त्वमविवेकिनो मे गृह एव प्रत्यक्षोऽसि एतद्दिष्ट्या । अतस्त्वं स्त्रीपुत्रगृहधनादिषु नः स्थितां मोहपाशरूपां त्वन्मायां छिंधि ॥२७॥ एवं भक्तेन स्तुतो हरिरक्रूरं मंदहास्येन मोहयन्निव प्राह ॥२८॥ ॥ ॥ ॥ ॥

१ कारणत्वादननुप्रविष्टोऽप्यनुविप्रस्येव स्थितः सन् ।

श्रीभगवानुवाच ॥ हे अक्रूर, त्वं नो गुरुः पितृव्यश्चासि । वयं तु वः पुत्राः अतः पोष्या अनुकंप्याश्च स्मः ॥२९॥ किंच । त्वादृशाः साधवः श्रेयस्कामैर्नृभिरत्यंतं पूजनीयाः सेव्याश्च ॥३०॥ उदकमयानि तीर्थानि मृन्मयाः शिलामयाश्च देवा बहुकालेन पुनंति । साधवस्तु दर्शनादेव पुनंति ॥३१॥ तस्माद्धे अक्रूर, त्वं नः सुहृन्मध्ये श्रेष्ठोऽसि । अतः पांडवानां श्रेयश्चिकीर्षया हस्तिनापुरं गच्छ ॥३२॥ पांडौ मृते सति दुःखितास्ते बाला मात्रा सह धृतराष्ट्रेण स्वपुरमानीता वसंत इति शुश्रुम ॥३३॥ तेषु बालेषु स धृतराष्ट्रः समो न वर्तते । यतः स दुष्टाः स्वपुत्रा ये दुर्योधनादयस्तेषामधीनोऽस्ति ॥३४॥ अतस्त्वं गच्छ । अधुना तद्वृत्तं साध्वसाधु वा तज्जानीहि । तद्विज्ञाय यथा सुहृदां सुखं भवेत्तथा वयं विधास्यामः ॥३५॥ एवमक्रूरमादिश्य कृष्णो रामोद्धवाभ्यां सह स्वभवनं ययौ ॥३६॥ इति श्रीमद्भागवतचू० दशमस्कंधे पूर्वार्धे अष्टचत्वारिंशोऽध्यायः ॥४८॥ ॥ ऊनपं-

श्रीभगवानुवाच ॥ त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बंधुश्च नित्यदा ॥ वयं तु रक्ष्याः पोष्याश्च अनुकंप्याः प्रजा हि वः ॥२९॥ भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ॥ श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥३०॥ न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनंत्युरुकालेन दर्शनादेव साधवः ॥३१॥ स भवान्सुहृदां वै नः श्रेयान् श्रेयश्चिकीर्षया ॥ जिज्ञासार्थं पांडवानां गच्छस्व त्वं गजाह्वयम् ॥३२॥ पितर्युपरते बालाः सह मात्रा सुदुःखिताः ॥ आनीताः स्वपुरं राज्ञा वसंत इति शुश्रुम ॥३३॥ तेषु राजांबिकापुत्रो भ्रातृपुत्रेषु दीनधीः ॥ समो न वर्तते नूनं दुष्पुत्रवशगोंऽधदृक् ॥३४॥ गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ॥ विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत् ॥३५॥ इत्यक्रूरं समादिश्य भगवान्हरिरीश्वरः ॥ संकर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥३६॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धेऽष्टचत्वारिंशोऽध्यायः ॥४८॥ ॥ श्रीशुक उवाच ॥ स गत्वा हास्तिनपुरं पौरवेंद्रयशोंऽकितम् ॥ ददर्श तत्रांबिकेयं सभीष्मं विदुरं पृथाम् ॥१॥ सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम् ॥ कर्णं सुयोधनं द्रौणिं पांडवान्सुहृदोऽपरान् ॥२॥ यथावदुपसंगम्य बंधुभिर्गांदिनीसुतः ॥ संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥३॥ उवास कतिचिन्मासान्राज्ञो वृत्तविवित्सया ॥ दुष्प्रजस्याल्पसारस्य खलच्छंदानुवर्तिनः ॥४॥ तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ॥ प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥५॥ ॥ ॥ ॥

चाशत्तमे तु गत्वाऽक्रूरो गजाह्वयम् । राज्ञः स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत् ॥१॥ श्रीशुक उवाच ॥ हे नृप ततोऽक्रूरो हस्तिनापुरं गत्वा तत्र धृतराष्ट्रं भीष्मं विदुरं कुंतीम् ॥१॥ बाह्लीकं सोमदत्तं द्रोणं कृपं कर्णं दुर्योधनं अश्वत्थामानं पांडवान् अन्यान् सुहृदश्च दृष्ट्वा॥२॥ तैः सह यथायोग्यं मिलित्वा तैः सुहृद्वार्तां पृष्टः सन् स्वयं तेषां कुशलं पप्रच्छ ॥३॥ ततस्तत्र धृतराष्ट्रस्य वृत्तं ज्ञातुमिच्छया कतिचिन्मासानुवास ॥४॥ किंच । पांडवानां प्रभाव-शस्त्रादिनैपुण्य-बल-शौर्यादिगुणानसहमानैर्दुर्योधनादिभिः कर्तुमिच्छितं तथा यच्च कृतं विषदानादि तत्सर्वं पृथा विदुरश्चास्मा अक्रूराय कथयामासतुः ॥५॥ ॥ ॥ ॥ ॥

॥६॥ पृथा तु प्राप्तं भ्रातरमक्रूरं समीपं गत्वा स्वजन्मस्थानं स्मृत्वाऽऽह ॥७॥ हे भ्रातः, अस्माकं पितरौ मातृभगिन्यो भ्रातृपुत्रादयश्च नः स्मरंति किम् ॥८॥ भक्तवत्सलो भगवान् कृष्णो रामश्च मत्पुत्रान् स्मरति किम् ॥९॥ किंच वृकाणां मध्ये हरिणीमिव शत्रुमध्ये शोचंतीं मां पितृहीनान् मे वालकांश्च हरिर्वाक्यैः सांत्वयिष्यति किम् ॥१०॥ हे कृष्ण, । कृष्ण, हे महायोगिन्, हे विश्वपालक, पुत्रैः सह क्लिश्यंतीं शरणागतां मां पाहि ॥११॥ हे कृष्ण, मृत्युसंसाराद्भीतानां नृणां मोक्षप्रदात्त्वच्चरणकमलादन्यद्रक्षकं न पश्यामि ॥१२॥ अतो योगेश्वराय शुद्धाय ब्रह्मणे परमात्मने कृष्णाय ते नमः । अहं त्वां शरणं गताऽस्मि ॥१३॥ श्रीशुक उवाच ॥ हे नृप, एवं तत्र पितामही कुंती स्वजनं कृष्णं च स्मृत्वा

कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ॥ आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥६॥ पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ॥ उवाच जन्मनिलयं स्मरंत्यश्रुकलेक्षणा ॥७॥ अपि स्मरंति नः सौम्य पितरौ भ्रातरश्च मे॥ भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥८॥ भ्रात्रेयो भगवान्कृष्णः शरण्यो भक्तवत्सलः ॥ पैतृष्वस्रेयान्स्मरति रामश्चांबुरुहेक्षणः ॥९॥ सपत्नमध्ये शोचंतीं वृकाणां हरिणीमिव ॥ सांत्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥१०॥ कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वभावन ॥ प्रपन्नां पाहि गोविंद शिशुभिश्चावसीदतीम् ॥११॥ नान्यत्तव पदांभोजात्पश्यामि शरणं नृणाम् ॥ बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥१२॥ नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ॥ योगेश्वराय योगाय त्वामहं शरणं गता ॥१३॥ श्रीशुक उवाच ॥ इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ॥ प्रारुदद्दुःखिता राजन्भवतां प्रपितामही ॥१४॥ समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ॥ सांत्वयामासतुः कुंतीं तत्पुत्रोत्पत्तिहेतुभिः ॥१५॥ यास्यन् राजानमभ्येत्य विषमं पुत्रलालसम् ॥ अवदत्सुहृदां मध्ये बंधुभिः सौहृदोदितम् ॥१६॥ अक्रूर उवाच ॥ भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ॥ भ्रातर्युपरते पांडावधुनाऽऽसनमास्थितः ॥१७॥ धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रंजयन् ॥ वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥१८॥ अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः ॥ तस्मात्समत्वे वर्तस्व पांडवेष्वात्मजेषु च ॥१९॥ ॥ ॥ ॥

प्रारुदत् ॥१४॥ तदा समदुःखसुखोऽक्रूरो विदुरश्च तां कुंतीं तत्पुत्रोत्पत्तिहेतुभिः[1] सांत्वयामासतुः ॥१५॥ ततोऽक्रूरो मथुरां गच्छन् सन् धृतराष्ट्रं गत्वा सुहृन्मध्ये सौहृदाद्रामकृष्णादिभिर्यदुक्तं तदुवाच ॥१६॥ अक्रूर उवाच ॥ भो भो धृतराष्ट्र, भ्रातरि पांडौ मृते सति संप्रति त्वं सिंहासनं स्थितोऽसि ॥१७॥ स त्वं धर्मेण पृथ्वीं पालयन् प्रजाश्च शीलेन रंजयन् पांडवेषु स्वपुत्रेषु च समत्वेन वर्तमानः सन् श्रेयः कीर्तिं च प्राप्स्यसि ॥१८॥ अन्यथा त्वाचरन् इह महद्दुःखं परत्र नरकं च यास्यसे । अतस्त्वं स्वपुत्रेषु पांडवेषु च समत्वेन

१ तवैते पुत्रा धर्मवाय्विंद्रेभ्यो जाता महापराक्रमिणः संति । अतस्त्वं खेदं मा कुर्वित्यादिभिः ।

वर्तस्व ॥१९॥ किंच । हे राजन्, अत्र लोके कस्यापि जीवात्मनः केनापि पुत्रादिना किंबहुनाऽतिप्रियेण स्वदेहेनापि नित्यं सम्यक् स्थितिर्नास्ति । स्त्रीपुत्रादिभिर्नास्तीति किमु वक्तव्यम् ॥२०॥ यतोऽयं जंतुरेक एव प्रसूयते नश्यति च । पुण्यं पापं चैक एव भुंक्ते ॥२१॥ अधर्मार्जितं द्रव्यं पोष्यपुत्रादिमिषेणान्ये हरंति ॥२२॥ किंच, अधर्मेण यान् पुष्णाति ते प्राणाः पुत्रादयो धनानि च तं त्यजंति ॥२३॥ एवं तैस्त्यक्तः स्वयमपूर्णमनोरथः सन् नरकं विशति ॥२४॥ तस्मात् हे राजन्, त्वमिमं लोकं स्वप्नमायामनोरथवदनित्यं वीक्ष्य बुद्ध्या मनो नियम्य शांतः सर्वत्र समश्च भव ॥२५॥ धृतराष्ट्र उवाच ॥ हे अक्रूर, यथा त्वं वदसि तथाऽनया तव वाण्याऽहं न तृप्यामि । मर्त्योऽमृतं प्राप्य यथा न तृप्यति तद्वत्

नेह चात्यंतसंवासः कर्हिचित्केनचित्सह ॥ राजन्स्वेनापि देहेन किमु जायात्मजादिभिः ॥२०॥ एकः प्रसूयते जंतुरेक एव प्रलीयते ॥ एकोऽनु- भुंक्ते सुकृतमेक एव च दुष्कृतम् ॥२१॥ अधर्मोपचितं वित्तं हरंत्यन्येऽल्पमेधसः ॥ संभोजनीयापदेशैर्जलानीव जलौकसः ॥२२॥ पुष्णाति यानधर्मेण स्वबुद्ध्या तमपंडितम् ॥ तेऽकृतार्थं प्रहिण्वंति प्राणा रायः सुतादयः ॥२३॥ स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ॥ असिद्धार्थो विश- त्यंधं स्वधर्मविमुखस्तमः ॥२४॥ तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम् ॥ वीक्ष्यायम्यात्मनाऽऽत्मानं समः शांतो भव प्रभो ॥२५॥ धृतराष्ट्र उवाच ॥ यथा वदति कल्याणीं वाचं दानपते भवान् ॥ तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम् ॥२६॥ तथाऽपि सूनृता सौम्य हृदि न स्थीयते चले ॥ पुत्रानुरागविषमे विद्युत्सौदामनी यथा ॥२७॥ ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् ॥ भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥२८॥ यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान्विभजते तदनुप्रविष्टः ॥ तस्मै नमो दुरवबोधविहारतंत्रसंसारचक्रगतये परमे- श्वराय ॥२९॥ श्रीशुक उवाच ॥ इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ॥ सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥३०॥ शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ॥ पांडवान्प्रति कौरव्य यदर्थं[1] प्रेषितः स्वयम् ॥३१॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कंधे पूर्वार्धे एकोनपंचाशत्तमोऽध्यायः ॥४९॥ ॥ कंसनिहंत्रे भगवते श्रीकृष्णाय नमः ॥

॥२६॥ तथापि तवेयं प्रियाऽपि वाक् पुत्रप्रेम्णा विषमे चंचले च मे हृदि विद्युल्लतेव स्थिरतां न प्राप्नोति ॥२७॥ किंच । भूभारनाशाय यदुकुलेऽवतीर्णस्येश्वरस्य कर्तव्यं को नु पुमानन्यथा करोति न कोऽपि ॥२८॥ यो माययेदं सृष्ट्वा तदनुप्रविष्टः सन् कर्माणि तत्फलानि च विभज्य ददाति । एवंभूताय परमेश्वराय नमोऽस्तु ॥२९॥ श्रीशुक उवाच ॥ एवं धृतराष्ट्रस्याभिप्रायं ज्ञात्वाऽक्रूरः सुहृद्भिः समनुज्ञातः सन् मथुरां जगाम ॥३०॥ ततो यदर्थं स्वयं पांडवान्प्रति प्रेषितस्तत्सर्वं धृतराष्ट्रचेष्टितं रामकृष्णाभ्यां शशंस ॥३१॥ ॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे पूर्वार्धे एकोनपंचाशत्तमोऽध्यायः ॥४९॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

१ धृतराष्ट्राभिप्रायज्ञानार्थम् ।

# ॥ अथ सचूर्णिकश्रीमद्भागवते दशमोत्तरार्धम् ॥

श्रीगणेशाय नमः ॥ ततः पंचाशत्तमे तु जरासंधभयादिव । कारयित्वांऽवुधौ दुर्गं तं निनाय निजं जनम् ॥१॥ कपटान् कपटैरेव हत्वा दैत्यानयत्नतः । अजयच्च जरासंधं धर्मेणैव तु धार्मिकम् ॥२॥ श्रीशुक उवाच । हे राजन्, अस्तिः प्राप्तिश्च कंसस्य द्वे भार्ये । ते भर्तरि कंसे मृते सति दुःखार्ते सत्यौ पितुर्गृहं जग्मतुः ॥१॥ ततः पित्रे जरासंधाय कृष्णेन स्वभर्तुर्वधः कृत इति कथयामासतुः ॥२॥ जरासंधस्तच्छ्रुत्वा कंसे शोकः कृष्णे च क्रोधस्ताभ्यां युतः सन् पृथ्वीं यादवरहितां कर्तुं यत्नं चक्रे ॥३॥ ततस्त्रयोविंशत्यक्षौहिणीसैन्येन युक्तः सन् मथुरां सर्वतो रुरोध ॥४॥ तदा श्रीकृष्णस्तत्सैन्यं तेन रुद्धां मथुरां भयाकुलं स्वजनं च दृष्ट्वा ॥५॥ भूभारहरणार्थं मनुष्यरूपधारी हरिः स्वावतारकार्यं चिंतयामास ॥६॥ किंतत् । अहं जरासंधेनानीतं भूभारभूतमेतत् सैन्यं हनिष्यामि ॥७॥ जरासंधस्तु न हंतव्यः । यतः स दुष्टराजन्यसैन्यमेकत्र कर्तुं भूयो यत्नं करिष्यति ॥८॥ ममायमवतारः

श्रीशुक उवाच ॥ अस्तिः प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ ॥ मृते भर्तरि दुःखार्ते ईयतुः स्म पितुर्गृहान् ॥१॥ पित्रे मगधराजाय जरासंधाय दुःखिते ॥ वेदयांचक्रतुः सर्वमात्मवैधव्यकारणम् ॥२॥ स तदप्रियमाकर्ण्य शोकामर्षयुतो नृप ॥ अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥३॥ अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि संवृतः ॥ यदुराजधानीं मथुरां न्यरुणत्सर्वतोदिशम् ॥४॥ निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम् ॥ स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥५॥ चिंतयामास भगवान्हरिः कारणमानुषः ॥ तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥६॥ हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम् ॥ मागधेन समानीतं वश्यानां सर्वभूभुजाम् ॥७॥ अक्षौहिणीभिः संख्यातं भटाश्वरथकुंजरैः ॥ मागधस्तु न हंतव्यो भूयः कर्ता बलोद्यमम् ॥८॥ एतदर्थोऽवतारोऽयं भूभारहरणाय मे ॥ संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥९॥ अन्योऽपि धर्मरक्षायै देहः संध्रियते मया ॥ विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥१०॥ एवं ध्यायति गोविंद आकाशात्सूर्यवर्चसौ ॥ रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥११॥ आयुधानि च दिव्यानि पुराणानि यदृच्छया ॥ दृष्ट्वा तानि हृषीकेशः संकर्षणमथाब्रवीत् ॥१२॥ पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो ॥ एष ते रथ आयातो दयितान्यायुधानि च ॥१३॥ यानमास्थाय जह्येतद्व्यसनात्स्वान्समुद्धर ॥ एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत् ॥१४॥ त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु ॥ एवं संमंत्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ॥१५॥

साधूनां रक्षणाय दुर्जनानां वधाय चैवास्ति ॥९॥ अन्योऽप्यवतारो मया धर्मरक्षायै ध्रियते ॥१०॥ एवं श्रीकृष्णे चिंतयति सति सारथिसहितौ ध्वजकवचादियुक्तौ सूर्यतेजसौ द्वौ रथौ आकाशात्कृष्णसमीपं प्राप्तौ ॥११॥ तथा चक्रादीनि दिव्यान्यायुधानि च प्राप्तानि । तानि दृष्ट्वा श्रीकृष्णो राममब्रवीत् ॥१२॥ हे राम, त्वं रक्षको येषां तेषां यादवानां प्राप्तमिदं दुःखं पश्य । तथैष ते रथ आयुधानि चायातानि संति तानि पश्य ॥१३॥ अधुना त्वं रथमास्थायैतत्सैन्यं जित्वा दुःखात्स्वकीयान् समुद्धर । एतदर्थमेवावयोर्जन्मास्ति ॥१४॥ किंच । त्रयोविंशत्यक्षौहिणीमितं भूमेर्भारं दूरीकुरु । एवं संमंत्र्य स्वल्पसैन्येन युक्तौ तौ रामकृष्णौ स्वानि स्वान्यायुधानि धृत्वा रथाभ्यां नगराद्बहिर्जग्मतुः । ततः कृष्णः शंखं

दध्मौ ॥१५॥१६॥ तेन नादेन शत्रुसैन्यानां हृदये कंपो जातः । तदा जरासंधस्तौप्रति जगाद ॥१७॥ हे कृष्ण, हे पुरुषाधम, हे मातुलघातक, त्वया बालेन सहाहं योद्धुं नेच्छामि । अतस्त्वं पुरंप्रति याहि ॥१८॥ हे राम, तव युद्धे श्रद्धास्ति चेत् तर्हि धैर्यं धृत्वा युद्ध्यस्व । मच्छरैश्छिन्नं देहं हित्वा स्वर्गं गच्छ मां वा जहि ॥१९॥ श्रीभगवानुवाच । हे जरासंध, शूरा आत्मस्तुतिं न कुर्वंति । पराक्रममेव दर्शयंति । अतो मरणोन्मुखस्य तवैतद्भाषणं वयं न गृह्णीमः ॥२०॥ श्रीशुक उवाच ॥ हे राजन्, तदा जरासंधो महासैन्यसमूहेन स्वल्पसैन्यसहितौ तौ रामकृष्णौप्रति वायुरभ्रैः सूर्यमिवावृणोत् ॥२१॥ तदा नगरे गोपुरादिषु स्थिताः स्त्रियो रामकृष्णरथौ न पश्यंत्यः सत्यः शुचाऽर्पिता भूत्वा मुमुहुः ॥२२॥ ततः

निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसा वृतौ ॥ शंखं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥१६॥ ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः ॥ तावाह मागधो वीक्ष्य हे कृष्ण पुरुषाधम ॥१७॥ न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ॥ गुप्तेन हि त्वया मंद न योत्स्ये याहि बंधुहन् ॥१८॥ तव राम यदि श्रद्धा युद्ध्यस्व धैर्यमुद्वह ॥ हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ॥१९॥ श्रीभगवानुवाच ॥ न वै शूरा विकत्थंते दर्शयंत्येव पौरुषम् ॥ न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥२०॥ श्रीशुक उवाच ॥ जरासुतस्तावभिसृत्य माधवौ महाबलौघेन बलीयसाऽवृणोत् ॥ ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥२१॥ सुपर्णतालध्वजचिह्नितौ रथावलक्षयंत्यो हरिरामयोर्मृधे ॥ स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः संमुमुहुः शुचार्दिताः ॥२२॥ हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम् ॥ स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ॥२३॥ गृह्णन्निषंगादथ संदधच्छरान्विकृष्य मुंचन् शितबाणपूगान् ॥ निघ्नन्रथान्कुंजरवाजिपत्तीन्निरंतरं यद्वदलातचक्रम् ॥२४॥ निर्भिन्नकुंभाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकंधराः ॥ रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकंधराः ॥२५॥ संछिद्यमानद्विपदेभवाजिनामंगप्रसूताः शतशोऽसृगापगाः ॥ भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहा कुलाः ॥२६॥ करोरुमीना नरकेशशैवला धनुस्तरंगायुधगुल्मसंकुलाः ॥ अच्छूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥२७॥ प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम् ॥ विनिघ्नतारीन्मुसलेन दुर्मदान्संकर्षणेनापरिमेयतेजसा ॥२८॥ ॥

श्रीकृष्णः स्वसैन्यं शत्रुसैन्यशरैः पीडितं दृष्ट्वा स्वं शार्ङ्गधनुष्यं व्यस्फूर्जयत् ॥२३॥ तदा श्रीकृष्णस्तूणीरात्तीक्ष्णबाणौघान् गृहीत्वा धनुषि संधाय मुंचन् तै रथगजाश्वपदातीन् निघ्नन् स्वधनुष्यमलातचक्रवद्भ्रामयामास ॥२४॥ तदा गजा निर्भिन्नगंडस्थलाः संतो मृत्वा भूमौ निपेतुः । अश्वाश्छिन्नकंठाः पेतुः । रथा हता-श्व-ध्वज-सारथि-नायकाः पेतुः । पदातयश्छिन्नभुजोरुकंठाः पेतुः ॥२५॥ एवं छिन्नदेहानां तेषां शरीरेभ्यो रक्तनद्यः प्रवर्तिता आसन् । तासु भुजा एव सर्पाः । पुरुषशीर्षाण्येव कच्छपाः । गजा अंतर्वर्तीनि तटानि । अश्वा नक्राः ॥२६॥ हस्ता ऊरवश्च मत्स्याः । मनुष्यकेशाः शैवलानि । धनूंषि तरंगाः । आयुधानि गुल्माः । चर्माण्यावर्ताः । मणयो वालुकाः ॥२७॥ एतादृश्यः शूराणां हर्षकर्यो

रक्तनद्यः प्रवर्तिताः ॥२८॥ एवं रामकृष्णाभ्यां तत्सैन्यं क्षयं नीतम् । तज्जगदीशयोर्वसुदेवपुत्रयोः परं विक्रीडितं न तु पराक्रमः ॥२९॥ अहो यस्त्रिभुवनस्योत्पत्तिस्थितिसंहारान् लीलयैव करोति तस्य शत्रुनाश आश्चर्यं नहि ॥३०॥ ततो रामो महाबलं जरासंधं विरथं कृत्वा सिंहः सिंहमिव जग्राह ॥३१॥ तदा रामेण वारुणैर्मानुषैश्च पाशैर्बध्यमानं जरासंधं दृष्ट्वा तेन कार्यकरणेच्छया कृष्णस्तस्य बंधनं वारयामास ॥३२॥ एवं रामकृष्णाभ्यां मुक्तः स जरासंधो लज्जितो भूत्वा तपसे कृतसंकल्पः सन् पथि राजभिर्निवारितः ॥३३॥ हे जरासंध, अल्पैर्यादवैस्ते महतः पराभवः केवलं कर्मबंधेन प्राप्तः । अतस्त्वया न लज्जितव्यम् ॥३४॥ एवं नीतिवाक्यैर्बोधितो जरासंधो दुर्मनाः सन् स्वपुरं ययौ ॥३५॥ अक्षीण-

बलं तदंगार्णवदुर्गभैरवं दुरंतपारं मगधेंद्रपालितम् ॥ क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम् ॥२९॥ स्थित्युद्भवांतं भुवनत्रस्य यः समीहतेऽनंतगुणः स्वलीलया ॥ न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥३०॥ जग्राह विरथं रामो जरासंधं महाबलम् ॥ हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥३१॥ बध्यमानं हतारातिं पाशैर्वारुणमानुषैः ॥ वारयामास गोविंदस्तेन कार्यचिकीर्षया ॥३२॥ स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसंमतः ॥ तपसे कृतसंकल्पो वारितः पथि राजभिः ॥३३॥ वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि ॥ स्वकर्मबंधप्राप्तोऽयं यदुभिस्ते पराभवः ॥३४॥ हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ॥ उपेक्षितो भगवता मगधान्दुर्मना ययौ ॥३५॥ मुकुंदोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः ॥ विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥३६॥ माथुरैरुपसंगम्य विज्वरैर्मुदितात्मभिः ॥ उपगीयमानविजयः सूतमागधवंदिभिः ॥३७॥ शंखदुंदुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदंगानि पुरं प्रविशति प्रभौ ॥३८॥ सिक्तमार्गां हृष्टजनां पताकाभिरलंकृताम् ॥ निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥३९॥ निचीयमानो नारीभिर्माल्यदध्यक्षतांकुरैः ॥ निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ॥४०॥ आयोधनगतं वित्तमनंतं वीरभूषणम् ॥ यदुराजाय तत्सर्वमाहृतं प्रादिशत्प्रभुः ॥४१॥ एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः ॥ युयुधे मागधो राजा यदुभिः कृष्णपालितैः ॥४२॥ अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा ॥ हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥४३॥ अष्टादशमे संग्राम आगामिनि तदंतरा ॥ नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥४४॥ ॥

सैन्यः कृष्णोऽपि देवैः पुष्पैर्विकीर्यमाणः सन् ॥३६॥ मथुरास्थैर्जनैर्मिलित्वा सूतमागधवंदिभिः स्तूयमानः सन् स्वपुरं ययौ ॥३७॥ तदा शंख-दुंदुभि-वीणा-वेणु-मृदंगादीनि बहूनि वाद्यानि नेदुः ॥३८॥ तदा स्त्रीभिः पुष्प-दध्यक्षतांकुरैः कृष्णो विकीर्यमाणः सस्नेहं वीक्ष्यमाणश्च सन् पताकाभिरलंकृतां ब्रह्मघोषेण नादितां सिक्तमार्गां बद्धतोरणां मथुरां प्रविश्य ॥३९॥४०॥ रणभूमिस्थं वीराणां भूषणमानीतं द्रव्यमुग्रसेनाय राज्ञे ददौ ॥४१॥ एवं जरासंधः सप्तदशवारान् त्रयोविंशत्यक्षौहिणीसैन्यमानीय कृष्णरक्षितैर्यादवैः सह युयुधे ॥४२॥ यादवाश्च तत्सैन्यं क्षयं निन्युः । जरासंधश्च स्वसैन्येषु हतेषु सत्सु सप्तदशवारान् जयरहितः सन् स्वपुरंप्रति जगाम ॥४३॥ पुनरष्टादशे संग्रामे भाव्ये सति तन्मध्ये मनुष्यलोके शत्रु-

रहितः कालयवनो नारदाद्यादवान् दुर्जयान् श्रुत्वा तिसृभिर्म्लेच्छकोटिभिः सहैत्य मथुरां रुरोध ॥४४॥४५॥ तं दृष्ट्वा रामकृष्णौ चिंतयामासतुः। अहो यदूनामुभयतोऽपि दुःखं प्राप्तम् ॥४६॥ अयं यवनोऽस्मानद्य निरुंधे। महाबलो जरासंधोऽपि अद्य श्वः परश्वो वाऽऽगमिष्यति॥४७॥ अनेनावयोर्युद्ध्यतोः सतोर्जरासंधो यद्यागमिष्यति तर्हि बंधून् यादवान् वधिष्यति स्वपुरं वा नेष्यति ॥४८॥ तस्मादद्य द्विपददुर्गमं दुर्गं कृत्वा तत्र ज्ञातीन् संस्थाप्यामुं कालयवनं मुचुकुंददृष्ट्या मारयामहे ॥४९॥ एवं विचार्य भगवान् समुद्रमध्ये द्वादशयोजनं दुर्गं तन्मध्ये सर्वाश्चर्यमयं द्वारकानामकं नगरं च कारयामास ॥५०॥ यत्र नगरे विश्वकर्मणः शिल्पनैपुण्यं दृश्यते। यत्र पुरतो राजमार्गाः पश्चिमत उपमार्गाः उभयतोऽप्यंगणानि मध्ये कोष्ठाः अंतः सुवर्णभवनानि तदुपरि स्फाटिकाट्टालिकास्तदुपरि सुवर्णकुंभा इति वास्तुशास्त्रोक्तगृहनिर्माणविधिना तन्निर्मितम् ॥५१॥ यत्र कल्पवृक्ष-कल्प-

रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ॥ नृलोके चाप्रतिद्वंद्वो वृष्णीन् श्रुत्वाऽऽत्मसंमितान् ॥४५॥ तं दृष्ट्वाऽचिंतयत्कृष्णः संकर्षणसहायवान् ॥ अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥४६॥ यवनोऽयं निरुंधेऽस्मानद्य तावन्महाबलः ॥ मागधोऽप्यद्य वा श्वो वा परश्वोवाऽऽगमिष्यति ॥४७॥ आवयोर्युद्ध्यतोरस्य यद्यागंता जरासुतः ॥ बंधून्वधिष्यत्यथवा नेष्यते स्वपुरं बली ॥४८॥ तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् ॥ तत्र ज्ञातीन्समाधाय यवनं घातयामहे ॥४९॥ इति संमंत्र्य भगवान्दुर्गं द्वादशयोजनम् ॥ अंतःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥५०॥ दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥५१॥ सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ हेमशृंगैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥५२॥ राजतारकुटैः कोष्ठैर्हेमकुंभैरलंकृतैः ॥ रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥५३॥ वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् ॥ चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥५४॥ सुधर्मां पारिजातं च महेंद्रः प्राहिणोद्धरेः ॥ यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ॥५५॥ श्यामैककर्णान्वरुणो हयान् शुक्लान्मनोजवान् ॥ अष्टौ निधिपतिः कोशाँल्लोकपालो निजोदयान् ॥५६॥ यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये ॥ सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥५७॥ ॥ ॥

लतासहितानि विचित्रोपवनानि संति ॥५२॥ यत्र रौप्यपित्तलाभ्यां निर्मिता अश्वादिशाला महामरकतमयानि स्थलानि च संति ॥५३॥ यत्र नगरगृहादौ वास्तोष्पतीनां देवानां च स्थानानि संति। यच्च ब्राह्मण-क्षत्रिय-वैश्य-शूद्रैर्व्याप्तम्। तथा राजमंदिरैः शोभितम् ॥५४॥ यत्रेंद्रो हरेः सुधर्मां सभां पारिजातं च प्राहिणोत्। यस्यां सभायां स्थितो मनुष्यः क्षुत्पिपासादिभिर्न युज्यते ॥५५॥ यत्र वरुणः श्यामैककर्णानश्वान्, कुवेरो निधीन्, अन्ये लोकपालाः स्वानि स्वान्यैश्वर्याणि च प्रेषयामासुः ॥५६॥ अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये यद्यदाधिपत्यं दत्तं तत्तत्सर्वं हरौ भूमिगते सति प्रत्यर्पयामासुः ॥५७॥ ॥ ॥ ॥

ततः श्रीकृष्णो योगप्रभावेण तत्र सर्वजनं नीत्वा रामं जगाद । हे राम, त्वमत्र स्थित्वा प्रजाः पालय । अहं पलायिष्य इति कृतानुमंत्रः श्रीकृष्णो निरायुधः सन् पुरद्वाराद्बहिर्निर्जगाम ॥५८॥ इति श्रीम० चू० दश० उत्त० पंचाशत्तमोऽध्यायः ॥५०॥ एकपंचाशत्तमेऽहन् मुचुकुंददृशा हरिः । यवनं मुचुकुंदेन स्तुतः सन्नन्वकंपत ॥१॥ श्रीशुक उवाच ॥ ततः पुरद्वाराद्बहिर्निर्गतं चंद्रमिव दर्शनीयं श्यामं पीतांबरधरम् ॥१॥ श्रीवत्सवक्षसं देदीप्यमानकौस्तुभेनालंकृतकंठं चतुर्भुजं कमलनेत्रम् ॥२॥ सुस्मितं मुखकमलं बिभ्राणं स्फुरन्मकरकुंडलम् ॥३॥ श्रीकृष्णं कालयवनो वीक्ष्य नारदप्रोक्तैर्लक्षणैः श्रीवत्सलांछनः सुंदरः पुमान् अयमेव वासुदेवः अन्यो भवितुं नार्हति । अयं च निरायुधोऽस्ति । अतोऽहमपि

तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः ॥ प्रजापालेन रामेण कृष्णः समनुमंत्रितः ॥ निर्जगाम पुरद्वारात्पद्ममाली निरायुधः ॥५८॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे दुर्गनिवेशनं नाम पंचाशत्तमोऽध्यायः ॥ ५० ॥ श्रीशुक उवाच ॥ तं विलोक्य विनिष्क्रांतमुज्जिहानमिवोडुपम् ॥ दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥१॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकंधरम् ॥ पृथुदीर्घचतुर्बाहुं नवकंजारुणेक्षणम् ॥२॥ नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् ॥ मुखारविंदं बिभ्राणं स्फुरन्मकरकुंडलम् ॥३॥ वासुदेवो ह्ययमिति पुमान् श्रीवत्सलांछनः ॥ चतुर्भुजोऽरविंदाक्षो वनमाल्यतिसुंदरः ॥४॥ लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति ॥ निरायुधश्चलन्पद्भ्यां योत्स्येऽनेन निरायुधः ॥५॥ इति निश्चित्य यवनः प्राद्रवंतं पराङ्मुखम् ॥ अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥६॥ हस्तप्राप्तमिवात्मानं हरिणा स पदे पदे ॥ नीतो दर्शयता दूरं यवनेशोऽद्रिकंदरम् ॥७॥ पलायनं यदुकुले जातस्य तव नोचितम् ॥ इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥८॥ एवं क्षिप्तोऽपि भगवान्प्राविशद्गिरिकंदरम् ॥ सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥९॥ नन्वसौ दूरमानीय शेते मामिह साधुवत् ॥ इति मत्वाऽच्युतं मूढस्तं पदा समताडयत् ॥१०॥ स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने ॥ दिशो विलोकयन्पार्श्वे तमद्राक्षीदवस्थितम् ॥११॥ स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत ॥ देहजेनाग्निना दग्धो भस्मसादभवत्क्षणात् ॥१२॥ ॥ ॥ ॥

निरायुधः सन् अनेन सह योत्स्ये ॥४॥५॥ इति निश्चित्य स यवनो धावंतं श्रीकृष्णं ग्रहीतुमिच्छन् सन्नन्वधावत् ॥६॥ आत्मानं हस्तप्राप्तमिव दर्शयता हरिणा स यवनो दूरं गिरेर्गुहां नीतः ॥७॥ तदा यवनो यदुकुले जातस्य तव पलायनं न योग्यम् । एवं निंदन् कृष्णमनुगतोऽपि तं न प्राप ॥८॥ भगवांश्च यत्र मुचुकुंदो निद्रितस्तां गुहां प्राविशत् । यवनोऽपि तदनु गुहां प्रविष्टः सन् तत्रान्यं शयानं नरं ददृशे ॥९॥ असौ वासुदेव एव मां दूरमानीयात्र साधुवच्छेते. इति बुद्ध्या तं शयानं पुरुषं कृष्णं मत्वा पदा ताडयामास ॥१०॥ स पुरुषश्चिरं सुप्तः सद्य उत्थाय नेत्रे उन्मील्य दिशो विलोकयन् पार्श्वे तं यवनं ददर्श ॥११॥ तदा स यवनः क्रुद्धस्य तस्य दृष्टिपातेन देहजेनैवाग्निना भस्मरूपो बभूव ॥१२॥

१ यथा कालयवनो न वेत्ति न चासौ जनस्तथा योगप्रभावेण नीत्वा । २ यादवेभ्योऽमरणरूपं शंकरस्य वरप्रदानं सत्यं कर्तुं तं च मुचुकुंददृष्ट्या मारयितुं पलायिष्य इति ।

राजोवाच ॥ हे ब्रह्मन्, स पुमान् नाम्ना कः। कस्य सुतः। यस्य तेजसा यवनो दग्धः स कुतो गुहायां शयनं कृतवान् तद्वद ॥१३॥ श्रीशुक उवाच ॥ हे राजन्, स इक्ष्वाकुकुले जातः मांधातृ राज्ञः पुत्रो मुचुकुंद इति ख्यातः ॥१४॥ स पूर्वमसुरेभ्यो भीतैर्देवैः स्वरक्षणे प्रार्थितः सन् तेषां चिरं रक्षणं चकार ॥१५॥ ततस्ते देवाः षडाननं रक्षकं लब्ध्वा मुचुकुंदं जगदुः। हे राजन्, अस्माकं रक्षणरूपात्कष्टात्त्वं विश्रांतिं गृहाण ॥१६॥ मनुष्यलोकस्थं स्वराज्यं त्यक्त्वाऽस्मान् पालयतस्तव सर्वे भोगा निवृत्ताः ॥१७॥ तव स्त्रीपुत्रप्रधानादयोऽपि संप्रति न संति। त्वत्समानकालीनाः प्रजाश्च न संति ॥१८॥ कालरूपी भगवानीश्वरः क्रीडन् प्रजाः पशुपालः पशूनिवेतस्ततश्चालयति ॥१९॥ हे राजन्,

राजोवाच ॥ को नाम स पुमान्ब्रह्मन्कस्य किंवीर्य एव च ॥ कस्माद्गुहां गतः शिश्ये किंतेजो यवनार्दनः ॥ १३ ॥ श्रीशुक उवाच ॥ स इक्ष्वाकुकुले जातो मांधातृतनयो महान् ॥ मुचुकुंद इति ख्यातो ब्रह्मण्यः सत्यसंगरः ॥१४॥ स याचितः सुरगणैरिंद्राद्यैरात्मरक्षणे ॥ असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥१५॥ लब्ध्वा गुहं ते स्वःपालं मुचुकुंदमथाब्रुवन् ॥ राजन्विरमतां कृच्छ्राद्भवान्नः परिपालनात् ॥१६॥ नरलोके परित्यज्य राज्यं निहतकंटकम् ॥ अस्मान्पालयतो वीर कामास्ते सर्व उज्झिताः ॥१७॥ सुता महिष्यो भवतो ज्ञातयोऽमात्यमंत्रिणः ॥ प्रजाश्च तुल्यकालीया नाधुना संति कालिताः ॥१८॥ कालो बलीयान्बलिनां भगवानीश्वरोऽव्ययः ॥ प्रजाः कालयते क्रीडन्पशुपालो यथा पशून् ॥१९॥ वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ॥ एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ॥२०॥ एवमुक्तः स वै देवानभिवंद्य महायशाः ॥ निद्रामेव ततो वव्रे स राजा श्रमकर्षितः ॥२१॥ ( यः कश्चिन्मम निद्राया भंगं कुर्यात्सुरोत्तमाः ॥ स हि भस्मीभवेदाशु तथोक्तश्च सुरैस्तदा ॥२२॥) स्वापं यातं यस्तु मध्ये बोधयेत्त्वामचेतनः ॥ स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥ अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥२३॥ यवने भस्मसान्नीते भगवान्सात्वतर्षभः ॥ आत्मानं दर्शयामास मुचुकुंदाय धीमते ॥२४॥ तमालोक्य घनश्यामं पीतकौशेयवाससम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥२५॥ चतुर्भुजं रोचमानं वैजयंत्या च मालया ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुंडलम् ॥२६॥ प्रेक्षणीयं नृलोकस्य सानुरागस्मितेक्षणम् ॥ अपीच्यवयसं मत्तमृगेंद्रोदारविक्रमम् ॥२७॥ ॥ ॥

तव भद्रमस्तु। त्वमस्मत्तो मोक्षं विना वरं वृणीष्व। मोक्षस्य दातैको विष्णुरेवाऽस्ति ॥२०॥ एवं देवैरुक्तो मुचुकुंदस्तानभिवंद्य तत्संरक्षणात् श्रांतः सन्निद्रामेव वव्रे ॥२१॥ ( हे देवाः, मम निद्रां यच्छत। यो मे निद्राभंगं कुर्यात्स भस्मीभवतु ॥२२॥ ) तदा देवा ऊचुः। हे राजन्, सुप्तं त्वां यो बोधयेत् स तव दृष्टिमात्रेण भस्मीभवतु। एवं देवदत्तया निद्रया मुचुकुंदो गुहां प्रविष्टः सन् शेते स्म ॥२३॥ एवं यवने भस्मीभूते सति हरिर्मुचुकुंदाय स्वरूपं दर्शयामास ॥२४॥ तं घनश्यामं पीतांबरं कौस्तुभेन विराजितम् ॥२५॥ चतुर्भुजं वैजयंत्या मालया रोचमानम् ॥२६॥ मनुष्यलोकस्य दर्शनीयं सिंहविक्रमं कृष्णं वीक्ष्य ॥२७॥

तत्तेजसा शंकितो मुचुकुंदः शनैस्तं पप्रच्छ ॥२८॥ मुचुकुंद उवाच । भवान् कः । इह गह्वरे कस्मादागतः । बहुकंटकव्याप्तेऽस्मिन् गुहास्थले कमलपत्रवत्कोमलाभ्यां पद्भ्यां कस्त्वं संचरसि ॥२९॥ त्वं तेजस्विनां मध्ये सूर्योऽसि किम् । अग्निः सोम इंद्रो वाऽसि ॥३०॥ त्वां ब्रह्मादीनां त्रयाणां देवानां मध्ये विष्णुमहं मन्ये । यतस्त्वं स्वतेजसा गुहांधकारं नाशयसि ॥३१॥ अतो हे मनुष्यश्रेष्ठ, निष्कपटं श्रोतुमिच्छतां नः स्वजन्म कर्माणि च वद ॥३२॥ हे पुरुषश्रेष्ठ, अहं त्विक्ष्वाकुकुलोत्पन्नस्य मांधातुः पुत्रो मुचुकुंदोऽस्मि ॥३३॥ अहं चिरप्रजागरश्रांतोऽस्मिन्निर्जने वने शयितः सन् संप्रति केनाप्युत्थापितः ॥३४॥ सोऽपि स्वपापेनैव भस्मीकृतः । अनंतरं शत्रुनाशकस्त्वं मया दृष्टोऽसि ॥३५॥ इदानीं त्वत्ते-

पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य धर्षितः ॥ शंकितः शनकै राजा दुर्धर्षमिव तेजसा ॥२८॥ मुचुकुंद उवाच ॥ को भवानिह संप्राप्तो विपिने गिरिगह्वरे ॥ पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकंटके ॥२९॥ किंस्वित्तेजस्विनां तेजो भगवान्वा विभावसुः ॥ सूर्यः सोमो महेंद्रो वा लोकपालोऽपरोऽपि वा ॥३०॥ मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् ॥ यद्बाधसे गुहाध्वांतं प्रदीपः प्रभया यथा ॥३१॥ शुश्रूषतामव्यलीकमस्माकं नरपुंगव ॥ स्वजन्म कर्म गोत्रं वा कथ्यतां यदि रोचते ॥३२॥ वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबंधवः ॥ मुचुकुंद इति प्रोक्तो यौवनाश्वात्मजः प्रभो ॥३३॥ चिरप्रजागरश्रांतो निद्रयाऽपहतेंद्रियः ॥ शयेऽस्मिन्विजने कामं केनाप्युत्थापितोऽधुना ॥३४॥ सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना ॥ अनंतरं भवान् श्रीमाँल्लक्षितोऽमित्रशातनः ॥३५॥ तेजसा तेऽविषह्येण भूरिद्रष्टुं न शक्नुमः ॥ हतौजसो महाभाग माननीयोऽसि देहिनाम् ॥३६॥ एवं संभाषितो राज्ञा भगवान्भूतभावनः ॥ प्रत्याह प्रहसन्वाण्या मेघनादगभीरया ॥३७॥ श्रीभगवानुवाच ॥ जन्मकर्माभिधानानि संति मेऽग सहस्रशः ॥ न शक्यंतेऽनुसंख्यातुमनंतत्वान्मयापि हि ॥३८॥ क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः ॥ गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ॥३९॥ कालत्रयोपपन्नानि जन्मकर्माणि मे नृप ॥ अनुक्रमंतो नैवांतं गच्छंति परमर्षयः ॥४०॥ तथाप्यद्यतनान्यंग शृणुष्व गदतो मम ॥ विज्ञापितो विरिंचेन पुराऽहं धर्मगुप्तये ॥ भूमेर्भारायमाणानामसुराणां क्षयाय च ॥४१॥ अवतीर्णो यदुकुले गृह आनकदुंदुभेः ॥ वदंति वासुदेवेति वसुदेवसुतं हि माम् ॥४२॥ ॥ ॥ ॥

जसा त्वां द्रष्टुमहं न शक्नोमि ॥३६॥ एवं राज्ञा संभाषितो भगवान् प्रहस्य मेघगंभीरया वाचा तंप्रत्याह ॥३७॥ श्रीभगवानुवाच ॥ हे राजन्, मम जन्म-कर्म-नामानि सहस्रशः संति । अतस्तानि सर्वाण्यनंतत्वान्मयापि संख्यातुं न शक्यंते ॥३८॥ क्वचिद्भूमे रजांसि कश्चित्पुरुषो बहुभिर्जन्मभिर्गणयिष्यति । तथापि स मे जन्मकर्माभिधानानि न गणयिष्यति ॥३९॥ महर्षयोऽपि मे जन्मकर्मणामंतं न प्राप्नुवंति ॥४०॥ तथाप्यद्यतनानि मे नामानि शृणुष्व । पुरा ब्रह्मणा भूभारहरणार्थं प्रार्थितोऽहम् ॥४१॥ यदुकुले वसुदेवगृहे जातोऽस्मि । अतो मां वासुदेव इति वदंति ॥४२॥ ॥ ॥ ॥ ॥ ॥ ॥

मया कालनेमिः कंसः प्रलंबाद्या दैत्याश्च हताः । अयं यवनोऽपि ते चक्षुषा दग्धः ॥४३॥ पूर्वं त्वया बहुप्रार्थितोऽहं तवानुग्रहार्थमेतां गुहां प्राप्तोऽस्मि ॥४४॥ अतो मत्तस्त्वं वरान् वृणीष्व । सर्वान् कामान् ते ददामि । तव कल्याणमस्तु । मां प्राप्तो जनः पुनः शोचितुं नार्हति ॥४५॥ श्रीशुक उवाच ॥ इत्युक्तो मुचुकुंदस्तं नारायणं ज्ञात्वा वृद्धगर्गवाक्यं स्मरन् प्रणम्याह ॥४६॥ मुचुकुंद उवाच । हे भगवन्, अयं जनस्तव मायया मोहितः सन् त्वां न भजति । किंतु सुखेच्छया दुःखप्रभवेषु गृहेष्वेवं सज्जते ॥४७॥ अत्र कर्मभूमौ दुर्लभं मानुषं जन्म प्राप्य यस्तव पादकमलं न भजति स पशुतुल्यो गृहांधकूपे पतति ॥४८॥ श्रीमदांधस्य पुत्रस्त्रीद्रव्यादिष्वासक्तचित्तस्य ममैष कालो निष्फलो गतः ॥४९॥

कालनेमिर्हतः कंसः प्रलंबाद्याश्च सद्द्विषः ॥ अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥४३॥ सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ॥ प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः ॥४४॥ वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामि ते ॥ मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ॥४५॥ श्रीशुक उवाच ॥ इत्युक्तस्तं प्रणम्याह मुचुकुंदो मुदान्वितः ॥ ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥४६॥ मुचुकुंद उवाच ॥ विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ॥ सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वंचितः ॥४७॥ लब्ध्वा जनो दुर्लभमत्र मानुषं कथंचिदव्यंगमयत्नतोऽनघ ॥ पादारविंदं न भजत्यसन्मतिर्गृहांधकूपे पतितो यथा पशुः ॥४८॥ ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः ॥ मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरंतचिंतया ॥४९॥ कलेवरेऽस्मिन्घटकुड्यसंनिभे निरूढमानो नरदेव इत्यहम् ॥ वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वाऽगणयन्सुदुर्मदः ॥५०॥ प्रमत्तमुच्चैरितिकृत्यचिंतया प्रवृद्धलोभं विषयेषु लालसम् ॥ त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमंतकः ॥५१॥ पुरा रथैर्हेमपरिष्कृतैश्चरन्मतंगजैर्वा नरदेवसंज्ञितः ॥ स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥५२॥ निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवंदितः ॥ गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ॥५३॥ करोति कर्माणि तपस्सु निष्ठितो निवृत्तभोगस्तदपेक्षया ददत् ॥ पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते॥५४॥भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ॥ सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः॥५५॥

अस्मिन् देहे राजाऽहमित्यभिमानेन रथ-गजाश्व-पदातिभिः सह भूमिं पर्यटन् कालरूपिणं त्वामविगणय्य स्थितः ॥५०॥ अतो विषयेषूत्सुकं मां मृत्युरूपस्त्वं, सर्पो मूषकमिवाकस्मादभिभवसि ॥५१॥ यः पुरा हेमरथैर्वा गजैर्वा नरदेवसंज्ञितश्चरति स एव कालेन कृमिविड्भस्मसंज्ञितः कृतो भवति ॥५२॥ यो राजा पूर्वं समानराजभिर्वंदितः स एव सुरतसुखेषु स्त्रीगृहेषु क्रीडामृग इवेतस्ततो नीयते ॥५३॥ यो राजा सन् पुनरपि राज्यप्राप्तये तपांसि करोति स प्रवृद्धतृष्णः सन् सुखं न प्राप्नोति ॥५४॥ हे अच्युत, संसारे भ्रमतो जनस्य

१ अष्टाविंशतितमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यम् । २ श्वसृगालादिभिर्भक्षितो विट्संज्ञितस्तैरभक्षितः कृमिसंज्ञितो दग्धो वा भस्मसंज्ञितो भवतीति ।

त्वत्कृपया यदा संसारनिवृत्तिर्भाविनी तदा सत्संगमः स्यात्। ततस्त्वयि भक्तिर्भवति ॥ ततो मुच्यते ॥५५॥ हे ईश, मम तु सत्संगात्पूर्वमेव यो मुमुक्षुभिरिच्छितो राज्यविच्छेदो जातः सोऽयं त्वया महाननुग्रहः कृत इति मन्ये ॥५६॥ हे विभो, त्वत्पादसेवनं विनाऽन्यं वरं न वृणे। मोक्षदं त्वामाराध्याऽऽत्मबंधनं वरं को वृणीते न कोऽपि ॥५७॥ तत आशिषस्त्यक्त्वा निर्गुणं ज्ञानघनमद्वयं पुरुषं त्वां शरणं व्रजामि ॥५८॥ इह संसारे कर्मफलतापैस्तप्यमानोऽहं त्वां शरणं प्राप्तः। अतो मां पाहि ॥५९॥ श्रीभगवानुवाच ॥ हे राजन्, तव बुद्धी रागलोभादिदोषै रहिता भूत्वा निर्मला जाता। यतो वरैः प्रलोभितापि सा विषयासक्ता न भवति ॥६०॥ मया वरान् वृणीष्वेति यदुक्तं तत्प्रमादाय न

मन्ये ममानुग्रह ईश ते कृतो राज्यानुबंधापगमो यदृच्छया ॥ यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखंडभूमिपैः ॥५६॥ न कामयेऽन्यं तव पादसेवनादकिंचनप्रार्थ्यतमाद्वरं विभो ॥ आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबंधनम् ॥५७॥ तस्माद्विसृज्याशिष ईश सर्वतो रजस्तमःसत्वगुणानुबंधनाः ॥ निरंजनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥५८॥ चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रो लब्धशांतिः कथंचित् ॥ शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि माऽऽपन्नमीश ॥५९॥ श्रीभगवानुवाच ॥ सार्वभौम महाराज मतिस्ते विमलोर्जिता ॥ वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥६०॥ प्रलोभितो वरैर्यत्त्वमप्रमादाय विद्धि तत् ॥ न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ॥६१॥ युंजानानामभक्तानां प्राणायामादिभिर्मनः ॥ अक्षीणवासनं राजन्दृश्यते पुनरुत्थितम् ॥६२॥ विचरस्व महीं कामं मय्यावेशितमानसः ॥ अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥६३॥ क्षात्रधर्मस्थितो जंतून्न्यवधीर्मृगयादिभिः ॥ समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥६४॥ जन्मन्यनंतरे राजन्सर्वभूतसुहृत्तमः ॥ भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् ॥६५॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे मुचुकुंदस्तुतिर्नामैकपंचाशत्तमोऽध्यायः ॥५१॥ श्रीशुक उवाच ॥ इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनंदनः ॥ तं परिक्रम्य संनम्य निश्चक्राम गुहामुखात् ॥१॥ ॥ ॥ ॥

भवति। यतो ममैकांतभक्तानां बुद्धिः प्राप्ताभिरपि संपद्भिर्विषयासक्ता न भवति ॥६१॥ हे राजन्, अभक्तानां प्राणायामादिभिर्नियमितमपि मनः अक्षीणवासनं सत्पुनर्विषयासक्तं जातं दृश्यते ॥६२॥ अतस्त्वं मयि मनो निवेश्य महीं यथेच्छं विचरस्व। तव मयि निश्चला भक्तिरस्त्येव ॥६३॥ त्वं पूर्वं क्षत्रियधर्मे स्थितः सन् कारणरहितैरपि मृगयादिभिर्जंतूनवधीः तत्पापं तपसा जहि ॥६४॥ हे राजन्, त्वं भाविजन्मनि ब्राह्मणो भूत्वा परमानंदरूपिणं मां प्राप्स्यसि ॥६५॥ इति श्रीम० दश० उत्त० एकपंचाशत्तमोऽध्यायः ॥५१॥

द्विपंचाशत्तमे धावन् भयादिव गतः पुरीम्। अन्वमोदत संदेशं रुक्मिण्या द्विजवर्णितम् ॥१॥ श्रीशुक उवाच ॥ इत्थं कृष्णेनानुगृहीतः स मुचुकुंदस्तं प्रदक्षिणीकृत्य नत्वा च गुहा-

१ ऐश्वर्यादिशत्रुमारणादिधर्मादिरूपा आशिषः।

मुखाद्बहिर्निश्चक्राम ॥१॥ स क्षुल्लकान् मनुष्यवृक्षादीन् दृष्ट्वा कलियुगं प्राप्तं ज्ञात्वोत्तरां दिशं जगाम ॥२॥ स कृष्णे मनः समावेश्य गंधमादनपर्वतं प्रविश्य ॥३॥ तत्र नरनारायणस्थानं बदरिकाश्रमं गत्वा तपसा हरिमाराधयत् ॥४॥ श्रीकृष्णस्तु पुनर्यवनैर्वेष्टितां मथुरां गत्वा यवनसैन्यं हत्वा तदीयं धनं द्वारकांप्रति नयन् मार्गे चलति स्म ॥५॥ तदा गोभिर्नृभिश्च धने नीयमाने सति त्रयोविंशत्यक्षौहिणीसैन्ययुक्तो जरासंध आजगाम ॥६॥ तत्सैन्यं दृष्ट्वा वित्तं त्यक्त्वा मनुष्यचेष्टां प्राप्तौ रामकृष्णौ कमलपत्रवत्कोमलाभ्यां पद्भ्यामेवातिभीतवद्बहुयोजनं देशं पलायेताम् ॥७॥८॥ पलायमानौ तौ दृष्ट्वा जरासंधः प्रहस्य रथैः सैन्यैश्च सहान्वधावत् ॥९॥ तौ रामकृष्णौ दूरं प्रद्रुत्य प्रवर्षणाख्यं गिरिमारुहताम् ।

स वीक्ष्य क्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन् ॥ मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥२॥ तपःश्रद्धायुतो धीरो निःसंगो मुक्तसंशयः ॥ समाधाय मनः कृष्णे प्राविशद्गंधमादनम् ॥३॥ बदर्याश्रममासाद्य नरनारायणालयम् ॥ सर्वद्वंद्वसहः शांतस्तपसाऽऽराधयद्धरिम् ॥४॥ भगवान्पुनराव्रज्य पुरीं यवनवेष्टिताम् ॥ हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥५॥ नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः ॥ आजगाम जरासंधस्त्रयोविंशत्यनीकपः ॥६॥ विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ ॥ मनुष्यचेष्टामापन्नौ राजन्दुद्रुवतुर्द्रुतम् ॥७॥ विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत् ॥ पद्भ्यां पद्मपलाशाभ्यां चेलतुर्बहुयोजनम् ॥८॥ पलायमानौ तौ दृष्ट्वा मागधः प्रहसन्बली ॥ अन्वधावद्रथानीकैरीशयोरप्रमाणवित् ॥९॥ प्रद्रुत्य दूरं संश्रान्तौ तुंगमारुहतां गिरिम् ॥ प्रवर्षणाख्यं भगवान्नित्यदा यत्र वर्षति ॥१०॥ गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप ॥ ददाह गिरिमेधोभिः समंतादग्निमुत्सृजन् ॥११॥ तत उत्पत्य तरसा दह्यमानतटादुभौ ॥ दशैकयोजनोत्तुंगान्निपेततुरधोभुवि ॥१२॥ अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ ॥ स्वपुरं पुनरायातौ समुद्रपरिखां नृप ॥१३॥ सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ ॥ बलमाकृष्य सुमहन्मगधान्मागधो ययौ ॥१४॥ आनर्ताधिपतिः श्रीमान्रैवतो रेवतीं सुताम् ॥ ब्रह्मणा चोदितः प्रादाद्बलायेति पुरोदितम् ॥१५॥ भगवानपि गोविंद उपयेमे कुरूद्वह ॥ वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंवरे ॥१६॥ प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् ॥ पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥१७॥ राजोवाच ॥ भगवान्भीष्मकसुतां रुक्मिणीं रुचिराननाम् ॥ राक्षसेन विधानेन उपयेम इति श्रुतम् ॥१८॥

यत्रेंद्रो नित्यदा वृष्टिं करोति ॥१०॥ जरासंधस्तौ गिरौ गुप्तौ ज्ञात्वा तं गिरिं काष्ठैः संवेष्ट्य ददाह ॥११॥ ततस्तावेकादश-योजनोच्चाद्दह्यमान-तटाद्गिरेर्जरासंध-संरोधन-देशमतिक्रम्य परतोऽधोभुवि निपेततुः ॥१२॥ एवं शत्रुणाऽलक्ष्यमाणौ तौ समुद्रपरिखां द्वारकां पुनरायातौ ॥१३॥ सोऽपि जरासंधस्तौ दग्धौ मत्वा स्वसैन्यं गृहीत्वा मागधान् देशान् ययौ ॥१४॥ आनर्तदेशाधिपती रैवतो ब्रह्मणा प्रेरितः सन् स्वसुतां रेवतीं बलरामाय प्रादात् इति नवमस्कंधे उक्तम् ॥१५॥ हे भारत, भगवान् श्रीकृष्णोऽपि स्वयंवरे चैद्यपक्षीयान् शाल्वादीन् राज्ञः प्रमथ्य गरुडो यथा देवान् प्रमथ्य सुधामहरत्तथा लक्ष्म्यंशभूतां भीष्मकसुतां रुक्मिणीमुपयेमे ॥१६॥१७॥ राजोवाच ॥ हे भगवन् शुक, श्रीकृष्णो रुक्मिणीं

राक्षसविधिनोपयेम इति श्रुतम् ॥१८॥ तद्यथा भगवान् मागधशाल्वादीन् जित्वा कन्यां जहार तच्छ्रोतुमिच्छामि ॥१९॥ हे ब्रह्मन्, लोकमलापहाः कृष्णकथाः शृण्वन् को नु तृप्येत न कोऽपि ॥२०॥ श्रीशुक उवाच ॥ हे राजन्, विदर्भदेशाधिपतिर्भीष्मको नाम राजाऽऽसीत् । तस्य पंच पुत्रा एका कन्या चाभवन् ॥२१॥ ते च–रुक्मी रुक्मरथः रुक्मबाहुः रुक्मकेशः रुक्ममाली चेति । एषां स्वसा रुक्मिणी ॥२२॥ सा रुक्मिणी गृहागतैर्नारदादिभिर्गीयमानान् श्रीकृष्णस्य शौर्य-पराक्रम-गांभीर्यौदार्यादीन् गुणान् संपत्तिं च श्रुत्वा तं स्वयोग्यं पतिं मेने ॥२३॥ कृष्णोऽपि बुद्धि-लक्षणौदार्य-रूप-शीलादिगुणयुक्तां तां रुक्मिणीं स्वयोग्यां मत्वा तां समुद्वोढुं मनो दधे ॥२४॥ तां रुक्मिणीं कृष्णाय दातुमि-

भगवन् श्रोतुमिच्छामि कृष्णस्यामिततेजसः ॥ यथा मागधशाल्वादीन् जित्वा कन्यामुपाहरत् ॥१९॥ ब्रह्मन्कृष्णकथाः पुण्या माध्वीर्लोकमलापहाः ॥ को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥२०॥ श्रीशुक उवाच ॥ राजाऽसीद्भीष्मको नाम विदर्भाधिपतिर्महान् ॥ तस्य पंचाभवन्पुत्राः कन्यैका च वरानना ॥२१॥ रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनंतरः ॥ रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥२२॥ सोपश्रुत्य मुकुंदस्य रूपवीर्यगुणश्रियः ॥ गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥२३॥ तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् ॥ कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥२४॥ बंधूनामिच्छतां दातुं कृष्णाय भगिनीं नृप ॥ ततो निवार्य कृष्णद्विड् रुक्मी चैद्यममन्यत ॥२५॥ तदवेत्यासितापांगी वैदर्भी दुर्मना भृशम् ॥ विचिंत्याप्तं द्विजं कंचित्कृष्णाय प्राहिणोद्द्रुतम् ॥२६॥ द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः ॥ अपश्यदाद्यं पुरुषमासीनं कांचनासने ॥२७॥ दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात् ॥ उपवेश्यार्हयांचक्रे यथाऽऽत्मानं दिवौकसः ॥२८॥ तं भुक्तवंतं विश्रांतमुपगम्य सतां गतिः ॥ पाणिनाऽभिमृशन्पादावव्यग्रस्तमपृच्छत ॥२९॥ कच्चिद्द्विजवरश्रेष्ठ धर्मस्ते वृद्धसंमतः ॥ वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥३०॥ संतुष्टो यर्हि वर्तेत ब्राह्मणो येनकेनचित् ॥ अहीयमानः स्वाद्धर्मात्स ह्यस्याखिलकामधुक् ॥३१॥ असंतुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः ॥ अकिंचनोऽपि संतुष्टः शेते सर्वांगविज्वरः ॥३२॥ ॥ ॥

च्छतो बंधून् निवार्य कृष्णद्वेष्टा रुक्मी तस्या वरं शिशुपालं मेने ॥२५॥ सा तच्छ्रुत्वा खिन्नचित्ता सती कंचनाप्तं द्विजं कृष्णमानेतुं प्रेषयामास॥२६॥ स विप्रो द्वारकामेत्य द्वारपालैः श्रीकृष्णमंदिरे प्रवेशितः सन् सुवर्णासन उपविष्टं श्रीकृष्णं ददर्श ॥२७॥ कृष्णोऽपि द्विजमागतं दृष्ट्वाऽऽसनादवरुह्य स्वासने तमुपवेश्य पूजयामास ॥२८॥ ततस्तं विश्रांतं भोजयित्वा तत्समीपमुपेत्य पाणिना तस्य पादौ संमर्दयन् सन् तं पप्रच्छ ॥२९॥ हे द्विजश्रेष्ठ, संतुष्टचित्तस्य ते धर्मोऽनायासेन वर्तते कच्चित् ॥३०॥ ब्राह्मणः संतुष्टश्चेत्तर्हि तस्य धर्मस्तस्य मनोरथपूरको भवति ॥३१॥ इंद्रोऽप्यसंतुष्टश्चेल्लोकाल्लोकांतरं पर्यटति । नैकत्र निर्वृतस्तिष्ठति । यथालाभेन संतुष्टश्चेत्तर्हि दरिद्रोऽपि तापरहितः सन् सुखं तिष्ठति ॥३२॥

अहं स्वलाभसंतुष्टान् शांतान् द्विजान् शिरसा नमस्ये ॥३३॥ हे द्विज, राजतो वः कुशलं कच्चित् । यस्य देशे पाल्यमानाः प्रजाः सुखं वसंति स राजा मे प्रियः ॥३४॥ हे द्विज, यस्य कार्यस्येच्छया त्वं समुद्रं तीर्त्वा द्वारकामागतस्तद्गुह्यं न चेत्तर्हि सर्वं ब्रूहि । तव किं कार्यं करवाम ॥३५॥ एवं पृष्टो विप्रो वंधूनामिच्छतां दातुं कृष्णाय भगिनीमित्यादि सर्वमवर्णयत् ॥३६॥ ततो रुक्मिण्या स्वयमेकांते लिखित्वा दत्तां पत्रिकां मुद्रामुन्मुच्य तस्मै दर्शयित्वा तदनुज्ञया ब्राह्मणस्तां वाचयति । रुक्मिण्युवाच ॥ हे भुवनसुंदर, अच्युत, तव गुणान् रूपं च श्रुत्वा मे चित्तं लज्जारहितं सत् त्वय्याविशति ॥३७॥ हे मुकुंद, कुल-शील-रूप-विद्यादिभिः स्वतुल्यं पतिं त्वां कुलवती का कन्या न वृणीत ॥३८॥ तस्मा-

विप्रान्स्वलाभसंतुष्टान्साधून्भूतसुहृत्तमान् ॥ निरहंकारिणः शांतान्नमस्ये शिरसाऽसकृत् ॥३३॥ कच्चिद्वः कुशलं ब्रह्मन्राजतो यस्य हि प्रजाः ॥ सुखं वसंति विषये पाल्यमानाः स मे प्रियः ॥३४॥ यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया ॥ सर्वं नो ब्रूह्यगुह्यं चेत्किं कार्यं करवाम ते ॥३५॥ एवं संपृष्टसंप्रश्नो ब्राह्मणः परमेष्ठिना ॥ लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥३६॥ रुक्मिण्युवाच ॥ श्रुत्वा गुणान्भुवनसुंदर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोंऽगतापम् ॥ रूपं दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताविशति चित्तमपत्रपं मे ॥३७॥ का त्वा मुकुंद महती कुलशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यम् ॥ धीरा पतिं कुलवती न वृणीत कन्या काले नृसिंह नरलोकमनोभिरामम् ॥३८॥ तन्मे भवान्खलु वृतः पतिरंग जायामात्मार्पितश्च भवतोऽत्र विभो विधेहि ॥ मा वीरभागमभिमर्शतु चैद्य आराद्गोमायुवन्मृगपतेर्बलिमंबुजाक्ष ॥३९॥ पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलं भगवान्परेशः ॥ आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥४०॥ श्वोभाविनि त्वमजितोद्वहने विदर्भान् गुप्तः समेत्य पृतनापतिभिः परीतः ॥ निर्मथ्य चैद्यमगधेंद्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥४१॥ अंतःपुरांतरचरीमनिहत्य बंधूंस्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ॥ पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥४२॥ ॥ ॥ ॥ ॥ ॥

न्मया भवान् पतिर्वृतः । तव देहश्चार्पितः । अतस्त्वमत्रागत्य मां भवतो जायां विधेहि । सिंहस्य भागं सृगालवदिमं तव भागं मे देहं शिशुपालो मा स्पृशतु ॥३९॥ मया पूर्वजन्मनि वापी-कूप-यज्ञ-दान-व्रतादिभिर्भगवानाराधितश्चेत्तर्हि स कृष्णोऽत्रागत्य मे पाणिं गृह्णातु । अन्ये शिशुपालादयो न गृह्णंतु ॥४०॥ हे अजित, श्वो भाविनि विवाहे प्रथमं त्वं गुप्त एवैत्य पश्चात्सेनायुतः सन् शिशुपाल-जरासंधादिसैन्यं निर्मथ्य वीर्यशुल्कां मां राक्षसविधिनोद्वह ॥४१॥ हे कन्ये, तव बंध्वादीन् न हत्वाऽतःपुरे स्थितां त्वां कथमुद्वहे इति चेत्तर्ह्युपायं वच्मि । अस्मत्कुले विवाहात्पूर्वदिवसे कुलदेव्या यात्राऽस्ति । यस्यां नववधूर्नगराद्बहिः स्थितमंबिकादेवालयं गच्छेत् ॥४२॥ ॥ ॥

१ अंबिकादेवालयादेव मम हरणं सुकरमित्यर्थः ।

यच्चरणरजः शिवादयः पापनाशाय वांछंति तस्य भवतः प्रसादं यद्यहं न प्राप्नुयां तर्ह्युपवासादिव्रतैः कृशान् प्राणानहं त्यजेयम् । एवमेव वारंवारं जह्याम् । यावच्छतजन्मभिरपि तव प्रसादः स्यात् ॥४३॥ ब्राह्मण उवाच ॥ हे भगवन्, एते रुक्मिण्या गुह्यसंदेशा मयाऽऽनीताः । अत्र यत्कर्तुं योग्यं तद्विचार्य शीघ्रं क्रियताम् ॥४४॥ इति श्रीमद्भाग० चू० द० उत्त० द्विपंचाशत्तमोऽध्यायः ॥५२॥ त्रिपंचाशत्तमे गत्वा विदर्भानद्भुतेहितः । रुक्मिणीमहरत्कृष्णो मिषतां द्विषतां बलात् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, स कृष्ण एवं रुक्मिण्याः संदेशं श्रुत्वा प्रहसन् ब्राह्मणस्य हस्तं स्वहस्तेन गृहीत्वा जगाद ॥१॥ तथाऽहमपि तच्चित्तः सन् रात्रौ निद्रां न लभे । रुक्मिणा द्वेषान्ममोद्वाहो निवारित इत्यहं जानामि ॥२॥ अतो युद्धे राज्ञ उन्मथ्य मत्परां तां रुक्मिणीमानयिष्ये ॥३॥ श्रीशुक उवाच ॥ श्रीकृष्णो रुक्मिण्या विवाहनक्षत्रं परश्वो रात्रावस्तीति ज्ञात्वा सारथिं जगाद ।

यस्यांघ्रिपंकजरजः स्नपनं महांतो वांछंत्युमापतिरिवात्मतमोऽपहत्यै ॥ यर्ह्यंबुजाक्ष न लभेय भवत्प्रसादं जह्यामसून्व्रतकृशान् शतजन्मभिः स्यात् ॥४३॥ ब्राह्मण उवाच ॥ इत्येते गुह्यसंदेशा यदुदेव मयाऽऽहृताः ॥ विमृश्य कर्तुं यच्चात्र क्रियतां तदनंतरम् ॥४४॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे रुक्मिण्युद्वाहप्रस्तावे द्विपंचाशत्तमोऽध्यायः ॥५२॥ श्रीशुक उवाच ॥ वैदर्भ्याः स तु संदेशं निशम्य यदुनंदनः ॥ प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत् ॥१॥ श्रीभगवानुवाच ॥ तथाऽहमपि तच्चित्तो निद्रां च न लभे निशि ॥ वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ॥२॥ तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे ॥ मत्परामनवद्यांगीमेधसोऽग्निशिखामिव ॥३॥ श्रीशुक उवाच ॥ उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः ॥ रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥४॥ स चाश्वैः शैब्यसुग्रीवमेघपुष्पबलाहकैः ॥ युक्तं रथमुपानीय तस्थौ प्रांजलिरग्रतः ॥५॥ आरुह्य स्यंदनं शौरिर्द्विजमारोप्य तूर्णगैः ॥ आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥६॥ राजा स कुंडिनपतिः पुत्रस्नेहवशं गतः ॥ शिशुपालाय स्वां कन्यां दास्यन्कर्माण्यकारयत् ॥७॥ पुरं संमृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ॥ चित्रध्वजपताकाभिस्तोरणैः समलंकृतम् ॥८॥ स्रग्गंधमाल्याभरणैर्विरजोंऽबरभूषितैः ॥ जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥९॥ पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप ॥ भोजयित्वा यथान्यायं वाचयामास मंगलम् ॥१०॥ ॥ ॥ ॥

हे दारुक, मम रथ आशु संयुज्यताम् ॥४॥ ततः स दारुकः शैब्य-सुग्रीव-मेघपुष्प-बलाहकैरश्वैर्युक्तं रथमानीयाऽग्रतः प्रांजलिः सन् तस्थौ ॥५॥ तदा श्रीकृष्णो रथं स्वयमारुह्य द्विजं चारोप्य शीघ्रगैरश्वैरेकरात्रेण विदर्भान् देशानगमत् ॥६॥ राजा भीष्मकस्तु पुत्रस्नेहबद्धः सन् शिशुपालाय स्वां कन्यां दास्यन् नगरभूषण-पितृदेवार्चनादिकर्माण्यकारयत् ॥७॥ ततः पुरं चित्र-ध्वजपताकातोरणैः समलंकृतं कारयामास ॥८॥ तदा तत्पुरं स्रग्गंध-माल्याभरण-वस्त्रभूषितैः स्त्रीपुरुषैर्जुष्टं चंदनागुरुधूपितैः श्रीमद्भिर्गृहैश्च युक्तमासीत् ॥९॥ ततः कन्याया विवाहांगत्वेन पुण्याहवाचनं कारयित्वा पितॄन् देवान् विप्रांश्चाभ्यर्च्य ब्राह्मणांश्च भोजयित्वा ॥१०॥ ॥ ॥ ॥

→c.f. MAHABHARAT विराट पर्व

सुस्नातां कृतकौतुकमंगलां कन्यां नवीनवस्त्रयुग्मेन भूषणोत्तमैश्च भूषितां चकार ॥११॥ तदा द्विजा ऋग्यजुःसाममंत्रैस्तस्या रक्षणं चक्रुः । ततोऽथर्वणमंत्रवेत्ता पुरोहितो ग्रहशान्तयेऽग्नौ जुहाव ॥१२॥ तदा राजा विप्रेभ्यः सुवर्ण-रूप्य-वासांसि गुडमिश्रितान् तिलान् धेनूश्च प्रादात् ॥१३॥ एवं चेदिदेशाधिपतिर्दमघोषः स्वपुत्रस्य शिशुपालस्य विवाहयोग्यं सर्वं कर्म ब्राह्मणैः कारयामास ॥१४॥ ततो गज-रथ-पत्त्यश्वयुक्तैः सैन्यैर्वेष्टितः शिशुपालः स्वनगरात्कुंडिनपुरं ययौ ॥१५॥ भीष्मकस्तं समेत्य संपूज्य च कल्पितान्यगृहे निवेशयामास ॥१६॥ तत्र शाल्व-जरासंध-दंतवक्र-विदूरथ-पौंडकादयश्चैद्यपक्षीयाः सहस्रशो राजान .आजग्मुः ॥१७॥ श्रीकृष्णो यदुभिः सहागत्य कन्यां यदि हरेत्तर्हि सर्वे वयमेकत्र

सुस्नातां सुदतीं कन्यां कृतकौतुकमंगलाम्[1] ॥ अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥११॥ चक्रुः सामर्ग्यजुर्मंत्रैर्वध्वा रक्षां द्विजोत्तमाः ॥ पुरोहितोऽथर्वविद्वै जुहाव ग्रहशांतये ॥१२॥ हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ॥ प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥१३॥ एवं चेदिपती राजा दमघोषः सुताय वै ॥ कारयामास मंत्रज्ञैः सर्वमभ्युदयोचितम् ॥१४॥ मदच्युद्भिर्गजानीकैः स्यंदनैर्हेममालिभिः ॥ पत्त्यश्वसंकुलैः सैन्यैः परीतः कुंडिनं ययौ ॥१५॥ तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च ॥ निवेशयामास मुदा कल्पितान्यनिवेशने ॥१६॥ तत्र शाल्वो जरासंधो दंतवक्रो विदूरथः ॥ आजग्मुश्चैद्यपक्षीयाः पौंड्रकाद्याः सहस्रशः ॥१७॥ कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् ॥ यद्यागत्य हरेत्कृष्णो रामाद्यैर्यदुभिर्वृतः ॥१८॥ योत्स्यामः संहतास्तेन इति निश्चितमानसाः ॥ आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥१९॥ श्रुत्वैतद्भगवान्रामो विपक्षीयनृपोद्यमम् ॥ कृष्णं चैकं गतं हर्तुं कन्यां कलहशंकितः ॥२०॥ बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः ॥ त्वरितः कुंडिनं प्रागाद्गजाश्वरथपत्तिभिः ॥२१॥ भीष्मकन्या वरारोहा कांक्षंत्यागमनं हरेः ॥ प्रत्यापत्तिमपश्यंती द्विजस्याचिंतयत्तदा ॥२२॥ अहो त्रियामांतरित उद्वाहो मेऽल्पराधसः ॥ नागच्छत्यरविंदाक्षो नाहं वेद्म्यत्र कारणम् ॥ सोऽपि नावर्ततेऽद्यापि मत्संदेशहरो द्विजः ॥२३॥ अपि मय्यनवद्यात्मा दृष्ट्वा किंचिज्जुगुप्सितम् ॥ मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥२४॥ ॥ ॥

भूत्वा तेन सह योत्स्याम इति निश्चितमानसाः संतः कन्यां शिशुपालाय साधयितुं स्वैः स्वैः सर्वैः सैन्यैः सहाजग्मुः ॥१८॥१९॥ द्वारकायां भगवान् रामः शत्रुपक्षीयाणां राज्ञामिमं यत्नं श्रुत्वा कन्यां हर्तुं चैकाकिनं कृष्णं गतं ज्ञात्वा तत्र कृष्णस्य राज्ञां च कलहो भविष्यतीति शंकितः सन् ॥२०॥ चतुरंगसेनया सह त्वरितः कुंडिनपुरं ययौ ॥२१॥ रुक्मिणी तु सूर्योदयात्पूर्वमेव हरेर्द्विजस्य च प्रत्यागमनमपश्यंती सती चिंतयामास ॥२२॥ अहो मंदभाग्याया मे विवाहो रात्र्यंतरितोऽस्ति । अद्यापि श्रीकृष्णो नायाति तत्र कारणं न जाने ॥२३॥ सोऽपि मत्संदेशहरो द्विजो नायाति । अत आदावागमने कृतोद्यमत्वात्तं द्विजं कृष्णो न प्रस्थापितवान् । प्रस्थानावसरे च किंचिन्मयि जुगुप्सितं मत्वा

---

१ कृतं कौतुकेन विवाहसूत्रेण मंगलं यस्यास्ताम् ।

द्विजं प्रत्याचष्ट । अतः सोऽपि द्विजो नूनं नायाति ॥२४॥ किं दुर्भगाया मे ब्रह्मा महेश्वरो वा नानुकूलः । सती गौरी वा नानुकूला किम् ॥२५॥ एवं चिंतयती कालज्ञा सा रुक्मिणी चिंतास्तब्धे नेत्रे निमीलितवती ॥२६॥ एवं कृष्णागमनं चिंतयंत्यास्तस्याः प्रियसूचकानि वामोरु-भुज-नेत्रस्फुरणानि जातानि ॥२७॥ अथ पुरोपवनं प्राप्तेन श्रीकृष्णेन, प्राप्तं मां रुक्मिण्यै कथयेत्याज्ञप्तः स द्विजोंऽतःपुरचरीं तां राजपुत्रीं ददर्श ॥२८॥ सा च प्रहृष्टवदनं तं दृष्ट्वा कार्यं कृत्वा त्वमागतः किमिति तं पप्रच्छ ॥२९॥ ततो द्विजः कृष्णमागतं रुक्मिण्या आवेदयत् । श्रीकृष्णेनोक्तं तामहमानयिष्य इत्यादि सत्यवचनं च तस्यै कथयामास ॥३०॥ तदा हर्षितचित्ता सा ब्राह्मणाय दातुं योग्यं किमप्यपश्यंती

दुर्भगाया न मे धाता नानुकूलो महेश्वरः ॥ देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ॥२५॥ एवं चिंतयती बाला गोविंदहृतमानसा ॥ न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले ॥२६॥ एवं वध्वाः प्रतीक्षंत्या गोविंदागमनं नृप ॥ वाम ऊरुर्भुजो नेत्रमस्फुरन्प्रियभाषिणः ॥२७॥ अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ॥ अंतःपुरचरीं देवीं राजपुत्रीं ददर्श ह ॥२८॥ सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती ॥ आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ॥२९॥ तस्या आवेदयत्प्राप्तं शशंस यदुनंदनम् ॥ उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥३०॥ तमागतं समाज्ञाय वैदर्भी हृष्टमानसा ॥ न पश्यंती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥३१॥ प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ॥ अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः॥३२॥ मधुपर्कमुपानीय वासांसि विरजांसि सः॥ उपायनान्यभीष्टानि विधिवत्समपूजयत् ॥३३॥ तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ॥ ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ॥३४॥ एवं राज्ञां समेतानां यथावीर्यं यथावयः ॥ यथाबलं यथावित्तं सर्वैः कामैः समर्हयत् ॥३५॥ कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ॥ आगत्य नेत्रांजलिभिः पपुस्तन्मुखपंकजम् ॥३६॥ अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा ॥ असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥३७॥ किंचित्सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ॥ अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥३८॥ एवं प्रेमकलाबद्धा वदंति स्म पुरौकसः ॥ कन्या चांतःपुरात्प्रागाद्भटैर्गुप्तांबिकाऽऽलयम् ॥३९॥ ॥ ॥

सती तदा केवलं ननाम । पश्चाद्बहु ददौ ॥३१॥ ततो भीष्मको रामकृष्णौ स्वकन्याया विवाहप्रेक्षणोत्सुकौ प्राप्तौ श्रुत्वा वाद्यघोषेण सह संमुखं गत्वा ॥३२॥ मधुपर्क-वस्त्रोपायनादिभिस्तौ विधिवत्पूजयामास ॥३३॥ तयोः ससैन्ययोः सानुगयोश्च निवेशस्थानमुपकल्प्य यथावदातिथ्यं चक्रे ॥३४॥ एवं सर्वेषां प्राप्तानां राज्ञां यथावीर्यं यथाबलं यथावित्तं चातिथ्यमकरोत् ॥३५॥ विदर्भपुरवासिनो जनाः प्राप्तं कृष्णं श्रुत्वा तत्संमुखं गत्वा तन्मुखं वीक्ष्य ॥३६॥ अस्यैव स्त्री रुक्मिणी भवितुं योग्या । रुक्मिण्याश्चायमेव पतिर्योग्योऽस्ति ॥३७॥ अतोऽस्माकं जन्मांतरे आचरितं यत्सुकृतं तेन श्रीकृष्णस्तुष्टो भूत्वा रुक्मिण्याः पाणिं गृह्णातु ॥३८॥ एवं प्रेमबद्धाः पुरवासिनो जनाः परस्परमूचुः । रुक्मिणी

१ नाधुनापि गोविंदागमनकाल इति मन्वाना सेत्यर्थः ।

चांतःपुराच्छूरैं रक्षिता सती भवान्याश्चरणकमलं द्रष्टुं विनिर्गता ॥३९॥ सा कृष्णस्य चरणकमलं ध्यायंती सती पद्भ्यामेवाविकालयं ययौ ॥४०॥ सा पथि मौनयुक्ता सखीभिर्वेष्टिता धृतायुधैः शूरै राजभटैश्च रक्षिता सती जगाम । तदा मृदंग-शंख-भेर्यादिवाद्यानि जघ्निरे ॥४१॥ तदा नानोपहारवलिभिः सहस्रशो वारांगनाः स्रग्गंध-वस्त्राभरणैरलंकृता द्विजपत्न्यः ॥४२॥ गायंतो गायकाः स्तुवंतः सूतमागधवंदिनश्च वधूं परिवार्य जग्मुः ॥४३॥ कन्या च देवीसदनं प्राप्य हस्तौ पादौ च प्रक्षाल्याचम्यांबिकासमीपं जगाम ॥४४॥ ततो विधिज्ञा विप्रस्त्रियस्तां वधूं शंकरस्यार्धांगे स्थितामंबिकां वंदयांचक्रुः ॥४५॥ तदा कन्याऽऽह । हे अंबिके, गणेशादियुतां त्वामहं पुनःपुनर्नमस्ये । यथा कृष्णो मे पतिर्भूया-

पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् ॥ सा चानुध्यायती सम्यङ्मुकुंदचरणांबुजम् ॥४०॥ यतवाङ्मातृभिः सार्धं सखीभिः परिवारिता ॥ गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः ॥ मृदंगशंखपणवास्तूर्यभेर्यश्च जघ्निरे ॥४१॥ नानोपहारवलिभिर्वारमुख्याः सहस्रशः ॥ स्रग्गंधवस्त्राभरणैर्द्विजपत्न्यः स्वलंकृताः ॥४२॥ गायंतश्च स्तुवंतश्च गायका वाद्यवादकाः ॥ परिवार्य वधूं जग्मुः सूतमागधवंदिनः ॥४३॥ आसाद्य देवीसदनं धौतपादकरांबुजा ॥ उपस्पृश्य शुचिः शांता प्रविवेशांबिकांतिकम् ॥४४॥ तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ॥ भवानीं वंदयांचक्रुर्भवपत्नीं भवान्विताम् ॥४५॥ नमस्ये त्वांऽबिकेऽभीक्ष्णं स्वसंतानयुतां शिवाम् ॥ भूयात्पतिर्मे भगवान्कृष्णस्तदनुमोदताम् ॥४६॥ अद्भिर्गंधाक्षतैर्धूपैर्वासःस्रङ्माल्यभूषणैः ॥ नानोपहारवलिभिः प्रदीपावलिभिः पृथक् ॥४७॥ विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् ॥ लवणापूपतांबूलकंठसूत्रफलेक्षुभिः ॥४८॥ तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः ॥ ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥४९॥ मुनिव्रतमथ त्यक्त्वा निश्चक्रामांबिकागृहात् ॥ प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥५०॥ तां देवमायामिव वीरमोहिनीं सुमध्यमां कुंडलमंडिताननाम् ॥ श्यामां नितंबार्पितरत्नमेखलां व्यंजत्स्तनीं कुंतलशंकितेक्षणाम् ॥५१॥ शुचिस्मितां बिंबफलाधरद्युतिशोणायमानद्विजकुंदकुड्मलाम् ॥ पदा चलंतीं कलहंसगामिनीं सिंजत्कलानूपुरधामशोभिना ॥५२॥ विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥ यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीडावलोकहृतचेतस उज्झितास्त्राः ॥५३॥ ॥ ॥ ॥

त्तथा त्वमनुमोदस्व ॥४६॥ ततः सा कन्या गंधाक्षत-पुष्प-धूप-दीपैर्नानोपहारवलिभिश्चांबिकां पूजयामास ॥४७॥ तथा विप्रस्त्रियःप्रति अर्पितैर्गंधाक्षतादिभिर्लवणापूप-तांबूल-कंठसूत्र-फलेक्षुभिश्च समपूजयत् ॥४८॥ ततस्ताः स्त्रियस्तस्या आशिषो ददुः । रुक्मिणी ताभ्यो देव्यै च नमस्कृत्य निर्माल्यं प्रसादरूपेण गृहीत्वा ॥४९॥ मौनं त्यक्त्वा स्वपाणिना सखीकरं धृत्वांबिकाऽऽलयान्निश्चक्राम ॥५०॥ तदा वीरमोहिनीं सुमध्यमां कुंडलमंडिताननाम् ॥५१॥ शुचिस्मितां पदा चलंतीं हंसगामिनीं नूपुरैः क्वणयंतीम् ॥५२॥ एतादृशीं तां रुक्मिणीं विलोक्य कामपीडिता वीरा मुमुहुः ॥५३॥ ॥ ॥ ॥ ॥ ॥

न केवलं मुमुहुः किंतु श्रीकृष्णाय स्वशोभामर्पयंतीं यां वीक्ष्य गजरथाश्वेष्वारूढा अपि ते नृपतयो मूर्छिता भूत्वा भूमौ पेतुः ॥५४॥ सा रुक्मिणी शनैश्चरणौ चालयंती वामकरेण केशानुत्सार्य पश्यंती सती नृपान् ह्रिया वीक्ष्य श्रीकृष्णं ददर्श ॥५५॥ तदा श्रीकृष्णः शत्रूणां पश्यतां सतां समीपे आगतां तां पाणिना प्रगृह्य गरुडध्वजं स्वरथमारोप्य राज्ञां सैन्यं परिभूय रामादिभिः सह ययौ ॥५६॥ ततोऽभिमानिनस्ते जरासंधादयो राजानः स्वपराभवं न सेहिरे। अहो अस्मान् धिक्। यतो धनुर्धारिणामस्माकं यशो गोपैर्हृतम्। सिंहानां यशो मृगैरिव ॥५७॥ इति श्रीम० चू० दश० उत्त० त्रिपंचाशत्तमोऽध्यायः ॥५३॥ चतुःपंचाशत्तमे तु जित्वा राज्ञोऽरिपक्षगान्। रुक्मिणं च विरूप्याथ भैष्म्याः पाणिं पुरेऽग्रहीत् ॥१॥ श्रीशुक उवाच॥ हे राजन्, एवं सर्वे राजानः क्रुद्धाः संतो वाहान्यारुह्य धनूंषि गृहीत्वा स्वसैन्यैः सह श्रीकृष्णमनुययुः ॥१॥ ततो यादवास्तान् दृष्ट्वा स्वधनूंषि

पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राछलेन हरयेऽर्पयतीं स्वशोभाम् ॥ सैवं शनैश्चलयती चलपद्मकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ॥५४॥ उत्सार्य वामकरजैरलकानपांगैः प्राप्तान् ह्रियैक्षत नृपान्ददृशेऽच्युतं सा ॥ तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम् ॥५५॥ रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय माधवः ॥ ततो ययौ रामपुरोगमैः शनैः सृगालमध्यादिव भागहृद्धरिः ॥५६॥ तं मानिनः स्वाभिभवं यशःक्षयं परे जरासंधवशा न सेहिरे ॥ अहो धिगस्मान्यश आत्तधन्वनां गोपैर्हृतं केसरिणां मृगैरिव ॥५७॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे रुक्मिणीहरणं नाम त्रिपंचाशत्तमोऽध्यायः ॥५३॥ श्रीशुक उवाच ॥ इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः ॥ स्वैः स्वैर्बलैः परिक्रांता अन्वीयुर्धृतकार्मुकाः ॥१॥ तानापततत आलोक्य यादवानीकयूथपाः ॥ तस्थुस्तत्संमुखा राजन्विस्फूर्ज्य स्वधनूंषि ते ॥२॥ अश्वपृष्ठे गजस्कंधे रथोपस्थे च कोविदाः ॥ मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥३॥ पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा ॥ सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ॥४॥ प्रहस्य भगवानाह मा स्म भैर्वामलोचने ॥ विनंक्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम् ॥५॥ तेषां तद्विक्रमं वीरा गदसंकर्षणादयः ॥ अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान्रथान् ॥६॥ पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि ॥ सकुंडलकिरीटानि सोष्णीषाणि च कोटिशः ॥७॥ हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः ॥ अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥८॥

टंकारयित्वा संमुखास्तस्थुः ॥२॥ केचिदश्वपृष्ठे केचिद्गजस्कंधे केचिद्रथोपस्थे च स्थिताः संतो यादवेषु शरवर्षाणि मुमुचुः ॥३॥ तदा रुक्मिणी पत्युः सैन्यं बाणैराच्छादितं दृष्ट्वा भयविह्वला सती कृष्णमुखमैक्षत ॥४॥ तदा भगवान् प्रहस्य तामाह। हे सुंदरनेत्रे, त्वं भयं मा कुरु। अधुना तावका यादवाः शत्रुसैन्यं नाशयंति ॥५॥ तदा गदसंकर्षणादयो यादवाः शत्रुपराक्रममसहमानाः संतो बाणैरश्वगजरथान् जघ्नुः ॥६॥ तदा शत्रूणां कोटिशः सकुंडलकिरीटानि शिरांसि पेतुः ॥७॥ तदा खड्ग-गदा-धनुः-सहिता हस्ता उरवोऽङ्घ्रयोऽश्व-गजोष्ट्र-खर-मर्त्यानां मस्तकानि च निपेतुः ॥८॥ ॥ ॥ ॥ ॥ ॥ ॥

एवं यादवैर्हन्यमानबला जरासंधादयो राजानो विमुखाः संतः ॥९॥ हृतदारमातुरं नष्टकांतिं शुष्कवदनं शिशुपालमेत्याब्रुवन् ॥१० हे पुरुषश्रेष्ठ, त्वमिदं खिन्नचित्तत्वं त्यज। देहिषु प्रियाप्रिययोः स्थैर्यं न दृश्यते ॥११॥ यथा काष्ठमयी नारी नर्तयितुरिच्छया नृत्यते। एवमीश्वरतंत्रोऽयं जनः सुखप्राप्तिदुःखनिवृत्त्योर्यत्नं करोति ॥१२॥ अहं सप्तदश-वारान् त्रयोविंशत्यक्षौहिणीसैन्यैः सह कृष्णेन पराजितोऽप्यष्टादशमेकं युद्धं जितवान् ॥१३॥ तथापि दैवयुक्तेन कालेन सर्वं जगदुपद्रुतमस्तीति ज्ञात्वा पराजये प्राप्तेऽपि न शोचामि जये प्राप्तेऽपि न हृष्यामि ॥१४॥ अधुना यदुभिर्वीरयूथपा वयं पराजिताः ॥१५॥ यदा कालोऽनुकूलः स्यात्तदा तान् वयं जेष्यामः ॥१६॥ एवं बोधितः स शिशुपालो

हन्यमानबलानीका वृष्णिभिर्जयकांक्षिभिः ॥ राजानो विमुखा जग्मुर्जरासंधपुरःसराः ॥९॥ शिशुपालं समभ्येत्य हृतदारमिवातुरम् ॥ नष्ट-त्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥१०॥ भो भोः पुरुषशार्दूल दौर्मनस्यमिदं त्यज ॥ न प्रियाप्रिययो राजन्निष्ठा देहिषु दृश्यते ॥११॥ यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ॥ एवमीश्वरतंत्रोऽयमीहते सुखदुःखयोः ॥१२॥ शौरेः सप्तदशाहं वै संयुगानि पराजितः ॥ त्रयोविंश-तिभिः सैन्यैर्जिग्य एकमहं परम् ॥१३॥ तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् ॥ कालेन दैवयुक्तेन जानन्विद्रावितं जगत् ॥१४॥ अधुनापि वयं सर्वे वीरयूथपयूथपाः ॥ पराजिताः फल्गुतंत्रैर्यदुभिः कृष्णपालितैः ॥१५॥ रिपवो जिग्युरधुना काल आत्मानुसारिणि ॥ तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः ॥१६॥ एवं प्रबोधितो मित्रैश्चैद्योऽगात्सानुगः पुरम् ॥ हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः॥१७॥ रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन्स्वसुः ॥ पृष्ठतोऽन्वगमत्कृष्णमक्षौहिण्या वृतो बली ॥१८॥ रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् ॥ प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥१९॥ अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् ॥ कुंडिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि वः ॥२०॥ इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः ॥ चोदयाश्वान्यतः कृष्णस्तस्य मे संयुगं भवेत् ॥२१॥ अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः ॥ नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥२२॥ विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् ॥ रथेनैकेन गोविंदं तिष्ठ तिष्ठेत्यथाह्वयत् ॥२३॥

हतशेषैर्भृत्यादिभिः सह स्वपुरं जगाम। ततो हतशेषास्ते जरासंधादयो राजानोऽपि स्वं स्वं पुरं जग्मुः ॥१७॥ तदा भगिन्या राक्षसोद्वाहमसहमानः कृष्णद्वेष्टा रुक्मी तु अक्षौ-हिण्या सेनया वेष्टितः सन् कृष्णं पृष्ठतोऽन्वगमत् ॥१८॥ तदा सर्वभूभुजां शृण्वतां सतां सशरासनः क्रोधयुक्तो रुक्मी प्रतिज्ञां चकार ॥१९॥ तामाह। युद्धे श्रीकृष्णमहत्वा रुक्मिणीमगृहीत्वा कुंडिनं नगरं न प्रवेक्ष्यामि । एतद्वः सत्यं ब्रवीमि ॥ २० ॥ इत्युक्त्वा रथमारुह्य सारथिमाह । हे सारथे, यत्र कृष्णस्तत्र मे रथं शीघ्रं नय । तस्य मम च युद्धं भवेत् ॥२१॥ येन मे भगिनी बलाद्धृता तस्य गोपालस्य वीर्यमदं अद्यांहं तीक्ष्णैर्बाणैर्नाशयामि ॥२२॥ एवं विकत्थमानः स रुक्मी एकेन रथेन कृष्णं तिष्ठ तिष्ठेत्याहूय॥२३॥

स दृढं धनुराकृष्य त्रिभिर्बाणैस्तं जघ्ने । आह च । हे यदूनां कुलदूषण, त्वमत्र क्षणं तिष्ठ ॥२४॥ काको होमद्रव्यमिव त्वं मे भगिनीं हृत्वा क्व यासि । कपटयुद्धं कुर्वतस्ते मदमद्याहं हरिष्ये ॥२५॥ हे मंद, यावन्मम बाणैस्त्वं न हतोऽसि तावद्रुक्मिणीं मुंच । तदा कृष्णो विस्मितः सन् तस्य धनुश्छित्वा षड्भिर्बाणैस्तं रुक्मिणं विव्याध ॥२६॥ अष्टभिर्बाणैश्चतुरोऽश्वान् द्वाभ्यां सारथिं त्रिभिर्ध्वजं च विव्याध । स च रुक्म्यन्यद्धनुरादाय पंचभिर्बाणैः कृष्णं विव्याध ॥२७॥ तदपि धनुः कृष्णश्चिच्छेद । पुनः सोऽन्यद्धनुरादत्त तदपि कृष्णश्चिच्छेद ॥२८॥ तदा स कृष्णं प्रहर्तुं परिघ-शूल-खड्ग-शक्ति-तोमरादि यद्यदायुधं जग्राह तत्तत्कृष्णश्चिच्छेद ॥२९॥ ततो रुक्मी रथादुत्तीर्य जिघांसया खड्गं गृहीत्वा कृष्ण-

धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ॥ आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन ॥२४॥ कुत्र यासि स्वसारं मे मुषित्वा ध्वांक्षवद्धविः ॥ हरिष्येऽद्य मदं मंद मायिनः कूटयोधिनः ॥२५॥ यावन्न मे हतो बाणैः शयीथा मुंच दारिकाम् ॥ स्मयन्कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम् ॥२६॥ अष्टभिश्चतुरो वाहान्द्वाभ्यां सूतं ध्वजं त्रिभिः ॥ स चान्यद्धनुरादाय कृष्णं विव्याध पंचभिः ॥२७॥ तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः ॥ पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥२८॥ परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ ॥ यद्यदायुधमादत्त तत्सर्वं सोऽच्छिनद्धरिः ॥२९॥ ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया ॥ कृष्णमभ्यद्रवत्क्रुद्धः पतंग इव पावकम् ॥३०॥ तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः ॥ छित्त्वाऽसिमाददे तिग्मं रुक्मिणं हंतुमुद्यतः ॥३१॥ दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला ॥ पतित्वा पादयोर्भर्तुरुवाच करुणं सती ॥३२॥ योगेश्वराप्रमेयात्मन् देवदेव जगत्पते ॥ हंतुं नार्हसि कल्याण भ्रातरं मे महाभुज ॥३३॥ श्रीशुक उवाच ॥ तया परित्रासविकंपितांगया शुचावशुष्यन्मुखरुद्धकंठया ॥ कातर्यविस्रंसितहेममालया गृहीतपादः करुणो न्यवर्तत ॥३४॥ चैलेन बद्ध्वा तमसाधुकारिणं सश्मश्रुकेशं प्रवपन्व्यरूपयत् ॥ तावन्ममर्दुः परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजाः ॥३५॥ कृष्णांतिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् ॥ तथाभूतं हतप्रायं दृष्ट्वा संकर्षणो विभुः ॥ विमुच्य बद्धं करुणो भगवान्कृष्णमब्रवीत् ॥३६॥ ॥ ॥

मभ्यद्रवत् ॥३०॥ तदाऽऽपततस्तस्य खड्गं चर्म च बाणैस्तिलशश्छित्वा कृष्णो रुक्मिणं हंतुं खड्गं जग्राह ॥३१॥ तदा रुक्मिणी भ्रातृवधोद्योगं दृष्ट्वा भयविह्वला सती भर्तुः पादयोः पतित्वा सकरुणं जगाद ॥३२॥ हे योगेश्वर, हे जगत्पते, हे देवदेव, त्वं मे भ्रातरं हंतुं नार्हसि ॥३३॥ श्रीशुक उवाच । एवं भयेन कंपितशरीरया रुक्मिण्या गृहीतचरणो हरी रुक्मिवधान्निवृत्तो बभूव ॥३४॥ ततस्तं वस्त्रेण बद्ध्वा सश्मश्रुकेशं[1] मुंडयन् विरूपं चकार । तावद्यदुप्रवीरास्तस्य शत्रोः सैन्यं मर्दयित्वा ॥३५॥ श्रीकृष्णस्य समीपं प्राप्ताः । तत्र रामो विरूपं हतप्रायं रुक्मिणं दृष्ट्वा बद्धं तं विमुच्य कृष्णं जगाद ॥३६॥ ॥ ॥ ॥ ॥

१ सहितानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवंति तथा ।

हे कृष्ण, त्वया रुक्मिणो यत् श्मश्रुकेशानां मुंडनं कृतं तत्साधु न कृतम् । यतो वैरूप्यकरणं सुहृदो वध उच्यते ॥३७॥ ततो रुक्मिणीं सांत्वयति । हे साध्वि, भ्रातुर्वैरूपकरणचिंतया त्वमस्मान् मा सूयेथाः । यतः पुंसः सुखदुःखदाताऽन्यो नास्ति । स एव स्वकृतकर्मणः फलं भुंक्ते ॥३८॥ पुनः श्रीकृष्णमाह । हे कृष्ण, वधयोग्योऽपि बंधुर्बंधोः सकाशाद्वधं नार्हति । यतः स्वकृतदोषेणैव यो हतः स किं पुनर्हन्यते ॥३९॥ पुनर्देवीमाह । हे रुक्मिणि, क्षत्रियाणामयं धर्मो घोरोऽस्ति । येन धर्मेण युद्धे भ्राताऽपि भ्रातरं हन्यात् ॥४०॥ पुनः कृष्णमाह । हे कृष्ण, श्रीमदांधा अभिमानिनः पुमांसो राज्यस्य भूमेर्वित्तस्य स्त्रियो वाऽन्यस्य वा हेतोः संबंधिनं नाशयंति तथाप्यस्माकमेतदनुचितम् ॥४१॥ पुनर्देवीमाह । हे रुक्मिणि, सर्वभूतानामहितकराणां स्वबंधूनां यत्त्वमज्ञवत्कल्याणमिच्छसि सेयं तव बुद्धिरसमीचीनाऽस्ति ॥४२॥ यतो देहात्ममानिनां पुंसां मित्रशत्रू-

असाध्विदं त्वया कृष्ण कृतमस्मज्जुगुप्सितम् ॥ वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ॥३७॥ मैवास्मान्साध्व्यसूयेथा भ्रातुर्वैरूप्यचिंतया ॥ सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक्पुमान् ॥३८॥ बंधुर्वधार्हदोषोऽपि न बंधोर्वधमर्हति ॥ त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ॥३९॥ क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः ॥ भ्राताऽपि भ्रातरं हन्याद्येन घोरतरस्ततः ॥४०॥ राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः ॥ मानिनोऽन्यस्य वा हेतोः श्रीमदांधाः क्षिपंति हि ॥४१॥ तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् ॥ यन्मन्यसे सदाऽभद्रं सुहृदां भद्रमज्ञवत् ॥४२॥ आत्ममोहो नृणामेष कल्प्यते देवमायया ॥ सुहृद्दुर्हृदुदासीन इति देहात्ममानिनाम् ॥४३॥ एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ॥ नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥४४॥ देह आद्यंतवानेष द्रव्यप्राणगुणात्मकः ॥ आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम् ॥४५॥ नात्मनोऽन्येन संयोगो वियोगश्चासतः सति ॥ तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ॥४६॥ जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् ॥ कलानामिव नैवेंदोर्मृतिर्ह्यस्य कुहूरिव ॥४७॥ यथा शयान आत्मानं विषयान्फलमेव च ॥ अनुभुंक्तेऽप्यसत्यर्थे तथाऽऽप्नोत्यबुधो भवम् ॥४८॥

दासीनरूपोयो बुद्धिभेदः स भगवन्मायया केवलं कल्पितोऽस्ति ॥४३॥ देहिनामात्मा तु देहादिव्यतिरिक्त एक एवास्ति तथापि मायामूढैस्तैर्देहिभिः शत्रुमित्रादिरूपेण नानेव गृह्यते ॥४४॥ तस्मिन्नात्मन्यविद्याकल्पित एवायं स्थूलसूक्ष्मकारणरूपो देहः संसाररहितमपि तमात्मानं संसारयति ॥४५॥ हे सति, स्थूलादिरूपेण देहेन सहात्मनः संयोगो वियोगश्च नास्ति । आत्मनोऽन्यस्य मिथ्यात्वात् । कुतो मिथ्यात्वं तत्राह । देहेंद्रियादीनां प्रकाशस्यात्मनः सकाशाज्जातत्वात् । यथा प्रकाश्यप्रकाशकत्वेन वर्तमानयोरपि चक्षूरूपयोस्तद्भिन्नाद्रवेः सकाशात्प्रकाशस्तद्वत् ॥४६॥ आत्मनो देहसंबंधाभावाज्जन्मादिविकारा देहस्यैव नात्मनः । यथा चंद्रस्य कलानामेव जन्मादयो न चंद्रस्य तद्वत् । यथा च कलानाशादेव कुहूनाम्न्यमावास्या इंदुक्षय उच्यते । तद्वदस्यात्मनो देहनाशादेव मृतिव्यवहारः ॥४७॥ यथा शयानः पुरुषः स्वप्ने भोक्तारमात्मानं भोग्यान् विषयान् भोगरूपं फलं च

१ देहोपाधिना शुद्ध आत्मा न प्रतीयत इत्यर्थः ।

मिथ्याभूतमेव कल्पयित्वा भुंक्ते तथाऽज्ञः संसारं प्राप्नोति ॥४८॥ तस्मात् हे रुक्मिणि, त्वमज्ञानजं शोकं तत्त्वज्ञानेन दूरीकृत्य स्वस्था भव ॥४९॥ श्रीशुक उवाच ॥ एवं रामेण बोधिता रुक्मिणी खेदं त्यक्त्वा मनः समाहितं चकार ॥५०॥ ततः शत्रुभिः प्राणावशेषस्त्यक्तो रुक्मी स्वविरूपकरणं स्मरन् ॥५१॥ ( निवासाय भोजकटं नाम नगरं निर्मितवान् ) स्वप्रतिज्ञापालनाय तत्रैवावसत् ॥५२॥ एवं भगवान्नृपान्निर्जित्य रुक्मिणीं द्वारकामानीय विधिवदुपयेमे ॥५३॥ तदा यदुपुर्यां गृहे गृहे महोत्सव आसीत् ॥५४॥ तदा नरा नार्यश्च प्रमृष्टमणिकुंडला हर्षिताः सत्यो वरवध्वोः पारिबर्हं समर्पयामासुः ॥५५॥ तदा सा द्वारका ध्वजपताकारत्नतोरणैः प्रतिद्वारं स्थापितैः पूर्णकुंभादिभिश्च शोभां प्राप ॥५६॥ आहू-

तस्मादज्ञानजं शोकमात्मशोषविमोहनम् ॥ तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥४९॥ श्रीशुक उवाच ॥ एवं भगवता तन्वी रामेण प्रतिबोधिता ॥ वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥५०॥ प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ॥ स्मरन् विरूपकरणं वितथाऽऽत्ममनोरथः ॥५१॥ ( चक्रे भोजकटं नाम निवासाय महत्पुरम् ॥ ) अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ॥ कुंडिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद्रुषा ॥५२॥ भगवान्भीष्मकसुतामेवं निर्जित्य भूमिपान् ॥ पुरमानीय विधिवदुपयेमे कुरूद्वह ॥५३॥ तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे ॥ अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥५४॥ नरा नार्यश्च मुदिताः प्रमृष्टमणिकुंडलाः ॥ पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥५५॥ सा वृष्णिपुर्युत्तभितेंद्रकेतुभिर्विचित्रमाल्यांबररत्नतोरणैः ॥ बभौ प्रतिद्वार्युपक्लृप्तमंगलैरापूर्णकुंभागुरुधूपदीपकैः ॥५६॥ सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ॥ गजैर्द्वास्सु परामृष्टरंभापूगोपशोभिता ॥५७॥ कुरुसृंजयकैकेयविदर्भयदुकुंतयः ॥ मिथो मुमुदिरे तस्मिन्संभ्रमात्परिधावताम् ॥५८॥ रुक्मिण्या हरणं श्रुत्वा गीयमानं ततस्ततः ॥ राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥५९॥ द्वारकायामभूद्राजन्महामोदः पुरौकसाम् ॥ रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियः पतिम् ॥६०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे रुक्मिण्युद्वाहे चतुःपंचाशत्तमोऽध्यायः ॥५४॥ श्रीशुक उवाच ॥ कामस्तु वासुदेवांशो दग्धः प्राग्रुद्रमन्युना ॥ देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥१॥

तानां प्रियाणां नृपाणां मदस्राविभिर्गजैर्द्वारि द्वारि उच्छ्रितै रंभाभिः पूगवृक्षैश्चोपशोभिता बभूव ॥५७॥ तदा कुरु-सृंजय-कैकेय-विदर्भादयो राजानो मिथः समेत्य मुदं प्रापुः ॥५८॥ इतस्ततो गीयमानं रुक्मिण्या हरणं श्रुत्वा राजानो राजकन्याश्च विस्मिता बभूवुः ॥५९॥ हे राजन्, रुक्मिण्या युक्तं लक्ष्मीपतिं कृष्णं दृष्ट्वा पौराणां महानंदोऽभूत् ॥६०॥ इति श्रीमद्भा० चू० द० उ० चतुःपंचाशत्तमः ॥५४॥ पंचपंचाशत्तमे तु प्रद्युम्नोऽजनि कृष्णतः । शंबरेण हृतः सोऽथ हत्वा तं कांतयाऽऽगमत् ॥१॥ श्रीशुक उवाच ॥ वासुदेवांशः कामः प्राक् रुद्रमन्युना दग्धोऽपि भूयो देहप्राप्तये वासुदेवरूपे कृष्णे प्रविश्य स्थितः ॥१॥ ॥ ॥ ॥

१ वासुदेवाधिष्ठितचित्तप्रभवत्वात्सृष्टिहेतुत्वाच्च वासुदेवांशः ।

स एव कृष्णवीर्यसमुद्भवो रुक्मिण्यां भूत्वा प्रद्युम्न इति नाम्ना विख्यातो जातः ॥२॥ तदा शंबरासुरो नारदमुखात्तं जातं श्रुत्वा तं च स्वशत्रुं ज्ञात्वा दशदिनमध्य एव तं गुप्तरूपेण हत्वा समुद्रे प्रक्षिप्य स्वगृहं ययौ ॥३॥ तं वालकमेको वलवान् मत्स्यो गिलितवान् । तं मत्स्यं मत्स्यजीविनः कैवर्ता इतरैर्मत्स्यैः सह जालेन गृहीत्वा ॥४॥ तं महामत्स्यं शंवरायोपायनं ददुः । तदा शंवरस्तं पाककर्तृभ्यो ददौ । ते महानसे तं महामत्स्यं नीत्वा शस्त्रिकया खंडितवंतः ॥५॥ तदुदरे वालं दृष्ट्वा तं पाककर्मकारिण्यै मायावत्यै न्यवेदयन् । तदा नारदो मायावतीसमीपमागत्य तस्यै वालस्य तत्त्वं[1] उत्पत्तिं मत्स्योदरे प्रवेशं[3] च कथयामास ॥६॥ सा च मायावती कामपत्नी रतिनाम्नी दग्धस्य स्वपत्युर्देहोत्पत्तिं

स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः ॥ प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥२॥ तं शंवरः कामरूपी हृत्वा तोकमनिर्दशम् ॥ स विदित्वाऽऽत्मनः शत्रुं प्रास्योदन्वत्यगाद्गृहम् ॥३॥ तं निर्जगार वलवान्मीनः सोऽप्यपरैः सह ॥ वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥४॥ तं शंवराय कैवर्ता उपाजह्रुरुपायनम् ॥ सूदा महानसं नीत्वाऽवद्यन्स्वधितिनाऽद्भुतम् ॥५॥ दृष्ट्वा तदुदरे वालं मायावत्यै न्यवेदयन् ॥ नारदोऽकथयत्सर्वं तस्याः शंकितचेतसः ॥ वालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम् ॥६॥ सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी ॥ पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥७॥ निरूपिता शंवेरण सा सूपौदनसाधने ॥ कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदाऽर्भके ॥८॥ नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः ॥ जनयामास नारीणां वीक्षंतीनां च विभ्रमम् ॥९॥ सा तं पतिं पद्मदलायतेक्षणं प्रलंववाहुं नरलोकसुंदरम् ॥ सव्रीडहासोत्तभितभ्रुवेक्षती प्रीत्योपतस्थे रतिरंग सौरतैः ॥१०॥ तामाह भगवान्कार्ष्णिर्मातस्ते मतिरन्यथा ॥ मातृभावमतिक्रम्य वर्तसे कामिनी यथा ॥११॥ रतिरुवाच ॥ भवान्नारायणसुतः शंबरेणाहृतो गृहात् ॥ अहं तेऽधिकृता पत्नी रतिः कामो भवान्प्रभो ॥१२॥ एप त्वाऽनिर्दशं सिंधावाक्षिपच्छंवरोऽसुरः ॥ मत्स्योऽग्रसीत्तदुदरादिह प्राप्तो भवान्प्रभो ॥१३॥ तमिमं जहि दुर्धर्पं दुर्जयं शत्रुमात्मनः ॥ मायाशतविदं त्वं च मायाभिर्मोहनादिभिः ॥१४॥ ॥ ॥ ॥ ॥

प्रतीक्षती ॥७॥ शंवरेण पाककरणे निरूपिता सती शिशुं कामदेवं वुद्ध्वा तस्मिन् स्नेहं चक्रे ॥८॥ स शिशुः स्वल्पकालेन प्राप्तयौवनः सन् नारीणां मोहं जनयामास ॥९॥ ततो रतिस्तं नरलोकसुंदरं स्वपतिं सलज्जहास्यावलोकनेन पश्यंती सती सुरतसंवंधिभिरभिप्रायैः सेवितवती ॥१०॥ तदा प्रद्युम्नस्तामाह । हे मातः, त्वं मातृभावं त्यक्त्वा कामिनीव कथं वर्तसे ॥११॥ रतिरुवाच॥ त्वं श्रीकृष्णस्य सुतः शंवरासुरेणात्रानीतोऽसि। अहं तेऽधिकारप्राप्ता पत्नी रतिरस्मि। त्वं च कामोऽसि ॥१२॥ एप शंवरो दशदिनमध्ये त्वां हत्वा समुद्रे प्राक्षिपत् । तत्र तं मत्स्यो जग्रास। तदुदरात्त्वमत्र प्राप्तोऽसि ॥१३॥ अतोंऽतर्धान-गौह्यक-गांधर्व-पैशाचादिवहुमायाविदमिममात्मनः शत्रुं स्वकीयाभिर्मोहनादिभिर्मायाभिर्मोहितं कृत्वा जहि ॥१४॥

१ कामोऽयं तव भर्तेति । २ श्रीकृष्णाद्रुक्मिण्यामुत्पन्न इति । ३ शंबरासुर इमं स्वशत्रुं ज्ञात्वा गुप्तरूपेण सूतीगृहात् हृत्वा समुद्रे प्राक्षिपत् तं च महामत्स्यो गिलितवानिति ।

तव माता रुक्मिणी गतवत्सा गौरिव शोचति ॥१५॥ श्रीशुकोक्तिः । हे राजन्, एवं प्रभाष्य रतिः सर्वमायाविनाशिनीं महामायानामिकां विद्यां प्रद्युम्नाय ददौ ॥१६॥ तदा स प्रद्युम्नः शंबरमभ्येत्य वाग्बाणैः कलहं जनयन् युद्धायाह्वयत् ॥१७॥ तदा शंबरः क्रोधादारक्तनेत्रो भूत्वा गदां गृहीत्वा गृहाद्बहिर्निर्गत्य ॥१८॥ वेगेन गदामाविद्ध्य तां प्रद्युम्नोपरि त्यक्त्वा भयंकरं शब्दं चकार ॥१९॥ प्रद्युम्नोऽपि स्वगदया तां गदां दूरीकृत्य स्वगदया तं ताडयामास ॥२०॥ स च शंबरो मयासुरोपदिष्टामंतर्धानरूपां मायामाश्रित्य नभसि स्थितः सन् अस्त्रमयीं वृष्टिं चकार ॥२१॥ तदा प्रद्युम्नोऽस्त्रवर्षेण बाध्यमानः सन् सर्वमायानाशिनीं स्वकीयां महाविद्यां युयोज ॥२२॥ शंबरश्च गौह्यक-गांधर्व-पैशाचौरग-राक्षसी-

परिशोचति ते माता कुररीव गतप्रजा ॥ पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा ॥१५॥ प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने ॥ मायावती महामायां सर्वमायाविनाशिनीम् ॥१६॥ स च शंबरमभ्येत्य संयुगाय समाह्वयत् ॥ अविषह्यैस्तमाक्षेपैः क्षिपन्संजनयन्कलिम् ॥१७॥ सोऽधिक्षिप्तो दुर्वचोभिः पदाऽऽहत इवोरगः ॥ निश्चक्राम गदापाणिरमर्षात्ताम्रलोचनः ॥१८॥ गदामाविध्य तरसा प्रद्युम्नाय महात्मने ॥ प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम् ॥१९॥ तामापतंतीं भगवान्प्रद्युम्नो गदया गदाम् ॥ अपास्य शत्रवे क्रुद्धः प्राहिणोत्स्वगदां नृप ॥२०॥ स च मायां समाश्रित्य दैतेयीं मयदर्शिताम् ॥ मुमुचेऽस्त्रमयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥२१॥ बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः ॥ सत्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥२२॥ ततो गौह्यकगांधर्वपैशाचोरगराक्षसीः ॥ प्रायुंक्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्स ताः ॥२३॥ निशातमसिमुद्यम्य सकिरीटं सकुंडलम् ॥ शंबरस्य शिरः कायात्ताम्रश्मश्र्वोजसाऽहरत् ॥२४॥ आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः ॥ भार्ययांऽबरचारिण्या पुरं नीतो विहायसा ॥२५॥ अंतःपुरवरं राजन्ललनाशतसंकुलम् ॥ विवेश पत्न्या गगनाद्विद्युतेव बलाहकः ॥२६॥ तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम् ॥ प्रलंबबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥२७॥ स्वलंकृतमुखांभोजं नीलवक्रालकालिभिः ॥ कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्रतत्र ह ॥२८॥ अवधार्य शनैरीषद्वैलक्षण्येन योषितः ॥ उपजग्मुः प्रमुदिताः सस्त्रीरत्नं सुविस्मिताः ॥२९॥ अथ तत्रासितापांगी वैदर्भी वल्गुभाषिणी ॥ अस्मरत्स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥३०॥ ॥ ॥ ॥

र्मायाः प्रायुंक्त । ताः सर्वाः प्रद्युम्नो नाशयामास ॥२३॥ ततः खड्गं गृहीत्वा त्वरया शंबरस्य सकिरीटकुंडलं शिरो जहार ॥२४॥ तदा देवैः पुष्पैराकीर्यमाणः प्रद्युम्नस्तया स्त्रियाऽऽकाशमार्गेण द्वारकां नीतः ॥२५॥ स प्रद्युम्नः स्त्रीणां शतैर्व्याप्तं श्रीकृष्णस्यांतःपुरं विवेश ॥२६॥ तदा ताः स्त्रियस्तं पीतांबरं प्रलंबबाहुं श्यामवर्णं रुचिराननं दृष्ट्वा ॥२७॥ कृष्णं प्राप्तं मत्वा लज्जिताः सत्यस्तत्रतत्र निलिल्युः ॥२८॥ ततस्ताः स्त्रियः शनैः किंचिद्वैलक्षण्येनायं श्रीकृष्णो न भवतीति निश्चित्य विस्मिताः सत्यस्तत्समीपं ययुः ॥२९॥ तदा रुक्मिणी नष्टं स्वसुतं स्मृत्वा स्नेहस्नुतपयोधरा सती जगाद ॥३०॥ ॥ ॥ ॥ ॥ ॥

अयं कमलनेत्रो नरश्रेष्ठः कः । कस्य वा पुत्रः । कया वा जठरे धृतः । अनेन केयं प्राप्ता ॥३१॥ मम सूतिकागृहाद्यो नष्टः पुत्रः स कुत्रचिज्जीवति चेत्तर्हि वयसा स्वरूपसौंदर्यादि-गुणैश्चैतत्तुल्योऽस्ति ॥३२॥ अनेन आकृत्यवयव-गत्यादिभिः कृष्णस्य सारूप्यं कथं प्राप्तम् ॥३३॥ तस्माद्यो मया गर्भे धृतः स एवायं भवेत्किम् । यतोऽस्मिन् मेऽधिका प्रीतिर्भवति । वामो भुजश्च स्फुरति ॥३४॥ एवं विचार्यमाणायां रुक्मिण्यां सत्यां वसुदेवदेवकीभ्यां सह कृष्णस्तत्रागत्य ॥३५॥ विज्ञातार्थोऽपि तूष्णीमासीत् । तदा नारदस्तत्रागत्य प्रद्युम्नोऽयं शंबरासुरेण सूतिकागृहान्नीत इत्यादि सर्वं कथयामास ॥३६॥ तच्छ्रुत्वा कृष्णस्त्रियो बहुभिः संवत्सरैः पुनः प्राप्तं प्रद्युम्नं दृष्ट्वा मुदं प्रापुः ॥३७॥ ततो देवकी वसुदेवः कृष्णरामौ तथा रुक्मिण्याद्याः स्त्रियश्च तौ दंपती परिष्वज्य हर्षं प्रापुः ॥३८॥ नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकावासिनो जना अहो एष बालको मृत इव पुनरायात एतत्समीचीनं

को न्वयं नरवैदूर्यः कस्य वा कमलेक्षणः ॥ धृतः कया वा जठरे केयं लब्धा त्वनेन वा ॥३१॥ मम चाप्यात्मजो नष्टो नीतो यः सूतिकागृहात् ॥ एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित् ॥३२॥ कथं त्वनेन संप्राप्तं सारूप्यं शार्ङ्गधन्वनः ॥ आकृत्याऽवयवैर्गत्या स्वरहासावलोकनैः ॥३३॥ स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः ॥ अमुष्मिन्प्रीतिरधिका वामः स्फुरति मे भुजः ॥३४॥ एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः ॥ देवक्यानकदुंदुभ्यामुत्तमश्लोक आगमत् ॥३५॥ विज्ञातार्थोऽपि भगवांस्तूष्णीमास जनार्दनः ॥ नारदोऽकथयत्सर्वं शंबराहरणादिकम् ॥३६॥ तच्छ्रुत्वा महदाश्चर्यं कृष्णांतःपुरयोषितः ॥ अभ्यनंदन्बहूनब्दान्नष्टं मृतमिवागतम् ॥३७॥ देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः ॥ दंपती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ॥३८॥ नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः ॥ अहो मृत इवायातो बालो दिष्ट्येति हाब्रुवन् ॥३९॥ यं वै मुहुः पितृसरूपनिजेशभावास्तन्मातरो यदभजन् रहरूढभावाः ॥ चित्रं न तत्खलु रमास्पदबिंबबिंबे कामे स्मरेऽक्षिविषये किमुतान्यनार्यः ॥४०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे प्रद्युम्नोत्पत्तिनिरूपणं नाम पंचपंचाशत्तमोऽध्यायः ॥५५॥ श्रीशुक उवाच ॥ सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः ॥ स्यमंतकेन मणिना स्वयमुद्यम्य दत्तवान् ॥१॥ राजोवाच ॥ सत्राजितः किमकरोद्ब्रह्मन्कृष्णस्य किल्बिषम् ॥ स्यमंतकः कुतस्तस्य कस्माद्दत्ता सुता हरेः ॥२॥ ॥ ॥ ॥

जातमित्यब्रुवन् ॥३९॥ अहो कृष्णसदृशं प्रद्युम्नं दृष्ट्वा तन्मातरोऽपि कृष्णोऽयमिति बुद्ध्या मोहिता अभवन् । तत्तस्मिन् प्रत्यक्षे मूर्तिमति कामे आश्चर्यं नहि । तदा तं दृष्ट्वाऽन्यनार्यो मोहिता भविष्यंतीति किमु वक्तव्यम् ॥४०॥ इति श्रीमद्भा० चू० द० उत्त० पंचपंचाशत्तमोऽध्यायः ॥५५॥ षट्पंचाशत्तमे मिथ्याऽभियोगे मणिमाहरत् । कन्यां जांबवतः प्राप कृष्णः सत्राजितस्ततः ॥१॥ श्रीशुक उवाच ॥ कृतापराधः सत्राजितः स्वकन्यां सत्यभामां स्यमंतकेन मणिना सह श्रीकृष्णाय ददौ ॥१॥ राजोवाच ॥ सत्राजितः कृष्णस्य कमपराधं चकार । तस्य स्यमंतको मणिः कुतः प्राप्तः । हरये कन्या च कस्माद्धेतोर्दत्ता तद्वद ॥२॥ ॥ ॥ ॥

श्रीशुक उवाच ॥ भक्तस्य सत्राजितस्य सूर्यः स्वाम्यपि सखेवासीत् । स च तुष्टः सन् तस्मै स्यमंतकं नाम मणिं ददौ ॥३॥ स सत्राजितः तं मणिं कंठे धृत्वा सूर्य इव प्रकाशमानः सन् द्वारका प्रविष्टः ॥४॥ तं विलोक्य जनाः सूर्योऽयमिति शंकिताः संतोऽक्षैः क्रीडते कृष्णाय कथयामासुः ॥५॥ हे नारायण, हे शंखचक्रगदाधर, हे दामोदर, हे यदुनंदन, ते नमोऽस्तु ॥६॥ हे कृष्ण, एष सूर्यः किरणसमूहेन मनुष्याणां नेत्राणि छादयन् ॥७॥ यादवेषु गुप्तं त्वां द्रष्टुमिच्छुः सन्नायाति ॥८॥ श्रीशुक उवाच ॥ एवमज्ञानां वचनं श्रुत्वा प्रहस्य कृष्ण आह । हे जनाः, नासौ रविः किंतु सत्राजितः मणिना ज्वलन्नायाति ॥९॥ ततः सत्राजितः स्वगृहं प्रविश्य विप्रैः कृत्वा देवालये मणेः स्थापनं कारयामास ॥१०॥

श्रीशुक उवाच ॥ आसीत्सत्राजितः सूर्यो भक्तस्य परमः सखा ॥ प्रीतस्तस्मै मणिं प्रादात्सूर्यस्तुष्टः स्यमंतकम् ॥३॥ स तं बिभ्रन्मणिं कंठे भ्राजमानो यथा रविः ॥ प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥४॥ तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः ॥ दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशंकिताः ॥५॥ नारायण नमस्तेऽस्तु शंखचक्रगदाधर ॥ दामोदरारविंदाक्ष गोविंद यदुनंदन ॥६॥ एष आयाति सविता त्वां दिदृक्षुर्जगत्पते ॥ मुष्णन्गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ॥७॥ नन्वन्विच्छंति ते मार्गं त्रिलोक्यां विबुधर्षभाः॥ ज्ञात्वाद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥८॥ श्रीशुक उवाच ॥ निशम्य बालवचनं प्रहस्यांबुजलोचनः ॥ प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥९॥ सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमंगलम् ॥ प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥१०॥ दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो ॥ दुर्भिक्षमार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः ॥ न संति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥११॥ स याचितो मणिं क्वापि यदुराजाय शौरिणा ॥ नैवार्थकामुकः प्रादाद्याञ्चाभंगमतर्कयन् ॥१२॥ तमेकदा मणिं कंठे प्रतिमुच्य महाप्रभम् ॥ प्रसेनो हयमारुह्य मृगयां व्यचरद्वने ॥१३॥ प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ॥ गिरिं विशन् जांबवता निहतो मणिमिच्छता ॥१४॥ सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ॥ अपश्यन्भ्रातरं भ्राता सत्राजित्पर्यतप्यत ॥१५॥ प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ॥ भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपन् जनाः ॥१६॥

स मणिर्दिने दिनेऽष्टौ स्वर्णभारान्[1] सृजति । यत्र पूजितः स मणिरास्ते तत्र दुर्भिक्षाकालमृत्यु-सर्पाधिव्याधयो न संति ॥११॥ एकदा कृष्ण उग्रसेनार्थं तं मणिं सत्राजितंप्रति ययाचे । तदा द्रव्यलोभी स न प्रादात् ॥१२॥ तत एकदा सत्राजितस्य भ्राता प्रसेनस्तं मणिं कंठे बद्ध्वाऽश्वमारुह्य मृगयार्थं वनं ययौ ॥१३॥ तत्र सिंहः साश्वं तं प्रसेनं हत्वा मणिं गृहीत्वा पर्वते संचचार । तत्र जांबवान् तं सिंहं निहत्य मणिं गृहीत्वा ॥१४॥ स्वगुहायां कुमारस्य क्रीडनकं चक्रे । तदा सत्राजितः भ्रातरं प्रसेनमदृष्ट्वा संतप्तः सन् जगाद ॥१५॥ मणिग्रीवो मम भ्राता वनं गतः सन् प्रायः कृष्णेन हत इति । तच्छ्रुत्वा जनाः कर्णे कर्णेऽब्रुवन् ॥१६॥ ॥ ॥ ॥

१ भारप्रमाणं च-चतुर्भिर्व्रीहिभिर्गुंजं गुंजान् पंच पणं पणान् । अष्टौ धरणमष्टौ च कर्षं तांश्चतुरः पलम् । तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलेति ।

कृष्णोऽपि तच्छ्रुत्वाऽऽत्मनि लिप्तं दुर्यशो दूरीकर्तुं नागरैर्जनैः सह प्रसेनस्यान्वेषणार्थं वनं ययौ ॥१७॥ तत्र साश्वं प्रसेनं सिंहेन हतं वीक्ष्याऽग्रे विचिन्वन् सिंहमपि गिरेः पृष्ठे ऋक्षेण हतं वीक्ष्य तदग्रे महाविलं प्रजा ददृशुः ॥१८॥ ततः श्रीकृष्णः प्रजा वहिः स्थापयित्वा स्वयमेक एव तमसा व्याप्तं तद्बिलं प्रविवेश ॥१९॥ तत्र वालक्रीडनकं कृतं मणिं दृष्ट्वा तं हर्तुं वालसमीपं तस्थौ ॥२०॥ तदा तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश । तच्छ्रुत्वा जांववान् क्रुद्धः सन्नभ्यद्रवत् ॥२१॥ स तं प्राकृतं पुरुषं मत्वा कुपितः सन् रामावतारे स्वस्य स्वामिना तेन कृष्णेन सह युयुधे ॥२२॥ तदा जेतुमिच्छतोस्तयोरुभयोर्मण्यर्थे आयुधाश्मद्रुमैर्दोर्भिर्वज्रपातनिष्ठुरैरितरेतरमुष्टिभिश्चाष्टाविंशतिदिनपर्यंतं विश्रांतिरहितं द्वंद्वयुद्धं

भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ॥ मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥१७॥ हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ॥ तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥१८॥ ऋक्षराजविलं भीममंधेन तमसाऽऽवृतम् ॥ एको विवेश भगवानवस्थाप्य वहिः प्रजाः ॥१९॥ तत्र दृष्ट्वा मणिश्रेष्ठं वालक्रीडनकं कृतम् ॥ हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकांतिके ॥२०॥ तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ॥ तच्छ्रुत्वाऽभ्यद्रवत्क्रुद्धो जांववान्वलिनां वरः ॥२१॥ स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः ॥ पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥२२॥ द्वंद्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः ॥ आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥२३॥ आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः ॥ वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥२४॥ कृष्णमुष्टिविनिष्पातनिष्पिष्टांगोरुवंधनः ॥ क्षीणसत्वः स्विन्नगात्रस्तमाहातीव विस्मितः ॥२५॥ जाने त्वां सर्वभूतानां प्राण ओजः सहो वलम् ॥ विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥२६॥ त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत् ॥ कालः कलयतामीशः पर आत्मा तथाऽऽत्मनाम् ॥२७॥ यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिंगिलोऽब्धिः ॥ सेतुः कृतः स्वयश उज्ज्वलिता च लंका रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥२८॥ इति विज्ञातविज्ञानमृक्षराजानमच्युतः ॥ व्याजहार महाराज भगवान्देवकीसुतः ॥२९॥ अभिमृश्यारविंदाक्षः पाणिना शंकरेण तम् ॥ कृपया परया भक्तं प्रेमगंभीरया गिरा ॥३०॥ ॥ ॥

वभूव ॥२३॥२४॥ ततः कृष्णमुष्टिभिः श्लथितांगो जांववान् विस्मितः सन् कृष्णं जगाद ॥२५॥ हे भगवन्, सर्वभूतानामीश्वरं विष्णुं त्वामहं जाने ॥२६॥ हे हरे, त्वं विश्वसृजां स्रष्टा कालः सर्वजीवानां परमात्मा चासि ॥२७॥ यस्य तव क्रोधयुक्तकटाक्षेण समुद्रो भीतः सन् मार्गं ददौ । यस्य वाणैश्छिन्नानि रावणादीनां मस्तकानि भुवि पेतुः । स एव ममेष्टं दैवतं रामस्त्वमसीति जाने ॥२८॥ एवं ज्ञाततत्त्वं जांववंतं भगवान् श्रीकृष्णः सुखकरेण हस्तेन स्पर्शं कृत्वा कृपया पूर्णः सन् प्रेमगंभीरया वाचा जगाद ॥२९॥३०॥

हे जांबवन्, यं त्वं पुराणपुरुषं विष्णुं त्रेतायुगेऽवतीर्णं श्रीरामं च वदसि स एवाहमिदानीं यादवकुले कृष्णरूपेणावतीर्णोऽस्मि । अधुना मणिकंठस्य प्रसेनस्य गवेषणद्वारा मणिप्राप्त्यर्थं बहवो यादवा बहिर्बिलद्वारंप्रति प्राप्ताः संति । तत्राहं स्वकीयं मिथ्याभिशापममुना मणिना दूरीकर्तुमिह प्राप्तोऽस्मि ॥३१॥ इत्युक्तो जांबवान् मणिना सह स्वां जांबवतीं कन्यां तस्मै श्रीकृष्णाय ददौ ॥३२॥ बिलद्वारे स्थिता यादवास्तु कृष्णस्य निर्गमं द्वादश दिनानि प्रतीक्ष्य दुःखिताः संतो द्वारकामेत्योग्रसेनादीन्प्रति तत्सर्वं वृत्तमूचुः ॥३३॥ तदा बिलादनिर्गतं कृष्णं श्रुत्वा रुक्मिणी देवकी वसुदेवादयो ज्ञातयश्चाशोचन् ॥३४॥ ते द्वारकौकसः सत्राजितं शपंतः संतः कृष्णप्राप्तये चंद्रभागां नाम दुर्गां देवीं स्तोत्रनमस्कारपूजादिभिरयजन् ॥३५॥ सा देवी प्रसन्ना भूत्वा, तया यूयं कृष्णं द्रक्ष्यथेति दत्तेनाशीर्वादेन सह प्राप्तमणिः सस्त्रीकः श्रीकृष्णो लोकान् हर्षयन् द्वारकां प्राप्तः

मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ॥ मिथ्याभिशापं प्रमृजन्नात्मनो मणिनाऽमुना ॥३१॥ इत्युक्तः स्वां दुहितरं कन्यां जांबवतीं मुदा ॥ अर्हणार्थं समणिना कृष्णायोपजहार ह ॥३२॥ अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः ॥ प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः ॥३३॥ निशम्य देवकी देवी रुक्मिण्यानकदुंदुभिः ॥ सुहृदो ज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम् ॥३४॥ सत्राजितं शपंतस्ते दुःखिता द्वारकौकसः ॥ उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥३५॥ तेषां तु देव्युपस्थानात्प्रत्यादिष्टाशिषा स च ॥ प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन्हरिः ॥३६॥ उपलभ्य हृषीकेशं मृतं पुनरिवागतम् ॥ सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥३७॥ सत्राजितं समाहूय सभायां राजसंनिधौ ॥ प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदयत् ॥३८॥ स चातिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुखस्ततः ॥ अनुतप्यमानो भवनमगमत्स्वेन पाप्मना ॥३९॥ सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ॥ कथं मृजाम्यात्मरजः प्रसीदेद्वाऽच्युतः कथम् ॥४०॥ किं कृत्वा साधु मह्यं स्यान्न शपेद्वा जनो यथा ॥ अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ॥४१॥ दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ॥ उपायोऽयं समीचीनस्तस्य शांतिर्न चान्यथा ॥४२॥ एवं व्यवसितो बुद्ध्या सत्राजित्स्वसुतां शुभाम् ॥ मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥४३॥ तां सत्यभामां भगवानुपयेमे यथाविधि ॥ बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥४४॥ ॥ ॥ ॥

॥३६॥ ततः सर्वे जनाः मणिग्रीवं पत्नीसहितं श्रीकृष्णं प्राप्य जातमहोत्सवा आसन् ॥३७॥ ततः श्रीकृष्णः सभायां सत्राजितमाहूय मणेः प्राप्तिं कथयित्वा तस्मै मणिं प्रत्यर्पितवान् ॥३८॥ तदा लज्जितोऽवाङ्मुखः सत्राजितः स्वकृतापराधेनानुतप्यमानः सन् मणिं गृहीत्वा स्वगृहं ययौ ॥३९॥ स च अहमिममपराधं कथं मृजामि मे श्रीकृष्णः कथं प्रसीदेत् ॥४०॥ किं कृत्वा मम कल्याणं स्यात् मां जनो वा न शपेत् ॥४१॥ एवं ध्यायन्नुपायं निश्चिनोति । श्रीकृष्णाय कन्यां पारिबर्हत्वेन मणिं च दास्यामि । अयं श्रेष्ठ उपायः । अन्यथा विरोधस्य शांतिर्न भविष्यति ॥४२॥ एवं निश्चित्य सत्राजितो मणिना सह स्वकन्यां सत्यभामां स्वयमुद्यम्य कृष्णाय ददौ ॥४३॥ भगवानपि पूर्वं बहुभिः कृतवर्मादिभि-

याचितां तां सत्यभामां यथाविध्युपयेमे ॥४४॥ सत्राजितेन मणौ दत्ते सति तं भगवानाह । हे सत्राजित, वयं मणिं न स्वीकुर्मः । अयं मणिः सूर्यभक्तस्य तवास्ताम् । वयं च फल-भागिनो भविष्यामः ॥४५॥ इति श्रीमद्भा० चू० द० उ० षट्पंचाशत्तमोऽध्यायः ॥५६॥ सप्तपंचाशत्तमे तु पुनः शतधनोर्वधे । प्राप्तं स्म दुर्यशो मार्ष्टि कृष्णोऽक्रूराहृतान्मणेः ॥१॥ श्रीशुक उवाच ॥ हेराजन्, विज्ञातार्थोऽपि कृष्णो लाक्षागृहे पांडवान् दग्धान् कुंतीं च दग्धां श्रुत्वा कुलोचितं सांत्वनादिकं कर्म कर्तुं सरामो हस्तिनापुरं ययौ ॥१॥ तत्र भीष्मं द्रोणं कृपं विदुरं गांधारीं च मिलित्वा तुल्यदुःखौ रामकृष्णौ हा कष्टमित्यूचतुः ॥२॥ हे राजन्, एतमवकाशं लब्ध्वा अक्रूरकृतवर्माणौ शतधन्वानंप्रति त्वया मणिः कुतो न गृह्यते इत्यूचतुः ॥३॥ यः सत्राजितोऽस्मभ्यं कन्यां दातुं प्रतिज्ञां कृत्वा कृष्णाय ददौ स कुतो न म्रियताम् ॥४॥ एवं ताभ्यां भिन्नबुद्धिः क्षीणजीवितः स शतधन्वा शयानं

भगवानाह न मणिं प्रतीच्छामो वयं नृप ॥ तवास्तां देवभक्तस्य वयं च फलभागिनः ॥४५॥ इति श्रीम० म० द० उ० स्यमंतकोपाख्याने षट्पंचाशत्तमोऽध्यायः ॥५६॥ श्रीशुक उवाच ॥ विज्ञातार्थोऽपि गोविंदो दग्धानाकर्ण्य पांडवान् ॥ कुंतीं च कुल्यकरणे सहरामो ययौ कुरून् ॥१॥ भीष्मं कृपं सविदुरं गांधारीं द्रोणमेव च ॥ तुल्यदुःखौ च संगम्य हा कष्टमिति होचतुः ॥२॥ लब्ध्वैतदंतरं राजन् शतधन्वानमूचतुः ॥ अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥३॥ योऽस्मभ्यं संप्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः ॥ कृष्णायादान्न सत्राजित्कस्माद्भ्रातरमन्वियात् ॥४॥ एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः ॥ शयानमवधील्लोभात्स पापः क्षीणजीवितः ॥५॥ स्त्रीणां विक्रोशमानानां क्रंदंतीनामनाथवत् ॥ हत्वा पशून्सौनिकवन्मणिमादाय जग्मिवान् ॥६॥ सत्यभामा च पितरं हतं वीक्ष्य शुचाऽर्पिता ॥ व्यलपत्तात तातेति हा हताऽस्मीति मुह्यती ॥७॥ तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् ॥ कृष्णाय विदितार्थाय तप्ताऽऽचख्यौ पितुर्वधम् ॥८॥ तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोक-ताम् ॥ अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ॥९॥ आगत्य भगवांस्तस्मात्सभार्यः साग्रजः पुरम् ॥ शतधन्वानमारेभे हंतुं हर्तुं मणिं ततः ॥१०॥ सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया ॥ साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् ॥११॥ ॥ ॥

सत्राजितं हत्वा ॥५॥ स्त्रीणां क्रोशमानानां सतीनां स्यमंतकं मणिं गृहीत्वा ययौ ॥६॥ तदा सत्यभामा हतं पितरं वीक्ष्य हा तात, हा तातेति विललाप ॥७॥ तं च मृतं पितरं तैलद्रोण्यां निक्षिप्य हस्तिनापुरं गत्वा कृष्णाय पितुर्वधं कथयामास ॥८॥ तच्छ्रुत्वेश्वरावपि रामकृष्णौ मनुष्यलीलानुरूपमहो नो महद्दुःखं प्राप्तमित्युक्त्वा विलापं चक्रतुः ॥९॥ ततः साग्रजः सभार्यः कृष्णो द्वारकामेत्य शतधन्वानं हंतुं तस्मान्मणिं च हर्तुं यत्नं चकार ॥१०॥ तदा तदुद्योगं ज्ञात्वा शतधन्वा भीतः सन् सहायार्थं कृतवर्माणं ययाचे । तदा स आह ॥११॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ तवाऽस्त्वायत्वीयधनं अस्माकमेवेति गूढोऽभिप्रायः । २ पांडवा लाक्षागृहाद्विलद्वारेण निर्गता इति ज्ञानयुक्तोऽपि ।

अहमीश्वरयो रामकृष्णयोः प्रतिकूलं कर्म न कुर्याम् । तयोरपराधं कुर्वन् को नु पुमान् कल्याणं प्राप्नुयात् न कोऽपि ॥१२॥ यद्द्वेषात्कंसो बंधुभिः सह मृतः । जरासंधः सप्तदश युद्धानि विरथो गतः ॥१३॥ इत्याकर्ण्य शतधन्वाऽक्रूरं साहाय्यार्थं ययाचे । सोऽप्याह । ईश्वरयोर्बलं जानन् कस्ताभ्यां विरुद्ध्येत ॥१४॥ यो भगवान् लीलया विश्वस्योत्पत्तिस्थितिसंहारान् करोति ॥१५॥ यः सप्तवर्ष एकेन हस्तेन गोवर्धनं दधार ॥१६॥ तस्मा अद्भुतकर्मणेऽनंताय कूटस्थाय भगवते कृष्णाय नमः॥१७॥ एवमक्रूरेण कथितः शतधन्वा मणिमक्रूरे न्यस्य शतयोजनगामिनमश्वमारुह्य प्राणरक्षणार्थं पलायनं चकार ॥१८॥ तदा तत्पलायनं श्रुत्वा रामकृष्णौ रथमारुह्य श्वशुरहंतारं तमन्वयाताम् ॥१९॥ ततः शतधन्वा मिथिलानगर्या उपवने श्रांतं पतितमश्वं त्यक्त्वा पद्भ्यामधावत् । कृष्णोऽपि रथे रामं निधाय रुषा पद्भ्यामन्वद्रवत् ॥२०॥ ततो भगवान् तस्य मस्तकं चक्रेण छित्त्वा तस्य वस्त्रयोर्मणिं मृगयांमास ॥२१॥ अप्राप्तमणिः कृष्णो रामसमीपमागत्य प्राह । मया शतधन्वा वृथा हतः । तत्र मणिर्नास्ति ॥२२॥ तदा रामस्तमाह । हे कृष्ण, स मणिः शतधन्वना कस्मिंश्चित्पुरुषे न्यस्तस्तस्यान्वेषणार्थं त्वं द्वारकां गच्छ ॥२३॥ अहं मम मित्रं जनकं द्रष्टुमिच्छामि । इत्युक्त्वा रामो मिथिलां विवेश ॥२४॥ ततो जनको रामं दृष्ट्वोत्थाय प्रीतोऽर्हणैः पूजयामास । ततस्तेन सत्कृत्य प्रार्थितो रामस्तत्र कतिचित्संवत्सरानुवास । तदा तस्माद्बलरामाद्दुर्योधनो गदायुद्धमशिक्षत् ॥२५॥ ॥ ॥ ॥

नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः ॥ को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् ॥१२॥ कंसः सहानुगोऽपीतो यद्द्वेषात्त्याजितः श्रिया ॥ जरासंधः सप्तदश संयुगान्विरथो गतः ॥१३॥ प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत ॥ सोऽप्याह को विरुद्ध्येत विद्वानीश्वरयोर्बलम् ॥१४॥ य इदं लीलया विश्वं सृजत्यवति हंति च ॥ चेष्टां विश्वसृजो यस्य न विदुर्मोहिताऽजया ॥१५॥ यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना ॥ दधार लीलया बाल उच्छिलींध्रमिवार्भकः ॥१६॥ नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे ॥ अनंतायादिभूताय कूटस्थायात्मने नमः ॥१७॥ प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् ॥ तस्मिन्न्यस्याश्वमारुह्य शतयोजनगं ययौ ॥१८॥ गरुडध्वजमारुह्य रथं रामजनार्दनौ ॥ अन्वयातां महावेगैरश्वै राजन्गुरुद्रुहम् ॥१९॥ मिथिलाया उपवने विसृज्य पतितं हयम् ॥ पद्भ्यामधावत्संत्रस्तः कृष्णोऽप्यन्वद्रवद्रुषा ॥२०॥ पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना ॥ चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम् ॥२१॥ अलब्धमणिरागत्य कृष्ण आहाग्रजांतिकम् ॥ वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥२२॥ तत आह बलो नूनं स मणिः शतधन्वना ॥ कस्मिंश्चित्पुरुषे न्यस्तस्तमन्वेष पुरं व्रज ॥२३॥ अहं विदेहमिच्छामि द्रष्टुं प्रियतमं मम ॥ इत्युक्त्वा मिथिलां राजन्विवेश यदुनंदनः ॥२४॥ तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः ॥ अर्हयामास विधिवदर्हणीयं समर्हणैः ॥ उवास तस्यां कतिचिन्मिथिलायां समा विभुः ॥२५॥ ॥ ॥

[१] अक्रूरे मणिरस्तीति सर्वज्ञतया विदित्वाऽपि रामवंचनाय तथा कृतवानिति भावः ।

॥२६॥ श्रीकृष्णो द्वारकामेत्य शतधन्वनो मरणं मणेरप्राप्तिं च सत्यभामायै प्राह ॥२७॥ ततः सत्राजितस्य पारलौकिका या याः क्रियास्तास्ताः सुहृद्भिः कारयामास ॥२८॥ ततः शतधनोर्वधं श्रुत्वा मणिहरणे शतधन्वनः प्रवर्तकावक्रूरकृतवर्माणौ भयेन द्वारकायाः सकाशादन्यत्र पलायितौ ॥२९॥ ततोऽक्रूरे गते सति द्वारकायां शारीरा मानसा दैविका भौतिकाश्च तापा अभवन् ॥३०॥ इत्थमेके पूर्वोक्तं कृष्णमाहात्म्यं विस्मृत्य कथयंति तन्न । यत्र कृष्णनिवासस्तत्राक्रूरस्यान्यत्र गमनमात्रेणारिष्टं घटेत किम् । भगवदिच्छां विना नैव घटेत॥३१॥पुनः परमतमाह । पूर्वं काश्यामनावृष्टौ सत्यां तत्रागताय श्वफल्काय काशिराजः स्वसुतां गांदिनीं प्रादात् । तदा तत्र वृष्टिरभवत् ॥३२॥ तत्सुतोऽक्रूरोऽपि तत्प्रभावः । स यत्र

मानितः प्रीतियुक्तेन जनकेन महात्मना ॥ ततोऽशिक्षद्गदां काले धार्तराष्ट्रः सुयोधनः ॥२६॥ केशवो द्वारकामेत्य निधनं शतधन्वनः ॥ अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद्विभुः ॥२७॥ ततः स कारयामास क्रिया बंधोर्हतस्य वै ॥ साकं सुहृद्भिर्भगवान्या याः स्युः सांपरायिकाः ॥२८॥ अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम् ॥ व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ ॥२९॥ अक्रूरे प्रोषितेऽरिष्टान्यासन्वै द्वारकौकसाम् ॥ शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः ॥३०॥ इत्यंगोपदिशंत्येके विस्मृत्य प्रागुदाहृतम् ॥ मुनिवासनिवासे किं घटेतारिष्टदर्शनम् ॥३१॥ देवेऽवर्षति काशीशः श्वफल्कायागताय वै ॥ स्वसुतां गांदिनीं प्रादात्ततोऽवर्षत्स्म काशिषु ॥३२॥ तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह ॥ देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ॥३३॥ इति वृद्धवचः श्रुत्वा नैतावदिह कारणम् ॥ इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः ॥३४॥ पूजयित्वाऽभिभाष्यैनं कथयित्वा प्रियाः कथाः ॥ विज्ञाताखिलचित्तज्ञः स्मयमान उवाच ह ॥३५॥ ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना ॥ स्यमंतको मणिः श्रीमान्विदितः पूर्वमेव नः ॥३६॥ सत्राजितोऽनपत्यत्वाद्गृह्णीयुर्दुहितुः सुताः ॥ दायं निनीयापः पिंडान्विमुच्यर्णं च शेषितम् ॥३७॥ तथापि दुर्धरस्त्वन्यैस्त्वय्यास्तां सुव्रते मणिः ॥ किंतु मामग्रजः सम्यङ् न प्रत्येति मणिंप्रति ॥३८॥ दर्शयस्व महाभाग बंधूनां शांतिमावह ॥ अव्युच्छिन्ना मखास्तेऽद्य वर्तंते रुक्मवेदयः ॥३९॥ ॥ ॥ ॥ ॥

तिष्ठति तत्रोपतापादयो न भवंति ॥३३॥ इति वृद्धवचः श्रुत्वा मणेरप्यन्यत्र गमनमस्तीति मत्वा कृष्णोऽक्रूरं समानाय्य सभायां तं पूजयित्वा प्रियाः कथाश्च कथयित्वा स्मयमानः सन्नुवाच ॥३४॥३५॥ हे दानपते अक्रूर, शतधन्वना स्यमंतको मणिस्त्वयि न्यस्तः सोऽस्माकं पूर्वमेव विदितोऽस्ति ॥३६॥ सत्राजितस्यानपत्यत्वात्सत्यभामासुतास्तस्मै पिंडान् दत्वा ऋणं चापाकृत्यावशिष्टं दायं गृह्णीयुरिति शास्त्रमस्ति ॥३७॥ तथापि स मणिः सुव्रते त्वय्यास्ताम् । परंतु रामो मणिविषये मांप्रति न विश्वसिति ॥३८॥ अतो मणिं दर्शयित्वा बंधूनां शांतिं कुरु । मयि नास्तीति न वक्तव्यम् । यतस्ते सुवर्णवेदयो यज्ञा अद्य वर्तंते ॥३९॥ ॥ ॥ ॥

१ व्याध्यादयः । २ चितादयः । ३ अनावृष्ट्यादयः । ४ सर्पदंशादयः । ५ एतत्पर्यंतं परमतम् ।

एवं भगवता सामभिरुक्तोऽक्रूरो वस्त्रेणाच्छादितं मणिं तस्मै दत्तवान् ॥४०॥ ततः कृष्णस्तं मणिं ज्ञातिभ्यो दर्शयित्वा स्वमिथ्याभिशापं दूरीकृत्य पुनस्तं मणिमक्रूराय ददौ ॥४१॥ य एतत् श्रीकृष्णगुणैर्युक्तं स्यमंतकोपाख्यानं पठति शृणोति वा स दुष्कीर्तिं तन्मूलभूतं पापं च दूरीकृत्य शांतिं प्राप्नोति ॥४२॥ इति श्रीम॰ चू॰ दश॰ उत्त॰ सप्तपंचाशत्तमोऽध्यायः ॥५७॥ अष्टपंचाशत्तमे तु कृष्णः पंच करेऽग्रहीत् ॥ कालिंदीं मित्रविंदां च सत्यां भद्रां च लक्ष्मणाम् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, एकदा श्रीकृष्णः प्रतीतान् पांडवान् द्रष्टुं सात्यक्यादिभिः सहेंद्रप्रस्थं गतः ॥१॥ तदा पांडवास्तं कृष्णं प्राप्तं दृष्ट्वा सर्वे युगपदुत्थाय ॥२॥ तं परिष्वज्य सप्रेमहास्ययुक्तं तस्य मुखं वीक्ष्य हर्षं प्रापुः ॥३॥ ततः

एवं सामभिरालब्धः श्वफल्कतनयो मणिम् ॥ आदाय वाससा च्छन्नं ददौ सूर्यसमप्रभम् ॥४०॥ स्यमंतकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः॥ विमृज्य मणिना भूयस्तस्मै प्रत्यर्पयत्प्रभुः ॥४१॥ यस्त्वेतद्भगवत ईश्वरस्य विष्णोर्वीर्याढ्यं वृजिनहरं सुमंगलं च ॥ आख्यानं पठति शृणोत्यनुस्मरेद्वा दुष्कीर्तिं दुरितमपोह्य याति शांतिम् ॥४२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे स्यमंतकोपाख्याने सप्तपंचाशत्तमोऽध्यायः ॥५७॥ ॥ श्रीशुक उवाच ॥ एकदा पांडवान्द्रष्टुं प्रतीतान्पुरुषोत्तमः ॥ इंद्रप्रस्थं गतः श्रीमान्युयुधानादिभिर्वृतः ॥१॥ दृष्ट्वा तमागतं पार्था मुकुंदमखिलेश्वरम् ॥ उत्तस्थुर्युगपद्वीराः प्राणा मुख्यमिवागतम् ॥२॥ परिष्वज्याच्युतं वीरा अंगसंगहतैनसः ॥ सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ॥३॥ युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवंदनम् ॥ फाल्गुनं परिरभ्याथ यमाभ्यां चाभिवंदितः ॥४॥ परमासन आसीनं कृष्णा कृष्णमनिंदिता ॥ नवोढा व्रीडिता किंचिच्छनैरेत्याभ्यवंदत ॥५॥ तथैव सात्यकिः पार्थैः पूजितश्चाभिवंदितः ॥ निषसादासनेऽन्ये च पूजिताः पर्युपासत ॥६॥ पृथां समागत्य कृताभिवादनस्तयाऽतिहार्दार्द्रदृशाऽभिरंभितः ॥ आपृष्टवांस्तां कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबांधवः ॥७॥ तमाह प्रेमवैक्लव्यरुद्धकंठाऽश्रुलोचना ॥ स्मरंती तान्बहून्क्लेशान्क्लेशापायात्मदर्शनम् ॥८॥ तदैव कुशलं नोऽभूत्सनाथास्ते कृता वयम् ॥ ज्ञातीन्नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया ॥९॥ न तेऽस्ति स्वपरभ्रांतिर्विश्वस्य सुहृदात्मनः ॥ तथापि स्मरतां शश्वत्क्लेशान्हंसि हृदि स्थितः ॥१०॥

कृष्णो युधिष्ठिरस्य भीमस्य च पादाभिवंदनं कृत्वाऽर्जुनमालिंग्य नकुलसहदेवाभ्यां वंदितः सन् ॥४॥ आसने उपविवेश । तदा नवोढा द्रौपदी लज्जिता सती शनैरेत्य तं श्रीकृष्णं ननाम ॥५॥ तथैव सात्यक्यादयो यादवाः पांडवैः पूजिताः संत आसनेषूपविविशुः ॥६॥ ततः कृष्णः कुंतीं नत्वा तयाऽऽलिंगितः सन् तां कुशलं पृष्टवान् ॥७॥ तदा पृथा तान् बहून् क्लेशान्[1] स्मरंती सती तमाह ॥८॥ हे कृष्ण, त्वया यदाऽक्रूरः प्रेषितस्तदैव नः कुशलं जातम् ॥९॥ तव स्वः परश्च नास्ति तथापि त्वं स्मरतां निरंतरं क्लेशान् हंसि ॥१०॥

१ लाक्षागृहे नष्टानपि द्रुपदगृहे पुनः सर्वैर्दृष्टान् ।

युधिष्ठिर उवाच ॥ हे कृष्ण, अस्माभिः श्रेयः किमाचरितं तदहं न वेद्मि । येन विषयासक्तचित्ताना नस्त्वं दृष्टोऽसि ॥११॥ हे राजन्, ततो युधिष्ठिरेण प्रार्थितो भगवान् तत्र चतुरो मासान् सुखमवसत् ॥१२॥ अथ चतुर्थविवाहमाह । एकदाऽर्जुनः कृष्णेन सह रथमारुह्य गांडीवं धनुरक्षयबाणौ तूणौ च गृहीत्वा ॥१३॥ मृगयां कर्तुं श्रीकृष्णेन सह वनं प्राविशत् ॥१४॥ तत्र व्याघ्र-सूकर-महिष-शरभ-हरिणादीन् पशून् हतवान् ॥१५॥ तेषु श्राद्धादिकर्मार्हान् कतिचित्पशून् किंकरा युधिष्ठिराय दातुं निन्युः । ततोऽर्जुनस्तृषितः सन् यमुनां जगाम ॥१६॥ तत्राचम्य जलं पीत्वा कृष्णपार्थौ तत्र तपश्चरंतीमेकां कन्यां ददृशतुः ॥१७॥ तदा कृष्णेन प्रेषितोऽर्जुनस्तां गत्वा पप्रच्छ ॥१८॥ हे कन्ये, त्वं का

युधिष्ठिर उवाच ॥ किं न आचरितं श्रेयो न वेदाहमधीश्वर ॥ योगेश्वराणां दुर्दर्शो यन्नो दृष्टः कुमेधसाम् ॥११॥ इति वै वार्षिकान्मासान् राज्ञा सोऽभ्यर्थितः सुखम् ॥ जनयन्नयनानंदमिंद्रप्रस्थौकसां विभुः ॥१२॥ एकदा रथमारुह्य विजयो वानरध्वजम् ॥ गांडीवं धनुरादाय तूणौ चाक्षयसायकौ ॥१३॥ साकं कृष्णेन संनद्धो विहर्तुं गहनं वनम् ॥ बहुव्यालमृगाकीर्णं प्राविशत्परवीरहा ॥१४॥ तत्राविध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून् ॥ शरभान्गवयान्खड्गान्हरिणान्शशशल्लकान् ॥१५॥ तान्निन्युः किंकरा राज्ञे मेध्यान्पर्वण्युपागते ॥ तृट्परीतः परिश्रांतो बीभत्सुर्यमुनामगात् ॥१६॥ तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ ॥ कृष्णौ ददर्शतुः कन्यां चरंतीं चारुदर्शनाम् ॥१७॥ तामासाद्य वरारोहां सुद्विजां रुचिराननाम् ॥ पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम् ॥१८॥ का त्वं कस्यासि सुश्रोणि कुतोऽसि किं चिकीर्षसि ॥ मन्ये त्वां पतिमिच्छंतीं सर्वं कथय शोभने ॥१९॥ कालिंद्युवाच ॥ अहं देवस्य सवितुर्दुहिता पतिमिच्छती ॥ विष्णुं वरेण्यं वरदं तपः परमास्थिता ॥२०॥ नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम् ॥ तुष्यतां मे स भगवान्मुकुंदोऽनाथसंश्रयः ॥२१॥ कालिंदीति समाख्याता वसामि यमुनाजले ॥ निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥२२॥ तथाऽवदद्गुडाकेशो वासुदेवाय सोऽपि ताम् ॥ रथमारोप्य तद्विद्वान् धर्मराजमुपागमत् ॥२३॥ यदैव कृष्णः संदिष्टः पार्थानां परमाद्भुतम् ॥ कारयामास नगरं विचित्रं विश्वकर्मणा ॥२४॥ भगवांस्तत्र निवसन्स्वानां प्रियचिकीर्षया ॥ अग्नये खांडवं दातुमर्जुनस्यास सारथिः ॥२५॥ ॥ ॥ ॥

कस्यासि । किं चिकीर्षसि । अहं त्वां पतिमिच्छंतीं मन्ये । अतः सर्वं कथय ॥१९॥ कालिंद्युवाच ॥ हे पार्थ, अहं सूर्यसुता विष्णुं पतिमिच्छती तप आचरामि ॥२०॥ अहं विष्णुं विनाऽन्यं पतिं न वृणे । स भगवान् मे तुष्यताम् ॥२१॥ अहं कालिंदीनामिका यावद्विष्णुदर्शनं स्यात्तावदत्र यमुनाजले सूर्येण निर्मिते गृहे वसामि ॥२२॥ ततः पार्थः कृष्णाय तथैवावदत् । कृष्णोऽपि तां रथमारोप्य धर्मराजंप्रति जगाम ॥२३॥ प्रसंगात्तत्कालीनं चरित्रांतरमाह । यदैव पांडवैर्विज्ञापितः कृष्णस्तदैव विश्वकर्मणा तेषां नगरं कारयामास ॥२४॥ तत्र पांडवानां प्रियचिकीर्षया वसन् भगवान् कृष्णोऽग्नये खांडवं वनं दातुमर्जुनस्य सारथिर्बभूव ॥२५॥ ॥ ॥ ॥

ततस्तुष्टोऽग्निरर्जुनाय धनुरश्वान् रथमक्षयसायकौ तूणावभेद्यं कवचं च ददौ ॥२६॥ तदाऽग्नेर्मोचितो मयासुरोऽर्जुनस्य सभां ददौ । यस्यां दुर्योधनस्य जले स्थलबुद्धिः स्थले च जलबुद्धिरेवं भ्रम आसीत् ॥२७॥ ततो युधिष्ठिरेणानुज्ञातः कृष्णः सात्यकिप्रमुखैर्यादवैर्वृतः सन् ॥२८॥ द्वारकामेत्य सुमुहूर्ते विधिना कालिंदीमुपयेमे ॥२९॥ पंचमविवाहमाह । अवंत्यदेशराजानौ विंदानुविंदौ दुर्योधनवशवर्तिनौ स्तः । तौ स्वयंवरे कृष्णे सक्तां स्वभगिनीं न्यषेधताम् ॥३०॥ ततः कृष्णः राजाधिदेव्याः पितृभगिन्याः सुतां तां मित्रविंदां विंदादीनां राज्ञां पश्यतां सतां बलात्कारेण हृतवान् ॥३१॥ षष्ठं विवाहमाह । कोशलदेशाधिपतिर्नग्नजिन्नाम राजा आसीत् । तस्य सत्या नाम कन्याऽभवत् ॥३२॥ तस्याः स्वयं-

सोऽग्निस्तुष्टो धनुरदाद्धयान्श्वेतान् रथं नृप ॥ अर्जुनायाक्षयौ तूणौ वर्म चाभेद्यमस्त्रिभिः ॥२६॥ मयश्च मोचितो वह्नेः सभां सख्य उपाहरत् ॥ यस्मिन्दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः ॥२७॥ स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः ॥ आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः ॥२८॥ अथोपयेमे कालिंदीं सुपुण्यर्त्वृक्ष ऊर्जिते ॥ वितन्वन्परमानंदं स्वानां परममंगलम् ॥२९॥ विंदानुविंदावावंत्यौ दुर्योधनवशानुगौ ॥ स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम् ॥३०॥ राजाधिदेव्यास्तनयां मित्रविंदां पितृष्वसुः ॥ प्रसह्य हृतवान्कृष्णो राजन्राज्ञां प्रपश्यताम् ॥३१॥ नग्नजिन्नाम कौशल्य आसीद्राजाऽतिधार्मिकः ॥ तस्य सत्याऽभवत्कन्या देवी नाग्नजिती नृप ॥३२॥ न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान् ॥ तीक्ष्णशृंगान्सुदुर्धर्षान्वीरगंधासहान्खलान् ॥३३॥ तां श्रुत्वा वृषजिल्लभ्यां भगवान्सात्वतां पतिः ॥ जगाम कौशल्यपुरं सैन्येन महता वृतः ॥३४॥ स कोशलपतिः प्रीतः प्रत्युत्थानासनादिभिः ॥ अर्हणेनापि गुरुणा पूजयन्प्रतिनंदितः ॥३५॥ वरं विलोक्याभिमतं समागतं नरेंद्रकन्या चकमे रमापतिम् ॥ भूयादयं मे पतिराशिषोऽमलाः करोतु सत्या यदि मे धृतो व्रतैः ॥३६॥ यत्पादपंकजरजः शिरसा बिभर्ति श्रीरब्जजः सगिरिशः सह लोकपालैः ॥ लीलातनूः स्वकृतसेतुपरीप्सयेशः काले दधत्स भगवान्मम केन तुष्येत् ॥३७॥ अर्चितं पुनरित्याह नारायण जगत्पते ॥ आत्मानंदेन पूर्णस्य करवाणि किमल्पकः ॥३८॥ श्रीशुक उवाच ॥ तमाह भगवान्हृष्टः कृतासनपरिग्रहः ॥ मेघगंभीरया वाचा सस्मितं कुरुनंदन ॥३९॥ ॥ ॥ ॥ ॥ ॥

वरे तीक्ष्णशृंगान् खलान् सप्त गोवृषान् न जित्वा केऽपि नृपास्तां कन्यां वोढुं न शेकुः ॥३३॥ एवं वृषभजयिना लभ्यां तां कन्यां श्रुत्वा कृष्णः सेनया सह कौशल्यपुरं जगाम ॥३४॥ ततः कृष्णे आगते सति नग्नजित् राजा प्रीतः सन् प्रत्युत्थानासनादिभिः सत्कृत्य महार्हणैस्तं कृष्णं पूजयामास ॥३५॥ तदा सत्या लक्ष्मीपतिं श्रीकृष्णं विलोक्य तं वरं चकमे । यद्ययं मया व्रतादिभिर्हृदि धृतः स्यात्तर्ह्ययं मे पतिर्भूत्वा मे मनोरथान् सफलान् करोतु ॥३६॥ यत्पादरजो लक्ष्मीर्ब्रह्मा शंकरो लोकपालाश्च शिरसा धारयंति स श्रीशो मम केन तुष्येत् ॥३७॥ ततो राजाऽऽह । हे जगत्पते, निजानंदेन पूर्णस्य तव स्वल्पकोऽहं किं करवाणि ॥३८॥ श्रीशुक उवाच ॥ तदा स्वकृतार्हणः कृष्णो हृष्टः सन् मेघगंभीरया

वाचा तं जगाद ॥३९॥ श्रीभगवानुवाच ॥ हे नरेन्द्र, क्षत्रियस्य याञ्चा निंदिताऽस्ति । तथापि तव सौहृदेच्छया त्वदीयां कन्यामहं याचे । न वयं द्रव्यादिप्रदाः ॥४०॥ राजोवाच॥ हे नाथ, त्वत्तोऽधिकः कन्यावरः कोऽस्ति । यस्य तवांगे लक्ष्मीः स्थिरा भूत्वा वसति ॥४१॥ परंतु पुंसां वीर्यपरीक्षार्थं पूर्वं मया पणः कृतः ॥४२॥ एते सप्त बलीवर्दाः अशिक्षिता नासारज्जुरहिता अपरायत्ताः संति । एतैर्बहवो नृपा भग्नगात्राः कृताः ॥४३॥ अतस्त्वयैते सप्त वृषा यदि निगृहीताः स्युस्तर्हि मे कन्याया वरो भवान् मान्यः ॥४४॥ तदा कृष्ण एवं पणं श्रुत्वा परिकरं बद्धाऽऽत्मानं सप्तधा कृत्वा लीलयैव ॥४५॥ तान् वृषान् दामभिर्बद्धा बालो दारुमयानिव व्यकर्षत् ॥४६॥ ततः प्रीतो नग्नजित्तां सत्यां

श्रीभगवानुवाच ॥ नरेंद्र याञ्चा कविभिर्विगर्हिता राजन्यबंधोर्निजधर्मवर्तिनः ॥ तथापि याचे तव सौहृदेच्छया कन्यां त्वदीयां नहि शुल्कदा वयम् ॥४०॥ राजोवाच ॥ कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः ॥ गुणैकधाम्नो यस्यांगे श्रीर्वसत्यनपायिनी ॥४१॥ किं त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ ॥ पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥४२॥ सप्तैते गोवृषा वीर दुर्दांता दुरवग्रहाः ॥ एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः ॥४३॥ यदिमे निगृहीताः स्युस्त्वयैव यदुनंदन ॥ वरो भवानभिमतो दुहितुर्मे श्रियः पते ॥४४॥ एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः ॥ आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान् ॥४५॥ बद्ध्वा तान्दामभिः शौरिर्भग्नदर्पान्हतौजसः ॥ व्यकर्षल्लीलया बद्धान्बालो दारुमयान्यथा ॥४६॥ ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः ॥ तां प्रत्यगृह्णाद्भगवान्विधिवत्सदृशीं प्रभुः ॥४७॥ राजपत्न्यश्च दुहितुः कृष्णं लब्ध्वा प्रियं पतिम् ॥ लेभिरे परमानंदं जातश्च परमोत्सवः ॥४८॥ शंखभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः ॥ नरा नार्यः प्रमुदिताः सुवासःस्रगलंकृताः ॥४९॥ दश धेनुसहस्राणि पारिबर्हमदाद्विभुः ॥ युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥५०॥ नव नागसहस्राणि नागाच्छतगुणान्रथान् ॥ रथाच्छतगुणानश्वानश्वाच्छतगुणान्नरान् ॥५१॥ दंपती रथमारोप्य महत्या सेनया वृतौ ॥ स्नेहप्रक्लिन्नहृदयो यापयामास कोशलः ॥५२॥ श्रुत्वैतद्रुरुधुर्भूपा नयंतं पथि कन्यकाम् ॥ भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा ॥५३॥ तानस्यतः शरव्रातान्बंधुप्रियकृदर्जुनः ॥ गांडीवी कालयामास सिंहः क्षुद्रमृगानिव ॥५४॥ ॥ ॥ ॥

कन्यां कृष्णाय ददौ । कृष्णस्तां विधिनोपयेमे ॥४७॥ तदा राजपत्न्यः स्वदुहितुः प्रियं पतिं कृष्णं लब्ध्वा परमानंदं लेभिरे । परमोत्सवश्च जातः ॥४८॥ तदा शंखभेर्यादिवाद्यानि नेदुः । द्विजा आशिषो ददुः । वस्त्राद्यलंकृता नरा नार्यश्च महोत्सवं चक्रुः ॥४९॥ ततो राजा दुहित्रे पारिबर्हं दशसहस्रं धेनूः स्त्रीणां त्रिसाहस्रम् ॥५०॥ नव सहस्राणि गजान् नव लक्षाणि रथान् नव कोटीरश्वान् नवार्बुदानि नरांश्च ददौ ॥५१॥ ततो दंपती रथमारोप्य प्रस्थापयामास ॥५२॥ तच्छ्रुत्वा पुरा यदुभिर्गोवृषैश्च भग्नवीर्या नृपाः श्रीकृष्णेन कन्यावरणमसहमानाः संतः कन्यां नयंतं कृष्णं पथि रुरुधुः॥५३॥ततः शरान् प्रक्षिपतस्तान् नृपान् श्रीकृष्णप्रियकर्ताऽर्जुनो गांडीवमुक्तैर्बाणैः सिंहः क्षुद्रमृगानिव कालयामास ॥५४॥

ततः कृष्णो द्वारकामेत्य तया सह रेमे ॥५५॥ सप्तमं विवाहमाह । पितृष्वसुः श्रुतकीर्तेः सुतां भद्रां संतर्दनादिभिर्भ्रातृभिर्दत्तां कृष्ण उपयेमे ॥५६॥ अष्टमं विवाहमाह । मद्राधिपतेः सुतां लक्ष्मणामेक एव कृष्णः स्वयंवरे गरुडः सुधामिव जहार ॥५७॥ एवं भौमासुरं हत्वा तस्य गृहादानीताः सहस्रशः कन्याः कृष्णस्य भार्या आसन् ॥५८॥ इति श्रीमद्भा० चू० दश० उत्तरार्धेऽष्टमहिष्युद्वाहो नामाष्टपंचाशत्तमोऽध्यायः ॥५८॥ ऊनषष्टितमे भौमं हत्वा तेनाहृता हरिः । कन्याः सहस्रशः प्राप पारिजातं दिवोऽहरत् ॥१॥ राजोवाच ॥ हे ब्रह्मन्, येन भौमासुरेण राज्ञां देवसिद्धादीनां च कन्या निरुद्धाः स भौमासुरः श्रीकृष्णेन येन प्रकारेण हतः तद्वद ॥१॥ श्रीशुक उवाच ॥ एकदा सत्यभामाया

पारिबर्हमुपागृह्य द्वारकामेत्य सत्यया ॥ रेमे यदूनामृषभो भगवान्देवकीसुतः ॥५५॥ श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ॥ कैकेयीं भ्रातृभिर्दत्तां कृष्णः संतर्दनादिभिः ॥५६॥ सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् ॥ स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥५७॥ अन्याश्चैवंविधा भार्याः कृष्णस्यासन्सहस्रशः ॥ भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥५८॥ इति श्री० महा० दशमस्कंधे उत्त० अष्टमहिष्युद्वाहो नामाष्टपंचाशत्तमोऽध्यायः ॥५८॥ राजोवाच ॥ यथा हतो भगवता भौमो येन च ताः स्त्रियः ॥ निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥१॥ श्रीशुक उवाच ॥ इंद्रेण हृतच्छत्रेण हृतकुंडलबंधुना ॥ हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥ सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥२॥ गिरिदुर्गैः शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम् ॥ मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम् ॥३॥ गदया निर्बिभेदाद्रीन् शस्त्रदुर्गाणि सायकैः ॥ चक्रेणाग्निं जलं वायुं मुरपाशांस्तथाऽसिना ॥४॥ शंखनादेन यंत्राणि हृदयानि मनस्विनाम् ॥ प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः ॥५॥ पाञ्चजन्यध्वनिं श्रुत्वा युगांताशनिभीषणम् ॥ मुरः शयान उत्तस्थौ दैत्यः पंचशिरा जलात् ॥६॥ त्रिशूलमुद्यम्य सुदुर्निरीक्षणो युगांतसूर्यानलरोचिरुल्वणः ॥ ग्रसंस्त्रिलोकीमिव पंचभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतं यथोरगः ॥७॥ आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रैर्व्यनदत्स पंचभिः ॥ स रोदसी सर्वदिशोंऽबरं महानापूरयन्नंडकटाहमावृणोत् ॥८॥ ॥ ॥ ॥ ॥

गृहे स्थितं भगवंतमिंद्र आगत्य नमस्कृत्य प्रार्थितवान् । हे हरे, भौमासुरेण मम मातुरदितेः कुंडले हृते । तथा मेरुपर्वतस्थं मणिपर्वतनामकं मे स्थानं वरुणस्य छत्रं च हृतमस्ति । एवं ज्ञापितो भगवान् सत्यभामया सह गरुडारूढः सन् पर्वतदुर्गैः शस्त्रदुर्गैर्जलाग्निवायुभिर्घोरैर्मुरपाशैश्च सर्वतो वेष्टितं भौमासुरस्य प्राग्ज्योतिपं नाम नगरं ययौ ॥२॥३॥ तदा हरिर्गदया पर्वतान्, बाणैः शस्त्रदुर्गाणि, चक्रेणाग्निं जलं वायुं च तथा खड्गेन मुरपाशांश्च बिभेद ॥४॥ ततो गदया प्राकारान्, शंखनादेन यंत्राणि भेदयित्वा शत्रूणां हृदयानि कंपयामास ॥५॥ तदा शंखशब्दं श्रुत्वा परिखाजले शयानः पंचमुखो मुरासुरो जलादुत्तस्थौ ॥६॥ स पंचमुखैस्त्रिलोकीं ग्रसन् शूलमुद्यम्य कृष्णमभ्यद्रवत् ॥७॥ स तच्छूलं गरुडोपरि प्रक्षिप्य

१ भैष्मी जांबवती भामा सत्या भद्रा च लक्ष्मणा । कालिंदी मित्रविंदा चेत्यष्टौ पट्टमहास्त्रियः ॥ १ ॥

पंचभिर्मुखैर्व्यनदत् । स शब्दो ब्रह्मांडमावृणोत् ॥८॥ तदा हरिस्तच्छूलं शराभ्यां त्रिखंडं कृत्वा तं मुखेषु बाणैरताडयत् । सोऽपि मुरो रुषा कृष्णाय गदां व्यमुंचत् ॥९॥ तां गदां कृष्णः स्वगदया सहस्रधा छित्वा चक्रेण तस्य शिरांसि चिच्छेद ॥१०॥ तदा गतप्राणः स मुरोंऽभसि पपात । तस्य सप्त पुत्राः ॥११॥ ताम्रः अंतरिक्षः श्रवणः विभावसुः वसुः नभस्वान् अरुणश्चैते पितुर्वधेन दुःखिता भौमप्रेरिता धृतायुधाः संत आयुधानि गृहीत्वा सेनापतिं पीठासुरं पुरस्कृत्य युद्धं कर्तुं निर्गताः ॥१२॥ ते च शर-खड्ग-शक्ति-शूलानि कृष्णे प्राक्षिपन् । ततः कृष्णस्तच्छस्त्रकूटं स्वबाणैस्तिलशश्चकर्त ॥१३॥ तान् पीठमुख्यान् बाणैर्यमालयमनयत् । तदा नरकासुरः कृष्णेन सेनापतीन् नाशितान् वीक्ष्य

तदाऽऽपतद्वै त्रिशिखं गरुत्मते हरिः शराभ्यामभिनत्त्रिधौजसा ॥ मुखेषु तं चापि शरैरताडयत्तस्मै गदां सोऽपि रुषा व्यमुंचत ॥९॥ तामापतंतीं गदया गदां मृधे गदाग्रजो निर्बिभिदे सहस्रधा ॥ उद्यम्य बाहूनभिधावतोऽजितः शिरांसि चक्रेण जहार लीलया ॥१०॥ व्यसुः पपातांभसि कृत्तशीर्षो निकृत्तशृंगोऽद्रिरिवेंद्रतेजसा ॥ तस्यात्मजाः सप्त पितुर्वधातुराः प्रतिक्रियाऽमर्षजुषः समुद्यताः ॥११॥ ताम्रोंऽतरिक्षः श्रवणो विभावसुर्वसुर्नभस्वानरुणश्च सप्तमः ॥ पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता निरगन्धृतायुधाः ॥१२॥ प्रायुंजतासाद्य शरानसीन्गदाः शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः ॥ तच्छस्त्रकूटं भगवान्स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्त ह ॥१३॥ तान्पीठमुख्याननयद्यमक्षयं निकृत्तशीर्षोरुभुजांघ्रिवर्मणः ॥ स्वानीकपानच्युतचक्रसायकैस्तथा निरस्तान्नरको धरासुतः ॥१४॥ निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः पयोधिप्रभवैर्निराक्रमत् ॥ दृष्ट्वा सभार्यं गरुडोपरि स्थितं सूर्योपरिष्टात्सतडिद्घनं यथा ॥१५॥ कृष्णं स तस्मै व्यसृजच्छतघ्नीं योधाश्च सर्वे युगपत्स्म विव्यधुः ॥ तद्भौमसैन्यं भगवान्गदाग्रजो विचित्रवाजैर्निशितैः शिलीमुखैः ॥ निकृत्तबाहूरुशिरोध्रविग्रहं चकार तर्ह्येव हताश्वकुंजरम् ॥१६॥ यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह ॥ हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रिभिः ॥१७॥ उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान् ॥ गरुत्मता हन्यमानास्तुंडपक्षनखैर्गजाः ॥१८॥ पुरमेवाविशन्नार्ता नरको युध्ययुध्यत ॥ दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम् ॥१९॥ तं भौमः प्राहरच्छक्त्या वज्रः प्रतिहतो यतः ॥ नाकंपत तया विद्धो मालाहत इव द्विपः ॥२०॥ ॥ ॥ ॥

गजमारुह्य समुद्रमथनोद्भूतैर्गजैः सह पुरान्निर्गत्य गरुडोपरि स्थितं सभार्यं कृष्णं दृष्ट्वा ॥१४॥१५॥ तस्मै शतघ्नीं मुमोच । तथा सर्वे योधा अपि कृष्णं विव्यधुः । तदा शूरैर्यानि प्रेरितानि शस्त्रास्त्राणि तत्प्राप्तेः पूर्वमेव, श्रीकृष्णस्तत्सर्वं भौमसैन्यं तीक्ष्णैर्बाणैर्हत्वा पश्चात्तानि शस्त्रास्त्राणि प्रत्येकं त्रिभिस्त्रिभिर्बाणैश्चिच्छेद ॥१६॥१७॥ गजाश्च गरुडस्य तुंडपक्षनखैस्ताडिताः संतः पुरं विविशुः । ततो नरकः स्वसैन्यं गरुडार्दितं दृष्ट्वा रणेऽयुद्ध्यत ॥१८॥१९॥ तं गरुडं च शक्त्या प्राहरत् । तया विद्धोऽपि गरुडो मालाताडितो गज इव नाकंपत ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततो भौमः कृष्णं हंतुं शूलं जग्राह । तत्प्रक्षेपात्पूर्वमेव हरिश्चक्रेण नरकस्य शिरश्चिच्छेद ॥२१॥ किरीटकुंडलयुतं तच्छिरो भूमौ पतितं सद्बभौ । तदाऽसुरा हाहेति चुक्रुशुः । ऋषयो देवाश्च पुष्पैः कृष्णं विकिरंतः स्तुतिं चक्रुः ॥२२॥ ततो भूमिः कृष्णं प्राप्य वैजयंत्या वनमालया सह, सुवर्णकुंडले वारुणं छत्रं मेरुपर्वते स्थितस्य मणिपर्वतस्थानस्य स्वामित्वं च समर्पयामास ॥२३॥ अथ च सा भूमिः प्रांजालेः सती भक्त्यैकाग्रया बुद्ध्या हरिं तुष्टाव ॥२४॥ भूमिरुवाच । हे देवदेवेश, हे शंखचक्रगदाधर, हे परमात्मन्, तुभ्यं नमोऽस्तु ॥२५॥ हे भगवन्, कमलनाभाय कमलमालिने कमलनेत्राय कमलपादाय च तुभ्यं नमोऽस्तु ॥२६॥ वासुदेवाय पुरुषाय पूर्णबोधाय निरतिशयैश्वर्याय तुभ्यं नमः ॥२७॥ हे पर-

शूलं भौमोऽच्युतं हंतुमाददे वितथोद्यमः ॥ तद्विसर्गात्पूर्वमेव नरकस्य शिरो हरिः ॥ अपाहरद्गजस्थस्य चक्रेण क्षुरनेमिना ॥२१॥ सकुंडलं चारुकिरीटभूषणं बभौ पृथिव्यां पतितं समुज्ज्वलत् ॥ हाहेति साध्वित्यृषयः सुरेश्वरा माल्यैर्मुकुंदं विकिरंत ईडिरे ॥२२॥ ततश्च भूः कृष्णमुपेत्य कुंडले प्रतप्तजांबूनदरत्नभास्वरे ॥ सवैजयंत्या वनमालयाऽर्पयत्प्राचेतसं छत्रमथो महामणिम् ॥२३॥ अस्तौषीदथ विश्वेशं देवी देववरार्चितम् ॥ प्रांजलिः प्रणता राजन्भक्तिप्रवणया धिया ॥२४॥ भूमिरुवाच ॥ नमस्ते देवदेवेश शंखचक्रगदाधर ॥ भक्तेच्छोपात्तरूपाय परमात्मन्नमोऽस्तु ते ॥२५॥ नमः पंकजनाभाय नमः पंकजमालिने ॥ नमः पंकजनेत्राय नमस्ते पंकजांघ्रये ॥२६॥ नमो भगवते तुभ्यं वासुदेवाय विष्णवे ॥ पुरुषायादिबीजाय पूर्णबोधाय ते नमः ॥२७॥ अजाय जनयित्रेऽस्य ब्रह्मणेऽनंतशक्तये ॥ परावरात्मन्भूतात्मन्परमात्मन्नमोऽस्तु ते ॥२८॥ त्वं वै विसृक्षू रज उत्कटं प्रभो तमो निरोधाय बिभर्ष्यसंवृतः ॥ स्थानाय सत्वं जगतो जगत्पते कालः प्रधानं पुरुषो भवान्परः ॥२९॥ अहं पयो ज्योतिरथानिलो नभो मात्राणि देवा मन इंद्रियाणि ॥ कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः ॥३०॥ ( यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना ॥ त्वत्स्पर्शसंभवः पुत्रस्तदाऽयं मेऽभ्यजायत ॥१॥ सोऽयं त्वयैव दत्तो मे त्वयैव विनिपातितः ॥ ) तस्यात्मजोऽयं तव पादपंकजं भीतः प्रपन्नार्तिहरोपसादितः ॥ तत्पालयैनं कुरु हस्तपंकजं शिरस्यमुष्याखिलकल्मषापहम् ॥३१॥ श्रीशुक उवाच ॥ इति भूम्याऽर्थितो वाग्भिर्भगवान्भक्तिनम्रया ॥ दत्त्वाऽभयं भौमगृहं प्राविशत्सकलर्द्धिमत् ॥३२॥ ॥ ॥

मात्मन्, अनंतशक्तये ब्रह्मणे ते नमोऽस्तु ॥२८॥ हे ईश, त्वं जगतः सृष्टिपालनसंहारेषु रजःसत्वतमोगुणान् धत्से । प्रकृतिपुरुषौ कालश्च त्वमेवासि ॥२९॥ पृथिव्यादीनि पंच भूतानि शब्दादयः पंच विषयाः एकादशेंद्रियाणि देवाश्चेति सर्वं चराचरं त्वयि भ्रमोऽस्ति ॥३०॥ ( हे नाथ, वराहमूर्तिना त्वया यदाऽहं पातालादुद्धृता तदा तवांगस्पर्शान्मेऽयं भौमः पुत्रो जातः ॥१॥ स त्वयैव मम दत्तोऽधुना मारितश्च ॥ ) हे प्रपन्नार्तिहर, तस्य भौमासुरस्यायं भगदत्तो नाम पुत्रो भीतोऽस्ति । अत एव मया तव चरणकमलं प्रापितः । अतोऽस्य शिरसि हस्तं स्थापयित्वा अस्मा अभयं च दत्वा पाहि ॥३१॥ श्रीशुक उवाच । एवं भूम्या प्रार्थितो भगवान् भगदत्तायाभयं दत्वा सकलसमृद्धिमत् भौमस्य गृहं

प्राविशत् ॥३२॥ तत्र भौमेनाहृताना कन्यानामेकशताधिकानि षोडश सहस्राणि ददृशे ॥३३॥ ततस्ताः कन्या नरवीरं कृष्णं दृष्ट्वा विमोहिताः सत्यो मनसा तं पतिं वव्रिरे ॥३४॥ पृथक् पृथगूचुश्च । यथायं मम पतिर्भूयात्तथा विधाताऽनुमोदताम् ॥३५॥ तदा कृष्णस्तासां हृद्गतं ज्ञात्वा ताः सर्वाः कन्याः शिविकादिभिर्द्वारकां प्राहिणोत् । तथा कोशान् रथादींश्च प्रस्थापयामास ॥३६॥ चतुर्दंतान् श्वेतानैरावतकुलोत्पन्नान् गजान् चतुःषष्टिं प्राहिणोत् ॥३७॥ ततः कृष्ण इंद्रभवनं गत्वाऽदित्यै कुंडले दत्वेंद्राण्या सहितेनेंद्रेण सत्यभामासहितः पूजितो बभूव ॥३८॥ तत आगमनसमये सत्यभामया प्रेरितः सन् पारिजातवृक्षमुत्पाट्य गरुडे निधाय सेंद्रान् देवान् जित्वा द्वारकामानयत् ॥३९॥ तं च पारिजातं

तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् ॥ भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः ॥३३॥ तं प्रविष्टं स्त्रियो वीक्ष्य नरवीरं विमोहिताः ॥ मनसा वव्रिरेऽभीष्टं पतिं दैवोपसादितम् ॥३४॥ भूयात्पतिरयं मह्यं धाता तदनुमोदताम् ॥ इति सर्वाः पृथक् कृष्णे भावेन हृदयं दधुः ॥३५॥ ताः प्राहिणोद्द्वारवतीं सुमृष्टविरजोंऽबराः ॥ नरयानैर्महाकोशान्रथाश्वान्द्रविणं महत् ॥३६॥ ऐरावतकुलेभांश्च चतुर्दंतांस्तरस्विनः ॥ पांडुरांश्च चतुःषष्टिं प्रेषयामास केशवः ॥३७॥ गत्वा सुरेंद्रभवनं दत्त्वाऽदित्यै च कुंडले ॥ पूजितस्त्रिदशेंद्रेण सहेंद्राण्या च सप्रियः ॥३८॥ चोदितो भार्ययोत्पाट्य पारिजातं गरुत्मति ॥ आरोप्य सेंद्रान्विबुधान्निर्जित्योपानयत्पुरम् ॥३९॥ स्थापितः सत्यभामाया गृहोद्यानोपशोभनः ॥ अन्वगुर्भ्रमराः स्वर्गात्तद्गंधासवलंपटाः ॥४०॥ ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थसाधनम् ॥ सिद्धार्थ एतेन विगृह्यते महानहो सुराणां च तमो धिगाढ्यताम् ॥४१॥ अथो मुहूर्त एकस्मिन्नानागारेषु ताः स्त्रियः ॥ यथोपयेमे भगवांस्तावद्रूपधरोऽव्ययः ॥४२॥ गृहेषु तासामनपाय्यतर्क्यकृन्निरस्तसाम्यातिशयेष्ववस्थितः ॥ रेमे रमाभिर्निजकामसंप्लुतो यथेतरो गार्हकमेधिकांश्चरन् ॥४३॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसंगमजल्पलज्जाः ॥४४॥ ॥

सत्यभामाया गृहोद्याने स्थापितवान् । तदा तद्गंधलंपटा भ्रमराः स्वर्गात्तत्राजग्मुः ॥४०॥ अहो य इंद्रः पूर्वं कार्यसाधनाय श्रीकृष्णं प्रार्थितवान् स सिद्धकार्यः सन् तेन कृष्णेन सह द्वेषं करोति । अतो धनिकतां धिक् ॥४१॥ अथ हरिरेकस्मिन् मुहूर्ते नानागृहेषु तावद्रूपधरः सन् यथावत् ताः कन्या उपयेमे ॥४२॥ततो हरिर्गृहस्थवत् तासां गृहेषु स्थितः सन् लक्ष्म्यंशभूताभिस्ताभिः सह रेमे ॥४३॥ इत्थं ता स्त्रियो लक्ष्मीपतिं श्रीकृष्णं प्राप्य नवसंगमेन लज्जासहिताः सत्यस्तस्य सेवनं चक्रुः ॥४४॥ ॥ ॥

---

[1] अनेन तासां विवाहसमये देवक्यादिबंधुजनसमागमोऽपि प्रतिगृहं यौगपद्येन सूचितः ।

ताः स्त्रियो दासीनां शतानि विद्यंते यासां तथाभूता अपि, वाह्यत आगतस्य श्रीकृष्णस्य संमुखगमनेन, आसनदानेन, अर्घ्यादिना पूजनेन, चरणक्षालनेन, तांबूलार्पणेन, चरण-शुश्रूषया, गंधपुष्पाद्यर्पणेन, केशानां प्रसाधनेन, शय्याकरणेन, भक्ष्यभोज्याद्यर्पणेन चेत्यादिभिः स्वयं दास्यं विदधुः ॥४५॥ इति श्रीम० चू० दश० उ० एकोनषष्टितमोऽध्यायः ॥५९॥ अथ षष्टितमे कृष्णः परिहासेन रुक्मिणीम् । कोपयित्वा ततः प्रेमकलहे तामसांत्वयत् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, कदाचिदंतर्गृहे स्वपर्यंकस्थं कृष्णं पतिं रुक्मिणी व्यजनेन पर्यचरत् ॥१॥ य ईश्वरो विश्वस्योत्पत्तिस्थितिसंहारान् करोति स एव स्वकृतमर्यादानां रक्षणाय यादवेष्ववतीर्णः ॥२॥ कथंभूतेंऽतर्गृहे । मुक्तादामवितानेन मणिमयै-

प्रत्युद्गमासनवरार्हणपादशौचतांबूलविश्रमणवीजनगंधमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥४५॥ इति श्रीम० म० द० उ० पारिजातहरणे नरकवधो नाम एकोनषष्टितमोऽध्यायः ॥५९॥ श्रीशुक उवाच ॥ कर्हिचित्सुखमासीनं स्वतल्पस्थं जगद्गुरुम् ॥ पतिं पर्यचरद्भैष्मी व्यजनेन सखीजनैः ॥१॥ यस्त्वेतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः ॥ स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः ॥२॥ तस्मिन्नंतर्गृहे भ्राजन्मुक्तादामविलंबिना ॥ विराजिते वितानेन दीपैर्मणिमयैरपि ॥३॥ मल्लिकादामभिः पुष्पैर्द्विरेफकुलनादिते ॥ जालरंध्रप्रविष्टैश्च गोभिश्चंद्रमसोऽमलैः ॥४॥ पारिजातवनामोदवायुनोद्यानशालिना ॥ धूपैरगुरुजै राजन्जालरंध्रविनिर्गतैः ॥५॥ पयःफेननिभे शुभ्रे पर्यंके कशिपूत्तमे ॥ उपतस्थे सुखासीनं जगतामीश्वरं पतिम् ॥६॥ वालव्यजनमादाय रत्नदंडं सखीकरात् ॥ तेन वीजयती देवी उपासांचक्र ईश्वरम् ॥७॥ सोपाच्युतं क्वणयती मणिनूपुराभ्यां रेजेंऽगुलीयवलयव्यजनाग्रहस्ता ॥ वस्त्रांतगूढकुचकुंकुमशोणहारभासा नितंबधृतया च परार्ध्यकांच्या ॥८॥ तां रूपिणीं श्रियमनन्यगतिं निरीक्ष्य या लीलया धृततनोरनुरूपरूपा ॥ प्रीतः स्मयन्नलककुंडलनिष्ककंठवक्त्रोल्लसत्स्मितसुधां हरिराबभाषे ॥९॥ श्रीभगवानुवाच ॥ राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः ॥ महानुभावैः श्रीमद्भी रूपौदार्यबलोर्जितैः ॥१०॥ तान्प्राप्तानर्थिनो हित्वा चैद्यादीन्स्मरदुर्मदान् ॥ दत्ता भ्रात्रा स्वपित्रा च कस्मान्नो ववृषेऽसमान् ॥११॥ ॥ ॥

दीपैश्च विराजिते ॥३॥ मल्लिकादिभिः पुष्पैर्जालरंध्रेण प्रविष्टैश्चंद्रकिरणैश्च विराजिते, भ्रमरयूथैर्नादिते, जालरंध्रेण विनिर्गतैरगरुधूपैर्विराजिते ॥४॥५॥ एतादृशेंऽतर्गृहे सा रुक्मिणी पयःफेननिभे पर्यंके हंसतूलिकायां सुखासीनं श्रीकृष्णमसेवत ॥६॥ सखीहस्ताद्रत्नदंडं व्यजनं गृहीत्वा तेन वीजयती ॥७॥ मणिमयैर्नूपुरैः कूजयंती सा रुक्मिणी वस्त्रांतेन आच्छादितौ यौ कुचौ तयोः कुंकुमेन शोणो यो हारस्तस्य कांत्या नितंबे धृतयाऽमूल्यकांच्या च शुशुभे ॥८॥ तदा कृष्णो हास्यमुखीं प्रेमयुक्तां मूर्तिमतीं तां लक्ष्मीं वीक्ष्य प्रीतः सन् जगाद ॥९॥ श्रीभगवानुवाच । हे राजपुत्रि, त्वं श्रीमद्भिर्महानुभावैः शिशुपालादिभिरिच्छिता भ्रातृपितृभ्यां तेभ्यो दत्ता च सती तान् हित्वाऽस्मान् कस्माद्वृतवती ॥१०॥११॥

कीदृशानस्मान्। जरासंधादिभ्यो भीतान्, समुद्रं शरणं गतान्, बलवद्भिः कृतद्वेषान्, त्यक्तनृपासनान् ॥१२॥ किंच। अविज्ञाताचाराणां पुंसां मार्गमनुसृताः स्त्रियः प्रायो दुःखं प्राप्नुवंति ॥१३॥ किंच। वयं निष्किंचनाः निष्किंचनजनप्रियाश्च स्मः। तस्माद्धनाढ्या मां न भजंति ॥१४॥ ययोर्वित्त-जन्मैश्वर्यादिकं समं स्यात्तयोरेव परस्परं विवाहो मैत्री च भवति। उत्तमाधमयोर्न भवति ॥१५॥ हे वैदर्भि, एतदविज्ञाय गुणैर्हीना भिक्षुभिः श्लाघिताश्च वयं त्वया व्यर्थं वृताः ॥१६॥ अत आत्मनः सदृशं क्षत्रियश्रेष्ठं सेवस्व। येन त्वमिहामुत्र च मनोरथान् लप्स्यसे ॥१७॥ हे वामोरु, शिशुपाल-शाल्व-जरासंधादयस्तवाग्रजो रुक्मी च मां द्विषंति ॥१८॥ अतो मदांधानां तेषां गर्वपरिहाराय मया त्व-

राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान् ॥ बलवद्भिः कृतद्वेषान्प्रायस्त्यक्तनृपासनान् ॥१२॥ अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम् ॥ आस्थिताः पदवीं सुभ्रूः प्रायः सीदंति योषितः ॥१३॥ निष्किंचना वयं शश्वन्निष्किंचनजनप्रियाः ॥ तस्मात्प्रायेण न ह्याढ्या मां भजंति सुमध्यमे ॥१४॥ ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः ॥ तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥१५॥ वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया ॥ वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा ॥१६॥ अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम् ॥ येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे ॥१७॥ चैद्यशाल्वजरासंधदंतवक्रादयो नृपाः ॥ मम द्विषंति वामोरु रुक्मी चापि तवाग्रजः ॥१८॥ तेषां वीर्यमदांधानां दृप्तानां स्मयनुत्तये ॥ आनीताऽसि मया भद्रे तेजोऽपहरताऽसताम् ॥१९॥ उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः ॥ आत्मलब्ध्याऽऽस्महे पूर्णा गेहयोर्ज्योतिरक्रियाः ॥२०॥ श्रीशुक उवाच ॥ एतावदुक्त्वा भगवानात्मानं वल्लभामिव ॥ मन्यमानामविश्लेषात्तद्दर्पघ्न उपारमत् ॥२१॥ इति त्रिलोकेशपतेस्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम् ॥ आश्रुत्य भीता हृदि जातवेपथुश्चिंतां दुरंतां रुदती जगाम ह ॥२२॥ पदा सुजातेन नखारुणश्रिया भुवं लिखंत्यश्रुभिरंजनासितैः ॥ आसिंचती कुंकुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुःखरुद्धवाक् ॥२३॥ तस्याः सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतो व्यजनं पपात ॥ देहश्च विक्लवधियः सहसैव मुह्यन्रंभेव वायुविहता प्रविकीर्य केशान् ॥२४॥ तद्दृष्ट्वा भगवान्कृष्णः प्रियायाः प्रेमबंधनम् ॥ हास्यप्रौढिमजानंत्याः करुणः सोऽन्वकंपत ॥२५॥ ॥ ॥

मानीताऽसि ॥१९॥ परंतु वयं स्त्रीपुत्रविषयभोगेच्छवो नहि। किंतु देह-गृहयोरुदासीना वर्तामहे ॥२०॥ श्रीशुक उवाच ॥ भगवानात्मानमेव वल्लभां मन्यमानां तां रुक्मिणीमेतावदुक्त्वा तूष्णीमासीत् ॥२१॥ सा रुक्मिणी त्रिलोकेशपतेः श्रीकृष्णस्याऽश्रुतपूर्वमप्रियं वचः श्रुत्वा जातवेपथुर्भीता सती महाचिंतां प्राप ॥२२॥ तदा सुकोमलेन पदा भुवं लिखंत्यधोमुख्यश्रुभिः स्तनौ सिंचंती च सा रुक्मिणी अतिदुःखेन रुद्धवाक् सती तस्थौ ॥२३॥ ततो दुःख-त्यागशंकाऽनुतापैर्विनष्टबुद्धेस्तस्या हस्ताद्वलयानि व्यजनं तदनु देहश्च सहसा भूमौ पेतुः ॥२४॥ ततः कृष्णः प्रियायास्तत्प्रेमबंधनं दृष्ट्वा करुणः सन् कृपां चकार ॥२५॥ ॥ ॥ ॥ ॥

ततः पर्यंकादवरुह्य चतुर्भुजो भूत्वाऽऽशु तामुत्थाप्य केशान् निबद्ध्य पाणिना मुखं प्रामृजत् ॥२६॥ ततोऽश्रुभिः शोभिते नेत्रे शोकाश्रुभिः सेचितौ स्तनौ च प्रमृज्यानन्यविषया तां रुक्मिणीं बाहुभ्यामालिंग्य ॥२७॥ कृष्णो हास्यगांभीर्यमविज्ञाय भ्रमच्चित्तां तां सांत्वयामास ॥२८॥ श्रीभगवानुवाच ॥ हे वैदर्भि, मां मासूयेथाः मत्परायणां त्वामहं जाने। हे सुंदरि, त्वद्वचः श्रोतुमिच्छया नर्मणैवेदमुक्तं न तत्त्वतः ॥२९॥ किंच। तव स्फुरिताधरं सुंदरभ्रुकुटीतटं कटाक्षयुक्तं च मुखं द्रष्टुमेवमुक्तम् ॥३०॥ हे भीरु, स्त्रिया सह नर्मादिभिर्यः कालो नीयते स एव गृहस्थाश्रमिणां परमो लाभः ॥३१॥ श्रीशुक उवाच ॥ हे राजन्, एवं भगवता सांत्विता रुक्मिणी तां परिहासोक्तिं ज्ञात्वा पतित्यागभयं जहौ ॥३२॥ ततः सव्रीडहासेन कृष्णस्य मुखं वीक्षमाणा सती पूर्वोक्तानां भाषणानामुत्तराण्याह ॥३३॥ रुक्मिण्युवाच ॥ हे कमलनेत्र, तव मम च साम्यं नेति यत्त्वयोक्तं तत्सत्यमेव।

पर्यंकादवरुह्याशु तामुत्थाप्य चतुर्भुजः ॥ केशान्समुह्य तद्वक्रं प्रामृजत्पद्मपाणिना ॥२६॥ प्रमृज्याश्रुकले नेत्रे स्तनौ चोपहतौ शुचा ॥ आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् ॥२७॥ सांत्वयामास सांत्वज्ञः कृपया कृपणां प्रभुः ॥ हास्यप्रौढिभ्रमच्चित्तामतदर्हां सतां गतिः ॥२८॥ श्रीभगवानुवाच ॥ मा मा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् ॥ त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमंगने ॥२९॥ मुखं च प्रेमसंरंभस्फुरिताधरमीक्षितुम् ॥ कटाक्षेपारुणापांगं सुंदरभ्रुकुटीतटम् ॥३०॥ अयं हि परमो लाभो गृहेषु गृहमेधिनाम् ॥ यन्नर्मैर्नीयते यामः प्रियया भीरु भामिनि ॥३१॥ श्रीशुक उवाच ॥ सैवं भगवता राजन्वैदर्भी परिसांत्विता ॥ ज्ञात्वा तत्परिहासोक्तिं प्रियत्यागभयं जहौ ॥३२॥ बभाष ऋषभं पुंसां वीक्षंती भगवन्मुखम् ॥ सव्रीडहासरुचिरस्निग्धापांगेन भारत ॥३३॥ रुक्मिण्युवाच ॥ नन्वेवमेतदरविंदविलोचनाह यद्वै भवान्भगवतोऽसदृशी विभूम्नः ॥ क्व स्वे महिम्न्यभिरतोऽभगवांस्त्र्यधीशः क्वाहं गुणप्रकृतिरज्ञगृहीतपादा ॥३४॥ सत्यं भयादिव गुणेभ्य उरुक्रमांतः शेते समुद्र उपलंभनमात्र आत्मा ॥ नित्यं कदिंद्रियगणैः कृतविग्रहस्त्वं त्वत्सेवकैर्नृपपदं विधुतं तमोऽधम् ॥३५॥ त्वत्पादपद्ममकरंदजुषां मुनीनां वर्त्मास्फुटं नृपशुभिर्ननु दुर्विभाव्यम् ॥ यस्मादलौकिकमिवेहितमीश्वरस्य भूमंस्तवेहितमथो अनु ये भवंतम् ॥३६॥ ॥ ॥

यतो ब्रह्मादीनामधीशस्त्वं क्व। गुणमयी प्रकृतिरहं क्व ॥३४॥ हे उरुक्रम, राजभ्यो बिभ्यतः समुद्रं शरणं गतान् इति यदुक्तं तदपि सत्यम्। त्वं शब्दादिविषयेभ्यो भीत इवांतर्हृदये प्रकाशसे। त्यक्तनृपासना वयमिति यदुक्तं तत्राह। हे हरे, नृपासनं नरकतुल्यमिति ज्ञात्वा त्वत्सेवकैरेव तत्त्यक्तम् किं पुनर्वक्तव्यं त्वयात्यक्तमिति ॥३५॥ अस्पष्टवर्त्मनां पुंसामिति यदुक्तं तत्राह। परमानंदरससेविनां त्वद्भक्तानामपि मार्गो यदा नृपशुभिर्न ज्ञायते तदा किं वक्तव्यं तव मार्गो न ज्ञायत इति। यदा त्वद्भक्तानामपि चेष्टितमलौकिकमिव भाति तदा तवेश्वरस्येहितमलौकिकमिति किं वक्तव्यम् ॥३६॥ ॥ ॥ ॥ ॥ ॥ ॥

१ उत्थापनाऽश्लेषण-वक्त्रपरिमार्जनार्थमाविष्कृतचतुर्भुज इत्यर्थः

निष्किंचना वयमित्यस्योत्तरमाह । ब्रह्मादयो यस्मै तुभ्यं बलिं हरंति तस्य सर्वेश्वरस्य ते दरिद्रता न घटत एव । निष्किंचनजनप्रिया इत्यस्योत्तरमाह । ब्रह्मादीनां लोकेश्वराणां त्वं प्रेष्ठः । ते च तव प्रेष्ठाः । आढ्या मां न भजंतीत्यस्योत्तरं-ये संपत्तिरूपयाऽऽढ्यतयांऽधास्तेंऽतकं त्वां न जानंति ॥३७॥ ययोरेव समं वित्तमिति यदुक्तं तत्परिहरति । हे ईश्वर, त्वं सर्वपुरुषार्थमयः परमानंदरूपोऽसि । यस्य तव प्राप्तीच्छया सुबुद्धयः सर्वं कृत्यं त्यजंति । तेषां भक्तानामेव भवतः सेव्यसेवकसंबंधो योग्यः विषयासक्तानां न योग्यः ॥३८॥ त्वं जगदात्मा भक्तानामात्मस्वरूपप्रदश्चेति ज्ञात्वैव ब्रह्मादीनपि हित्वा मया वृतोऽसि ॥३९॥ यस्त्वं शार्ङ्गधनुःशब्देन जरासंधादीन् विद्राव्य मां हृतवानसि । अतः समुद्रं शरणं

निष्किंचनो ननु भवान्न यतोऽस्ति किंचिद्यस्मै बलिं बलिभुजोऽपि हरंत्यजाद्याः ॥ न त्वाविदंत्यसुतृपोऽन्तकमाढ्यतांधाः प्रेष्ठो भवान्बलिभुजामपि तेऽपि तुभ्यम् ॥३७॥ त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वांछया सुमतयो विसृजंति कृत्स्नम् ॥ तेषां विभो समुचितो भवतः समाजः पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न ॥३८॥ त्वं न्यस्तदंडमुनिभिर्गदितानुभाव आत्माऽऽत्मदश्च जगतामिति मे वृतोऽसि ॥ हित्वा भवद्भ्रुव उदीरितकालवेगध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्ये ॥३९॥ जाड्यं वचस्तव गदाग्रज यस्तु भूपान्विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम् ॥ सिंहो यथा स्वबलिमीश पशून्स्वभागं तेभ्यो भयाद्यदुदधिं शरणं प्रपन्नः ॥४०॥ यद्वांछया नृपशिखामणयोऽङ्गवैन्यजायंतनाहुषगयादय ऐकपत्यम् ॥ राज्यं विसृज्य विविशुर्वनमंबुजाक्ष सीदंति तेऽनुपदवीं त इहास्थिताः किम् ॥४१॥ कान्यं श्रयेत तव पादसरोजगंधमाघ्राय सन्मुखरितं जनताऽपवर्गम् ॥ लक्ष्म्यालयं त्वविगणय्य गुणालयस्य मर्त्यासदोरुभयमर्थविविक्तदृष्टिः ॥४२॥ तं त्वाऽनुरूपमभजं जगतामधीशमात्मानमत्र च परत्र च कामपूरम् ॥ स्यान्मे तवांघ्रिररणं सृतिभिर्भ्रमंत्या यो वै भजंतमुपयात्यनृतापवर्गः ॥४३॥ तस्याः स्युरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वबिडालभृत्याः ॥ यत्कर्णमूलमरिकर्षण नोपयायाद्युष्मत्कथा मृडविरिंचसभासु गीता ॥४४॥ त्वक्श्मश्रुरोमनखकेशपिनद्धमंतर्मांसास्थिरक्तकृमिविट्कफपित्तवातम् ॥ जीवच्छवं भजति कांतमतिर्विमूढा या ते पदाब्जमकरंदमजिघ्रती स्त्री ॥४५॥ ॥

गत इति यत्तव वचस्तन्न घटते ॥४०॥ मां भजंतो दुःखं प्राप्नुवंतीत्युक्तस्योत्तरमाह । तव भजनेच्छयांऽग-पृथु-भरत-ययाति-गयादयो राजानो राज्यं त्यक्त्वा वनं गत्वा तव मार्गमाश्रिताः ते किं सीदंति नैवेत्यर्थः ॥४१॥ आत्मसमं क्षत्रियर्षभं भजस्वेत्युक्तस्योत्तरमाह । गुणमंदिरस्य तव साधुवर्णितं लक्ष्मीसेव्यं पादकमलगंधं घ्रात्वा का मरणधर्मिका स्त्री अन्यं पुरुषं सेवेत ॥४२॥ अत इह परत्र च मनोरथपूरकं जगतामधीशं त्वामहं सेवे । यस्त्वं भक्तमात्मसात्करोषि तस्य तव चरणो मे शरणमस्तु ॥४३॥ हे अच्युत, स्त्रीणां गृहेषु खर-वृषभ-श्वान-बिडाल-सेवक-सदृशास्त्वयोक्ता राजानस्तस्या दुर्भगायाः पतयः स्युः । यस्याः कर्णमूलं तव कथा नोपयाति ॥४४॥ हे हरे, त्वत्पादांबुजं हित्वा या स्त्री त्वङ्-मांस-रुधिरास्थि-

१ खरा इव केवलं भारवाहाः । वृषभा इव नित्यं व्यापारक्लिष्टाः । श्वाना इवावमताः । बिडाला इव कृपणा हिंस्राश्च । सेवका इवाज्ञाधारकाः ।

निर्मितं जीवच्छवं पतिबुद्ध्या सेवेत सा मूढा ॥४५॥ अतो हे कमलाक्ष, यद्यपि त्वं निरपेक्षोऽसि तथापि मम ते चरणयोः प्रीतिरस्तु ॥४६॥ हे भगवन्, तव वचो मिथ्या न मन्ये। यतो लोके कन्याया एव क्वचिद्रतिर्भवति। यथा काशिराजकन्यानामंबांऽबालिकांऽबिकानां तिसृणां मध्येंऽबाया एव शाल्वे रतिर्जाता तद्वत् ॥४७॥ परिणीताया अपि जारिण्या मनो नवं नवं पुरुषं गच्छति। अतो बुध उभयलोकभ्रंशकर्त्रीं तां स्त्रियं न बिभृयात् ॥४८॥ श्रीभगवानुवाच ॥ हे साध्वि, त्वद्वचःश्रवणेच्छया मयोपहासः कृतः तथापि यत्त्वया तस्यानुव्याख्यानं कृतं तत्सत्यमेव ॥४९॥ हे भामिनि, त्वं यान् यान् मनोरथान् मच्चरणानुरागादीनिच्छसि ते ते मनोरथा एकांतभक्तायास्ते मोक्षपर्यवसायिनः संति ॥५०॥ यतो वाक्यैश्चाल्यमानाया अपि तव बुद्धिरन्यविषया न जाता। अतस्त्वया पातिव्रत्यं संपादितम् ॥५१॥ ये मोक्षदं मां दंपत्युपभोग्यसुखार्थं भजंति ते मम मायया मोहिता

अस्त्वंबुजाक्ष मम ते चरणानुराग आत्मन्रतस्य मयि चानतिरिक्तदृष्टेः ॥ यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानुकंपा ॥४६॥ नैवालीकमहं मन्ये वचस्ते मधुसूदन ॥ अंबाया इव हि प्रायः कन्यायाः स्याद्रतिः क्वचित् ॥४७॥ व्यूढायाश्चापि पुंश्चल्या मनोऽभ्येति नवं नवम् ॥ बुधोऽसतीं न बिभृयात्तां बिभ्रदुभयच्युतः ॥४८॥ श्रीभगवानुवाच ॥ साध्व्येतच्छ्रोतुकामैस्त्वं राजपुत्रि प्रलंभिता ॥ मयोदितं यदन्वात्थ सर्वं तत्सत्यमेव हि ॥४९॥ यान्यान्कामयसे कामान्मय्यकामाय भामिनि ॥ संति ह्येकांतभक्तायास्तव कल्याणि नित्यदा ॥५०॥ उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे ॥ यद्वाक्यैश्चाल्यमानाया न धीर्मय्यपकर्षिता ॥५१॥ ये मां भजंति दांपत्ये तपसा व्रतचर्यया ॥ कामात्मानोऽपवर्गेशं मोहिता मम मायया ॥५२॥ मां प्राप्य मानिन्यपवर्गसंपदं वांछंति ये संपद एव तत्पतिम् ॥ ते मंदभाग्या निरयेऽपि ये नृणां मात्रात्मकत्वान्निरयः सुसंगमः ॥५३॥ दिष्ट्या गृहेश्वर्यसकृन्मयि त्वया कृताऽनुवृत्तिर्भवमोचनी खलैः ॥ सुदुष्कराऽसौ सुतरां दुराशिषो ह्यसुंभराया निकृतिंजुषः स्त्रियाः ॥५४॥ न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यया स्वविवाहकाले ॥ प्राप्तान्नृपानवगणय्य रहोहरो मे प्रस्थापितो द्विज उपश्रुतसत्कथस्य ॥५५॥ भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ॥ दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते ॥५६॥

॥ ॥ ॥

ज्ञातव्याः ॥५२॥ ये मोक्षप्रदान्मत्तो विषयभोगानिच्छंति। ये विषया नरकतुल्येषु श्वसूकरादिनिकृष्टयोनिष्वपि संति। तेषां पुंसां विषयात्मकत्वान्नरक एव सुसंगमः ॥५३॥ तस्मात् हे गृहेश्वरि, त्वया मयि निष्कामा प्रीतिः कृता एतत्समीचीनं जातम् ॥५४॥ हे मानिनि, अहं गृहेषु त्वत्सदृशीं गृहिणीं न पश्यामि। यया त्वया स्वविवाहकाले प्राप्तान् नृपानविगणय्य गुह्यसंदेशहरो द्विजो मत्समीपं प्रेषितः ॥५५॥ तथा युधि निर्जितस्य स्वभ्रातुर्विरूपकरणं ततोऽनिरुद्धविवाहे द्यूतसभायां बलरामकृतं तद्वधं च स्मरंत्यपि त्वं मद्वियोगभीत्या तद्दुःखं सोढवती किमपि नाब्रवीः। तेन वयं जिताः स्मः ॥५६॥

॥ ॥ ॥ ॥

मत्प्राप्त्यर्थं श्वोभाविनि विवाहे आगंतव्यमिति समये कृते सति मयि च कथंचिदप्राप्तवति सति । एतद्विश्वं शून्यं मत्वा प्राणान् त्यक्ष्यामि इत्येवं निश्चित्य त्वया दूतः प्रेषितः । तत्तव कर्म त्वय्येव तिष्ठतु । न तत्प्रतिकर्तुं शक्यम् ॥५७॥ श्रीशुक उवाच ॥ एवं जगदीश्वरो नर्मगोष्ठीभी रमया सह रेमे ॥५८॥ तथाऽन्यासामपि गृहेषु गृहस्थाश्रमयोग्यान् धर्मानाचरन् गृहस्थ इव रेमे ॥५९॥ इति श्रीम० चू० दश० उत्त० षष्टितमोऽध्यायः ॥६०॥ एकषष्टितमे शौरेः पुत्रपौत्रादिसंततिः । अनिरुद्धविवाहे च रुक्मिणो रामतो बधः ॥१॥ श्रीशुक उवाच ॥ हे राजन्, कृष्णस्य ताः स्त्रिय एकैकशः सर्वप्रकारेण कृष्णसदृशान् दश दश पुत्रान् जनयामासुः ॥१॥ ताः प्रत्येकं स्त्रियः गृहान्न गच्छंतं कृष्णं वीक्ष्य

दूतस्त्वयाऽऽत्मलभने सुविविक्तमंत्रः प्रस्थापितो मयि चिरायति शून्यमेतत् ॥ मत्वा जिहास इदमंगमनन्ययोग्यं तिष्ठेत तत्त्वयि वयं प्रतिनंदयामः ॥५७॥ श्रीशुक उवाच ॥ एवं सौरतसंलापैर्भगवान्जगदीश्वरः ॥ स्वरतो रमया रेमे नरलोकं विडंबयन् ॥५८॥ तथाऽन्यासामपि विभुर्गृहेषु गृहवानिव ॥ आस्थितो गृहमेधीयान्धर्माँल्लोकगुरुर्हरिः ॥५९॥ इति श्रीम० महा० दश० उत्त० कृष्णरुक्मिणीसंवादो नाम षष्टितमोऽध्यायः ॥६०॥ ॥ श्रीशुक उवाच ॥ एकैकशस्ताः कृष्णस्य पुत्रान्दश दशावलाः ॥ अजीजनन्ननवमान्पितुः सर्वात्मसंपदा ॥१॥ गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् ॥ प्रेष्ठं न्यमंसत स्वं स्वं न तत्तत्त्वविदः स्त्रियः ॥२॥ चार्वब्जकोशवदनायतबाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ॥ संमोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन्वनिता विभूम्नः ॥३॥ स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्यस्तु षोडश सहस्रमनंगबाणैर्यस्येंद्रियं विमथितुं करणैर्न शेकुः ॥४॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसंगमलालसाद्यम् ॥५॥ प्रत्युद्गमासनवरार्हणपादशौचतांबूलविश्रमणवीजनगंधमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥६॥ तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः ॥ अष्टौ महिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामि ते ॥७॥ चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान् ॥ सुचारुश्चारुगुप्तश्च भद्रचारुस्तथाऽपरः ॥८॥ चारुचंद्रो विचारुश्च चारुश्च दशमो हरेः ॥ प्रद्युम्नप्रमुखा जाता रुक्मिण्यां नावमाः पितुः ॥९॥ ॥ ॥

कृष्णस्य प्रियतमं स्वं स्वमेव देहं मेनिरे ॥२॥ ताः स्त्रियो भगवतः कमल-कोरक-सदृशेन मुखेन विस्तीर्णबाह्वादिभिश्च मोहिताः सत्यः स्वकीय-हावभावकटाक्षैर्भगवतो मनो वशीकर्तुं न समर्था बभूवुः ॥३॥ षोडशसहस्रमपि ताः पत्न्यो गूढहास्य-कटाक्षादिनोत्पादितैः कामबाणैर्यस्य मनः क्षोभयितुं न शेकुः ॥४॥ ब्रह्मादयोऽपि यस्य पदवीं न विदुस्तं लक्ष्मीपतिं पतिं प्राप्य मुदा भेजुः ॥५॥ दासीशतयुक्ता अपि ताः स्त्रियो विभोः संमुखगमनासनदानादिभिः स्वयं दास्यं चक्रुः ॥६॥ तासां मध्ये याः पूर्वमुक्ता अष्टौ महिष्यस्तत्पुत्रान् ते कथयामि ॥७॥ तत्र प्रद्युम्नः चारुदेष्णः सुदेष्णः चारुदेहः सुचारुः चारुगुप्तः भद्रचारुः ॥८॥ चारुचंद्रः विचारुः चारुश्चैते दश पुत्रा रुक्मिण्यां जाताः ॥९॥ ॥

भानुः सुभानुः स्वर्भानुः प्रभानुः भानुमान् चंद्रभानुः बृहद्भानु अतिभानुः ॥१०॥ श्रीभानुः प्रतिभानुश्चैते दश पुत्राः सत्यभामायां जाताः ॥ सांवः सुमित्रः पुरुजित् शतजित् सहस्रजित् ॥११॥ विजयः चित्रकेतुः वसुमान् द्रविडः क्रतुश्चैते दश जांववत्याः पुत्राः ॥१२॥ वीरः चंद्रः अश्वसेनः चित्रगुः वेगवान् वृषः आमः शंकुः वसुः कुंतिश्चैते दश सत्यायाः पुत्राः ॥१३॥ श्रुतः कविः वृषः वीरः सुवाहुः भद्रः शांतिः दर्शः पूर्णमासः सोमकश्चैते दश कालिंद्याः पुत्राः ॥१४॥ प्रघोषः गात्रवान् सिंहः वलः प्रवलः ऊर्ध्वगः महाशक्तिः सहः ओजः अपराजितश्चैते दश लक्ष्मणायाः पुत्राः ॥१५॥ वृकः हर्षः अनिलः गृध्रः वर्धनः अन्नादः महाशः पावनः वह्निः क्षुधिश्चैते दश मित्रविंदापुत्राः ॥१६॥ संग्रामजित् बृहत्सेनः शूरः प्रहरणः अरिजित् जयः सुभद्रः वामः आयुः सत्यकश्चैते दश भद्रायाः पुत्राः ॥१७॥ षोडशसहस्रस्त्रीणां मध्ये रोहिणी मुख्या। तस्यास्ताम्रतप्ताद्या दश पुत्रा

भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा ॥ चंद्रभानुर्बृहद्भानुरतिभानुस्तथाऽष्टमः ॥१०॥ श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश ॥ सांवः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥११॥ विजयश्चित्रकेतुश्च वसुमान्द्रविडः क्रतुः ॥ जांववत्याः सुता ह्येते सांवाद्याः पितृसंमताः ॥१२॥ वीरश्चंद्रोऽश्वसेनश्च चित्रगुर्वेगवान्वृषः ॥ आमः शंकुर्वसुः श्रीमान्कुंतिर्नाग्नजितेः सुताः ॥१३॥ श्रुतः कविर्वृषो वीरः सुवाहुर्भद्र एकलः ॥ शांतिर्दर्शः पूर्णमासः कालिंद्याः सोमकोऽवरः ॥१४॥ प्रघोषो गात्रवान्सिंहो वलः प्रवल ऊर्ध्वगः ॥ माद्र्याः पुत्रा महाशक्तिः सह ओजोऽपराजितः ॥१५॥ वृको हर्षोऽनिलो गृध्रो वर्धनोऽन्नाद एव च ॥ महाशः पावनो वह्निर्मित्रविंदात्मजाः क्षुधिः ॥१६॥ संग्रामजिद्बृहत्सेनः शूरः प्रहरणोऽरिजित् ॥ जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः ॥१७॥ दीप्तिमांस्ताम्रतप्ताद्या रोहिण्यास्तनया हरेः ॥ प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यां महावलः ॥१८॥ पुत्र्यां तु रुक्मिणो राजन्नाम्ना भोजकटे पुरे ॥ एतेषां पुत्रपौत्राश्च वभूवुः कोटिशो नृप ॥ मातरः कृष्णजातानां सहस्राणि च षोडश ॥१९॥ राजोवाच ॥ कथं रुक्म्यरिपुत्राय प्रादाद्दुहितरं युधि ॥ कृष्णेन परिभूतस्तं हंतुं रंध्रं प्रतीक्षते ॥ एतदाख्याहि मे विद्वन्द्विषोर्वैवाहिकं मिथः ॥२०॥ अनागतमतीतं च वर्तमानमतींद्रियम् ॥ विप्रकृष्टं व्यवहितं सम्यक् पश्यंति योगिनः ॥२१॥ श्रीशुक उवाच ॥ वृतः स्वयंवरे साक्षादनंगोंऽगयुतस्तया ॥ राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥२२॥ ॥ ॥

अभवन्। भोजकटे नगरे रुक्मी प्रद्युम्नाय रुक्मवतीं कन्यां ददौ । तस्यां रुक्मवत्यां प्रद्युम्नान्महावलोऽनिरुद्धोऽभूत्। एतेषां पूर्वोक्तानामन्येषां च शताधिक-षोडशसहस्रस्त्रीषु जातानां कृष्णपुत्राणां पुत्रपौत्राः कोटिशो वभूवुः ॥१८॥१९॥ राजोवाच ॥ रुक्मी शत्रुपुत्राय प्रद्युम्नाय कन्यां कथं प्रादात्। यः कृष्णेन पराभवं प्राप्तः सन् तं हंतु संधिं प्रतीक्षते-स्म। तस्माद्वैरिणोः परस्परं विवाहसंवंधः कथं जातः एतद्वद ॥२०॥ हे ब्रह्मन्, त्वत्सदृशा योगिनो भूतं भविष्यद्वर्तमानं च जानंति ॥२१॥ श्रीशुक उवाच ॥ तया रुक्मवत्या स्वयंवरे स साक्षान्मदनः प्रद्युम्नो वृतः सन् युधि राज्ञो निर्जित्य तां जहार ॥२२॥ ॥ ॥ ॥

तदा रुक्मी पूर्ववैरं स्मरन्नपि स्वसुः प्रियं कुर्वन् सन् भागिनेयाय सुतां प्रादात् ॥२३॥ रुक्मिण्याः कन्यां चारुमतीं कृतवर्मसुतो वलीनामक उपयेमे ॥२४॥ रुक्मी शत्रुभिः सह विवाहसंबंधमधर्मरूपं जानन्नपि यादवैः सह बद्धवैरोऽपि रुक्मिणीप्रियकाम्यया स्वपौत्रीं रोचनां दौहित्रायानिरुद्धाय ददौ ॥२५॥ हे राजन्, तस्मिन् विवाहे राम-कृष्ण-सांब-प्रद्यु-म्नादयो यादवा भोजकटं नाम पुरं जग्मुः ॥२६॥ विवाहे निवृत्ते सति गर्विष्ठाः कालिंगप्रमुखा नृपाः रुक्मिणमूचुः । हे राजन्, अयं रामोऽक्षद्यूतकुशलो नास्ति । तथाप्यस्य तद्व्यसनं महदस्ति अत एतमक्षैर्निर्जय ॥२७॥ इत्युक्तो रुक्मी बलमाहूय तेन सह पाशैः क्रीडितवान् ॥२८॥ तत्र रामः प्रथमं सुवर्णमुद्रिकाणां शतं सहस्रमयुतं च पणमाददे ॥ तं

यद्यप्यनुस्मरन्वैरं रुक्मी कृष्णावमानितः ॥ व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम् ॥२३॥ रुक्मिण्यास्तनयां राजन्कृतवर्मसुतो बली ॥ उपयेमे विशालाक्षीं कन्यां चारुमतीं किल ॥२४॥ दौहित्रायानिरुद्धाय पौत्रीं रुक्म्यददाद्धरेः ॥ रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ॥ जानन्नधर्मं तद्यौनं स्नेहपाशानुबंधनः ॥२५॥ तस्मिन्नभ्युदये राजन्रुक्मिणी रामकेशवौ ॥ पुरं भोजकटं जग्मुः सांबप्रद्युम्नकादयः ॥२६॥ तस्मिन्निवृत्त उद्वाहे कालिंगप्रमुखा नृपाः ॥ दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय ॥२७॥ अनक्षज्ञो ह्ययं राजन्नपि तद्व्यसनं महत् ॥ इत्युक्तो बलमाहूय तेनाक्षै रुक्म्यदीव्यत ॥२८॥ शतं सहस्रमयुतं रामस्तत्राददे पणम् ॥ तं तु रुक्म्यजयत्तत्र कालिंगः प्राहसद्बलम् ॥ दंतान्संदर्शयन्नुच्चै-र्नामृष्यत्तद्धलायुधः ॥२९॥ ततो लक्षं रुक्म्यगृह्णाद् ग्लहं तत्राजयद्बलः ॥ जितवानहमित्याह रुक्मी कैतवमाश्रितः ॥३०॥ मन्युना क्षुभितः श्रीमान्समुद्र इव पर्वणि ॥ जात्याऽरुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे ॥३१॥ तं चापि जितवान्रामो धर्मेण च्छलमाश्रितः ॥ रुक्मी जितं मयाऽत्रेमे वदंतु प्राश्निका इति ॥३२॥ तदाऽब्रवीन्नभोवाणी बलेनैव जितो ग्लहः ॥ धर्मतो वचनेनैव रुक्मी वदति वै मृषा ॥३३॥ तामना-दृत्य वैदर्भो दुष्टराजन्यचोदितः ॥ संकर्षणं परिहसन्बभाषे कालचोदितः ॥३४॥ नैवाक्षकोविदा यूयं गोपाला वनगोचराः ॥ अक्षैर्दीव्यंति राजानो बाणैश्च न भवादृशाः ॥३५॥ रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः ॥ क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि ॥३६॥ ॥

पणं रुक्मी जितवान् । तदा कालिंगो दंतान् संदर्शन् रामं प्राहसत् ॥२९॥ ततो रुक्मी लक्षं पणं जगृहे । तत्र बलो जितवान् । रुक्मी तु अहं जितवानिति मिथ्या प्राह ॥३०॥ तदा मन्युना क्षुभितस्ताम्रलोचनो रामो दशकोटीः पणमाददे ॥३१॥ तं चापि रामो धर्मेण जितवान् । तदा रुक्मी कपटमाश्रित्य मया जितम् । एते कालिंगाद्याः सभासदो ब्रुवंतु ॥३२॥ तदाऽऽकाशवाणी जगाद । रामेण धर्मतः पणो जितः । रुक्मी मृषा वदति ॥३३॥ ततो दुष्टराजन्यप्रेरितो रुक्मी तां वाणीमनादृत्य रामं परिहसन् बभाषे ॥३४॥ अहो वनगोचरा गोपाला यूयमक्षकोविदा नहि । अक्षैर्बाणैश्च राजानः क्रीडंति । भवत्सदृशा न क्रीडंति ॥३५॥ एवं रुक्मिणा तिरस्कृतो राजभिश्चोपहसितो रामः क्रुद्धः सन्

१ तत्कन्याहरणमन्वमोदतेत्यर्थः ।

सभाकोणे स्थितं परिघमुद्यम्य मंगलसभायां तं हत्वा ॥३६॥ कालिंगं दशमे पदे गृहीत्वा तस्य दंतानपातयत् ॥३७॥ अतोऽन्ये राजानो रामपरिघेणार्दिता भिन्नांघ्रि-बाहु-मस्तका रुधिरोक्षिता भूत्वा दुद्रुवुः ॥३८॥ तदा श्याले रुक्मिणि हते सति हरी रुक्मिणीवलयोः स्नेहभंगभयात् साध्वसाधु वा किमपि नाब्रवीत् ॥३९॥ ततो वध्वा सहानिरुद्धं रथं समारोप्य सिद्धकार्या रामकृष्णादयो भोजकटाद्द्वारकां जग्मुः ॥४०॥ इति श्रीमद्भा० चू० दश० उत्त० एकषष्टितमोऽध्यायः ॥६१॥ द्वियुक्षष्टितमे प्रोक्तमनिरुद्धस्य रोधनम् । कन्यया रममाणस्य वाणेन बहुवाहुना ॥१॥ राजोवाच ॥ हे ब्रह्मन्, अनिरुद्धो वाणासुरस्योषां नाम कन्यां कथमुपयेमे । तत्र कृष्णशंकरयोर्महद्युद्धं बभूव । एतत्सर्वं कथयितुमर्हसि ॥१॥

कलिंगराजं तरसा गृहीत्वा दशमे पदे ॥ दंतानपातयत्क्रुद्धो योऽहसद्विवृतैर्द्विजैः ॥३७॥ अन्ये निर्भिन्नवाहूरुशिरसो रुधिरोक्षिताः ॥ राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥३८॥ निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा ॥ रुक्मिणीवलयो राजन्स्नेहभंगभयाद्धरिः ॥३९॥ ततोऽनिरुद्धं सह सूर्यया वरं रथं समारोप्य ययुः कुशस्थलीम् ॥ रामादयो भोजकटाद्दशार्हाः सिद्धाखिलार्था मधुसूदनाश्रयाः ॥४०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे अनिरुद्धविवाहे रुक्मिवधो नामैकषष्टितमोऽध्यायः ॥६१॥ ॥ राजोवाच ॥ बाणस्य तनयामूषामुपयेमे यदूत्तमः ॥ तत्र युद्धमभूद्घोरं हरिशंकरयोर्महत् ॥ एतत्सर्वं महायोगिन्समाख्यातुं त्वमर्हसि ॥१॥ श्रीशुक उवाच ॥ बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः ॥ येन वामनरूपाय हरयेऽदायि मेदिनी ॥२॥ तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ॥ मान्यो वदान्यो धीमांश्च सत्यसंधो दृढव्रतः ॥३॥ शोणिताख्ये पुरे रम्ये स राज्यमकरोत्पुरा ॥ तस्य शंभोः प्रसादेन किंकरा इव तेऽमराः ॥ सहस्रबाहुर्वाद्येन तांडवेऽतोषयन्मृडम् ॥४॥ भगवान्सर्वभूतेशः शरण्यो भक्तवत्सलः ॥ वरेण छंदयामास स तं वव्रे पुराधिपम् ॥५॥ स एकदाऽऽह गिरिशं पार्श्वस्थं वीर्यदुर्मदः ॥ किरीटेनार्कवर्णेन संस्पृशंस्तत्पदांबुजम् ॥६॥ नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् ॥ पुंसामपूर्णकामानां कामपूरामरांघ्रिपम् ॥७॥ दोःसहस्रं त्वया दत्तं परं भाराय मेऽभवत् ॥ त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥८॥ कंडूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् ॥ आद्याऽयां चूर्णयन्नद्रीन्भीतास्तेऽपि प्रदुद्रुवुः ॥९॥ ॥ ॥ ॥

श्रीशुक उवाच ॥ येन बलिना वामनरूपाय हरये भूमिर्दत्ता तस्य बलेः शतं पुत्रा आसन् तेषुमध्ये बाणो ज्येष्ठ आसीत् ॥२॥ स मान्यो दाता बुद्धिमान् शिवभक्तिरतश्च सन् ॥३॥ शोणितनामके नगरे राज्यं चकार । तस्य शिवप्रसादेन सर्वे देवाः किंकरा इवासन् ॥ स च तपसा प्राप्तसहस्रबाहुः सन् तांडवे शिवं तोषयामास ॥४॥ ततो भक्तवत्सलः शिवो वरं वरयेत्याह । तदा स तं शिवं पुरपालकं वव्रे ॥५॥ बाण एकदा पराक्रमेण दुर्मदयुक्तः सन् किरीटेन शिवचरणकमलं स्पृशन् जगाद ॥६॥ हे महादेव, पुंसां मनोरथपूरकं सर्वेश्वरं त्वां नमस्ये ॥७॥ मह्यं भुजसहस्रं त्वया यद्दत्तं तत्केवलं मे भाराय भवति । यतस्त्रिलोक्यां त्वां विनाऽन्यं प्रतियोद्धारं न लभे ॥८॥ हे आद्य, अहं कंडूत्या पूर्णैर्भुजैः पर्वतान् चूर्ण-

यन् दिग्गजान् प्रत्यगच्छम् । तेऽपि भीताः संतो दुद्रुवुः ॥९॥ एवं तद्वचः श्रुत्वा क्रुद्धः शंकर आह । हे मूढ, यदा तव ध्वजो भज्येत तदा त्वद्दर्पघ्नं मत्सदृशेन वलिना सह ते युद्धं भवेत् ॥१०॥ इत्याकर्ण्य वाणो हृष्टः सन् गृहं प्राप्य ध्वजभंगकालं प्रतीक्षन् तस्थौ ॥११॥ तस्योषानाम कन्याऽऽसीत् । सा स्वप्नेऽनिरुद्धेन सह रतिसुखं प्राप ॥१२॥ ततः सा स्वप्ने एव कांतमपश्यंती हे कांत, त्वं क्वासि क्वासि इति वादिनी सती सखीनां मध्ये जागृता भूत्वोत्तस्थौ ॥१३॥ तदा वाणस्य मंत्री कुंभांडस्तत्सुता चित्रलेखा सा तामूषां सखीं पप्रच्छ ॥१४॥ हे सुभ्रूः, त्वं कं मृगयसे । तव मनोरथः कः । हे राजकन्ये, अद्यापि तव पाणिग्रहणकर्तारं पतिमहं न पश्यामि ॥१५॥ ऊषोवाच ॥ हे सखि, मया स्वप्ने

तच्छ्रुत्वा भगवान्क्रुद्धः केतुस्ते भज्यते यदा ॥ त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते ॥१०॥ इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशन्नृप ॥ प्रतीक्षन्गिरिशादेशं स्ववीर्यनशनं कुधीः ॥११॥ तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् ॥ कन्याऽलभत कांतेन प्रागदृष्टश्रुतेन सा ॥१२॥ सा तत्र तमपश्यंती क्वासि कांतेति वादिनी ॥ सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥१३॥ वाणस्य मंत्री कुंभांडश्चित्रलेखा च तत्सुता ॥ सख्यपृच्छत्सखीमूषां कौतूहलसमन्विता ॥१४॥ कं त्वं मृगयसे सुभ्रूः कीदृशस्ते मनोरथः ॥ हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये ॥१५॥ ऊषोवाच ॥ दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः ॥ पीतवासा बृहद्बाहुर्योषितां हृदयंगमः ॥१६॥ तमहं मृगये कांतं पाययित्वाऽधरं मधु ॥ क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥१७॥ चित्रलेखोवाच ॥ व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते ॥ तमानेष्ये नरं यस्ते मनोहर्ता तमादिश ॥१८॥ इत्युक्त्वा देवगंधर्वसिद्धचारणपन्नगान् ॥ दैत्यविद्याधरान्यक्षान्मनुजांश्च यथाऽलिखत् ॥१९॥ मनुजेषु च सा वृष्णीन् शूरमानकदुंदुभिम् ॥ व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता ॥२०॥ अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया ॥ सोऽसावसाविति प्राह स्मयमाना महीपते ॥२१॥ चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ॥ ययौ विहायसा राजन्द्वारकां कृष्णपालिताम् ॥२२॥ तत्र सुप्तं सुपर्यंके प्राद्युम्निं योगमास्थिता ॥ गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥२३॥ ॥ ॥

कश्चित् श्यामः कमलनेत्रः पीतवासा नरश्रेष्ठो दृष्टः ॥१६॥ स मम मधुरमधरामृतं पाययित्वा मां दुःखसमुद्रे क्षिप्त्वा क्वापि गतः । तमहं मृगये ॥१७॥ चित्रलेखोवाच ॥ हे सखि तव दुःखमहं दूरीकरोमि । यस्तव मनोहर्ता स त्रैलोक्ये यदि स्यात्तर्हि तमहमत्रानेष्ये ॥१८॥ इत्युक्त्वा देव-गंधर्व-सिद्ध-चारण-पन्नग-दैत्य-विद्याधर-यक्ष-मनुष्यान् यथावत् पटे लिलेख ॥१९॥ मनुष्याणां मध्ये यादवान् रामकृष्णौ प्रद्युम्नमनिरुद्धं च लिलेख ॥२०॥ अनिरुद्धं लिखितं वीक्ष्य लज्जयाऽधोमुखी सती सोऽसाविति प्राह ॥२१॥ ततश्चित्रलेखा तं कृष्णस्य पौत्रं ज्ञात्वाऽऽकाशमार्गेण द्वारकां गता ॥२२॥ तत्र पर्यंके सुप्तमनिरुद्धं योगमायाबलेन गृहीत्वा शोणितपुरमानीय सख्यै ऊषायै प्रियं दर्शयामास ॥२३॥ ॥

ऊषा तं विलोक्य मुदिताननना सती पुरुषैः प्रेक्षितुमशक्ये स्वगृहे तेनानिरुद्धेन सह रेमे ॥२४॥ ऊषयाऽनिरुद्धो वासः-स्रग्गंध-भोजनादिभिः प्रियैर्वाक्यैः सेवया च पूजितः ॥२५॥ स तया सह रममाणः सन् दिवससमूहान् न बुबुधे ॥२६॥ ततः सेवकास्तां यदुवीरेण भुज्यमानां छादयितुमशक्यैर्हेतुभिर्ज्ञात्वा ॥२७॥ राजानमकथयन् । हे राजन्, तव कन्यायाः कुलदूषणं विरुद्धाचरणं वयं लक्षयामः ॥२८॥ सावधैरस्माभी रक्षितायाः पुरुषैः प्रेक्षयितुमशक्यायास्ते कन्यायाः कुलदूषणं कथं जातं तद्वयं न जानीमः ॥२९॥ तच्छ्रुत्वा बाणो दुःखितः सन् त्वरितं कन्यागृहं गत्वा तत्रानिरुद्धं ददर्श ॥३०॥ तत्र कामात्मजं भुवनैकसुंदरं श्यामं पीतवाससं कुंडलयुक्तम् ॥३१॥ ऊषया सहाक्षैः क्रीडंतं मधुमल्लिकाश्रितां मालां

सा च तं सुंदरवरं विलोक्य मुदितानना ॥ दुष्प्रेक्ष्ये स्वगृहे पुंभी रेमे प्राद्युम्निना समम् ॥२४॥ परार्ध्यवासःस्रग्गंधधूपदीपासनादिभिः ॥ पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयाऽर्चितः ॥२५॥ गूढः कन्यापुरे शश्वत्प्रवृद्धस्नेहया तया ॥ नाहर्गणान्स बुबुधे ऊषयाऽपहृतेंद्रियः ॥२६॥ तां तथा यदुवीरेण भुज्यमानां हतव्रताम् ॥ हेतुभिर्लक्षयांचक्रुराप्रीतां दुरवच्छदैः ॥२७॥ भटा आवेदयांचक्रू राजंस्ते दुहितुर्वयम् ॥ विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥२८॥ अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो ॥ कन्याया दूषणं पुंभिर्दुष्प्रेक्षाया न विद्महे ॥२९॥ ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ॥ त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद्यदूद्वहम् ॥३०॥ कामात्मजं तं भुवनैकसुंदरं श्यामं पिशंगांबरमंबुजेक्षणम् ॥ बृहद्भुजं कुंडलकुंतलत्विषा स्मितावलोकेन च मंडिताननम् ॥३१॥ दीव्यंतमक्षैः प्रिययाऽभिनृम्णया तदंगसंगस्तनकुंकुमस्रजम् ॥ बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥३२॥ स तं प्रविष्टं वृतमाततायिभिर्भटैरनीकैरवलोक्य माधवः ॥ उद्यम्य मौर्वं परिघं व्यवस्थितो यथांऽतको दंडधरो जिघांसया ॥३३॥ जिघृक्षया तान्परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहनत् ॥ ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥३४॥ तं नागपाशैर्बलिनंदनो बली घ्नंतं स्वसैन्यं कुपितो बबंध ह ॥ ऊषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरौदिषीत् ॥३५॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धेऽनिरुद्धबंधो नाम द्विषष्टितमोऽध्यायः ॥६२॥

॥ श्रीशुक उवाच ॥ अपश्यतां चानिरुद्धं तद्बंधूनां च भारत ॥ चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥१॥ ॥

कंठे दधानं तमनिरुद्धं वीक्ष्य विस्मितो बभूव ॥३२॥ ततोऽनिरुद्धः ससैन्यं तं दृष्ट्वा लोहनिर्मितं परिघमुद्यम्य यथा दंडधरोंऽतकस्तिष्ठति तथा तस्थौ ॥३३॥ जेतुमिच्छयाऽऽसमंतात् प्राप्तान् सैनिकान् यथा महावराहः शुनो हंति तथा जघान । ते हन्यमाना भिन्नमस्तकोरुभुजाः संतो भवनाद्विनिर्गत्य दुद्रुवुः ॥३४॥ तदा बाणः कुपितः सन् स्वसैन्यं घ्नंतं तमनिरुद्धं नागपाशैर्बबंध । ततस्तं पतिं बद्धं दृष्ट्वोषा शोकविषादविह्वला भूत्वा रुरोद ॥३५॥ इति श्रीमद्भाग० चू० दश० उत्त० द्विषष्टितमोऽध्यायः ॥६२॥ ॥ त्रियुक्षष्टितमे चाथ बाणयादवसंगरे । स्तुतिर्ज्वरेण रुद्रेण बाणबाहुभिदो हरेः ॥१॥ श्रीशुक उवाच ॥ हे राजन्, द्वारकायामनिरुद्धमपश्यतामत एव शोचतां यादवानामाषाढ-श्रावण-भाद्रपदा-

भ्विनाश्चत्वारो मासा व्यतीयुः ॥१॥ एकदा नारदाद्बद्धस्यानिरुद्धस्य वार्तां तत्कृतं युद्धादिकं कर्म च श्रुत्वा यादवाः शोणितपुरं ययुः ॥२॥ ते प्रद्युम्न-सात्यकि-गद-सांब-सारण-नंदोपनंद-भद्राद्याः ॥३॥ द्वादशाक्षौहिणीसैन्यैः सर्वतोदिशं वाणनगरं रुरुधुः ॥४॥ ततो बाणो भज्यमानपुरोद्यानप्राकारादिकं स्वनगरं वीक्ष्य द्वादशाक्षौहिणीसैन्यं गृहीत्वा युद्धार्थं नगराद्बहिर्ययौ ॥५॥ तदा बाणार्थे शिवः स्वसुताभ्यां प्रमथादिगणैश्च युक्तः सन् वृषभमारुह्य संग्रामे आगत्य रामकृष्णाभ्यां सह युयुधे ॥६॥ तदाऽद्भुतं रोमहर्षणं युद्धमासीत् । तच्च कृष्णशंकरयोः प्रद्युम्नषडाननयोः ॥७॥ कुंभांडकूपकर्णाभ्यां वलस्य । सांबस्य बाणपुत्रेण, सात्यकेर्बाणेन सह युद्धमासीत् ॥८॥ तदा ब्रह्मादयो देवा गंधर्व-मुनि-सिद्ध-चारणा-

नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ॥ प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥२॥ प्रद्युम्नो युयुधानश्च गदः सांबोऽथ सारणः ॥ नंदोपनंदभद्राद्या रामकृष्णानुवर्तिनः ॥३॥ अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतोदिशम् ॥ रुरुधुर्बाणनगरं समंतात्सात्वतर्षभाः ॥४॥ भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ॥ प्रेक्षमाणो रुषाऽऽविष्टस्तुल्यसैन्योऽभिनिर्ययौ ॥५॥ बाणार्थे भगवान्रुद्रः ससुतैः प्रमथैर्वृतः ॥ आरुह्य नंदिवृषभं युयुधे रामकृष्णयोः ॥६॥ आसीत्सुतुमुलं युद्धमद्भुतं रोमहर्षणम् ॥ कृष्णशंकरयो राजन्प्रद्युम्नगुहयोरपि ॥७॥ कुंभांडकूपकर्णाभ्यां बलेन सह संयुगः ॥ सांबस्य बाणपुत्रेण बाणेन सह सात्यकेः ॥८॥ ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः ॥ गंधर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥९॥ शंकरानुचरान् शौरिर्भूतप्रमथगुह्यकान् ॥ डाकिनीर्यातुधानांश्च वेतालान्सविनायकान् ॥१०॥ प्रेतमातृपिशाचांश्च कूष्मांडान्ब्रह्मराक्षसान् ॥ द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ॥११॥ पृथग्विधानि प्रायुंक्त पिनाक्यस्त्राणि शार्ङ्गिणे ॥ प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥१२॥ ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ॥ आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥१३॥ मोहयित्वा तु गिरिशं जृंभणास्त्रेण जृंभितम् ॥ बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥१४॥ स्कंदः प्रद्युम्नबाणौघैरर्द्यमानः समंततः ॥ असृग्विमुंचन्गात्रेभ्यः शिखिनाऽपाक्रमद्रणात् ॥१५॥ कुंभांडः कूपकर्णश्च पेततुर्मुसलार्दितौ ॥ दुद्रुवुस्तदनीकानि हतनाथानि सर्वतः ॥१६॥ विशीर्यमाणं स्वबलं दृष्ट्वा बाणोत्यमर्षणः ॥ कृष्णमभ्यद्रवत्संख्ये रथी हित्वैव सात्यकिम् ॥१७॥ ॥ ॥ ॥

दयश्च विमानैर्युद्धं द्रष्टुमागमन् ॥९॥ ततः श्रीकृष्णः शंकरानुचरान् भूत-प्रमथ-गुह्यक-डाकिनी-प्रेत-पिशाच-ब्रह्मराक्षसादीन् बाणैर्द्रावयामास ॥१०॥११॥ तदा शिवः कृष्णाय पृथग्विधान्यस्त्राणि योजयामास । तानि भगवान् प्रत्यस्त्रैः शमयामास ॥१२॥ ब्रह्मास्त्रस्य ब्रह्मास्त्रम् । वायव्यस्य पार्वतम् । आग्नेयस्य पार्जन्यम् । पाशुपतास्त्रस्य नारायणास्त्रम् ॥१३॥ ततः कृष्णो जृंभणास्त्रेण शिवं मोहयित्वा खड्गगदाबाणैर्बाणस्य सेनां जघान ॥१४॥ स्कंदः प्रद्युम्नबाणैः पीडितः सन् रक्तं विमुंचन् मयूरेण वाहनेन रणादपाक्रमत् ॥१५॥ कुंभांडकूपकर्णौ बलरामस्य मुसलेन पीडितौ संतौ पेततुः । तदा बाणसैन्यानि दुद्रुवुः ॥१६॥ ततो बाणः स्वसैन्यं पलायितं दृष्ट्वा युद्धे सात्यकिं हित्वा कृष्णमभ्यद्रवत् ॥१७॥ ॥

वाणः पंचशतानि धनूंषि युगपदाकृष्यैकैकस्मिन् द्वौ द्वौ शरौ संदधे ॥१८॥ हरिस्तानि धनूंषि युगपच्छित्त्वा सारथिं रथमश्वांश्च हत्वा शंखमपूरयत् ॥१९॥ तदा वाणस्य माता कोटरा नाम्नी पुत्रस्य प्राणरक्षणार्थं नग्ना सती कृष्णस्याग्रेऽवतस्थे ॥२०॥ कृष्णस्तामनिरीक्षमाणस्तिर्यङ्मुखो बभूव । तावच्छिन्नधन्वा विरथश्च स वाणः पुरमाविशत् ॥२१॥ एवं भगवता भूतगणे विद्राविते सति त्रिशिरास्त्रिपाच्छैवो ज्वरो दश दिशो दहन् कृष्णमभ्यधावत् ॥२२॥ अथ कृष्णस्तं ज्वरं दृष्ट्वा शीतज्वरं ससर्ज । ततस्तौ ज्वरौ युयुधाते ॥२३॥ ततो वैष्णवज्वरेण पीडितः शैवो ज्वरो भीतः सन् कृष्णं तुष्टाव ॥२४॥ ज्वर उवाच ॥ हे भगवन्, अनंतशक्तिं ब्रह्मादीनामीशं सर्वात्मानं चैतन्यघनं त्वां नमामि ॥२५॥ कालः दैवं

धनूंष्याकृष्य युगपद्बाणः पंचशतानि वै ॥ एकैकस्मिन्शरौ द्वौ द्वौ संदधे रणदुर्मदः ॥१८॥ तानि चिच्छेद भगवान्धनूंषि युगपद्धरिः ॥ सारथिं रथमश्वांश्च हत्वा शंखमपूरयत् ॥१९॥ तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा ॥ पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥२०॥ ततस्तिर्यङ्मुखो नग्नामनिरीक्षन्गदाग्रजः ॥ बाणश्च तावद्विरथश्छिन्नधन्वाऽविशत्पुरम् ॥२१॥ विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ॥ अभ्यधावत दाशार्हं दहन्निव दिशो दश ॥२२॥ अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥२३॥ माहेश्वरः समाक्रंदन् वैष्णवेन बलार्दितः ॥ अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरो ज्वरः ॥ शरणार्थी हृषीकेशं तुष्टाव प्रयतांजलिः ॥२४॥ ज्वर उवाच ॥ नमामि त्वाऽनंतशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम् ॥ विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिंगं प्रशांतम् ॥२५॥ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ॥ तत्संघातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥२६॥ नानाभावैर्लीलयैवोपपन्नैर्देवान्साधूंल्लोकसेतून्बिभर्षि ॥ हंस्युन्मार्गान्हिंसया वर्तमानान् जन्मैतत्ते भारहाराय भूमेः ॥२७॥ तप्तोऽहं ते तेजसा दुःसहेन शांतोग्रेणात्युल्बणेन ज्वरेण ॥ तावत्तापो देहिनां तेंऽघ्रिमूलं नो सेवेरन्यावदाशानुबद्धाः ॥२८॥ श्रीभगवानुवाच ॥ त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वराद्भयम् ॥ यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥२९॥ इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः ॥ बाणस्तु रथमारूढः प्रागाद्योत्स्यन्जनार्दनम् ॥३०॥ ततो बाहुसहस्रेण नानायुधधरोऽसुरः ॥ मुमोच परमक्रुद्धो बाणांश्चक्रायुधे नृप ॥३१॥ ॥ ॥

कर्म जीवः स्वभावः शब्दादिभूतसूक्ष्माणि शरीरं प्राणः अहंकारः लिंगदेहश्चैषा त्वन्मायाऽस्ति । तस्या निषेधावधिभूतं त्वां भजे ॥२६॥ त्वं मत्स्याद्यवतारैर्देवादीन् पालयसि । दुष्टान् हंसि । एतत्तव जन्म भूमेर्भारहरणायास्ति ॥२७॥ हे विभो, त्वत्सृष्टेन शीतज्वरेण तप्तोऽस्मि । यावत्तवांघ्रिमूलं नो सेवेरन् तावदेव देहिनां तापो युक्तः । त्वत्सेवायां प्रवृत्तानां तु स तापो नोचितः ॥२८॥ श्रीभगवानुवाच ॥ हे त्रिशिरः, तुभ्यं प्रसन्नोऽस्मि । तव मज्ज्वराद्भयमपयातु । य आवयोरिमं संवादं स्मरेत्तस्य त्वया भयं नोत्पादनीयम् ॥२९॥ इत्याकर्ण्य शैवो ज्वरः श्रीकृष्णं प्रणम्य गतः । वाणस्तु तावद्रथमारूढः सन् योद्धुं कृष्णसमीपमाजगाम ॥३०॥ ततो बाणः कृष्णे बाहुसहस्रेण बाणान् मुमोच ॥३१॥ ॥

तदा कृष्णश्चक्रेण वनस्पतेः शाखा इव तस्य बाहूंश्चिच्छेद ॥३२॥ ततो भक्तानुकंपी शिवः कृष्णसमीपमागम्य बभाषे ॥३३॥ श्रीरुद्र उवाच ॥ हे कृष्ण, त्वं परं ब्रह्मासि । त्वं शुद्धचित्तानां स्वतः प्रकाशसे ॥३४॥ अथ विराड्रूपेण स्तौति । यस्य तव नभो नाभिः । अग्निर्मुखम् । अंबु रेतः । द्यौः शीर्षम् । दिशः कर्णौ । भूः पादौ । चंद्रो मनः । अर्को नेत्रे अहं शिवोऽहंकारः । समुद्रो जठरम् । इंद्रादयो लोकपाला बाहवः ॥३५॥ ओषधयो रोमाणि । मेघाः केशाः । ब्रह्मा बुद्धिः । प्रजापतिर्मेढ्रम् । धर्मो हृदयम् । स भवान् लोककल्पः पुरुषोऽस्ति । विराड्रूपस्य तवायमवतारो धर्मरक्षणाय जगतश्च कल्याणाय वर्तते ॥३६॥३७॥ त्वमेक आद्यः पुरुषः शुद्धः स्वप्रकाश-ज्ञान-रूपोऽद्वितीयश्चासि । तथापि सर्व-

तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना ॥ चिच्छेद भगवान्बाहून् शाखा इव वनस्पतेः ॥३२॥ बाहुषु च्छिद्यमानेषु बाणस्य भगवान्भवः ॥ भक्तानुकंप्युपव्रज्य चक्रायुधमभाषत ॥३३॥ श्रीरुद्र उवाच ॥ त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये ॥ यंपश्यंत्यमलात्मान आकाशमिव केवलम् ॥३४॥ नाभिर्नभोऽग्निर्मुखमंबु रेतो द्यौः शीर्षमाशाः श्रुतिरंघ्रिरुर्वी ॥ चंद्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेंद्रः ॥३५॥ रोमाणि यस्यौषधयोंऽबुवाहाः केशा विरिंचो धिषणा विसर्गः ॥ प्रजापतिर्हृदयं यस्य धर्मः स वै भवान्पुरुषो लोककल्पः ॥३६॥ तवावतारोऽय-मकुंठधामन् धर्मस्य गुप्त्यै जगतो भवाय ॥ वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त ॥३७॥ त्वमेक आद्यः पुरुषोऽद्वितीय-स्तुर्यः स्वदृग्घेतुरहेतुरीशः ॥ प्रतीयसेऽथापि यथाविकारं स्वमायया सर्वगुणप्रसिद्ध्यै ॥३८॥ यथैव सूर्यः पिहितश्छायया स्वया छायां च रूपाणिच संचकास्ति ॥ एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥३९॥ यन्मायामोहितधियः पुत्रदारगृहादिषु ॥ उन्मज्जंति निमज्जंति प्रसक्ता वृजिनार्णवे ॥४०॥ देवदत्तमिमं लब्ध्वा नृलोकमजितेंद्रियः ॥ यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवंचकः ॥४१॥ यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ॥ विपर्ययेंद्रियार्थार्थं विषमत्त्यमृतं त्यजन् ॥४२॥ अहं ब्रह्माथ विबुधा मुनयश्चामलाशयाः ॥ सर्वात्मना प्रपन्ना-स्त्वामात्मानं प्रेष्ठमीश्वरम् ॥४३॥ तं त्वाजगत्स्थित्युदयांतहेतुं समं प्रशांतं सुहृदात्मदैवम् ॥ अनन्यमेकं जगदात्मकेतं भवापवर्गाय भजाम देवम् ॥४४॥

विषयप्रकाशनाय स्वमायया देवतिर्यगादिरूपेण प्रतीयसे ॥३८॥ हे भगवन्, यथा सूर्यो मेघेनाच्छादितोऽपि मेघं मेघांतरितान् घटादींश्च प्रकाशयति । एवं त्वं लोकदृष्ट्याऽहंकारेणाच्छादितोऽपि सत्वादीन् गुणान् जीवांश्च प्रकाशयसि ॥३९॥ यन्मायया मोहिता देहिनः पुत्रदारगृहादिषु प्रसक्ताः संतो दुःखसागरे संसारे उन्मज्जंति निमज्जंति ॥४०॥ इमं मनुष्यदेहं लब्ध्वा यस्त्वत्पादौ नाद्रियेत स शोच्यः ॥४१॥ य ईश्वरं त्वां विसृज्य विषयान् सेवते सोऽमृतं त्यक्त्वा विषं भक्षयति ॥४२॥ अतोऽहं ब्रह्मा देवादयश्च त्वां प्रपन्नाः स्मः ॥४३॥ तं जगदुत्पत्तिस्थितिसंहारहेतुमीश्वरं त्वां भवापवर्गाय भजाम ॥४४॥ ॥ ॥ ॥

१ देवादिरूपेणयते । २ स्थावरादिरूपेणयते ।

हे ईश, अयं बाणो मम प्रियोऽस्ति । अतोऽस्य मयाऽभयं दत्तम् । अतो यथा प्रह्लादे त्वया प्रसादः कृतस्तथाऽस्मिन्नपि कार्यः । तेन मया दत्तमभयं संपादितं स्यात् ॥४५॥ श्रीभगवानुवाच ॥ हे भव, त्वं यदात्थ तत्तव प्रियं करवाम । भवता यन्निश्चितं तन्मयाप्यनुमोदितम् ॥४६॥ अयं बाणो मयाप्यवध्योऽस्ति । यतः प्रह्लादाय तव वंशो न वध्य इति मया वरो दत्तः ॥४७॥ तथापि गर्वनाशार्थमस्य बाहवश्छिन्नाः भुवो भारभूतं सैन्यं च नाशितम् ॥४८॥ अस्यावशिष्टाश्चत्वारो भुजा अजरामरा भविष्यंति अयं बाणस्तव पार्षदगणेषु मुख्यो भविष्यति ॥४९॥ इति बाणासुरोऽभयं लब्ध्वा शिरसा कृष्णं प्रणम्योषया सहानिरुद्धं रथमारोप्य कृष्णसमीपमुपानयत् ॥५०॥ ततः कृष्णः सपत्नीकमक्षौहिण्या सेनया परिवृतमनिरुद्धं पुरस्कृत्य रुद्रानुमोदितः सन् द्वारकां ययौ ॥५१॥ स ब्राह्मणादिभिरभिमुखं गत्वा सत्कृतः सन्, ध्वजतोरणैः समलंकृतां सिक्तमार्गचत्वरां स्वराजधानीं

अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्य देव ॥ संपाद्यतां तद्भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥४५॥ श्रीभगवानुवाच ॥ यदात्थ भगवंस्त्वन्नः करवाम प्रियं तव ॥ भवतो यद्व्यवसितं तन्मे साध्वनुमोदितम् ॥४६॥ अवध्योऽयं ममाप्येष वैरोचनिसुतोऽसुरः ॥ प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥४७॥ दर्पोपशमनायास्य प्रवृक्णा बाहवो मया ॥ सूदितं च बलं भूरि यच्च भारायितं भुवः ॥४८॥ चत्वारोऽस्य भुजाः शिष्टा भविष्यंत्यजरामराः ॥ पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुरः ॥४९॥ इति लब्ध्वाऽभयं कृष्णं प्रणम्य शिरसाऽसुरः ॥ प्राद्युम्निं रथमारोप्य सवध्वा समुपानयत् ॥५०॥ अक्षौहिण्या परिवृतं सुवासःसमलंकृतम् ॥ सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥५१॥ स्वराजधानीं समलंकृतां ध्वजैः सतोरणैरुक्षितमार्गचत्वराम् ॥ विवेश शंखानकदुंदुभिस्वनैरभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥५२॥ य एवं कृष्णविजयं शंकरेण च संयुगम् ॥ संस्मरेत्प्रातरुत्थाय न तस्य स्यात्पराजयः ॥५३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धेऽनिरुद्धानयनं नाम त्रिषष्टितमो ध्यायः ॥६३॥ श्रीशुक उवाच ॥ एकदोपवनं राजन् जग्मुर्यदुकुमारकाः ॥ विहर्तुं सांबप्रद्युम्नचारुभानुगदादयः ॥१॥ क्रीडित्वा सुचिरं तत्र विचिन्वंतः पिपासिताः ॥ जलं निरुदके कूपे ददृशुः सत्वमद्भुतम् ॥२॥ कृकलासं गिरिनिभं वीक्ष्य विस्मितमानसाः ॥ तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयाऽन्विताः ॥३॥ चर्मजैस्तांतवैः पाशैर्बद्ध्वा पतितमर्भकाः ॥ नाशकुन्समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥४॥

द्वारकां, शंखानकदुंदुभिस्वनैः सह विवेश ॥५२॥ यः प्रातरुत्थायैवंभूतं श्रीकृष्णविजयं श्रीशंकरेण च सह संयुगं स्मरेत् तस्य पराजयो न स्यात् ॥५३॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे त्रिषष्टितमोऽध्यायः ॥६३॥ ॥ चतुःषष्टितमे कृष्णो नृगं शापादमोचयत् । ब्रह्मस्वहारिदोषोक्त्या राज्ञो द्रष्टानशिक्षयत् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, एकदा सांब-प्रद्युम्न-चारु-भानु-गदादयो यदुकुमारा विहर्तुमुपवनं जग्मुः ॥१॥ तत्र सुचिरं क्रीडित्वा तृषिता जलं विचिन्वंतो जलरहिते कूपेऽद्भुतं जीवं ददृशुः ॥२॥ तं पर्वतसदृशं सरठं वीक्ष्य विस्मिताः संतः कृपया तस्योद्धरणे यत्नं चक्रुः ॥३॥ कूपे पतितं तं चर्ममयैस्तंतुमयैश्च पाशैर्बद्ध्वा यदा कूपाद्बहिर्निष्कासयितुं न शक्तास्तदा कृष्णाय कथ-

भवानपहर्तेति । तच्छ्रुत्वा मे भ्रमो जातः ॥१८॥ तदा द्वावपि विप्रौ मया प्रार्थितौ । हे अप्रतिग्राहिन्, एषाऽस्मै दीयताम् । तव गवां लक्षं दास्यामि । प्रतिग्राहिणमप्येवमवोचम् ॥१९॥ हे द्विजौ, भवंतौ नरके पतंतं मां समुद्धरतम् ॥२०॥ ततः स्वामी गवां लक्षं न गृह्णामीत्युक्त्वा गतः । प्रतिग्राह्यपि अन्यं[1]द्गवामयुतमपि नेच्छामीत्युक्त्वा गां त्यक्त्वा ययौ ॥२१॥ एतस्मिन् धर्मवैगुण्ये जाते सति मरणोत्तरमहं यमदूतैर्यमलोकं नीतः सन् तत्र यमेन पृष्टः ॥२२॥ हे नृप, पूर्वं त्वमशुभं भुंक्ष उत शुभम् । तव दानपुण्यस्य धर्मपुण्यस्य चांतं न पश्यामि ॥२३॥ तदा पूर्वमशुभं भुंज इति मयोक्ते सति स यमः पतेति प्राह । तावत्पतन्नहमात्मानं सरठमद्राक्षम् ॥२४॥ हे केशव, तव दासस्य मे स्मृतिरद्यापि न नष्टा

अनुनीतावुभौ विप्रौ धर्मकृच्छ्रगतेन वै ॥ गवां लक्षं प्रकृष्टानां दास्याम्येषा प्रदीयताम् ॥१९॥ भवंतावनुगृह्णीतां किंकरस्याविजानतः ॥ समुद्धरतं मां कृच्छ्रात्पतंतं निरयेऽशुचौ ॥२०॥ नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् ॥ नान्यद्गवामप्ययुतमिच्छामीत्यपरो ययौ ॥२१॥ एतस्मिन्नंतरे याम्यैर्दूतैर्नीतो यमक्षयम् ॥ यमेन पृष्टस्तत्राहं देवदेव जगत्पते ॥२२॥ पूर्वं त्वमशुभं भुंक्षे उताहो नृपते शुभम् ॥ नांतं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः ॥२३॥ पूर्वं देवाशुभं भुंज इति प्राह पतेति सः ॥ तावदद्राक्षमात्मानं कृकलासं पतन्प्रभो ॥२४॥ ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव ॥ स्मृतिर्नाद्यापि विध्वस्ता भवत्संदर्शनार्थिनः ॥२५॥ स त्वं कथं मम विभोऽक्षिपथः परात्मा योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः ॥ साक्षादधोक्षज उरुव्यसनांधबुद्धेः स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः ॥२६॥ देवदेव जगन्नाथ गोविंद पुरुषोत्तम ॥ नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ॥२७॥ अनुजानीहि मां कृष्ण यांतं देवगतिं प्रभो ॥ यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥२८॥ नमस्ते सर्वभावाय ब्रह्मणेऽनंतशक्तये ॥ कृष्णाय वासुदेवाय योगानां पतये नमः ॥२९॥ इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ॥ अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणाम् ॥३०॥ कृष्णः परिजनं प्राह भगवान्देवकीसुतः ॥ ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥३१॥ दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ॥ तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥३२॥ ॥ ॥

॥२५॥ हेविभो, त्वं योगेश्वरैरपि उपनिषच्चक्षुषा निर्मले हृदि चिंत्योऽसि। स त्वं सरठजन्मदुःखेनांधबुद्धेर्मम नेत्रगोचरो जातोऽसीत्याश्चर्यम् ॥२६॥ हे देवदेव, हे पुरुषोत्तम, हे नारायण, हे कृष्ण ॥२७॥ देवगतिं यांतं मामाज्ञां देहि । कर्मवशेन यत्र क्वापि तिष्ठतो मे मनस्त्वच्चरणकमले रमतु ॥२८॥ हे भगवन्, ब्रह्मणेऽनंतशक्तये कृष्णाय वासुदेवाय तुभ्यं नमः ॥२९॥ इत्युक्त्वा तं परिक्रम्य स्वमुकुटेन पादौ स्पृष्ट्वा कृष्णस्याज्ञां गृहीत्वा विमानमारुह्य स्वर्गं ययौ ॥३०॥ ततः कृष्णो राज्ञः शिक्षयन् स्वजनं प्रत्याह ॥३१॥ भो जनाः । किंचिदपि ब्रह्मस्वं तेजस्विनोऽग्नेरपि दुर्जरं बत । तदा राज्ञां दुर्जरमिति किमु वक्तव्यम् ॥३२॥ ॥ ॥ ॥

१ यल्लक्षं त्वयोक्तं तस्मादन्यदपि गवामयुतं यदि त्वया दत्तं तर्ह्यपि इमां विहाय नेच्छामीत्युक्त्वा ।

किंच । अहं हालाहलं विषं न मन्ये । यतस्तस्य निवृत्त्युपायोऽस्ति । ब्रह्मस्वं हि विषं प्रोक्तम् । अस्य निवृत्त्युपायो नास्ति ॥३३॥ विषं भक्षणकर्तारं हिनस्ति । अग्निरद्भिः शाम्यति । ब्रह्मस्वरूपोऽग्निस्तु समूलं कुलं दहति ॥३४॥ अनुज्ञां विना ब्रह्मस्वं भुक्तं चेत्रिपूरुषं हंति । राजाश्रयतो हठाद्भुक्तं दशपूर्वान् दशापरान् पुरुषान् हंति ॥३५॥ ये राजलक्ष्म्यंधा राजानो ब्रह्मस्वमिच्छंति ते मूढा आत्मपातं न पश्यंति ॥३६॥ हृतवृत्तीनां विप्राणां क्रंदतां सतामश्रुबिंदवो यावतः पांसून् गृह्णंति ॥३७॥ तावतोऽब्दान् ब्रह्मस्वहारिणो राजानस्त-दाश्रिता वा कुंभीपाकेषु पच्यंते ॥३८॥ यः स्वदत्तां वा परदत्तां वा ब्रह्मवृत्तिं हरेत्स षष्टिवर्षसहस्राणि विष्ठायां कृमिर्जायते ॥३९॥ अतो मे ब्रह्मस्वं मा भूत् । नृपास्तद्धनमभि-कांक्ष्य स्वल्पायुषो राज्यभ्रष्टाः पराजिताश्च भवंति ॥४०॥ हे मामकाः, कृतागसमपि विप्रं नैव द्रुह्यत । घ्नंतं बहु शपंतं वा विप्रं नित्यं नमस्कुरुत ॥४१॥ अहं यथा विप्रान् नमामि

नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया ॥ ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिनिधिर्भुवि ॥३३॥ हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति ॥ कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥३४॥ ब्रह्मस्वं दुरनुज्ञातं भुक्तं हंति त्रिपूरुषम् ॥ प्रसह्य तु बलाद्भुक्तं दश पूर्वान्दशापरान् ॥३५॥ राजानो राजलक्ष्म्यंधा नात्मपातं विचक्षते ॥ निरयं येऽभिमन्यंते ब्रह्मस्वं साधु बालिशाः ॥३६॥ गृह्णंति यावतः पांसून्क्रंदतामश्रुबिंदवः ॥ विप्राणां हृतवृत्तीनां वदान्यानां कुटुंबिनाम् ॥३७॥ राजानो राजकुल्याश्च तावतोऽब्दान्निरंकुशाः ॥ कुंभीपाकेषु पच्यंते ब्रह्मदायापहारिणः ॥३८॥ स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः ॥ षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिः ॥३९॥ न मे ब्रह्मधनं भूयाद्यद्गृध्वाल्पायुषो नराः ॥ पराजि-ताश्च्युता राज्याद्भवंत्युद्वेजिनोऽहयः ॥४०॥ विप्रं कृतागसमपि नैव द्रुह्यत मामकाः ॥ घ्नंतं बहु शपंतं वा नमस्कुरुत नित्यशः ॥४१॥ यथाऽहं प्रणमे विप्राननुकालं समाहितः ॥ तथा नमत यूयं च योऽन्यथा मे स दंडभाक् ॥४२॥ ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः ॥ अजानंत-मपि ह्येनं नृगं ब्राह्मणगौरिव ॥४३॥ एवं विश्राव्य भगवान्मुकुंदो द्वारकौकसः ॥ पावनः सर्वलोकानां विवेश निजमंदिरम् ॥४४॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे नृगोपाख्यानं नाम चतुःषष्टितमोऽध्यायः ॥६४॥ श्रीशुक उवाच ॥ बलभद्रः कुरुश्रेष्ठ भगवान्रथमा-स्थितः ॥ सुहृद्दिदृक्षुरुत्कंठः प्रययौ नंदगोकुलम् ॥१॥ परिष्वक्तश्चिरोत्कंठैर्गोपैर्गोपीभिरेव च ॥ रामोऽभिवाद्य पितरावाशीर्भिरभिनंदितः ॥२॥

तथा यूयं नमत । यो न नमेत् स मत्तो दंडभाक् स्यात् ॥४२॥ अपहृतं ब्रह्मस्वं हर्तारमधः पातयति । अजानंतमप्येनं नृगं ब्राह्मणगौरिव ॥४३॥ एवं भगवान् द्वारकावासिनो लोकान्प्रति धर्मरहस्यं श्रावयित्वा निजमंदिरं विवेश ॥४४॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरा० चतुःषष्टितमोऽध्यायः ॥६४॥ ॥ पंचषष्टितमे रामश्चक्रे गोकुल-मागतः । रममाणस्तु गोपीभिः कालिंद्याकर्षणं मदात् ॥१॥ श्रीशुक उवाच । हे राजन्, एकदा बलरामो नंदादिगोपानां दिदृक्षया रथमास्थितः सन् नंदगोकुलं ययौ ॥१॥ ततो गोपगोपीभिरालिंगितो रामो यशोदानंदौ प्रणतवान् । ततस्तावाशिषं दत्वोचतुः ॥२॥ ॥ ॥ ॥

हे दाशार्ह, कृष्णसहितस्त्वं नश्चिरं पाहि । इत्युक्त्वांऽकमारोप्यालिंग्य तं नेत्रोदकैः सिषिचतुः ॥३॥ ततो रामो गोपवृद्धान् विधिवदभिवंद्य कनिष्ठैर्यथावयो यथासख्यं वंदितो बभूव ॥४॥ ततो गोपालान् हास्यहस्तग्रहादिभिः समुपेत्य कुशलं पप्रच्छ । ततः सुखमासीनं विश्रांतं च तं रामं ते गोपाला यादवेषु कुशलं पप्रच्छुः ॥५॥६॥ हे राम, सर्वे बांधवाः कुशलमासते कच्चित् । दारसुतान्विता यूयं नः स्मरथ किम् ॥७॥ किंच । भवद्भिः कंसो हतः सुहृज्जनाः संकटान्मुक्ताः । शत्रून् निर्जित्य यूयं द्वारकामाश्रिता एतद्भद्रं जातम् ॥८॥ ततो गोप्यो हसंत्यो रामं पप्रच्छुः । हे राम, पुरस्त्रीजनवल्लभः कृष्णः सुखमास्ते किम् ॥९॥ स मातापितरौ यशोदानंदौ स्मरति किम् । स मातरं द्रष्टुमत्र सकृदप्यागमिष्यति

चिरं नः पाहि दाशार्ह सानुजो जगदीश्वरः ॥ इत्यारोप्यांकमालिंग्य नेत्रैः सिषिचतुर्जलैः ॥३॥ गोपवृद्धांश्च विधिवद्यविष्ठैरभिवंदितः ॥ यथावयो यथासख्यं यथासंबंधमात्मनः ॥४॥ समुपेत्याथ गोपालान्हास्यहस्तग्रहादिभिः ॥ विश्रांतं सुखमासीनं पप्रच्छुः पर्युपागताः ॥५॥ पृष्टाश्चानामयं स्वेषु प्रेमगद्गदया गिरा ॥ कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधसः ॥६॥ कच्चिन्नो बांधवा राम सर्वे कुशलमासते ॥ कच्चि-त्स्मरथ नो राम यूयं दारसुतान्विताः ॥७॥ दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः ॥ निहत्य निर्जित्य रिपून्दिष्ट्या दुर्गं समाश्रिताः ॥८॥ गोप्यो हसंत्यः पप्रच्छू रामसंदर्शनादृताः ॥ कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥९॥ कच्चित्स्मरति वा बंधून्पितरं मातरं च सः ॥ अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥ अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः ॥१०॥ मातरं पितरं भ्रातॄन्पतीन्पुत्रान्स्वसॄरपि ॥ यदर्थे जहिम दाशार्ह दुस्त्यजान्स्वजनान्प्रभो ॥११॥ ता नः सद्यः परित्यज्य गतः संछिन्नसौहृदः ॥ कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥१२॥ कथं नु गृह्णंत्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः पुरस्त्रियः ॥ गृह्णंति वै चित्रकथस्य सुंदरस्मितावलोकोच्छ्वसितस्मरातुराः ॥१३ किं नस्तत्कथया गोप्यः कथाः कथयतापराः ॥ यात्यस्माभिर्विना कालो यदि तस्य तथैव नः ॥१४॥ इति प्रहसितं शौरेर्जल्पितं चारु वीक्षितम् ॥ गतिं प्रेमपरिष्वंगं स्मरंत्यो रुरुदुः स्त्रियः ॥१५॥ संकर्षणस्ताः कृष्णस्य संदेशैर्हृदयंगमैः ॥ सांत्वयामास भगवान्नानानुनयकोविदः ॥१६॥ द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च ॥ रामः क्षपासु भगवान्गोपीनां रतिमावहन् ॥१७॥ ॥ ॥

किम् । किंच । सोऽस्माकं सेवामनुस्मरति किम् ॥१०॥ हे राम, यदर्थे वयं पतिपुत्रादीन् स्वजनान् त्यक्तवत्यः ॥११॥ ता नः सद्यस्त्यक्त्वा गतः । स्त्रीभिस्तादृशं भाषितं कथं नु न श्रद्धीयेत ॥१२॥ तस्य कृतघ्नस्य वचः पुरस्त्रियः कथं गृह्णंति । अन्या ऊचुः । तस्य सुंदरहास्यावलोकनेन मदनातुरा भूत्वा गृह्णंति ॥१३॥ अन्या ऊचुः । हे गोप्यः, तत्कथया नः किम् । अपराः कथाः कथयत । यथाऽस्माभिर्विना तस्य कालो याति तथैव तेन विनाऽस्माकं च याति । किंतु तस्य सुखेनास्माकं तु दुःखेनेति विशेषः ॥१४॥ एवं कृष्णस्य हास्यं भाषणमवलोकनं गतिं प्रेमालिंगनं च स्मृत्वा गोप्यो रुरुदुः ॥१५॥ तदा रामः कृष्णस्य संदेशैस्ताः सांत्वयामास ॥१६॥ ततो रामो गोकुले श्रीकृष्णक्रीडासमयेऽनुत्पन्नानामतिबा-

लानां च गोपीनां रतिसुखं ददन् चैत्रवैशाखौ द्वौ मासौ तत्रोवास ॥१७॥ स रामो रात्रिषु स्त्रीगणैर्वेष्टितः सन् पूर्णचंद्रकिरणैरुज्ज्वले यमुनोपवने रेमे ॥१८॥ तदा वरुणप्रेषिता सुधया सहोत्पन्ना मदिरा देवी वृक्षकोटरात्पतंती सती स्वगंधेन तद्वनमध्यवासयत् ॥१९॥ बलस्तं गंधमाघ्राय तत्र गतः सन् स्त्रीभिः सह तां मदिरां पपौ ॥२०॥ ततो मदविह्वललोचनः स्त्रीभिर्गीतचरितो रामो वनेषु व्यचरत् ॥२१॥ एककुंडलो वैजयंत्या मालया युक्तो मत्तः स्वेदबिंदुभिर्भूषितं मुखं धारयन् सन् ॥२२॥ जलक्रीडार्थं यमुनामाजुहाव । ततो मत्तोऽयमिति ज्ञात्वा तद्वाक्यमनादृत्यानागतां यमुनां हलाग्रेणाकृष्य क्रोधेनाह ॥२३॥ हे पापे, मयाऽऽहूता त्वं मामवज्ञाय नायासि । अतो हलाग्रेण त्वां शतधा गमयिष्यामि ॥२४॥ हे नृप,

पूर्णचंद्रकलामृष्टे कौमुदीगंधवायुना ॥ यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥१८॥ वरुणप्रेषिता देवी वारुणी वृक्षकोटरात् ॥ पतंती तद्वनं सर्वं स्वगंधेनाध्यवासयत् ॥१९॥ तं गंधं मधुधाराया वायुनोपहृतं बलः ॥ आघ्रायोपगतस्तत्र ललनाभिः समं पपौ ॥ २० ॥ उपगीयमानचरितो वनिताभिर्हलायुधः ॥ वनेषु व्यचरत्क्षीबो मदविह्वललोचनः ॥२१॥ स्रग्व्येककुंडलो मत्तो वैजयंत्या च मालया ॥ बिभ्रत्स्मितमुखांभोजं स्वेदप्रालेयभूषितम् ॥२२॥ स आजुहाव यमुनां जलक्रीडार्थमीश्वरः ॥ निजं वाक्यमनादृत्य मत्त इत्यापगां बलः ॥ अनागतां हलाग्रेण कुपितो विचकर्ष ह ॥२३॥ पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता ॥ नेष्ये त्वां लांगलाग्रेण शतधा कामचारिणीम् ॥२४॥ एवं निर्भर्त्सिता भीता यमुना यदुनंदनम् ॥ उवाच चकिता वाचं पतिता पादयोर्नृप ॥२५॥ राम राम महाबाहो न जाने तव विक्रमम् ॥ यस्यैकांशेन विधृता जगती जगतः पते ॥२६॥ परं भावं भगवतो भगवन्मामजानतीम् ॥ मोक्तुमर्हसि विश्वात्मन्प्रपन्नां भक्तवत्सल ॥२७॥ ततो व्यमुंचद्यमुनां याचितो भगवान्बलः ॥ विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥२८॥ कामं विहृत्य सलिलादुत्तीर्णायासितांबरे ॥ भूषणानि महार्हाणि ददौ कांतिः शुभां स्रजम् ॥२९॥ वसित्वा वाससी नीले मालामामुच्य कांचनीम् ॥ रेजे स्वलंकृतो लिप्तो माहेंद्र इव वारणः ॥३०॥ अद्यापि दृश्यते राजन्यमुना कृष्टवर्त्मना ॥ बलस्यानंतवीर्यस्य वीर्यं सूचयतीव हि ॥३१॥ एवं सर्वा निशा याता एकेव रमतो व्रजे ॥ रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥३२॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे बलदेवविजये यमुनाकर्षणं नाम पंचषष्टितमोऽध्यायः ॥६५॥

एवं निर्भर्त्सिता यमुना भीता कंपिता च सती रामं नत्वा जगाद ॥२५॥ हे राम, तव विक्रममहं न जाने । यस्य तव शेषस्वरूपेण पृथ्वी धृताऽस्ति ॥२६॥ हे भक्तवत्सल, तव वीर्यमजानतीं प्रपन्नां मां मोक्तुमर्हसि ॥२७॥ एवं याचितो रामो यमुनां विसृज्य स्त्रीभिः सह जले क्रीडित्वा बहिर्ययौ ॥२८॥ तदा वरुणप्रेषिता लक्ष्मी देवी तस्मै रामाय नीलांबरे भूषणानि मालां च ददौ ॥२९॥ ततो रामो नीले वस्त्रे परिधाय सुवर्णमालां कंठे निधाय स्रक्चंदनादिभिरलंकृतः सन् शुशुभे ॥३०॥ हे नृप, अद्यापि यमुना हलाकृष्टमार्गेण वहंती सती बलस्य वीर्यं सूचयतीव दृश्यते ॥३१॥ एवं व्रजे रममाणस्य सर्वा निशा एकेव याताः ॥३२॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे पंचषष्टितमोऽध्यायः ॥६५॥

षड्युक्षष्टितमे काशीं गत्वाऽहन् पौंड्रकं हरिः । तन्मित्रं च ततो वृत्तं सुदक्षिणवधादिकम् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, रामे गोकुलं गते सति करूपदेशाधिपतिः पौंड्रकोऽहं वासुदेवोऽस्मीति दूतं कृष्णाय प्राहिणोत् ॥१॥ त्वं वासुदेवो जगत्पतिरवतीर्ण इति मूढैः प्रोत्साहितः सन् आत्मानं कृष्णं मेने ॥२॥ बालैः क्रीडायां नृपत्वेन कल्पितो बालो यथाऽऽत्मानं राजानं मन्यते तद्वत्स आत्मानं वासुदेवं मत्वा कृष्णाय दूतं प्राहिणोत् ॥३॥ दूतस्तु द्वारकामेत्य सभायां स्थितं कृष्णं राजसंदेशं जगाद ॥४॥ अहं वासुदेव एक एवाऽस्मि न चापरः । अतस्त्वं मिथ्याभिधां त्यज ॥५॥ अस्मच्चिह्नानि त्वं मौढ्याद्बिभर्षि तानि त्यक्त्वा मां शरणमेहि । नोचेन्मम युद्धं देहि ॥६॥ श्रीशुक उवाच ॥ एवं तत्

श्रीशुक उवाच ॥ नंदव्रजं गते रामे करूषाधिपतिर्नृप ॥ वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥१॥ त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः ॥ इति प्रस्तोभितो बालैर्मेन आत्मानमच्युतम् ॥२॥ दूतं च प्राहिणोन्मंदः कृष्णायाव्यक्तवर्त्मने ॥ द्वारकायां यथा बालो नृपो बालकृतोऽबुधः ॥३॥ दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम् ॥ कृष्णं कमलपत्राक्षं राजसंदेशमब्रवीत् ॥४॥ वासुदेवोऽवतीर्णोऽहमेक एव न चापरः ॥ भूतानामनुकंपार्थं त्वं तु मिथ्याभिधां त्यज ॥५॥ यानि त्वमस्मच्चिह्नानि मौढ्याद्बिभर्षि सात्वत ॥ त्यक्त्वैहि मां त्वं शरणं नोचे-द्देहि ममाहवम् ॥६॥ श्रीशुक उवाच ॥ कत्थनं तदुपाकर्ण्य पौंड्रकस्याल्पमेधसः ॥ उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा ॥७॥ उवाच दूतं भगवान्परिहासकथामनु ॥ उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥८॥ मुखं तदपिधायाज्ञ कंकगृध्रवटैर्वृतः ॥ शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥९॥ इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरत् ॥ कृष्णोऽपि रथमास्थाय काशीमुपजगाम ह ॥१०॥ पौंड्रकोऽपि तदुद्योगमुप-लभ्य महारथः ॥ अक्षौहिणीभ्यां संयुक्तो निश्चक्राम पुराद्द्रुतम् ॥११॥ तस्य काशिपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृप ॥ अक्षौहिणीभिस्तिसृभि-रपश्यत्पौंड्रकं हरिः ॥१२॥ शंखार्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितम् ॥ बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥१३॥ कौशेयवाससी पीते वसानं गरुडध्वजम् ॥ अमूल्यमौल्याभरणं स्फुरन्मकरकुंडलम् ॥१४॥ ॥ ॥ ॥

पौंड्रकस्य कत्थनं श्रुत्वोग्रसेनादयः सभ्या उच्चैर्जहसुः ॥७॥ ततः सभायां परिहासकथानंतरं दूताग्रे पौंड्रकंप्रति कृष्ण आह । हे मूढ, पौंड्रक, मच्चिह्नानि सुदर्शनादीनि युद्धे त्वयि प्रक्षेप्स्यामि ॥८॥ हे अज्ञ, युद्धे मया हतस्त्वं कंक-गृध्र-वटैर्वेष्टितो भूत्वा शुनां शरणं भविष्यसि ॥९॥ ततो दूतस्तं सर्वं संदेशं पौंड्रकाय कथयामास । कृष्णोऽपि रथमास्थाय काशीं जगाम ॥१०॥ तदा पौंड्रकः कृष्णस्योद्योगं ज्ञात्वा द्वाभ्यामक्षौहिणीभ्यां युक्तः सन् युद्धार्थं पुराद्बहिर्निश्चक्राम ॥११॥ तस्य मित्रं काशिपतिः स तत्साहाय्यार्थं त्रिभिरक्षौहिणीभिः सहान्वयात् । कृष्णश्च पौंड्रकमपश्यत् ॥१२॥ तदा हरिः शंख-चक्र-गदा-शार्ङ्ग-युक्तं कौस्तुभवनमालाभ्यां भूषितम् ॥१३॥ पीतवाससं कृत्रिमगरुडध्वजं स्फुरन्मकरकुंडलम् ॥१४॥

१ पौंड्रकस्य तदा मित्रपुरे काश्यामवस्थानात् ।

एतादृशं कृत्रिमवेषेण स्वसदृशं पौंड्रकं दृष्ट्वाऽत्यंतं जहास ॥१५॥ तदा शत्रवः शूल-गदा-परिघ-शक्त्यृष्टि-प्रास-तोमरासि-बाणैः कृष्णं प्राहरन् ॥१६॥ कृष्णस्तु पौंड्रककाशिराजयोर्गजरथाश्वपत्तियुक्तं सैन्यं गदासिचक्रेषुभिः पीडयामास ॥१७॥ तदा रणस्थानं चक्रेण खंडितैः रथाश्वगजपत्तिभिः कल्पांतरुद्रस्य क्रीडास्थानमिव रेजे ॥१८॥ ततः कृष्णः पौंड्रकमाह । हे पौंड्रक, दूतवाक्येन भवान् यन्मामाह तानि ममास्त्राणि त्वद्वधार्थं त्वयि प्रक्षेप्स्यामि ॥१९॥ त्वया च मृषा धृतं मेऽभिधानं त्याजयिष्ये । किंच । अहं यदि युद्धं नेच्छामि तर्हि ते शरणं व्रजामि ॥२०॥ इत्युक्त्वा तीक्ष्णबाणैः पौंड्रकं विरथीकृत्य चक्रेण तच्छिरो जहार ॥२१॥ ततः काशिपतेः शिरो बाणैश्छित्वा काशिपुर्यां पातयामास ॥२२॥

दृष्ट्वा तमात्मनस्तुल्यवेषं कृत्रिममास्थितम् ॥ यथा नटं रंगगतं विजहास भृशं हरिः ॥१५॥ शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः ॥ असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम् ॥१६॥ कृष्णस्तु तत्पौंड्रककाशिराजयोर्बलं गजस्यंदनवाजिपत्तिमत् ॥ गदासिचक्रेषुभिरार्दयद्भृशं यथा युगांते हुतभुक्पृथक्प्रजाः ॥१७॥ आयोधनं तद्रथवाजिकुंजरद्विपत्खरोष्ट्रैररिणाऽवखंडितैः ॥ बभौ चितं मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्वणम् ॥१८॥ अथाह पौंड्रकं शौरिर्भोभो पौंड्रक यद्भवान् ॥ दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते ॥१९॥ त्याजयिष्येऽभिधानं मे यत्त्वयाऽज्ञ मृषा धृतम् ॥ व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥२०॥ इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौंड्रकम् ॥ शिरोऽवृश्चद्रथांगेन वज्रेणेंद्रो यथा गिरेः ॥२१॥ तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः ॥ न्यपातयत्काशिपुर्यां पद्मकोशमिवानिलः ॥२२॥ एवं मत्सरिणं हत्वा पौंड्रकं ससखं हरिः ॥ द्वारकामाविशत्सिद्धैर्गीयमानकथामृतः ॥२३॥ स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबंधनः ॥ बिभ्राणश्च हरे राजन्स्वरूपं तन्मयोऽभवत् ॥२४॥ शिरः पतितमालोक्य राजद्वारे सकुंडलम् ॥ किमिदं कस्य वा वक्रमिति संशयिरे जनाः ॥२५॥ राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबांधवाः ॥ पौराश्च हा हता राजन्नाथ नाथेति प्रारुदन् ॥२६॥ सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः ॥ निहत्य पितृहंतारं यास्याम्यपचितिं पितुः ॥२७॥ इत्यात्मनाऽभिसंधाय सोपाध्यायो महेश्वरम् ॥ सुदक्षिणोऽर्चयामास परमेण समाधिना ॥२८॥ प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद्भवः ॥ पितृहंतृवधोपायं स वव्रे वरमीप्सितम् ॥२९॥ ॥ ॥

हरिरेवं ससखं पौंड्रकं हत्वा सिद्धैर्गीयमानकथामृतो द्वारकां प्रविवेश ॥२३॥ हे राजन्, स पौंड्रको भगवद्ध्यानेन नष्टसंसारबंधनो हरेः स्वरूपं बिभ्राणश्च सन् अंते तन्मयोऽभवत् ॥२४॥ ततः काश्यां राजद्वारे सकुंडलं पतितं काशिपतेः शिर आलोक्य जनाः किमिदं कस्य वा वक्रमिति संशयं प्रापुः ॥२५॥ तदा काशिपतेः शिर इति ज्ञात्वा तत्स्त्रियः पुत्रबांधवाश्च हा हता इत्युक्त्वा प्रारुदन् ॥२६॥ तस्य सुतः सुदक्षिणः पितुरुत्तरक्रियां कृत्वा पितृहंतारं निहत्य पितुर्ऋणान्मोक्षं प्राप्स्ये ॥२७॥ इति बुद्ध्या निश्चित्य सोपाध्यायः सुदक्षिणः शिवमाराधयामास ॥२८॥ तदा शिवः प्रीतः सन् तस्मै वरं वृणीष्वेत्युक्तवान् । स पितृहन्तृवधोपायं वरं वव्रे ॥२९॥ ॥ ॥

तदा शिव आह । हे सुदक्षिण, त्वं ब्राह्मणैः सहाभिचारविधानेन दक्षिणाग्निं परिचर । स चाग्निः प्रमथगणैर्वृतः सन् ब्राह्मणभक्तिरहिते पुरुषे प्रयोजितश्चेत्तत्र संकल्पं साधयिष्यति ॥३०॥ इत्यादिष्टः सुदक्षिणोऽभिचारविधानेन दक्षिणाग्निं सेवितवान् ॥३१॥ ततः कुंडान्मूर्तिमानतिभयंकरस्तप्तताम्रशिखाश्मश्रुरग्निरुत्थितः ॥३२॥ स उग्रदंष्ट्रः क्रूरमुखो जिह्वया सृक्किणी आलिहन् नग्नस्त्रिशूलं विधुन्वन् ॥३३॥ तालप्रमाणाभ्यां पद्भ्यां महीं कंपयन् दिशः प्रदहंश्च द्वारकां ययौ ॥३४॥ तमायांतं विलोक्य सर्वे द्वारकौकसस्त्रासं प्रापुः ॥३५॥ ततस्ते भयातुराः संतः सभायामक्षैः क्रीडंतं भगवंतमाहुः । हे त्रिलोकेश, पुरं प्रदहतोऽग्नेः सकाशात्त्राहि त्राहि ॥३६॥ तदा भगवान् स्वानां भयं दृष्ट्वा प्रहस्य, यूयं मा भैष्ट, अहं

दक्षिणाग्निं परिचर ब्राह्मणैः सममृत्विजम् ॥ अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥३०॥ साधयिष्यति संकल्पमब्रह्मण्ये प्रयोजितः ॥ इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन्व्रती ॥३१॥ ततोऽग्निरुत्थितः कुंडान्मूर्तिमानतिभीषणः ॥ तप्तताम्रशिखाश्मश्रुरंगारोद्गारिलोचनः ॥३२॥ दंष्ट्रोग्रभ्रुकुटीदंडकठोरास्यः स्वजिह्वया ॥ आलिहन्सृक्किणी नग्नो विधुन्वंस्त्रिशिखं ज्वलत् ॥३३॥ पद्भ्यां तालप्रमाणाभ्यां कंपयन्नवनीतलम् ॥ सोऽभ्यधावद्वृतो भूतैर्द्वारकां प्रदहन्दिशः ॥३४॥ तमाभिचारदहनमायातं द्वारकौकसः ॥ विलोक्य तत्रसुः सर्वे वनदाहे मृगा यथा ॥३५॥ अक्षैः सभायां क्रीडंतं भगवंतं भयातुराः ॥ त्राहि त्राहि त्रिलोकेश वह्नेः प्रदहतः पुरम् ॥३६॥ श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च साध्वसम् ॥ शरण्यः संप्रहस्याह माभैष्टेत्यविताऽस्म्यहम् ॥३७॥ सर्वस्यांतर्बहिः साक्षी कृत्यां माहेश्वरीं विभुः ॥ विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥३८॥ तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयाऽनलप्रभम् ॥ स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुंदास्त्रमथाग्निमार्दयत् ॥३९॥ कृत्यानलः प्रतिहतः स रथांगपाणेरस्त्रौजसा स नृप भग्नमुखो निवृत्तः ॥ वाराणसीं परिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत्स्वकृतोऽभिचारः ॥४०॥ चक्रं च विष्णोस्तदनुप्रविष्टं वाराणसीं साट्टसभालयापणाम् ॥ सगोपुराट्टालककोष्ठसंकुलां सकोशहस्त्यश्वरथान्नशालाम् ॥४१॥ दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम् ॥ भूयः पार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः ॥४२॥ य एवं श्रावयेन्मर्त्य उत्तमश्लोकविक्रमम् ॥ समाहितो वा शृणुयात्सर्वपापैः प्रमुच्यते ॥४३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे पौंड्रकादिवधो नाम षट्षष्टितमोऽध्यायः ॥६६॥

रक्षिष्यामीत्याह ॥३७॥ सर्वस्यांतर्बहिःसाक्षी कृष्णस्तां माहेश्वरीं कृत्यां ज्ञात्वा तन्नाशार्थं पार्श्वस्थं चक्रमादिशत् ॥३८॥ तत्सूर्यकोटिसदृशं प्रलयाग्निप्रभं सुदर्शनं स्वतेजसा तं कृत्याग्निं पीडयामास ॥३९॥ तदा सुदर्शनेन ताडितः स कृत्याग्निर्भग्नमुखो भूत्वा निवृत्तः सन् काश्यां गत्वा ऋत्विग्भिः सहितं सुदक्षिणं समदहत् ॥४०॥ तदनुप्रविष्टं सुदर्शनं च सभा-गोपुर-कोष्ठादियुक्तां कोश-हस्त्यश्व-रथान्नशालासहिताम् ॥४१॥ सर्वां वाराणसीं दग्ध्वा भूयः कृष्णस्य पार्श्वमागत्य स्थितम् ॥४२॥ य एनमुत्तमश्लोकविक्रमं श्रावयेच्छृणुयाद्वा स सर्वैः पापैः प्रमुच्यते ॥४३॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे षट्षष्टितमोऽध्यायः ॥६६॥ ॥ ॥ ॥

सप्तषष्टितमे रामो गिरौ रैवतके मदात् । स्वैरं युवतिभिः क्रीडन्नवधीद्द्विविदं खलम् ॥१॥ राजोवाच ॥ हे भगवन्, अहं भूयः अद्भुतकर्मणो रामस्यान्यच्चरितं श्रोतुमिच्छामि ॥१॥ श्रीशुक उवाच ॥ हे राजन्, नरकस्य सखा द्विविदो नाम वानर आसीत् ॥२॥ स भौमासुरस्य सख्युरानृण्यं कुर्वन् राष्ट्रनाशार्थं पुर-ग्रामाकर-गोष्ठान् ददाह ॥३॥ क्वचिच्छैलानुत्पाट्य तैर्देशान् समचूर्णयत् । तत्रापि यत्र श्रीहरिरास्ते तानानर्तान् सुतरामेव समचूर्णयत् ॥४॥ कदाचित्समुद्रमध्यस्थः सन् दोर्भ्यां तज्जलमुद्धृत्य तीरे स्थितान् देशान् प्लावयामास ॥५॥ तथा ऋषिमुख्यानामाश्रमान् भग्नवनस्पतीन् कृत्वा तेषामग्नीन् विष्ठामूत्रैर्दूषयामास ॥६॥ तथा पुरुषान् स्त्रीश्च गिरिगुहासु निक्षिप्य द्वारं शैलैराच्छादयत् ॥७॥ एवं

॥ राजोवाच ॥ भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः ॥ अनंतस्याप्रमेयस्य यदन्यत्कृतवान्प्रभुः ॥१॥ श्रीशुक उवाच ॥ नरकस्य[1] सखा कश्चिद्द्विविदो नाम वानरः ॥ सुग्रीवसचिवः सोऽथ भ्राता मैंदस्य वीर्यवान् ॥२॥ सख्युः सोऽपचितिं कुर्वन्वानरो राष्ट्रविप्लवम् ॥ पुरग्रामाकरान्घोषानदहद्वह्निमुत्सृजन् ॥३॥ क्वचित्स शैलानुत्पाट्य तैर्देशान्समचूर्णयत् ॥ आनर्तान्सुतरामेव यत्रास्तेऽमित्रहा हरिः ॥४॥ क्वचित्समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम् ॥ देशान्नागायुतप्राणो वेलाकूलानमज्जयत् ॥५॥ आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् ॥ अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान्खलः ॥६॥ पुरुषान्योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः ॥ निक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीटकम् ॥७॥ एवं देशान्विप्रकुर्वन्दूषयंश्च कुलस्त्रियः ॥ श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥८॥ तत्रापश्यद्यदुपतिं रामं पुष्करमालिनम् ॥ सुदर्शनीयसर्वांगं ललनायूथमध्यगम् ॥९॥ गायंतं वारुणीं पीत्वा मदविह्वललोचनम् ॥ विभ्राजमानं वपुषा प्रभिन्नमिव वारणम् ॥१०॥ दुष्टः शाखामृगः शाखामारूढः कंपयन्द्रुमान् ॥ चक्रे किलकिलाशब्दमात्मानं संप्रदर्शयन् ॥११॥ तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः ॥ हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः ॥१२॥ ता हेलयामास कपिर्भ्रूक्षेपैः संमुखादिभिः ॥ दर्शयन्स्वगुदं तासां रामस्य च निरीक्षतः ॥१३॥ तं ग्राव्णा प्राहरत्क्रुद्धो बलः प्रहरतां वरः ॥ स वंचयित्वा ग्रावाणं मदिराकलशं कपिः ॥१४॥ ॥ ॥ ॥

देशेषूपद्रवं कुर्वन् स्त्रीश्च दूषयन् सुंदरं गीतं श्रुत्वा रैवतकं पर्वतं ययौ ॥८॥ तत्र स्त्रीणां मध्ये स्थितं कमलमालिनं रामं ॥९॥ वारुणीं मदिरां पीत्वा गायंतं च दृष्ट्वा ॥१०॥ दुष्टो वानरो वृक्षशाखामारुह्य द्रुमान् कंपयन् देहं दर्शयन् किलकिलाशब्दं चक्रे ॥११॥ ततस्तरुण्यः स्त्रियस्तस्य कपेर्धार्ष्ट्यं वीक्ष्य विजहसुः ॥१२॥ स कपिः पश्यंतं राममनादृत्य तासां स्वगुदं दर्शयन् भ्रूक्षेपस्ता हेलयामास ॥१३॥ ततो बलः क्रुद्धः सन् ग्राव्णा तं प्राहरत् । स कपिस्तं ग्रावाणं वंचयित्वा रामस्य मदिराकलशं गृहीत्वा ॥१४॥ ॥

[1] नरकस्य सखेति रामकृष्णाभ्यां सह वैरे कारणमुक्तम् ।

रामं कोपयन् योषितां वासांसि पाटितवान् ॥१५॥ एवं तस्य कपेरौद्धत्यं तदुपद्रुतान् देशांश्च दृष्ट्वा रामः क्रुद्धो भूत्वा तं हंतुं मुसलं हलं चाददे ॥१६॥ द्विविदोऽपि पाणिना शालं वृक्षमुत्पाट्य तेन रामं मूर्धनि ताडयामास ॥१७॥ रामो मूर्ध्नि पतंतं वृक्षं गृहीत्वा तं कपिं मुसलेन जघान ॥१८॥ तदा कपिर्मुसलताडितमस्तकावयवोऽपि तं प्रहारमगणयन् मस्तकान्निःसृतया रक्तधारया रेजे ॥१९॥ ततोऽन्येन वृक्षेण रामं जघान । रामस्तं वृक्षं शतधाऽच्छिनत् ॥२०॥ एवं पुनः पुनर्वृक्षेण रामं जघान । रामस्तान् सर्वान् वृक्षान् चिच्छेद ॥२१॥ एवं युध्यन् द्विविदः सर्वतो वृक्षानाकृष्य वनं निर्वृक्षं चकार ॥२२॥ ततः कपिर्बलरामोपरि शिलावर्षं चकार । बलस्तत्सर्वं चूर्णयामास ॥२३॥ ततः कपीश्वरो मुष्टिभ्यां

गृहीत्वा हेलयामास धूर्तस्तं कोपयन्हसन् ॥ निर्भिद्य कलशं दुष्टो वासांस्यास्फालयद्बलम् ॥१५॥ कदर्थीकृत्य बलवान्विप्रचक्रे मदोद्धतः ॥ तं तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् ॥ क्रुद्धो मुसलमादत्त हलं चारिजिघांसया ॥१६॥ द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना ॥ अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत् ॥१७॥ तं तु संकर्षणो मूर्ध्नि पतंतमचलो यथा ॥ प्रतिजग्राह बलवान्सुनंदेनाहनच्च तम् ॥१८॥ मुसलाहतमस्तिष्को विरेजे रक्तधारया ॥ गिरिर्यथा गैरिकया प्रहारं नानुचिंतयन् ॥१९॥ पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा ॥ तेनाहनत्सुसंक्रुद्धस्तं बलः शतधाऽच्छिनत् ॥२०॥ ततोऽन्येन रुषा जघ्ने तं चापि शतधाऽच्छिनत् ॥२१॥ एवं युध्यन्भगवता भग्ने भग्ने पुनः पुनः ॥ आकृष्य सर्वतो वृक्षान्निर्वृक्षमकरोद्वनम् ॥२२॥ ततोऽमुंचच्छिलावर्षं बलस्योपर्यमर्षितः ॥ तत्सर्वं चूर्णयामास लीलया मुसलायुधः ॥२३॥ स बाहू तालसंकाशौ मुष्टीकृत्य कपीश्वरः ॥ आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत् ॥२४॥ यादवेंद्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललांगले ॥ जत्रावभ्यर्दयत्क्रुद्धः सोऽपतद्रुधिरं वमन् ॥२५॥ चकंपे तेन पतता सटंकः सवनस्पतिः ॥ पर्वतः कुरुशार्दूल वायुना नौरिवांभसि ॥२६॥ जयशब्दो नमःशब्दः साधुसाध्विति चांबरे ॥ सुरसिद्धमुनींद्राणामासीत्कुसुमवर्षिणाम् ॥२७॥ एवं निहत्य द्विविदं जगद्व्यतिकरावहम् ॥ संस्तूयमानो भगवान् जनैः स्वपुरमाविशत् ॥२८॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे द्विविदवधो नाम सप्तषष्टितमोऽध्यायः ॥६७॥ श्रीशुक उवाच ॥ दुर्योधनसुतां राजन्लक्ष्मणां समितिंजयः ॥ स्वयंवरस्थामहरत्सांबो जांबवतीसुतः ॥१॥ ॥ ॥

रामवक्षसि ताडयामास ॥२४॥ रामोऽपि क्रुद्धः सन् हलमुसले त्यक्त्वा हस्ताभ्यां तस्य कंठबाहुमूलेऽभ्यर्दयत् । स रक्तं वमन् पपात ॥२५॥ तदा पतता तेन वृक्षसहितः स पर्वतो वायुना नौरिव चकंपे ॥२६॥ तदाऽऽकाशाद्रामोपरि पुष्पवृष्टिं कुर्वतां देव-सिद्धऋषीणां जयशब्दो नमःशब्दश्चाभूत् ॥२७॥ एवं जगतो नाशकरं द्विविदं हत्वा जनैः स्तूयमानो रामो द्वारकामाविशत् ॥२८॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे सप्तषष्टितमोऽध्यायः ॥६७॥ अष्टषष्टितमे सांबे निरुद्धे कौरवैर्युधि । तद्विमोक्षाय रामेण गजाह्वयविकर्षणम् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, एकदा दुर्योधनसुतां लक्ष्मणां स्वयंवरस्थां सांबो जहार ॥१॥ ॥ ॥ ॥

तदा कौरवाः क्रुद्धाः संत ऊचुः । अयं वालो दुर्विनीतः अस्मान् तुच्छीकृत्यानिच्छंतीं कन्यां वलादहरत् ॥२॥ अत इमं वध्नीत । यादवा नः किं करिष्यंति । येऽस्मद्दत्तां महीं भुंजते ॥३॥ वद्धं पुत्रं श्रुत्वा यादवा यद्यत्रागमिष्यंति तर्हि भग्नदर्पाः संतः शांतिं प्राप्स्यंति ॥४॥ एवं विचार्य भीष्मसहिताः कर्ण-शल-भूरि-यज्ञकेतु-सुयोधनाः सांवं वद्धुमारेभिरे ॥५॥ तदा सांवोऽनुधावतस्तान् दृष्ट्वा धनुः प्रगृह्य सिंह इवैकलस्तस्थौ ॥६॥ ते कौरवास्तिष्ठतिष्ठेति भापमाणाः सांवसमीपमेत्य वाणैरवाकिरन् ॥७॥ हे राजन्, भगवतोऽर्भकः सांवः कुरुवाणैर्विद्धोऽपि नाकंपत ॥८॥ किंतु सुंदरं धनुर्विस्फूर्ज्य कर्णादीन् षड्रथान् पृथक् षड्भिः षड्भिर्वाणैर्युगपद्विव्याध ॥९॥ तदाह । चतुर्भिश्चतुर्भिश्चतुरो वाहान् एकैकेन सार-

कौरवाः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः ॥ कदर्थीकृत्य नः कन्यामकामामहरद्बलात् ॥२॥ वध्नीतेमं दुर्विनीतं किं करिष्यंति वृष्णयः ॥ येऽस्मत्प्रसादोपचितां दत्तां नो भुंजते महीम् ॥३॥ निगृहीतं सुतं श्रुत्वा यद्येष्यंतीह वृष्णयः ॥ भग्नदर्पाः शमं यांति प्राणा इव सुसंयताः ॥४॥ इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः ॥ सांवमारेभिरे वद्धुं कुरुवृद्धानुमोदिताः ॥५॥ दृष्ट्वाऽनुधावतः सांवो धार्तराष्ट्रान्महारथः ॥ प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥६॥ तं ते जिघृक्षवः क्रुद्धास्तिष्ठतिष्ठेति भाषिणः ॥ आसाद्य धन्विनो वाणैः कर्णाग्रण्यः समाकिरन् ॥७॥ सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनंदनः ॥ नामृष्यत्तदचिंत्यार्भः सिंहः क्षुद्रमृगैरिव ॥८॥ विस्फूर्ज्य रुचिरं चापं सर्वान्विव्याध सायकैः ॥ कर्णादीन्षड्रथान्वीरस्तावद्भिर्युगपत्पृथक् ॥९॥ चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन् ॥ रथिनश्च महेष्वासांस्तस्य तत्तेऽभ्यपूजयन् ॥१०॥ तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् ॥ एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनम् ॥११॥ तं वद्ध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि ॥ कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन् ॥१२॥ तच्छ्रुत्वा नारदोक्तेन राजन्संजातमन्यवः ॥ कुरून्प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥१३॥ सांत्वयित्वा तु तान्रामः सन्नद्धान्वृष्णिपुंगवान् ॥ नैच्छत्कुरूणां वृष्णीनां कलिं कलिमलापहः ॥१४॥ जगाम हास्तिनपुरं रथेनादित्यवर्चसा ॥ ब्राह्मणैः कुलवृद्धैश्च वृतश्चंद्र इव ग्रहैः ॥१५॥ गत्वा गजाह्वयं रामो वाह्योपवनमास्थितः ॥ उद्धवं प्रेषयामास धृतराष्ट्रं वुभुत्सया ॥१६॥

थीन् रथिनश्च जघान । ते षड्वीरास्तस्य तत्कर्म संमानितवंतः ॥१०॥ ततस्ते चत्वारो वीराः सांवस्य चतुरो हयान् जघ्नुः । एकः सारथिं जघान । अन्यो धनुश्चिच्छेद ॥११॥ एवं कौरवास्तं सांवं विरथीकृत्य वद्ध्वा तं दुर्योधनस्य कन्यां च गृहीत्वा जयिनः संतो हस्तिनापुरं विविशुः ॥१२॥ ततो यादवा नारदात् सांववंधनवार्ता श्रुत्वा क्रुद्धाः संतः कुरून्प्रति जेतुमुद्योगं चक्रुः ॥१३॥ तदा रामः कुरूणां वृष्णीनां च कलहमनिच्छन् युद्धाय कृतोद्यमान् तान् सांत्वयित्वा ॥१४॥ स्वयं ब्राह्मणैः कुलवृद्धैश्च सह रथेन हस्तिनापुरं जगाम ॥१५॥ स हस्तिनापुरसमीपं गत्वोपवनमास्थितः सन् धृतराष्ट्रं प्रत्यभिप्रायजिज्ञासया उद्धवं प्रेषयामास ॥१६॥ ॥ ॥ ॥

स उद्धवस्तत्र गत्वा धृतराष्ट्र-भीष्म-द्रोणादीन् नत्वा राममागतं जगाद ॥१७॥ तच्छ्रुत्वा ते प्रीताः संतस्तमुद्धवं सत्कृत्योपायनहस्ता रामं संमुखं ययुः ॥१८॥ ते कुरवो राममालिंग्य विधिवत्संपूज्य तेषां मध्ये ये रामप्रभावज्ञास्ते वृद्धा अपि तं शिरसा प्रणेमुः ॥१९॥ ततः कुशलं पप्रच्छुः । अथ रामस्तान् बभाषे ॥२०॥ हे कुरवः, पृथ्वीपतीश्वर उग्रसेनो राजा वो यदाज्ञापयत् । तच्छ्रुत्वा शीघ्रं कुरुध्वम् ॥२१॥ यूयं बहवोऽधर्मेणैकं धार्मिकं जित्वाऽबध्नीत तद्बंधूनामैक्यकाम्ययाऽहं सहे । परंतु तमानीय शीघ्रं समर्पयत ॥२२॥ एवं वीर्यबलयुक्तं बलदेवस्य वचः श्रुत्वा कुरवः क्रुद्धाः संत ऊचुः ॥२३॥ अहो कालगतिरत्यंतदुस्तराऽस्ति । यया पादरक्षा शिर आरोढुमिच्छति । इदं महदाश्चर्यम् ॥२४॥ अस्माभिः

सोऽभिवंद्यांबिकापुत्रं भीष्मं द्रोणं च बाह्लिकम् ॥ दुर्योधनं च विधिवद्राममागतमब्रवीत् ॥१७॥ तेऽतिप्रीतास्तमाकर्ण्य प्राप्तं रामं सुहृत्तमम् ॥ तमर्चयित्वाऽभिययुः सर्वे मंगलपाणयः ॥१८॥ तं संगम्य यथान्यायं गामर्घ्यं च न्यवेदयन् ॥ तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥१९॥ बंधून्कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम् ॥ परस्परमथो रामो बभाषेऽविक्लवं वचः ॥२०॥ उग्रसेनः क्षितीशेशो यद्व आज्ञापयत्प्रभुः ॥ तदव्यग्रधियः श्रुत्वा कुरुध्वं मा विलंबितम् ॥२१॥ यद्यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम् ॥ अबध्नीताथ तन्मृष्ये बंधूनामैक्यकाम्यया ॥२२॥ वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः ॥ कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः ॥२३॥ अहो महच्चित्रमिदं कालगत्या दुरत्यया ॥ आरुरुक्षत्युपानद्वै शिरो मुकुटसेवितम् ॥२४॥ एते यौनेन संबद्धाः सहशय्यासनाशनाः ॥ वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥२५॥ चामरव्यजने शंखमातपत्रं च पांडुरम् ॥ किरीटमासनं शय्यां भुंजंत्यस्मदुपेक्षया ॥२६॥ अलं यदूनां नरदेवलांछनैर्दातुः प्रतीपैः फणिनामिवामृतम् ॥ येऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयंत्यद्य गतत्रपा बत ॥२७॥ कथमिंद्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः ॥ अदत्तमवरुंधीत सिंहग्रस्तमिवोरणः ॥२८॥ श्रीशुक उवाच ॥ जन्मबंधुश्रियोन्नद्धमदास्ते भरतर्षभ ॥ आश्राव्य रामं दुर्वाच्यमसभ्याः पुरमाविशन् ॥२९॥ दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वाऽवाच्यानि चाच्युतः ॥ अवोचत्कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन्मुहुः ॥३०॥ ॥ ॥

पृथाया विवाहसंबंधेनैते यादवाः सहशय्याभोजनादिभिस्तुल्यतां नीताः ॥२५॥ किंच । अस्मद्दत्तनृपासनाः संतोऽस्मदुपेक्षया चामर-व्यजन-च्छत्र-किरीटासन-शय्या उपभुंजंति ॥२६॥ अधुना यदूनां राजचिह्नैरलम्[1] । यतो गतलज्जाः संत एते यादवा अस्मानाज्ञापयंति ॥२७॥ भीष्म-द्रोणार्जुनादिभिरदत्तमिंद्रोऽपि कथं स्वीकुर्यात् । सिंहग्रस्तं मेष इव ॥२८॥ श्रीशुक एवाच ॥ हे राजन्, ते दुर्जना राममेवं कठोरं वच आश्राव्य पुरं विविशुः ॥२९॥ तदा रामः कुरूणां दौःशील्यं दृष्ट्वा क्रुद्धः सन् प्रोवाच ॥३०॥ ॥

[1] अतः परं तान्यपहरिष्याम इत्यर्थः ।

मदोन्मत्ता असाधवः शांतिं नेच्छंति । तेषां दंड एव शांतिकरः ॥३१॥ अहो अहमेतेषां कल्याणमिच्छन् क्रुद्धान् यदून् कुपितं कृष्णं च सांत्वयित्वेहागतः ॥३२॥ त इमे मंदबुद्धयः खला मामवज्ञायाऽवाच्यशब्दान् जगदुः ॥३३॥ इंद्रादयो लोकपाला अपि यस्याज्ञावर्तिनः स उग्रसेन आज्ञापयितुं समर्थो न किल ॥३४॥ येन श्रीकृष्णेन देवसभा सुधर्माऽऽक्रम्यते । पारिजातश्चानीय भुज्यते स सिंहासनार्हो न किल ॥३५॥ यस्य पादयुगं श्रीरुपास्ते स कृष्णो राजचिह्नार्हो न भवति किम् ॥३६॥ यस्य चरणरजो लोकपालैर्ब्रह्मादिभिश्च शिरोभिर्धृतं तस्य नृपासनं क्व ॥३७॥ वृष्णयः कुरुभिर्दत्तं भूखंडं भुंजते किल । वयमुपानहः किल । कुरवस्तु स्वयं शिरः किल ॥३८॥ अहो ऐश्वर्येण मत्तानां कठोरा वाचस्तेषां

नूनं नानामदोन्नद्धाः शांतिं नेच्छंत्यसाधवः ॥ तेषां हि प्रशमो दंडः पशूनां लगुडो यथा ॥३१॥ अहो यदून्सुसंरब्धान्कृष्णं च कुपितं शनैः ॥ सांत्वयित्वाऽहमेतेषां शममिच्छन्निहागतः ॥३२॥ त इमे मंदमतयः कलहाभिरताः खलाः ॥ तं मामवज्ञाय मुहुर्दुर्भाषान्मानिनोऽब्रुवन् ॥३३॥ नोग्रसेनः किल विभुर्भोजवृष्ण्यंधकेश्वरः ॥ शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥३४॥ सुधर्माऽऽक्रम्यते येन पारिजातोऽमरांघ्रिपः ॥ आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ॥३५॥ यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ॥ स नार्हति किल श्रीशो नरदेवपरिच्छदान् ॥३६॥ यस्यांघ्रिपंकजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ॥ ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व ॥३७॥ भुंजते कुरुभिर्दत्तं भूखंडं वृष्णयः किल ॥ उपानहः किल वयं स्वयं तु कुरवः शिरः ॥३८॥ अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् ॥ असंबद्धा गिरो रूक्षाः कः सहेतानुशासिता ॥३९॥ अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः ॥ गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥४०॥ लांगलाग्रेण नगरमुद्विदार्य गजाह्वयम् ॥ विचकर्ष स गंगायां प्रहरिष्यन्नमर्षितः ॥४१॥ जलयानमिवाघूर्णं गंगायां नगरं पतत् ॥ आकृष्यमाणमालोक्य कौरवा जातसंभ्रमाः ॥४२॥ तमेव शरणं जग्मुः सकुटुंबा जिजीविषवः ॥ सलक्ष्मणं पुरस्कृत्य सांबं प्रांजलयः प्रभुम् ॥४३॥ राम रामाखिलाधार प्रभावं न विदाम ते ॥ मूढानां नः कुबुद्धीनां क्षंतुमर्हस्यतिक्रमम् ॥४४॥ स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः ॥ लोकान्क्रीडनकानीश क्रीडतस्ते वदंति हि ॥४५॥ ॥ ॥

स्वयं दंडधरः कः सहेत ॥३९॥ इत्युक्त्वाऽद्य निष्कौरवीं पृथ्वीं करिष्यामीति क्रुद्धः सन् जगत्त्रयं दहन्निव हलं गृहीत्वोत्तस्थौ ॥४०॥ ततो नगरस्य दक्षिणप्राकारमूले खातितेन हलाग्रेण नगरमुत्पाट्य गंगायां विचकर्ष ॥४१॥ तदा जले नौकेव कंपायमानं गंगायां पतमानं च नगरं दृष्ट्वा कौरवा जातसंभ्रमाः संतः ॥४२॥ जीवितुमिच्छवो लक्ष्मणया सह सांबमग्रतः कृत्वा तमेव रामं शरणं जग्मुरूचुश्च ॥४३॥ हे राम, हे राम, तव पराक्रमं वयं न जानीमः । मूढानां नः अपराधं क्षंतुमर्हसि ॥४४॥ हे राम, अस्य जगतः स्थित्युत्पत्तिनाशानां त्वमेव हेतुरसि । लोकास्तव क्रीडनकाः संति ॥४५॥ ॥ ॥ ॥ ॥

हे अनंत, इदं भूमंडलं लीलया त्वमेव शिरसि बिभर्षि । अंते च स्वस्वरूपे जगत उपसंहारं कृत्वा त्वं शयनं करोषि ॥४६॥ तव कोपः सर्वेषां शिक्षार्थमस्ति । द्वेषान्मत्सराद्वा नास्ति ॥४७॥ हे सर्वभूतात्मन्, हे सर्वशक्तिधर, हे सर्व विश्वकर्मन्, ते नमोऽस्तु । त्वां वयं शरणं गताः ॥४८॥ श्रीशुक उवाच ॥ एवं शरणागतैस्तैः प्रसादितो रामो मा भैष्टेत्यभयं ददौ ॥४९॥ तदा दुर्योधनः षष्टिवर्षान् द्वादशशतानि गजान् । एकलक्षं विंशतिसहस्राणि चाश्वान् ॥५०॥ षट् सहस्राणि रथान्, स्वलंकृताः सहस्रं दासीः । एवं पारिबर्हं ददौ ॥५१॥ ततो रामस्तत्सर्वं गृहीत्वा ससुतः सस्नुषो द्वारकां ययौ ॥५२॥ ततो रामो द्वारकां प्रविष्टः सन् बंधून् मिलित्वा यदुश्रेष्ठानां सभामध्ये कुरुषु स्वचेष्टितं शशंस ॥५३॥

त्वमेव मूर्ध्नीदमनंत लीलया भूमंडलं बिभर्षि सहस्रमूर्धन् ॥ अंते च यः स्वात्मनि रुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः ॥४६॥ कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात् ॥ बिभ्रतो भगवन्सत्वं स्थितिपालनतत्परः ॥४७॥ नमस्ते सर्वभूतात्मन्सर्वशक्तिधराव्यय ॥ विश्वकर्मन्नमस्तेऽस्तु त्वां वयं शरणं गताः ॥४८॥ श्रीशुक उवाच ॥ एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः ॥ प्रसादितः सुप्रसन्नो मा भैष्टेत्यभयं ददौ ॥४९॥ दुर्योधनः पारिबर्हं कुंजरान्षष्टिहायनान् ॥ ददौ च द्वादशशतान्ययुतानि तुरंगमान् ॥५०॥ रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् ॥ दासीनां निष्ककंठीनां सहस्रं दुहितृवत्सलः ॥५१॥ प्रतिगृह्य तु तत्सर्वं भगवान्सात्वतर्षभः ॥ ससुतः सस्नुषः प्रागात्सुहृद्भिरभिनंदितः ॥५२॥ ततः प्रविष्टः स्वपुरं हलायुधः समेत्य बंधूननुरक्तचेतसः ॥ शशंस सर्वं यदुपुंगवानां मध्ये सभायां कुरुषु स्वचेष्टितम् ॥५३॥ अद्यापि च पुरं ह्येतत्सूचयद्रामविक्रमम् ॥ समुन्नतं दक्षिणतो गंगायामनु दृश्यते ॥५४॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे हास्तिनपुरकर्षणरूपसंकर्षणविजयो नामाष्टषष्टितमोऽध्यायः ॥६८॥ श्रीशुक उवाच ॥ नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् ॥ कृष्णेनैकेन बह्वीनां तद्दिदृक्षुः स्म नारदः ॥१॥ चित्रं बतैतदेकेन वपुषा युगपत्पृथक् ॥ गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥२॥ इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् ॥ पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥३॥ उत्फुल्लेंदीवरांभोजकह्लारकुमुदोत्पलैः ॥ छुरितेषु सरस्सूच्चैः कूजितां हंससारसैः ॥४॥ प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः ॥ महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥५॥ ॥ ॥ ॥

अद्यापि हस्तिनापुरं रामपराक्रमं सूचयत् दक्षिणत उन्नतमुत्तरतो गंगामनु निम्नं च दृश्यते ॥५४॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे अष्टषष्टितमोऽध्यायः ॥६८॥

एकोनसप्ततितमे गार्हस्थ्यं प्रतिमंदिरम् । कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततः स्तुवन् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, नरकं निहतं श्रुत्वा तथैकेन कृष्णेन बह्वीनां स्त्रीणां विवाहं च श्रुत्वा ॥१॥ श्रीकृष्ण एकेन शरीरेण युगपत् पृथग्गृहेषु षोडशसहस्रस्त्रियः कथं परिणीतवान् ॥२॥ एतदाश्चर्यं द्रष्टुं नारदो द्वारकां जगाम । कथंभूतां द्वारकाम् । उपवनेषु क्रीडावनेषु च पक्षिकुलैर्नादितां ॥३॥ प्रफुल्लकमलादिभिर्व्याप्तेषु सरःसु हंसैः सारसैश्च कूजिताम् ॥४॥ स्वर्णरत्नमयपात्रादियुक्तैः स्फाटिकै राजतैश्च नवभिः प्रासादलक्षैर्युताम् ॥५॥

पृथक् पृथक् रथ्याभी राजमार्गैरंगणैः सभाभिर्देवगृहैश्च युक्ताम् । संसिक्तमार्गाम् । ध्वजपताकादिभिर्निवारितातपाम् ॥६॥ तस्यां द्वारकायां विश्वकर्मणा कौशलेन निर्मितमिंद्रादिभिर्लोकपालैः पूजितं हरेः पत्नीनां षोडशसहस्रगृहैः समलंकृतं मुख्यं रुक्मिण्या गृहंप्रति पूर्वं नारदो विवेश ॥७॥८॥ तत्कीदृशम् । प्रवालस्तंभैरिंद्रनीलमयैः कुड्यादिभिश्चेंद्रनीलमय्या भूम्या च शोभितम् ॥९॥ मुक्तादामविलंबिभिर्वितानैर्युक्तं मणिभूषितैर्गजदंतपर्यंकैः ॥१०॥ पदकालंकारभूषिताभिर्दासीभिः सुवस्त्रमणिकुंडलैः पुंभिश्च शोभितम् ॥११॥ रत्नमयदीपैर्गतांधकारम् । यत्र मयूरा अगुरुधूपं जालैर्निर्गतं वीक्ष्य मेघोऽयमिति मन्वाना नृत्यंति ॥१२॥ तस्मिन् गृहे व्यजनेन परिवीजयंत्या रुक्मिण्या सह श्रीकृष्णं नारदो ददर्श

विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ॥ संसिक्तमार्गांगणवीथिदेहलीं पतत्पताकाध्वजवारितातपाम् ॥६॥ तस्यामंतःपुरं श्रीमदर्चितं सर्वधिष्ण्यपैः ॥ हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन दर्शितम् ॥७॥ तत्र षोडशभिः सद्मसहस्रैः समलंकृतम् ॥ विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥८॥ विष्टब्धं विद्रुमस्तंभैर्वैदूर्यफलकोत्तमैः ॥ इंद्रनीलमयैः कुड्यैर्जगत्या चाहतत्विषा ॥९॥ वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलंबिभिः[1] ॥ दांतैरासनपर्यंकैर्मण्युत्तमपरिष्कृतैः ॥१०॥ दासीभिर्निष्ककंठीभिः सुवासोभिरलंकृतम् ॥ पुंभिः सकंचुकोष्णीषसुवस्त्रमणिकुंडलैः ॥११॥ रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वांतं विचित्रवलभीषु शिखंडिनोऽंग ॥ नृत्यंति यत्र विहितागुरुधूपमक्षैर्निर्यांतमीक्ष्य घनबुद्ध्य उन्नदंतः ॥१२॥ तस्मिन्समानगुणरूपवयस्सुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या ॥ विप्रो ददर्श चमरव्यजनेन रुक्मदंडेन सात्वतपतिं परिवीजयंत्या ॥१३॥ तं संनिरीक्ष्य भगवान्सहसोत्थितः श्रीपर्यंकतः सकलधर्मभृतां वरिष्ठः ॥ आनम्य पादयुगलं शिरसा किरीटजुष्टेन सांजलिरवीविशदासने स्वे ॥१४॥ तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ॥ ब्रह्मण्यदेव इति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥१५॥ संपूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ॥ वाण्याऽभिभाष्य मितयाऽमृतमिष्टया तं प्राह प्रभो भगवते करवामहे किम् ॥१६॥ नारद उवाच ॥ नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्री जनेषु सकलेषु दमः खलानाम् ॥ निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥१७॥ ॥ ॥ ॥

॥१३॥ ततो भगवान् तं नारदं वीक्ष्य रुक्मिण्याः पर्यंकात्समुत्थाय तं शिरसा प्रणम्य सांजलिः सन् स्वस्यासने उपवेशयामास ॥१४॥ ततो भगवान् तच्चरणौ प्रक्षाल्य जगद्गुरुरपि तज्जलं शिरसि दधार ॥१५॥ ततः श्रीकृष्णो नारदं विधिवत्संपूज्याभिभाष्य चामृतमिष्टया वाण्या जगाद । हे नारद, वयं ते किं करवाम ॥१६॥ नारद उवाच ॥ हे अखिललोकनाथ, अयं तेऽवतारो जगतः कल्याणायास्ति । अतः खलानां दंडः साधूनां संमाननं च भवतो युक्तम् ॥१७॥ ॥ ॥ ॥

[1] मुक्तादाम्नां विलंबा विविधानि लंबनानि येषु तैः

हे हरे, भक्तानां मोक्षद तव चरणकमलं दृष्टम् । अतः कृतकृत्योऽस्मि । तथापि त्वत्स्मृतिर्यथा स्यात्तथा मय्यनुग्रहं कुरु ॥१८॥ श्रीशुक उवाच ॥ ततो नारदः कृष्णपत्न्या अन्यद्गेहं प्राविशत् ॥१९॥ तत्रापि प्रिययोद्धवेन च सहाक्षैः क्रीडंतं श्रीकृष्णं ददर्श । ततस्तेन प्रत्युत्थानादिभिः पूजितः ॥२०॥ हे नारद, त्वमत्र कदाऽऽयात इति पृष्टः । किंच । अपूर्णैरस्मदादिभिः पूर्णानां वः किं कर्तव्यम् ॥२१॥ तथापि नो जन्मसाफल्यं कुरु । ततः स तूष्णीमुत्थायान्यद्गृहं जगाम ॥२२॥ तत्रापि शिशून् लालयंतं गोविंदं ददर्श । ततोऽन्यस्मिन् गृहे स्नानायोद्युक्तं ददर्श ॥२३॥ क्वचिदग्निहोत्रेणाहवनीयादीनग्नीन् जुह्वंतम् । क्वचित्पंचभिर्महायज्ञैर्यजंतम् । कुत्रचिद्द्विजान् भोजयंतम् । काप्यवशेषितमन्नं भुंजानम् ॥२४॥

दृष्टं तवांघ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥१८॥ ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः ॥ योगेश्वरेश्वरस्यांग योगमायाविवित्सया ॥१९॥ दीव्यंतमक्षैस्तत्रापि प्रियया चोद्धवेन च ॥ पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥२०॥ पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति ॥ क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः ॥२१॥ अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु ॥ स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहम् ॥२२॥ तत्राप्याचष्ट गोविंदं लालयंतं सुतान् शिशून् ॥ ततोऽन्यस्मिन्गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥२३॥ जुह्वंतं च वितानाग्नीन्यजंतं पंचभिर्मखैः ॥ भोजयंतं द्विजान्कापि भुंजानमवशेषितम् ॥२४॥ कापि संध्यामुपासीनं जपंतं ब्रह्म वाग्यतम् ॥ एकत्र चासिचर्मभ्यां चरंतमसिवर्त्मसु ॥२५॥ अश्वैर्गजै रथैः कापि विचरंतं गदाग्रजम् ॥ क्वचिच्छयानं पर्यंके स्तूयमानं च वंदिभिः ॥२६॥ मंत्रयंतं च कस्मिंश्चिन्मंत्रिभिश्चोद्धवादिभिः ॥ जलक्रीडारतं कापि वारमुख्याबलावृतम् ॥२७॥ कुत्रचिद्द्विजमुख्येभ्यो ददतं गाः स्वलंकृताः ॥ इतिहासपुराणानि शृण्वंतं मंगलानि च ॥२८॥ हसंतं हास्यकथया कदाचित्प्रियया गृहे ॥ कापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥२९॥ ध्यायंतमेकमासीनं पुरुषं प्रकृतेः परम् ॥ शुश्रूषंतं गुरून्कापि कामैर्भोगैः सपर्यया ॥३०॥ कुर्वंतं विग्रहं कैश्चित्संधिं चान्यत्र केशवम् ॥ कुत्रापि सह रामेण चिंतयंतं सतां शिवम् ॥३१॥ पुत्राणां दुहितॄणां च काले विध्युपयापनम् ॥ दारैर्वरैस्तत्सदृशैः कल्पयंतं विभूतिभिः ॥३२॥ ॥ ॥ ॥

कुत्रचित्संध्यामुपासीनम् । कुत्रचिज्जपं कुर्वंतम् । क्वचित् खड्गचर्मभ्यां तन्मार्गान् चरंतम् ॥२५॥ क० अश्वैर्गजैश्च चरंतम् । क० पर्यंके शयानम् । क० वंदिभिः स्तूयमानम् ॥२६॥ क्वचिदुद्धवादिभिर्विचारयंतम् । कुत्रचिद्वारस्त्रीभिर्जलक्रीडारतम् ॥२७॥ कापि द्विजमुख्येभ्यो गा ददतम् । क्वचित् इतिहासपुराणानि शृण्वंतम् ॥२८॥ क० प्रियया सह हास्यकथया हसंतम् । क० धर्मं सेवमानम् । क० अर्थकामौ सेवमानम् ॥२९॥ क० परं पुरुषं ध्यायंतम् । क० गुरून् शुश्रूषंतम् ॥३०॥ क० कैश्चित् विग्रहं कुर्वंतम् । क० मैत्रीं कुर्वंतम् । कापि रामेण सह साधूनां कल्याणं चिंतयंतम् ॥३१॥ कुत्रचित् पुत्राणां कन्यानां च विधिना विवाहं घटयंतम् ॥३२॥ ॥ ॥

क्वापि दुहितृजामात्रादीन् स्वगृहात्तद्गृहंप्रति प्रस्थापयंतम् । क्व० तद्गृहात्पुनरानयंतम् ॥३३॥ क्व० अपत्यानां संस्कारादीन् कुर्वंतम् । कुत्रचिद्देवान् यजंतम् । कु० वापी-कूप-तडागादिखननं कारयंतम् ॥३४॥ क्व० सैंधवमश्वमारुह्य मृगयां चरंतम् ॥३५॥ क्वचित्प्रधानादीनां स्त्रीणां च गृहादिषु तेषामभिप्रायज्ञानेच्छया वेषांतरं धृत्वा संचरंतम् ॥३६॥ एवं गृहीतमनुष्यावतारस्य हरेर्योगमायोदयं वीक्ष्य नारदः प्रहसन् श्रीकृष्णं जगाद ॥३७॥ हे योगेश्वर, मायिनामपि दुर्दर्शास्तव योगमायाः केवलमहं जानामि । ननु तवाशयं जानामि ॥३८॥ हे देव, तव मनुष्यनाट्येनाहं मुह्यामि । अतो मां अन्यत्र प्रस्थापय । अहं तव लीलां गायन् लोकान् पर्यटामि ॥३९॥ श्रीभगवानुवाच हे ब्रह्मन्, अहं धर्मस्य कर्ता वक्ताऽ-

प्रस्थापनोपानयनैरपत्यानां महोत्सवान् ॥ वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥३३॥ यजंतं सकलान्देवान्क्वापि क्रतुभिरूर्जितैः ॥ पूर्तयंतं क्वचिद्धर्मं कूपाराममठादिभिः ॥३४॥ चरंतं मृगयां क्वापि हयमारुह्य सैंधवम् ॥ घ्नंतं ततः पशून्मेध्यान्परीतं यदुपुंगवैः ॥३५॥ अव्यक्तलिंगं प्रकृतिष्वंतःपुरगृहादिषु ॥ क्वचिच्चरंतं योगेशं तत्तद्भावबुभुत्सया ॥३६॥ अथोवाच हृषीकेशं नारदः प्रहसन्निव ॥ योगमायोदयं वीक्ष्य मानुषीमीयुषो गतिम् ॥३७॥ विदाम योगमायास्ते दुर्दर्शा अपि मायिनाम् ॥ योगेश्वरात्मन्निर्भाता भवत्पादनिषेवया ॥३८॥ अनुजानीहि मां देव लोकांस्ते यशसाऽऽप्लुतान् ॥ पर्यटामि तवोद्गायँल्लीलां भुवनपावनीम् ॥३९॥ श्रीभगवानुवाच ॥ ब्रह्मन्धर्मस्य वक्ताहं कर्ता तदनुमोदिता ॥ तच्छिक्षयँल्लोकमिममास्थितः पुत्र मा खिदः ॥४०॥ श्रीशुक उवाच ॥ इत्याचरंतं सद्धर्मान्पावनान्गृहमेधिनाम् ॥ तमेव सर्वगेहेषु संतमेकं ददर्श ह ॥४१॥ कृष्णस्यानंतवीर्यस्य योगमायामहोदयम् ॥ मुहुर्दृष्ट्वा ऋषिरभूद्विस्मितो जातकौतुकः ॥४२॥ इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना ॥ सम्यक् सभाजितः प्रीतस्तमेवानुस्मरन्ययौ ॥४३॥ एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः ॥ रेमेंऽग षोडशसहस्रवरांगनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥४४॥ यानीह विश्वविलयोद्भववृत्तिहेतुः कर्माण्यनन्यविषयाणि हरिश्चकार ॥ यस्त्वंग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥४५॥ इति श्रीम० महा० दश० उ० कृष्णगार्हस्थ्यदर्शनं नामैकोनसप्ततितमोऽध्यायः ॥६९॥

नुमोदिता चास्मि । अतो लोकं शिक्षयन्निमं धर्ममास्थितः । हे पुत्र, त्वं खेदं मा प्राप्नुहि ॥४०॥ श्रीशुक उवाच ॥ हे राजन्, एवं नारदस्तं श्रीकृष्णमेकमेव संतं सर्वगृहेषु सद्धर्मानाचरंतं ददर्श ॥४१॥ एवं कृष्णस्य योगमायामहोदयं मुहुर्दृष्ट्वा नारदो विस्मितो जातः ॥४२॥ एवं श्रीकृष्णेन धर्मार्थकामेषु सत्कृतो नारदस्तं कृष्णं स्मरन् ययौ ॥४३॥ एवं मनुष्यपदवीं वर्तमानो नारायणः षोडशसहस्रस्त्रीणां गृहेषु रेमे ॥४४॥ श्रीहरिरिह लोके यानि कर्माणि चकार तानि कर्माणि यो गायति शृणोति वा अनुमोदते वा तस्य मोक्षमार्गरूपे भगवति भक्तिर्भवति ॥४५॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे एकोनसप्ततितमोऽध्यायः ॥६९॥ ॥ ॥

१ अनेन नारदो बहुषु गृहेषु श्रीकृष्णगार्हस्थ्यं दृष्ट्वाऽन्यत्र स्वर्गादौ गंतुमिच्छन्नपि भगवन्मायया मोहितः सन् कंचित्कालं पुनस्तत्रतत्रैव भ्रमतिस्मेति सूच्यते ।

ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि । दूतनारदयोः कार्ये कार्यमंत्रविचारणम् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, उषःकाले समीपं प्राप्ते सति श्रीकृष्णैर्गृहीतकंठ्यो जांबवत्याद्याः स्त्रियः कूजतः कुक्कुटान् शेपुः ॥१॥ तदा पक्षिणो बंदिन इव श्रीकृष्णं बोधयंतः संतोऽकूजन् ॥२॥ तदा रुक्मिणी तु पत्यालिंगनवियोगं पर्यालोच्य तं मुहूर्तं न सेहे ॥३॥ तदा श्रीकृष्णो ब्राह्मे मुहूर्ते उत्थाय तमसः परमविद्यारहितं निरुपाधिं नित्यं सदानंदं ब्रह्माख्यमात्मानं दध्यौ ॥४॥५॥ ततो निर्मलजले स्नात्वा वाससी परिधाय संध्यावंदनादि कृत्वा हुतानलः[1] सन् मौनेन गायत्रीं जजाप ॥६॥ सूर्योदये जाते सूर्योपस्थानं कृत्वा देवर्षिपितॄन् तर्पयित्वा विप्रानपूजयत् ॥७॥ ततोऽलंकृतेभ्यो विप्रेभ्यः स्वर्णशृंगीणां सुशीलानां पय-

श्रीशुक उवाच ॥ अथोषस्युपवृत्तायां कुक्कुटान्कूजतोऽशपन् ॥ गृहीतकंठ्यः पतिभिर्माधव्यो विरहातुराः ॥ १ ॥ वयांस्यरूरुवन्कृष्णं बोधयंतीव बंदिनः ॥ गायत्स्वलिष्वनिद्राणि मंदारवनवायुभिः ॥ २ ॥ मुहूर्तं तं तु वैदर्भी नामृष्यदतिशोभनम् ॥ परिरंभणविश्लेषात्प्रियबाह्वंतरं गता ॥३॥ ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ॥ दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥४॥ एकं स्वयंज्योतिरनन्यमव्ययं स्वसंस्थया नित्यनिरस्तकल्मषम् ॥ ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतिम् ॥५॥ अथाप्लुतोंऽभस्यमले यथाविधि क्रियाकलापं परिधाय वाससी ॥ चकार संध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥६॥ उपस्थायार्कमुद्यंतं तर्पयित्वाऽऽत्मनः कलाः ॥ देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्य चात्मवान् ॥७॥ धेनूनां रुक्मशृंगीणां साध्वीनां मौक्तिकस्रजाम् ॥ पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम् ॥८॥ ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह ॥ अलंकृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिने ॥९॥ गोविप्रदेवतावृद्धगुरून्भूतानि सर्वशः ॥ नमस्कृत्यात्मसंभूतीर्मंगलानि समस्पृशत् ॥१०॥ आत्मानं भूषयामास नरलोकविभूषणम् ॥ वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः ॥११॥ अवेक्ष्याज्यं तथाऽऽदर्शं गोवृषद्विजदेवताः ॥ कामांश्च सर्ववर्णानां पौरांतःपुरचारिणाम् ॥ प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनंदत ॥१२॥ संविभज्याग्रतो विप्रान्स्रक्तांबूलानुलेपनैः ॥ सुहृदः प्रकृतीर्दारानुपायुंक्त ततः स्वयम् ॥१३॥ तावत्सूत उपानीय स्यंदनं परमाद्भुतम् ॥ सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥

स्विनीनां प्रथमप्रसूतानां सवत्सानां मौक्तिकमालायुक्तानां धेनूनां चतुरशीत्यधिकानि[2] त्रयोदश सहस्राणि प्रतिदिनं ददौ ॥८॥९॥ ततो गोविप्रगुरुदेवतावृद्धान् नत्वा कपिलादीनि मंगलानि समस्पृशत् ॥१०॥ ततो मनुष्यलोकस्य भूषणरूपमात्मानं वस्त्रालंकार[3]-स्रगंधानुलेपनैर्भूषयामास ॥११॥ तत आज्यमादर्शं च विलोक्य सर्ववर्णान् प्रधानादिसेवकांश्च इच्छितदानेन प्रतोष्यानंदितवान् ॥१२॥ प्रथमं विप्रसुहृदादीन्प्रति स्रक्तांबूलानुलेपनादीनि दत्वा ततः स्वयं भोगार्थमग्रहीत् ॥१३॥ तावद्दारुकः सुग्रीवाद्यैर्हयैर्युक्तमद्भुतं रथमा-

१ श्रीकृष्णस्य काण्वत्वादुदयात्पूर्वमेव हुतानलः सन् । २ चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः । बद्वं चतुरशीत्यग्रे सहस्राणि त्रयोदशेति बद्वसंख्या । ३ पीतांबरकौस्तुभादिभिः ।

नीय प्रणम्याग्रतः स्थितः ॥ १४ ॥ ततो भगवान् सात्यक्युद्धवसंयुक्तः सन् पाणिना सारथेरंजलिं गृहीत्वा रथमारुहत् ॥१५॥ ततोंऽतःपुरस्त्रीणां प्रेमवीक्षितैरीक्षितः सन् तासां मनो हरन् पृथक् पृथक् गृहान्निर्गत्यानंतरमेक एव सन् निरगात् ॥१६॥ ततो यत्र कामक्रोधादयो न संति तां सुधर्माख्यां सभां प्रविश्य ॥१७॥ परमासने उपविष्टः सन् वृष्णिभिर्वृतश्चंद्र इव शुशुभे ॥१८॥ तत्र परिहासका नानाहास्यरसैर्नटा नर्तक्यश्च पृथक् तांडवैर्मृदंगादिवाद्यैः सह विभुं तोषयामासुः । सूतमागधवंदिनश्च तुष्टुवुः ॥१९॥२०॥ तत्र केचिद्ब्राह्मणाः वेदमंत्रान् व्याचक्षत । केचित्पूर्वेषां राज्ञां कथा अकथयन् ॥२१॥ तदैकोऽपूर्वदर्शनः पुरुषस्तत्रागतः स द्वारपालैः कृष्णाज्ञया सभां प्रवेशितः सन् ॥२२॥ कृष्णं नत्वा

गृहीत्वा पाणिना पाणी सारथेस्तमथारुहत् ॥ सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥१५॥ ईक्षितोंऽतःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः ॥ कृच्छ्राद्विसृष्टो निरगाज्जातहासोऽहरन्मनः ॥१६॥ सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः ॥ प्राविशद्यन्निविष्टानां न संत्यंग षडूर्मयः ॥१७॥ तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन् ॥ वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥१८॥ तत्रोपमंत्रिणो राजन्नानाहास्यरसैर्विभुम् ॥ उपतस्थुर्नटाचार्या नर्तक्यस्तांडवैः पृथक् ॥१९॥ मृदंगवीणामुरजवेणुतालदरस्वनैः ॥ ननृतुर्जगुस्तुष्टुवुश्च सूतमागधवंदिनः ॥२०॥ तत्राहुर्ब्राह्मणाः केचिदासीना ब्रह्मवादिनः ॥ पूर्वेषां पुण्ययशसां राज्ञां चाकथयन्कथाः ॥२१॥ तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः ॥ विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥२२॥ स नमस्कृत्य कृष्णाय परेशाय कृतांजलिः ॥ राज्ञामावेदयद्दुःखं जरासंधनिरोधजम् ॥२३॥ ये च दिग्विजये तस्य संनतिं न ययुर्नृपाः ॥ प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥२४॥ कृष्ण कृष्णाप्रमेयात्मन्प्रपन्नभयभंजन ॥ वयं त्वां शरणं यामो भवभीताः पृथग्धियः ॥२५॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ॥ यस्तावदस्य वलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥२६॥ लोके भवान् जगदिनः कलयाऽवतीर्णः सद्रक्षणाय खलनिग्रहणाय चान्यः ॥ कश्चित्त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः ॥२७॥ स्वप्नायितं नृपसुखं परतंत्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ॥ हित्वा तदात्मनि सुखं त्वदनीहलभ्यं क्लिश्यामहेऽतिकृपणास्तव माययेह ॥२८॥ ॥ ॥

कृतांजलिर्भूत्वा राज्ञां जरासंधनिरोधजं दुःखं कथयामास ॥२३॥ हे हरे, ये नृपा जरासंधस्य दिग्विजये नम्रतां न ययुः ते द्वे अयुते जरासंधेन बलाद्गिरिव्रजनामके दुर्गे निरुद्धाः संति ॥२४॥ ते त्वामूचुः ॥ हे कृष्ण, कृष्ण, हे शरणागत-भय-भंजन, वयं त्वां शरणं याताः ॥२५॥ अयं लोको निषिद्धकाम्यकर्मसु निरतः सन् भवतोऽर्चनरूपे स्वकीये धर्मे प्रमत्तो भवति । अतस्तस्य यः सद्यो जीविताशां छिनत्ति तस्मै कालात्मने तुभ्यं नमः ॥२६॥ हे ईश, लोके सतां रक्षणाय दुष्टनिग्रहाय च त्वय्यवतीर्णे सति जरासंधादिः किं तवाज्ञामुलंघयति । किंच । त्वया रक्ष्यमाणोऽपि जनः स्वकर्मजं दुःखं प्राप्नोत्येवेति वयं न विद्मः ॥२७॥ स्वप्नवज्जातं यन्नृपोचितं सुखं तद्विषयसाध्यम् । किंच । संप्रति नश्वरेण शरीरेण

पुत्रदारादिचिंतां वयं केवलं वहामः । अहो कष्टं ये वयमात्मसुखं हित्वा त्वन्मायया क्लिश्यामहे ॥२८॥ अतोऽस्मान् जरासंधनामकात्कर्मपाशान्मोचय । यो जरासंधो दशसहस्र-गजसामर्थ्यं बिभ्रत् सन् स्वगृहेऽस्मान् रुरोध ॥२९॥ किं च । त्वया यो युद्धे सप्तदशवारं जितः पश्चादष्टादशे संग्रामे त्वां जित्वा प्राप्तगर्वः सन् युष्मदीयानस्मान् पीडयति तत्र यद्युक्तं तद्विधेहि ॥३०॥ दूत उवाच ॥ इति तव पादमूलं शरणमागतानां तेषां दीनानां शं विधीयताम् ॥३१॥ श्रीशुक उवाच । इति दूते प्रवदति सति सूर्य इव नारदः प्रादुरा-सीत् ॥३२॥ भगवात् तं दृष्ट्वा ससभ्य उत्थाय शिरसा ववंदे ॥३३॥ ततस्तं मुनिं विधिवत्संपूज्य सूनृतैर्वाक्यैस्तर्पयन् बभाषे ॥३४॥ हे मुने, अद्य त्रयाणां लोकानामभयमस्ति

तन्नो भवान्प्रणतशोकहरांघ्रियुग्मो बद्धान्वियुङ्क्ष्व मगधाह्वयकर्मपाशात् ॥ यो भूभुजोऽयुतमतंगजवीर्यमेको बिभ्रद्रुरोध भवने मृगराडिवावीः ॥२९॥ यो वै त्वया द्विनवकृत्व उदात्तचक्र भग्नो मृधे खलु भवंतमनंतवीर्यम् ॥ जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नोऽजित तद्विधेहि ॥३०॥ दूत उवाच ॥ इति मागधसंरुद्धा भवद्दर्शनकांक्षिणः ॥ प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥३१॥ श्रीशुक उवाच ॥ राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः ॥ बिभ्रत्पिंगजटाभारं प्रादुरासीद्यथा रविः ॥३२॥ तं दृष्ट्वा भगवान्कृष्णः सर्वलोकेश्वरेश्वरः ॥ ववंद उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥३३॥ सभाजयित्वा विधिवत्कृतासनपरिग्रहम् ॥ बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन्मुनिम् ॥३४॥ अपि स्विदद्य लोकानां त्रयाणामकुतोभयम् ॥ ननु भूयान्भगवतो लोकान्पर्यटतो गुणः ॥३५॥ नहि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु ॥ अथ पृच्छामहे युष्मान्पांडवानां चिकीर्षितम् ॥३६॥ श्रीनारद उवाच ॥ दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ॥ भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिव च्छन्नरुचो न मेऽद्भुतम् ॥३७॥ तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ॥ यद्विद्य-मानात्मतयाऽवभासते तस्मै नमस्ते स्वविलक्षणात्मने ॥३८॥ जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः ॥ लीलावतारैः स्वयशः प्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये ॥३९॥ अथाप्याश्रावये ब्रह्म नरलोकविडंबनम् ॥ राज्ञः पैतृष्वस्रेयस्य भक्तस्य च चिकीर्षितम् ॥४०॥ यक्ष्यति त्वां मखेंद्रेण राजसूयेन पांडवः ॥ पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदताम् ॥४१॥ ॥ ॥

किम् ॥३५॥ किंच । लोके तवाविदितं किंचिदपि नास्ति । अतः पांडवानां चिकीर्षितं त्वां पृच्छामहे ॥३६॥ नारद उवाच ॥ हे विभो, ब्रह्मणोऽपि मोहकस्य तव माया मया बहुशो दृष्टाः ॥३७॥ तव विचारं को ज्ञातुमर्हति । तव माययेदं जगदसदपि सदिव भासते तस्मादचिंत्यस्वरूपाय तुभ्यं नमोऽस्तु ॥३८॥ अनर्थप्रापकाच्छरीरान्मोक्षोपायमजानतो जीवस्य यो लीलावतारैर्मोक्षोपायं स्वयशोदीपं प्रदीपितवान् तं त्वां शरणागतोऽस्मि ॥३९॥ हे भगवन्, अथापि भक्तस्य युधिष्ठिरस्य चिकीर्षितं तव श्रावयिष्यामि ॥४०॥ हे विभो, युधिष्ठिरो राजसूययज्ञेन त्वां यष्टुमिच्छति तद्भगवाननुमोदताम् ॥४१॥ ॥ ॥ ॥ ॥ ॥

तस्मिन्, यज्ञे त्वां दिदृक्षवो देवादयो राजानश्च समेष्यंति ॥४२॥ तत्रागताः सर्वे त्वद्दर्शनादिना पूता भविष्यंति ॥४३॥ यस्य तव निर्मलं यशो विश्वं पुनाति तथा तव चरणोदकं च दिवि मंदाकिनीति, पाताले भोगवतीति, भूमौ गंगेति च विश्वं पुनाति तस्य तव तत्र गमनात्सर्वं पवित्रं भविष्यति ॥४४॥ श्रीशुक उवाच ॥ हे राजन्, एवं नारदोक्तं वाक्यं श्रुत्वा तद्वाक्यं यादवेषु जरासंधजिगीषयाऽगृह्णत्सु सत्सु स्मयन् कृष्णो मधुरवाक्यैरुद्धवं जगाद ॥४५॥ श्रीभगवानुवाच । हे उद्धव, त्वं नो विचारसाध्यानां फलानां परिपाकज्ञाता मित्रश्चासि । अतोऽत्र यत्कर्तव्यं तद्ब्रूहि । तद्वयं करवाम ॥४६॥ एवं भगवता पृष्ट उद्धवो भगवदाज्ञां शिरसा गृहीत्वा प्रत्यभाषत ॥४७॥ इति श्रीम० चू० द० उ० सप्ततितमोऽध्यायः ॥७०॥ अथैकसप्ततितम उद्धवस्य तु मंत्रतः । इंद्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥१॥ श्रीशुक उवाच । हे राजन्, उद्धवो नारदोक्तं श्रुत्वा सभ्यानां श्रीकृ-

तस्मिन्देव क्रतुवरे भवंतं वै सुरादयः ॥ दिदृक्षवः समेष्यंति राजानश्च यशस्विनः ॥४२॥ श्रवणात्कीर्तनाद्ध्यानात्पूयंतेंऽतेवसायिनः ॥ तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः ॥४३॥ यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमंगल दिग्वितानम् ॥ मंदाकिनीति दिवि भोगवतीति चाधो गंगेति चेह चरणांबु पुनाति विश्वम् ॥४४॥ श्रीशुक उवाच ॥ तत्र तेष्वात्मपक्षेष्वगृह्णत्सु विजिगीषया ॥ वाचःपेशैः स्मयन्भृत्यमुद्धवं प्राह केशवः ॥४५॥ श्रीभगवानुवाच ॥ त्वं हि नः परमं चक्षुः सुहृन्मंत्रार्थतत्त्ववित् ॥ तथात्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥४६॥ इत्युपामंत्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् ॥ निदेशं शिरसाऽऽधाय उद्धवः प्रत्यभाषत ॥४७॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे भगवद्यानविचारे सप्ततितमोऽध्यायः ॥७०॥ श्रीशुक उवाच ॥ इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ॥ सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः॥१॥ उद्धव उवाच ॥ (पूर्वं गंतव्यमस्माभिरिंद्रप्रस्थमितः प्रभो ॥ तत्रैव तदनुज्ञातस्तदर्थं जहि मागधम् ॥ १ ॥) यदुक्तमृपिणा देव साचिव्यं यक्ष्यतस्त्वया ॥ कार्यं पैतृष्वस्रेयस्य रक्षा च शरणैपिणाम् ॥ २ ॥ यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो ॥ अतो जरासुतजय उभयार्थो मतो मम ॥३॥ अस्माकं च महानर्थो ह्येतेनैव भविष्यति ॥ यशश्च तव गोविंद राज्ञो बद्धान्विमुंचतः ॥४॥ स वै दुर्विषहो राजा नागायुतसमो बले ॥ बलिनामपि चान्येषां भीमं समबलं विना ॥५॥ ॥ ॥ ॥

ष्णस्य च मतं ज्ञात्वाऽब्रवीत् ॥१॥ उद्धव उवाच ॥ ( हे प्रभो अस्माभिः पूर्वमित इंद्रप्रस्थं गंतव्यम् । ततो धर्मराजानुज्ञया जरासंधं जहि ॥१॥ ) हे देव, नारदेन यदुक्तं युधिष्ठिरस्य साहाय्यं तत्त्वया कार्यम् । तथा शरणागतानां राज्ञां रक्षणं च कार्यम् ॥२॥ हे विभो, दिग्विजयं कृत्वा राजसूयेन यष्टव्यम् । दिग्विजयहेतुत्वेन कृतो जरासंधजयो राजसूयार्थः शरणागतरक्षणार्थश्च भविष्यति ॥३॥ हे गोविंद, जरासंधवधेनास्माकं निर्भयत्वं तेन रुद्धान् राज्ञो मुंचतस्तव यशश्च भविष्यति ॥४॥ स जरासंधो बले दशसहस्रगजसमोऽस्ति । स भीमसेनं विनाऽन्येषां दुर्जयः ॥५॥ ॥ ॥ ॥ ॥ ॥ ॥

अतः स भीमसेनेन द्वंद्वयुद्धे जेतव्यः। सः विप्रैः प्रार्थितः सन् तन्न निराकरोति ॥६॥ अतो भीमसेनेन ब्राह्मणवेषं धृत्वा तंप्रति द्वंद्वयुद्धं भिक्षितव्यम् ॥७॥ ततो भीमस्तव सन्निधौ तं हनिष्यति ॥७॥ हे कृष्ण, यथा तव विश्वस्योत्पत्तिनाशयोर्ब्रह्मरुद्रौ निमित्तमात्रौ तथात्रापि त्वमेव सन्निधिमात्रेण जरासंधस्य हंता भीमो निमित्तमात्रम् ॥८॥ हे भगवन्, जरासंधेन रुद्धानां राज्ञां पत्न्यो गृहेषु बालकसांत्वनादौ, हे वत्स, त्वं मारोदीः श्रीकृष्ण एवं करिष्यतीत्युक्त्वा जरासंधवधरूपं स्वपतिमोक्षणरूपं च तव निर्मलं कर्म गायंति। यथा गोप्यः शंखचूडवधं स्वमोक्षं च गायंति। यथा च मुनय एतदवतारगतं देवकीवसुदेवमोक्षणं अवतारांतरगतं सीतामोक्षणं च गायंति तद्वत्। अतस्त्वया तथैव कर्तव्यम्

द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः ॥ ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥६॥ ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ॥ हनिष्यति न संदेहो द्वैरथे तव संनिधौ ॥७॥ निमित्तं परमीशस्य विश्वसर्गनिरोधयोः ॥ हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥८॥ गायंति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ॥ गोप्यश्च कुंजरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च ॥९॥ जरासंधवधः कृष्ण भूर्यर्थायोपकल्पते ॥ प्रायः पाकविपाकेन तव चाभिमतः क्रतुः ॥१०॥ श्रीशुक उवाच ॥ इत्युद्धववचो राजन्सर्वतोभद्रमच्युतम् ॥ देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन् ॥११॥ अथादिशत्प्रयाणाय भगवान्देवकीसुतः ॥ भृत्यान्दारुकजैत्रादीननुज्ञाप्य गुरून्विभुः ॥१२॥ निर्गमय्यावरोधान्स्वान्ससुतान्सपरिच्छदान् ॥ संकर्षणमनुज्ञाप्य यदुराजं च शत्रुहन् ॥ सूतोपनीतं स्वरथमारुहद्गरुडध्वजम् ॥१३॥ ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ॥ मृदंगभेर्यानकशंखगोमुखैः प्रघोषघोषितककुभो निराक्रमत् ॥१४॥ नृवाजिकांचनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः ॥ वरांबराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ॥१५॥ नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ॥ स्वलंकृताः कटकुटिकंबलांबराद्युपस्करा ययुरधियुज्य सर्वतः ॥१६॥ बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ॥ दिवांशुभिस्तुमुलरवं बभौ रवेर्यथार्णवः क्षुभिततिमिंगिलोर्मिभिः ॥१७॥ ॥ ॥

॥९॥ हे कृष्ण, जरासंधवधः कृतश्चेत्तर्हि ततः शिशुपालवधादयोऽपि सुलभा भविष्यंति ॥१०॥ श्रीशुक उवाच । हे नृप, इत्युद्धववचो नारदो यदुवृद्धाः श्रीकृष्णश्च पूजयामासुः ॥११॥ अथ कृष्णो वसुदेवादीनामाज्ञां गृहीत्वेंद्रप्रस्थंप्रति गमनाय दारुकादीनाज्ञापयामास ॥१२॥ ततः ससुतानां स्त्रीणां प्रयाणं कारयित्वा बलरामोग्रसेनानुज्ञया स्वयमपि सूताऽऽनीतं स्वरथमारुहत् ॥१३॥ स चतुरंगया सेनया सह शंख-मृदंग-भेर्यादिभिर्नादिताया दिशः सकाशान्निरगात् ॥१४॥ तदा ससुताः कृष्णपत्न्योऽश्वैः शिबिकाभिश्चाच्युतं पतिमनु ययुः ॥१५॥ वारांगनाश्च नरोष्ट्र-वृषभ-शकट-गजादिषु तृणनिर्मितकुड्यादीनुपस्करान् दृढं संनह्य ययुः ॥१६॥ तदा सैन्यं ध्वज-च्छत्र-चामरायुधश्रेष्ठ-भूषण-किरीट–

कवचैर्बभौ ॥१७॥ तदा नारदः श्रीकृष्णेन सत्कृतः सन् तं कृष्णं प्रणम्य तन्निश्चितं ज्ञात्वाऽऽकाशमार्गेण ययौ॥१८॥ तदा भगवान् राजदूतंप्रति राज्ञां संदेशमब्रवीत् । हे राजानः, वः कल्याणमस्तु । यूयं मा भैष्ट । अहं जरासंधं घातयिष्यामि ॥१९॥ इत्युक्तो दूतो गत्वा नृपान्प्रति भगवदुक्तं यथावदवदत् । तेऽपि श्रीकृष्णस्य दर्शनं प्रत्यैक्षंत ॥२०॥ ततो हरिरानर्त-सौवीर-मरु-देशान् कुरुक्षेत्रं पर्वतान्नदीश्चातिक्रम्य ॥२१॥ दृषद्वतीं सरस्वतीं च तीर्त्वा पंचालान्मत्स्यांश्चातिक्रम्येंद्रप्रस्थं जगाम ॥२२॥ तदा श्रीकृष्णमागतं श्रुत्वा युधिष्ठिरः सोपाध्यायः सुहृद्वृतश्च सन् ॥२३॥ गीतवाद्यघोषेण कृष्णसमीपमभ्ययात् ॥२४॥ कृष्णं दृष्ट्वा स्नेहेनार्द्रहृदयः पुनः पुनस्तं परिरेभे ॥२५॥ युधिष्ठिरः श्रीकृष्णगात्रं दोर्भ्या-

अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद्विहायसा ॥ निशम्य तद्व्यवसितमाहृतार्हणो मुकुंदसंदर्शननिर्वृतेंद्रियः ॥१८॥ राजदूतमुवाचेदं भगवान्प्रीणयन्गिरा ॥ मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥१९॥ इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ॥ तेऽपि संदर्शनं शौरेः प्रत्यैक्षन्यन्मुमुक्षवः ॥२०॥ आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ॥ गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् ॥२१॥ ततो दृषद्वतीं तीर्त्वा मुकुंदोऽथ सरस्वतीम् ॥ पंचालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥२२॥ तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ॥ अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः ॥२३॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ॥ अभ्ययात्स हृषीकेशं प्राणः प्राणमिवादृतः ॥२४॥ दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पांडवः ॥ चिराद्दृष्टं प्रियतमं सस्वजेऽथ पुनः पुनः ॥२५॥ दोर्भ्यां परिष्वज्य रमामलालयं मुकुंदगात्रं नृपतिर्हताशुभः ॥ लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥२६॥ तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन्प्रेमजवाकुलेंद्रियः ॥ यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥२७॥ अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ॥ ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः ॥२८॥ मानितो मानयामास कुरुसृंजयकैकयान् ॥ सूतमागधगंधर्वा वंदिनश्चोपमंत्रिणः ॥२९॥ मृदंगशंखपटहवीणापणवगोमुखैः ॥ ब्राह्मणाश्चारविंदाक्षं तुष्टुवुर्ननृतुर्जगुः ॥३०॥ एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ॥ संस्तूयमानो भगवान्विवेशालंकृतं पुरम्॥३१॥संसिक्तवर्त्म करिणां मदगंधतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुंभैः॥मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गंधैर्नृभिर्युवतिभिश्च विराजमानम् ॥३२॥

मालिंग्य हतपापः सन् मुदं लेभे ॥२६॥ तदा प्रेम्णा व्याकुलेंद्रियो भीमो मातुलपुत्रं कृष्णमालिलिंग । नकुलसहदेवावर्जुनश्च मुदा कृष्णमालिलिंगुः ॥२७॥ तदा श्रीकृष्णो युधिष्ठिरं भीमं च नत्वाऽर्जुनेनालिंगितो नकुलसहदेवाभ्यां वंदितश्च सन् ब्राह्मणान् वृद्धांश्च नमस्कृत्य कौरवसृंजयादीन् मानयामास । सूत-मागध-गंधर्वादीनां च मानं चक्रे ॥२८॥२९॥ तदा ब्राह्मणाः कृष्णं तुष्टुवुः । मृदंग-शंखादिवाद्यैः सह गंधर्वादयो जगुः । नर्तक्यो ननृतुः ॥३०॥ एवं भगवान् सुहृद्वृतः सन् स्वलंकृतं हस्तिनापुरं विवेश ॥३१॥ तत्कीदृशम् । गजानां मदगंधतोयैः संसिक्तमार्गम् । चित्रध्वजैः कनकतोरणैः पूर्णकुंभैर्वस्त्रालंकारयुक्तैः स्त्रीपुरुषैश्च विराजमानम् ॥३२॥ ॥ ॥ ॥

प्रतिगृहं पुष्प-धूप-दीपादिभिर्युक्तं पुरं ददर्श ॥३३॥ तदा पौरस्त्रियस्तल्पे पतीन् गृहकृत्यं च विसृज्य कृष्णं द्रष्टुं राजमार्गे ययुः ॥३४॥ ता गजाश्व-रथ-योधैर्व्याप्ते मार्गे सभार्यं कृष्णं दृष्ट्वा गृहानधिरुह्य पुष्पैस्तं विकीर्य मनसोपगुह्य हास्यावलोकनेनैव सुस्वागतं विदधुः ॥३५॥ ताः स्त्रियः कृष्णपत्नीर्वीक्ष्योचुः । अमूभिः किं पुण्यं कृतम् । यासां चक्षुषां हरिर्हास्यावलोकनादिभिरानंदं ददाति ॥३६॥ तदा पौरास्तत्र तत्र पूजाद्रव्यैः कृष्णं पूजयामासुः ॥३७॥ एवमंतःपुरजनैः सत्कृतो भगवान् राजमंदिरं प्राविशत् ॥३८॥ ततः कुंती कृष्णमागतं दृष्ट्वा पर्यंकादुत्थाय तं परिषस्वजे ॥३९॥ युधिष्ठिरो गोविंदं गृहमानीय हर्षेण युक्तः सन् पूजाप्रकारविशेषं नाविदत् ॥४०॥ तदा कृष्णः कुंत्या गुरुस्त्रीणां च

उद्दीप्तदीपवलिभिः प्रतिसद्म जालनिर्यातधूपरुचिरं विलसत्पताकम् ॥ मूर्धन्यहेमकलशै रजतोरुशृंगैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥३३॥ प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबंधाः ॥ सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेंद्रमार्गे ॥ ३४ ॥ तस्मिन्सुसंकुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ॥ नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥३५॥ ऊचुः स्त्रियः पथि निरीक्ष्य मुकुंदपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः ॥ यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥३६॥ तत्र तत्रोपसंगम्य पौरा मंगलपाणयः ॥ चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥३७॥ अंतःपुरजनैः प्रीत्या मुकुंदः फुल्ललोचनैः ॥ ससंभ्रमैरभ्युपेतः प्राविशद्राजमंदिरम् ॥३८॥ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ॥ प्रीतात्मोत्थाय पर्यंकात्सस्नुषा परिषस्वजे ॥३९॥ गोविंदं गृहमानीय देवदेवेशमादृतः ॥ पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥४०॥ पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् ॥ स्वयं च कृष्णया राजन्भगिन्या चाभिवंदितः ॥४१॥ श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीश्च सर्वशः ॥ आनर्च रुक्मिणीं सत्यां भद्रां जांबवतीं तथा ॥४२॥ कालिंदीं मित्रविंदां च शैब्यां नाग्नजितीं सतीम् ॥ अन्याश्चाभ्यागता यास्तु वासःस्रङ्मंडनादिभिः ॥४३॥ सुखं निवासयामास धर्मराजो जनार्दनम् ॥ ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥४४॥ तर्पयित्वा खांडवेन वह्निं फाल्गुनसंयुतः ॥ मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ॥४५॥ उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया ॥ विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः ॥४६॥

॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे कृष्णस्येंद्रप्रस्थगमनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ ॥

वंदनं चक्रे । द्रौपदी सुभद्रा च कृष्णस्य वंदनं चक्राते ॥४१॥ ततो द्रौपदी कुंत्या प्रेरिता सती रुक्मिण्याद्या अष्टनायका अन्याश्च कृष्णपत्नीर्वस्त्रभूषणादिभिरानर्च ॥४२॥४३॥ ततो युधिष्ठिरः ससैन्यं सभार्यं कृष्णं प्रत्यहं नवं नवं यथा भवति यथा सुखं निवासयामास ॥४४॥ श्रीकृष्णोऽर्जुनेन युतः सन् खांडववनेनाग्निं तर्पयित्वा तत्र मयं मोचयामास । येन मयेन राज्ञे दिव्या सभा कृता ॥४५॥ ततो राज्ञः प्रियं कर्तुमिच्छया श्रीकृष्णः कतिचिन्मासानिंद्रप्रस्थमुवास ॥४६॥ इति श्रीमि० चू० दश० उत्त० एकसप्ततितमः ॥७१॥

ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते । दुर्जयं मागधं बुद्ध्वा भीमेनाघातयद्धरिः ॥१॥ श्रीशुक उवाच ॥ एकदा सभामध्ये मुनिभिर्ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिः ॥१॥ आचार्यैः कुलवृद्धादिभिश्च परिवेष्टितो भूत्वा आसने स्थितो युधिष्ठिर एषां शृण्वतां सतां श्रीकृष्णं संबोध्य जगाद ॥२॥ युधिष्ठिर उवाच ॥ हे गोविंद, अहं राजसूययज्ञेन तवेंद्रादीनंशान् यष्टुमिच्छामि । अतस्तं यज्ञं संपादय ॥३॥ ये पुरुषाः पापनाशके त्वत्पादकमलेप्रति देहेन पूजयंति, मनसा ध्यायंति, वाचा च गृणंति, ते मोक्षं प्राप्नुवंति । आशिषोऽपि त एव प्राप्नुवंति । अन्ये सार्वभौमा अपि न प्राप्नुवंति ॥४॥ अत एष लोकस्तव पादकमलसेवानुभावं पश्यतु । हे देव, ये त्वां भजंति न भजंति वा तेषामुभयेषां कुरुसृंजयाना निष्ठां प्रदर्शय ॥५॥ हे ईश, समदृशः सर्वात्मनस्तव स्वपरभेदो नास्ति । तथापि सेवमानानामेव कल्पवृक्षस्येव तव प्रसादो भवति । अन्येषां न भवति ॥६॥ श्रीभगवानुवाच । हे

श्रीशुक उवाच ॥ एकदा तु सभामध्य आस्थितो मुनिभिर्वृतः ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥१॥ आचार्यैः कुलवृद्धैश्च ज्ञातिसंबंधिबांधवैः ॥ शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥२॥ युधिष्ठिर उवाच ॥ क्रतुराजेन गोविंद राजसूयेन पावनीः ॥ यक्ष्ये विभूतीर्भवतस्तत्संपादय नः प्रभो ॥३॥ त्वत्पादुके अविरतं परि ये चरंति ध्यायंत्यभद्रनशने शुचयो गृणंति ॥ विंदंति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥४॥ तद्देवदेव भवतश्चरणारविंदसेवानुभावमिह पश्यतु लोक एषः ॥ ये त्वां भजंति न भजंत्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृंजयानाम् ॥५॥ न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ॥ संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्ययोऽत्र ॥६॥ श्रीभगवानुवाच ॥ सम्यग्व्यवसितं राजन्भवता शत्रुकर्शन ॥ कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥७॥ ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ॥ सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥८॥ विजित्य नृपतीन्सर्वान्कृत्वा च जगतीं वशे ॥ संभृत्य सर्वसंभारानाहरस्व महाक्रतुम् ॥९॥ एते ते भ्रातरो राजन्लोकपालांशसंभवाः ॥ जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः ॥१०॥ न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ॥ विभूतिभिर्वाऽभिभवेद्देवोऽपि किमु पार्थिवः ॥११॥ श्रीशुक उवाच ॥ निशम्य भगवद्गीतं प्रीतः फुल्लमुखांबुजः ॥ भ्रातॄन्दिग्विजयेऽयुंक्त विष्णुतेजोपबृंहितान् ॥१२॥ ॥ ॥

राजन्, तव विचारितं सम्यगस्ति । येन कर्मणा तव कीर्तिः सर्वलोकव्याप्ता भविष्यति ॥७॥ अयं यज्ञश्रेष्ठो ऋषि-पितृ-देवानामस्माकं सुहृदामपीष्टोऽस्ति ॥८॥ अतः सर्वान् राज्ञो विजित्य सर्वां पृथ्वीं वशे कृत्वा यज्ञसंभारान् संपाद्यैतं महायज्ञमनुतिष्ठ ॥९॥ हे नृप, एते ते भ्रातरो लोकपालांशोत्पन्नाः संति । किंच । जितेंद्रियेण त्वया अजितेंद्रियाणां दुर्जयोऽप्यहं जितोऽस्मि ॥१०॥ किंच । लोके देवा अपि प्रतापेन श्रिया सैन्यादिभिश्च मद्भक्तं पराभवितुं न समर्थाः । तदा नृपाः कुतः समर्था भवंति ॥११॥ श्रीशुक उवाच । हे राजन्, एवं भगवद्वाक्यं श्रुत्वा युधिष्ठिरः प्रीतः सन् दिग्विजयार्थं भ्रातॄन् नियुक्तवान् ॥१२॥ ॥ ॥ ॥ ॥ ॥ ॥

दक्षिणस्यां दिशि सृंजयैः सह सहदेवं, प्रतीच्यां दिशि मत्स्यैः सह नकुलं, उत्तरस्यां केकयैः सहार्जुनं, पूर्वस्यां मद्रकैः सह भीमं च प्रेषयामास ॥१३॥ ततस्ते नृपान् विजित्य दिग्भ्यो बहुधनमानीय युधिष्ठिराय ददुः ॥१४॥ तदा जरासंधमजितं श्रुत्वा नृपतेर्ध्यायतः सतः श्रीकृष्ण उद्धवोक्तमुपायं कथयामास ॥१५॥ ततो भीमोऽर्जुनः श्रीकृष्णश्चैते त्रयो ब्राह्मणचिह्नधारिणो भूत्वा यत्र जरासंधस्तिष्ठति तद्गिरिव्रजं स्थानं जग्मुः ॥१६॥ ते चातिथ्यवेलायां गत्वा जरासंधमयाचंत ॥१७॥ हे जरासंध, अस्मान् दूरमागताननतिथीन् विद्धि । तव भद्रमस्तु । यद्वयमिच्छामहे तत्प्रयच्छ ॥१८॥ यथाऽसाधूनामकार्यं नास्ति तथा सुखदुःखादिसहनकर्तॄणां दुःसहं किंचिदपि नास्ति । तथा अत्युदाराणां अदेयं

सहदेवं दक्षिणस्यामादिशत्सह सृंजयैः ॥ दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ॥ प्राच्यां वृकोदरं मत्स्यैः केकयैः सह मद्रकैः ॥१३॥ ते विजित्य नृपान्वीरा आजह्रुर्दिग्भ्य ओजसा ॥ अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥१४॥ श्रुत्वाऽजितं जरासंधं नृपतेर्ध्यायतो हरिः ॥ आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥१५॥ भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिंगधरास्त्रयः ॥ जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥१६॥ ते गत्वाऽऽतिथ्यवेलायां गृहेषु गृहमेधिनम् ॥ ब्रह्मण्यं समयाचेरन्राजन्या ब्रह्मलिंगिनः ॥१७॥ राजन्विद्ध्यतिथीन्प्राप्तानर्थिनो दूरमागतान् ॥ तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे ॥१८॥ किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ॥ किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥१९॥ योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ॥ नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः ॥२०॥ हरिश्चंद्रो रंतिदेव उंछवृत्तिः शिविर्बलिः ॥ व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥२१॥ श्रीशुक उवाच ॥ स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबंधून्विज्ञाय दृष्टपूर्वानचिंतयत् ॥२२॥ राजन्यबंधवो ह्येते ब्रह्मलिंगानि बिभ्रति ॥ ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥२३॥ बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ॥ ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥२४॥ ॥ ॥ ॥

नास्ति । समदर्शिनां शत्रुर्नास्ति । अतः किं विशेषकथनेन ॥१९॥ यः पुमान् नश्वरेण शरीरेण यशो न संपादयति स निंद्यः शोच्यश्च ज्ञातव्यः ॥२०॥ हरिश्चंद्रः[1] रंतिदेवः[2] मुद्गलः[3] शिबिः[4] बलिः[5] कपोतः[6] व्याधः[7] इमेऽन्ये च नश्वरेण शरीरेण ध्रुवं लोकं प्राप्ताः ॥२१॥ श्रीशुक उवाच ॥ हे राजन्, जरासंधः स्वरैः आकृतिभिः भाषेण न च तान् क्षत्रियान् ज्ञात्वा द्रौपदीस्वयंवरादिषु दृष्टपूर्वान् चिंतयामास ॥२२॥ एते ब्रह्मवेषधराः नृपाः संति । तथापि तेभ्यो भिक्षितं देहमप्यहं ददामि ॥२३॥ यतो विप्रवेषेण विष्णुना राज्याद्भ्रंशि-

१ विश्वामित्रार्थानृण्याय हरिश्चंद्रो भार्यात्मजादि सर्वं विक्रीय स्वयं चांडालतां प्राप्तोऽप्यनिर्विण्णः सहायोध्यावासिभिर्जनैः स्वर्गं गतः । २ रंतिदेवः सकुटुंबोऽष्टचत्वारिंशदहान्यलब्धोदकोऽपि कथंचिल्लब्धमन्नोदकादिकमर्थिभ्यो दत्वा ब्रह्मलोकं गतः । ३ उंछवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुंबोऽप्यातिथ्यदानेन ब्रह्मलोकं गतः । ४ शिबिः शरणागतकपोतरक्षणाय स्वमांसं श्येनाय दत्वा दिवं गतः । ५ बलिः सर्वस्वं ब्राह्मणवेषधारिणे हरये दत्वा तमेवात्मसाच्चकार । ६ कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्वा विमानेन दिवं गतः । ७ व्याधस्तयोः सत्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्निदग्धदेहो निष्कल्मषो दिवमारुरोह ।

तस्यापि वलेः कीर्तिः श्रूयते ॥२४॥ शुक्रेण वार्यमाणोऽपि वलिर्द्विजरूपिणे विष्णवे महीं प्रादात् ॥२५॥ ब्राह्मणकार्यार्थं विपुलं यशो न संपादयता क्षत्रियदेहेन को नु अर्थः सिद्ध्यति न कोऽपि ॥२६॥ इति निश्चित्य कृष्णार्जुनभीमानाह । हे विप्राः, इच्छितं व्रियताम् । आत्मशिरोऽपि वो ददामि ॥२७॥ श्रीभगवानुवाच । हे राजेंद्र, त्वं नो द्वंद्वयुद्धं देहि । वयं राजन्या युद्धार्थिनः प्राप्ताः । अन्नार्थिनो नहि ॥२८॥ असौ भीमः । अयमर्जुनः । अनयोर्मातुलपुत्रं मां कृष्णं ते रिपुं जानीहि ॥२९॥ एवं श्रुत्वा जरासंध उच्चैः प्रहस्य क्रोधयुक्तः सन् प्राह । हे मंदाः, तर्हि वो युद्धं ददामि ॥३०॥ परंतु हे कृष्ण, त्वं मद्भयान्मथुरां त्यक्त्वा समुद्रं शरणं गतः । अतो भीरुणा त्वया सहाहं न योत्स्ये ॥३१॥ अय-

श्रियं जिहीर्षतेंद्रस्य विष्णवे द्विजरूपिणे ॥ जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥२५॥ जीवता ब्राह्मणार्थाय कोऽन्वर्थः क्षत्रबंधुना ॥ देहेन पतमानेन नेहता विपुलं यशः ॥२६॥ इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ॥ हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥२७॥ श्रीभगवानुवाच ॥ युद्धं नो देहि राजेंद्र द्वंद्वशो यदि मन्यसे ॥ युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकांक्षिणः ॥२८॥ असौ वृकोदरः पार्थस्तस्य भ्रातार्जुनो ह्ययम् ॥ अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥२९॥ एवमावेदितो राजा जहासोच्चैः स्म मागधः ॥ आह चामर्षितो मंदा युद्धं तर्हि ददामि वः ॥३०॥ न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा ॥ मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥३१॥ अयं तु वयसाऽतुल्यो नातिसत्वो न मे समः ॥ अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥३२॥ इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम् ॥ द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ॥३३॥ ततः समे खले वीरौ संयुक्तावितरेतरौ ॥ जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥३४॥ मंडलानि विचित्राणि सव्यं दक्षिणमेव च ॥ चरतोः शुशुभे युद्धं नटयोरिव रंगिणोः ॥३५॥ ततश्चटाचटाशब्दो वज्रनिष्पेषसंनिभः ॥ गदयोः क्षिप्तयो राजन्दंतयोरिव दंतिनोः ॥३६॥ ते वै गदे भुजजवेन निपात्यमाने अन्योऽन्यतोंऽसकटिपादकरोरुजत्रून् ॥ चूर्णीबभूवतुरुपेत्य यथार्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्य्वोः ॥३७॥ इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ॥ शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः ॥३८॥ तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ॥ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥३९॥

मर्जुनोऽपि वयसा न्यूनोऽस्ति अतो मे समो नास्ति । भीमस्तु मम तुल्यबलः ॥३२॥ इत्युक्त्वा भीमसेनाय महतीं गदां दत्वा द्वितीयां स्वयमादाय पुराद्बहिर्युद्धार्थं निर्जगाम ॥३३॥ ततो युद्धांगणे रणदुर्मदौ तौ वीरौ परस्परं गदाभ्यां जघ्नतुः ॥३४॥ ततो विचित्रान् गदायुद्धभेदान् चरतोस्तयोर्युद्धं शुशुभे ॥३५॥ ततस्ताभ्यां परस्परोपरि क्षिप्तयोर्गदयोश्चटचटाशब्दो जातः ॥३६॥ प्राप्तक्रोधयोस्तयोर्बाहुवेगेन पात्यमाने गदे स्कंध-कटि-पाद-करोरु-जत्रूपेत्य चूर्णीबभूवतुः ॥३७॥ इत्थं तौ भग्नगदौ क्रुद्धौ नृवीरौ स्वमुष्टिभिर्युद्धं चक्रतुः । तयोस्तलताडनोत्थः शब्दो वज्रपात इव बभूव ॥३८॥ एवं तयोः प्रहरतोः समानं युद्धं जातम् ॥३९॥ ॥ ॥ ॥

एवं दिवा युद्ध्यतोर्निशि सुहृद्वत्तिष्ठतोस्तयोः सप्तविंशतिर्दिनानि गतानि ॥४०॥ तत एकदा भीमः कृष्णं प्राह । हे माधव, युधि जरासंधं जेतुमहं न शक्तः ॥४१॥ ततः शत्रोर्जन्ममरणे, जराराक्षस्या कृतं जीवितं च जानन् श्रीकृष्णः स्वतेजसा भीमबलं वर्धयन् कथमसौ शकलीभवेदिति चिंतयामास ॥४२॥ ततो हरिः करेण शाखां गृहीत्वा पाटयन्निव भीमं संकेतेनं दर्शयामास ॥४३॥ भीमस्तद्विज्ञाय शत्रुं पादयोर्गृहीत्वा भूमौ निपात्य ॥४४॥ एकं पादं पदाऽऽक्रम्य दोर्भ्यामन्यं पादं प्रगृह्य गुदतः पाटयामास ॥४५॥ तदा एक-पादोरु-वृषण-कटि-पृष्ठ-स्तनांस-बाह्वक्षि-भ्रूकर्णे द्वे शकले प्रजा ददृशुः ॥४६॥ एवं जरासंधे निहते सति महान् हाहाकार आसीत् । ततः कृष्णार्जुनौ भीममालिंग्य प्रशशंसतुः

एवं तयोर्महाराज युध्यतोः सप्तविंशतिः ॥ दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥४०॥ एकदा मातुलेयं वै प्राह राजन्वृकोदरः ॥ न शक्तोऽहं जरासंधं निर्जेतुं युधि माधव ॥४१॥ शत्रोर्जन्ममृती विद्वान्जीवितं च जराकृतम् ॥ पार्थमाप्याययन्स्वेन तेजसाऽचिंतयद्धरिः ॥४२॥ संचिंत्यारिवधोपायं भीमस्यामोघदर्शनः ॥ दर्शयामास विटपं पाटयन्निव संज्ञया ॥४३॥ तद्विज्ञाय महासत्वो भीमः प्रहरतां वरः ॥ गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥४४॥ एकं पादं पदाऽऽक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ॥ गुदतः पाटयामास शाखामिव महागजः ॥४५॥ एकपादोरुवृषणकटिपृष्ठस्तनांसके ॥ एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥४६॥ हाहाकारो महानासीन्निहते मगधेश्वरे ॥ पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥४७॥ सहदेवं तत्तनयं भगवान्भूतभावनः ॥ अभ्यषिंचदमेयात्मा मगधानां पतिं प्रभुः ॥ मोचयामास राजन्यान्संरुद्धा मागधेन ये ॥४८॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे जरासंधवधो नाम द्विसप्ततितमोऽध्यायः ॥७२॥ श्रीशुक उवाच ॥ अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ॥ ते निर्गता गिरिद्रोण्यां मलिना मलवाससः ॥१॥ क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ॥ ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥२॥ श्रीवत्सांकं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुंडलम् ॥३॥ पद्महस्तं गदाशंखरथांगैरुपलक्षितम् ॥ किरीटहारकटककटिसूत्रांगदाचितम् ॥४॥ ॥ ॥ ॥

॥४७॥ ततो भगवान् जरासंधपुत्रं सहदेवं मगधदेशानां पतिं चकार । ततो जरासंधेन रुद्धान् राज्ञो मोचयामास ॥४८॥ इति श्रीम० चू० दश० उत्त० द्विसप्ततितमोऽध्यायः ॥७२॥ ततस्त्रिसप्ततितमे मोचयित्वा नृपान् हरिः । राजार्हभोगैः स्वान् देशान् प्रस्थाप्य पुनरागमत् ॥१॥ श्रीशुक उवाच । हे राजन्, येऽष्टशताधिकं विंशतिसहस्रं २०८०० राजानो दिग्विजये जरासंधेन निर्जिता गिरिद्रोण्यां रुद्धाश्च ॥१॥ ते मलिनाः क्षुत्क्षामाः शुष्कमुखाः संरोधेन कर्शिता निर्गताः संतः ॥२॥ मेघश्यामं पीतांबरधरं श्रीवत्सलांछनं चतुर्भुजं प्रसन्नवदनम् ॥३॥ शंख-चक्र-गदा-पद्मधरं किरीट-हार-कटक-कटिसूत्रांगदैर्युक्तम् ॥४॥ ॥ ॥ ॥ ॥

१ जन्म शकलरूपं मरणं च शकलीभावस्ते । २ यथाऽहं विटपं पाटयामि तथा त्वमेनं विपाटयेति संकेतेन शत्रुवधोपायं दर्शयामासेत्यर्थः ।

वनमालया युक्तं च श्रीकृष्णं ददृशुः । तदा चक्षुर्भ्यां पिबंत इव जिह्वया लिहंत इव ॥५॥ वाहुभ्यामालिंगंत इव हरेः पादयोर्मूर्धभिः प्रणेमुः ॥६॥ किंच । श्रीकृष्णदर्शनाद्गत-क्लेशाः राजानः प्रांजलयः संतः श्रीकृष्णं गीर्भिस्तुष्टुवुः ॥७॥ राजान ऊचुः । हे देवदेव, तुभ्यं नमः।हे प्रभो,कारागृहान्मोचितानस्मान् घोरायाः संसृतेरपि मोचय ॥८॥ हे नाथ, एनं जरासंधं वयं दोषदृष्ट्या न पश्यामः । यतो जरासंधाज्जातमस्माकं राज्यभ्रंशं तवानुग्रहं मन्यामहे ॥९॥ यतो राज्यैश्वर्येणोन्मत्तो नृपः श्रेयो न विंदते । किंतु तव मायामोहितः सन् अनित्याः संपदो नित्या मन्यते ॥१०॥ यथा अज्ञा मृगजलं जलाशयं मन्यंते एवमविवेकिनो जनाः सृष्ट्यादिविकाररूपां तव मायां सत्यां पश्यंति ॥११॥ वयं पुरा मदांधाः

भ्राजद्वरमणिग्रीवं निवीतं वनमालया ॥ पिबंत इव चक्षुर्भ्यां लिहंत इव जिह्वया ॥५॥ जिघ्रंत इव नासाभ्यां रंभंत इव वाहुभिः ॥ प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥६॥ कृष्णसंदर्शनाह्लादध्वस्तशंरोधनक्लमाः ॥ प्रशशंसुर्हृषीकेशं गीर्भिः प्रांजलयो नृपाः ॥७॥ राजान ऊचुः॥ नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ॥ प्रपन्नान्पाहि नः कृष्ण निर्विण्णान्घोरसंसृतेः ॥८॥ नैनं नाथान्वसूयामो मागधं मधुसूदन ॥ अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ॥९॥ राज्यैश्वर्यमदोनद्धो न श्रेयो विंदते नृपः ॥ त्वन्मायामोहितो नित्या मन्यते संपदोऽचलाः ॥१०॥ मृगतृष्णां यथा वाला मन्यंत उदकाशयम् ॥ एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥११॥ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या इतरेतरस्पृधः ॥ घ्नंतः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाऽविगणय्य दुर्मदाः ॥१२॥ त एव कृष्णाद्य गभीररंहसा दुरंतवीर्येण विचालिताः श्रियः ॥ कालेन तन्वा भवतोऽनुकंपया विनष्टदर्पाश्चरणौ स्मराम ते ॥१३॥ अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत्पतता रुजां भुवा ॥ उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥१४॥ तं नः समादिशोपायं येन ते चरणाब्जयोः ॥ स्मृतिर्यथा न विरमेदपि संसरतामिह ॥१५॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविंदाय नमो नमः ॥१६॥ श्रीशुक उवाच ॥ संस्तूयमानो भगवान्राजभिर्मुक्तबंधनैः ॥ तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥१७॥ श्रीभगवानुवाच ॥ अद्यप्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ॥ सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ॥१८॥ ॥ ॥ ॥

संतस्त्वामविगणय्य स्थिताः ॥१२॥ त एव वयमद्य कालेन संपत्तेश्चालिताः संतस्तव चरणौ स्मरामः ॥१३॥ अथो मृगजलसदृशं राज्यं नेच्छामहे परलोके च कर्णयो रुचिजनकमात्रं स्वर्गादिफलं न स्पृहयामहे ॥१४॥ तस्मात्तव चरणाब्जयोः स्मृतिर्येन न नश्येत्तमुपायं नः कथय ॥१५॥ हे ईश, कृष्णाय वासुदेवाय हरये परमात्मने । प्रणतक्लेशनाशाय गोविंदाय तुभ्यं नमो नमः ॥१६॥ श्रीशुक उवाच । एवं राजभिः स्तूयमानो भगवान् मंजुलया वाण्या तानाह ॥१७॥ श्रीभगवानुवाच । हे भूपाः, भवद्भिर्यत्प्रार्थितं तन्मयांगीकृतम् । अद्यप्रभृति वो मयि सुदृढा भक्तिरस्तु ॥१८॥ ॥ ॥ ॥ ॥ ॥ ॥

मद्भजनमेव कर्तव्यमिति भवद्भिर्यत्संकल्पितं तद्दिष्ट्या । यतो नृणां श्रीमदं बंधकं पश्यामि ॥१९॥ हैहयो[1] नहुषो[2] वेनो[3] रावणो[4] नरकासुरो[5]ऽपरे च देवदैत्यनरेश्वराः श्रीमदेन स्थानाद्भ्रंशिताः ॥२०॥ अतो यूयं देहादिकं नश्वरं ज्ञात्वा मां यज्ञैर्यजंतः संतो धर्मेण प्रजा रक्षथ ॥२१॥ किंच । पुत्रादिसंततीर्विस्तारयंतो दैवप्राप्तं सुखं दुःखं वा समत्वेन सेवंतो मच्चित्ता भूत्वा विचरिष्यथ ॥२२॥ देहादौ उदासीनाः संतो मयि मन आवेश्यांते मां यास्यथ ॥२३॥ श्रीशुक उवाच । श्रीकृष्णो नृपानेवमादिश्य ततस्तेषामभ्यंगादिकर्मणि पुरुषान् स्त्रियश्च युयोज ॥२४॥ ततस्तेषां पूजां सहदेवेन राजयोग्यवस्त्रभूषणादिभिः कारयामास ॥२५॥ ततः सुस्नातान् भोगैश्च युक्तान् तान् वरान्नेन भोजयामास ॥२६॥ एवं

दिष्ट्या व्यवसितं भूपा भवंत ऋतभाषिणः ॥ श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥१९॥ हैहयो नहुषो वेनो रावणो नरकोऽपरे ॥ श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥२०॥ भवंत एतद्विज्ञाय देहाद्युत्पाद्यमंतवत् ॥ मां यजंतोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥२१॥ संतन्वंतः प्रजातंतून्सुखं दुःखं भवाभवौ ॥ प्राप्तं प्राप्तं च सेवंतो मच्चित्ता विचरिष्यथ ॥२२॥ उदासीनाश्च देहादावात्मारामा धृतव्रताः ॥ मय्यावेश्य मनः सम्यङ् मामंते ब्रह्म यास्यथ ॥२३॥ श्रीशुक उवाच ॥ इत्यादिश्य नृपान्कृष्णो भगवान्भुवनेश्वरः ॥ तेषां न्ययुंक्त पुरुषान्स्त्रियो मज्जनकर्मणि ॥२४॥ सपर्यां कारयामास सहदेवेन भारत ॥ नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥२५॥ भोजयित्वा वरान्नेन सुस्नातान्समलंकृतान् ॥ भोगैश्च विविधैर्युक्तांस्तांबूलाद्यैर्नृपोचितैः ॥२६॥ ते पूजिता मुकुंदेन राजानो मृष्टकुंडलाः ॥ विरेजुर्मोचिताः क्लेशात्प्रावृडंते यथा ग्रहाः ॥२७॥ रथान्सदश्वानारोप्य मणिकांचनभूषितान् ॥ प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान्प्रत्ययापयत् ॥२८॥ त एवं मोचिताः कृच्छ्रात्कृष्णेन सुमहात्मना ॥ ययुस्तमेव ध्यायंतः कृतानि च जगत्पतेः ॥२९॥ जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ॥ यथाऽन्वशासद्भगवांस्तथा चक्रुरतंद्रिताः ॥३०॥ जरासंधं घातयित्वा भीमसेनेन केशवः ॥ पार्थाभ्यां संयुतः प्रायात्सहदेवेन पूजितः ॥३१॥ गत्वा ते खांडवप्रस्थं शंखान्दध्मुर्जितारयः ॥ हर्षयंतः स्वसुहृदो दुर्हृदां चासुखावहाः ॥३२॥ ॥ ॥ ॥ ॥

मुकुंदेन क्लेशान्मोचिताः पूजिताश्च ते राजानो विरेजुः ॥२७॥ ततः कृष्णः स्वर्णभूषितान् रथान्प्रति तानारोप्य स्वदेशान् प्रेषयामास ॥२८॥ एवं दुःखान्मोचिता राजानः पथि कृष्णकृतानि ध्यायंतो ययुः ॥२९॥ ते स्वदेशान् गत्वा यथा भगवानाज्ञापितवान् तथा चक्रुः ॥३०॥ एवं जरासंधं भीमसेनेन घातयित्वा श्रीकृष्णः सहदेवेन पूजितः सन् भीमार्जुनाभ्यां सहेंद्रप्रस्थं गंतुं प्रायात् ॥३१॥ जितशत्रवस्ते भीमार्जुनकृष्णा इंद्रप्रस्थसमीपं गत्वा शंखान् दध्मुः ॥३२॥ ॥ ॥ ॥

१ कार्तवीर्यश्चक्रवर्ती नरेश्वरः, जमदग्नेः पितुः कामधेनुहरणात्परशुरामेण सपुत्रो हतः । २ नहुषो देवेंद्रतां प्राप्त उन्मत्तः शचीसंगाय ब्राह्मणान् शिबिकां वाहयंस्तैरेव स्वर्गाद्भ्रंशितोऽजगरत्वमवाप ३ वेनोऽप्युन्मत्तो ब्राह्मणानधिक्षिपंस्तैरेव हुंकृतैर्हतः । ४ रावणो राक्षसेश्वरः सीतामभिलषन् राघवेण हतः । ५ नरकासुरो दैत्येश्वरोऽदितिकुंडलाद्याहरणान्मयैव हतः ।

तच्छ्रुत्वेंद्रप्रस्थनिवासिनो जना जरासंधं हतं मेनिरे । युधिष्ठिरश्च पूर्णमनोरथ आसीत् ॥३३॥ ततो भीमार्जुनजनार्दना युधिष्ठिरं नत्वा तस्मै स्वकृतं सर्वं वृत्तं कथयामासुः ॥३४॥ तद्भगवदनुकंपितं ज्ञात्वा युधिष्ठिर आनंदाश्रुकलां मुंचन् सन् किंचन नोवाच ॥३५॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे त्रिसप्ततितमोऽध्यायः ॥७३॥ चतुर्युक्सप्ततितमे राजसूयक्रिया द्विजैः । अग्रपूजाप्रसंगेन चैद्यघातादि वर्ण्यते ॥१॥ श्रीशुक उवाच ॥ हे राजन्, युधिष्ठिर एवं कृष्णस्यानुभावं श्रुत्वा प्रीतः सन् तमब्रवीत् ॥१॥ युधिष्ठिर उवाच ॥ हे भगवन्, ये सनकादयस्त्रैलोक्यगुरवस्तेऽपि यस्य तवानुशासनं भाग्येनैतल्लब्धमिति बहुमानेन शिरसा वहंति ॥२॥ हे भगवन्, स त्वं राजेत्यभिमानिनामस्माक-

तच्छ्रुत्वा प्रीतमनस इंद्रप्रस्थनिवासिनः ॥ मेनिरे मागधं शांतं राजा चाप्तमनोरथः ॥३३॥ अभिवंद्याथ राजानं भीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयांचक्रुरात्मना यदनुष्ठितम् ॥३४॥ निशम्य धर्मराजस्तत्केशवेनानुकंपितम् ॥ आनंदाश्रुकलां मुंचन्प्रेम्णा नोवाच किंचन ॥३५॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे कृष्णाद्यागमने त्रिसप्ततितमोऽध्यायः ॥७३॥ श्रीशुक उवाच ॥ एवं युधिष्ठिरो राजा जरासंधवधं विभोः ॥ कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥१॥ युधिष्ठिर उवाच ॥ ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ॥ वहंति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥२॥ स भवानरविंदाक्षो दीनानामीशमानिनाम् ॥ धत्तेऽनुशासनं भूमंस्तदत्यंतविडंबनम् ॥३॥ नह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ॥ कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥४॥ न वै तेऽजित भक्तानां ममाहमिति माधव ॥ त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥५॥ श्रीशुक उवाच ॥ इत्युक्त्वा यज्ञिये काले वव्रे युक्तान्स ऋत्विजः ॥ कृष्णानुमोदितः पार्थो ब्राह्मणान्ब्रह्मवादिनः ॥६॥ द्वैपायनो भरद्वाजः सुमंतुर्गौतमोऽसितः ॥ वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥७॥ विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ॥ पैलः पराशरो गर्गो वैशंपायन एव च ॥८॥ अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ॥ वीतिहोत्रो मधुच्छंदा वीरसेनोऽकृतव्रणः ॥९॥ उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः ॥ धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥१०॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः ॥ तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥११॥ ॥ ॥ ॥ ॥

माज्ञां धत्से तदत्यंतमयोग्यम् ॥३॥ अद्वितीयस्य परमात्मनस्तव तेजः कर्मभिर्न वर्धते । न च ह्रसते ॥४॥ हे अजित, तव भक्तानामपि मम तवेति भेदबुद्धिर्नास्ति । तदा तव कुतः स्यात् ॥५॥ श्रीशुक उवाच ॥ इत्युक्त्वा कृष्णप्रेरितो युधिष्ठिरो यज्ञोचिते वसंतादिकाले होतृप्रमुखान् ऋत्विजो वव्रे ॥६॥ ते च-व्यासः भरद्वाजः सुमंतुः गौतमः असितः च्यवनः कण्वः मैत्रेयः कवषः त्रितः ॥७॥ विश्वामित्रः वामदेवः सुमतिः जैमिनिः क्रतुः पैलः पराशरः गर्गः वैशंपायनः ॥८॥ अथर्वा कश्यपः धौम्यः रामः भार्गवः आसुरिः वीतिहोत्रः मधुच्छंदाः वीरसेनः अकृतव्रणः ॥९॥ तथान्ये द्रोण-भीष्म-कृपादय उपहूताः । सुतैः सह धृतराष्ट्रः विदुरः ॥१०॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः सर्वे राजानश्च यज्ञं द्रष्टुं

तत्राजग्मुः ॥११॥ ततस्ते ब्राह्मणाः स्वर्णलांगलैः कर्षणादिभिर्यज्ञभूमिं संशोध्य धर्मराजं दीक्षासंस्कारयुक्तं चक्रुः ॥१२॥ तत्र यज्ञे उपस्करा हैमा आसन् । ततो ब्रह्म-शिवसंयुता इंद्रादिलोकपालाः ॥१३॥ सिद्ध-गंधर्व-विद्याधरोरगा मुनयो यक्षरक्षांसि किंनरचारणाः ॥१४॥ राजानो राजपत्न्यश्च राजसूयंप्रति समीयुः । ते सर्वे तं राजसूयं सुसंपन्नं मेनिरे ॥१५॥ तदा ऋत्विजो युधिष्ठिरं राजसूयेन विधिवद्याजयामासुः । यथा देवा वरुणम् ॥१६॥ ततः सोमवल्लीकंडणदिने युधिष्ठिरो ऋत्विजः सभ्यांश्च यथावत्पूजयामास ॥१७॥ तदा सभासदोऽग्रपूजायोग्यं विचारयंतः संतो योग्यानां बहुत्वेन यदैकस्य निश्चयो नाभूत् तदा सहदेवोऽब्रवीत् ॥१८॥ हे सभ्याः, एष श्रीकृष्णोऽग्रपूजामर्हति । यत एष एव

ततस्ते देवयजनं ब्राह्मणाः स्वर्णलांगलैः ॥ कृष्ट्वा तत्र यथाम्नायं दीक्षयांचक्रिरे नृपम् ॥१२॥ हैमाः किलोपकरणा वरुणस्य यथा पुरा ॥ इंद्रा-द्यो लोकपाला विरिंचभवसंयुताः ॥१३॥ सगणाः सिद्धगंधर्वा विद्याधरमहोरगाः ॥ मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥१४॥ राजानश्च समाहूता राजपत्न्यश्च सर्वशः ॥ राजसूयं समीयुः स्म राज्ञः पांडुसुतस्य वै ॥१५॥ मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ॥ अयाजयन्महा-राजं याजका देववर्चसः ॥ राजसूयेन विधिवत्प्राचेतसमिवामराः ॥१६॥ सौत्येऽहन्यवनीपालो याजकान्सदसस्पतीन् ॥ अपूजयन्महाभागा-न्यथावत्सुसमाहितः ॥१७॥ सदस्याग्र्यार्हणार्हं वै विमृशंतः सभासदः ॥ नाध्यगच्छन्ननैकांत्यात्सहदेवस्तदाऽब्रवीत् ॥१८॥ अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान्सात्वतां पतिः ॥ एष वै देवताः सर्वा देशकालधनादयः ॥१९॥ यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ॥ अग्निराहुतयो मंत्राः सांख्यं योगश्च यत्परः ॥२०॥ एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ॥ आत्मनाऽऽत्माश्रयः सभ्याः सृजत्यवति हंत्यजः ॥२१॥ विविधानीह कर्माणि जनयन्यदवेक्षया ॥ ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥२२॥ तस्मात्कृष्णाय महते दीयतां परमार्हणम् ॥ एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत् ॥२३॥ सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ॥ देयं शांताय पूर्णाय दत्तस्यानंत्यमिच्छता ॥२४॥ इत्युक्त्वा सहदेवोऽभूत्तूर्ष्णीं कृष्णानुभाववित् ॥ तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः ॥२५॥ श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ॥ समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥२६॥ तत्पादाववनिज्यापः शिरसा लोकपावनीः ॥ सभार्यः सानुजामात्यः सकुटुंबोऽवहन्मुदा ॥२७॥

सर्वदेवतारूपी देशकालधनादिरूपी चास्ति ॥१९॥ यत्स्वरूपमिदं विश्वमस्ति । यत्स्वरूपा यज्ञा अग्निः आहुतयो मंत्रादयश्च संति ॥२०॥ असावेवेदं विश्वं सृजति रक्षति संहरति च ॥२१॥ यस्यानुग्रहेण तपोयोगादि कुर्वन् जनो धर्मादिरूपं श्रेयः साधयति ॥२२॥ तस्मादस्मै कृष्णायाग्रपूजा दीयताम् । एवं कृते सति सर्वभूतानां आत्मनश्च पूजनं भवेत् ॥२३॥ अतोऽनंतफलमिच्छता पुरुषेण पूर्णाय निरस्तभेदमतये कृष्णायाग्रपूजनं देयम् ॥२४॥ इत्युक्त्वा सहदेवस्तूष्णीमभूत् । तच्छ्रुत्वा सर्वे सभ्याः साधु साध्वित्यूचुः ॥२५॥ ततो युधिष्ठिरो विप्राणां साधु साध्विति घोषं श्रुत्वा सभासदामभिप्रायं च ज्ञात्वा प्रीतः सन् कृष्णं पूजयामास ॥२६॥ तदा तत्पादौ प्रक्षाल्य तज्जलं सकुटुंबः शिरसि दधार ॥२७॥

वस्त्रभूषणादिभिः श्रीकृष्णं पूजयित्वाऽश्रुपूर्णाक्षः सन् तमीक्षितुं नाशक्नोत् ॥२८॥ इत्थं पूजितं कृष्णं वीक्ष्य प्रांजलयः सर्वे जनास्तं प्रणेमुः। तदा कृष्णोपर्याकाशात्पुष्पवृष्टयः पेतुः ॥२९॥ ततः शिशुपालस्तत्सर्वं दृष्ट्वा क्रुद्धः सन् आसनादुत्थाय बाहुमूर्ध्वं कृत्वा भगवंतं निंद्यवाक्यानि श्रावयन् जगाद ॥३०॥ हे सभ्याः, कालो दुस्तर इति श्रुतिः सत्या। यतो वृद्धानामपि बुद्धिर्बालवाक्यैर्भिद्यते ॥३१॥ हे सभासदः, पात्रविदां श्रेष्ठा यूयं, कृष्णोऽग्रपूजायां संमत इति बालभाषितं मा गृह्णीत ॥३२॥ अहो, तपोविद्यादियुक्तानृषीन् ब्रह्मनिष्ठान् ॥३३॥ सदसस्पतींश्च हित्वा गोपालः सपर्यां कथमर्हति। यथा काकः पुरोडाशं तद्वत् ॥३४॥ किंच। अयं कृष्णः सर्वधर्मबहिष्कृतो वर्णाश्रमकुलभ्रष्टो गुणैर्हीनश्चास्ति।

वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ॥ अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् ॥२८॥ इत्थं सभाजितं वीक्ष्य सर्वे प्रांजलयो जनाः ॥ नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥२९॥ इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ॥ उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन्भगवते परुषाण्यभीतः ॥३०॥ ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ॥ वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥३१॥ यूयं पात्रविदां श्रेष्ठा मा मन्यध्वं बालभाषितम् ॥ सदसस्पतयः सर्वे कृष्णो यत्संमतोऽर्हणे ॥३२॥ तपोविद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् ॥ परमर्षीन्ब्रह्मनिष्ठाँल्लोकपालैश्च पूजितान् ॥३३॥ सदसस्पतीनतिक्रम्य गोपालः कुलपांसनः ॥ यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥३४॥ वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ॥ स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥३५॥ ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ॥ वृथा पानरतं शश्वत्सपर्यां कथमर्हति ॥३६॥ ब्रह्मर्षिसेवितान्देशान्हित्वैतेऽब्रह्मवर्चसम् ॥ समुद्रं दुर्गमाश्रित्य बाधंते दस्यवः प्रजाः ॥३७॥ एवमादीन्यभद्राणि बभाषे नष्टमंगलः ॥ नोवाच किंचिद्भगवान्यथा सिंहः शिवारुतम् ॥३८॥ भगवन्निंदनं श्रुत्वा दुःसहं तत्सभासदः ॥ कर्णौ पिधाय निर्जग्मुः शपंतश्चेदिपं रुषा ॥३९॥ निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥४०॥ ततः पांडुसुताः क्रुद्धा मत्स्यकैकेयसृंजयाः ॥ उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥४१॥ ततश्चैद्यस्त्वसंभ्रांतो जगृहे खड्गचर्मणी ॥ भर्त्सयन्कृष्णपक्षीयान्राज्ञः सदसि भारत ॥४२॥ ॥ ॥ ॥ ॥

अतः पूजायाः कथं योग्यो भवति ॥३५॥ यादवानां कुलं ययातिना शप्तं सद्भिर्बहिष्कृतम्। तेषां पूजा कथम् ॥३६॥ एते चौरा यादवा ब्रह्मर्षिसेवितान् देशान् हित्वा, समुद्रे दुर्गं कृत्वा, प्रजा बाधंते ॥३७॥ स शिशुपाल एवमादीनि निंद्यवाक्यानि बभाषे। तथापि भगवान् किंचिदपि नोवाच। यथा सिंहः फेरुशब्दं श्रुत्वाऽपि किंचिदपि न वक्ति तद्वत् ॥३८॥ तदा सभ्यास्तन्निंदनं श्रुत्वा कर्णौ पिधाय अयं म्रियतामिति शिशुपालं शपंतः संतः सभायाः सकाशान्निर्जग्मुः ॥३९॥ यतो यः पुमान् भगवतस्तद्भक्तस्य च निंदां श्रुत्वा तस्मात्स्थानान्नापैति स सुकृताच्च्युतः सन् नरकं प्राप्नोति॥४०॥ततः पांडवा मत्स्यकैकेयसृंजयाश्च क्रुद्धाः संतः शस्त्राणि गृहीत्वा शिशुपालं हंतुमुत्तस्थुः॥४१॥ततः शिशुपालः सभायां कृष्णप-

क्षीयान् निर्भर्त्सयन् खड्गचर्मणी जगृहे ॥४२॥ तावत् कृष्ण उत्थाय स्वान् निवार्य चक्रेण तस्य शिरो जहार ॥४३॥ तदा शिशुपाले हते सति कोलाहलशब्द आसीत् । तस्यानुवर्तिनो भूपा जीवितेच्छया दुद्रुवुः ॥४४॥ ततः सर्वेषां पश्यतां चैद्यदेहोत्थं ज्योतिः श्रीकृष्णं प्राविशत् ॥४५॥ स वैरबुद्ध्या श्रीहरिं ध्यायन् त्रिभिर्जन्मभिस्तन्मयतां प्राप्तः । यतो निरंतरचिंतनमेव ध्येयाकारजन्मनः कारणमस्ति ॥४६॥ ततो युधिष्ठिरो ऋत्विग्भ्यः सदस्येभ्यश्च दक्षिणां दत्वाऽवभृथस्नानं चक्रे ॥४७॥ ततः कृष्णो, राज्ञो यज्ञं साधयित्वा सुहृद्भिः प्रार्थितः संस्तत्रेंद्रप्रस्थे कतिचिन्मासानुवास ॥४८॥ ततोऽनिच्छतो राज्ञ आज्ञां गृहीत्वा श्रीकृष्णो भार्याभिः प्रधानैश्च सह द्वारकां ययौ ॥४९॥ हे राजन्, वैकुंठवासिनो-

तावदुत्थाय भगवान्स्वान्निवार्य स्वयं रुषा ॥ शिरः क्षुरांतचक्रेण जहारापततो रिपोः ॥४३॥ शब्दः कोलाहलोऽप्यासीच्छिशुपाले हते महान् ॥ तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥४४॥ चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ॥ पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥४५॥ जन्मत्रयानुगुणितवैरसंरब्धया धिया ॥ ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥४६॥ ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् ॥ सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥४७॥ साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ॥ उवास कतिचिन्मासान्सुहृद्भिरभियाचितः ॥४८॥ ततोऽनुज्ञाप्य राजानमनिच्छंतमपीश्वरः ॥ ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥४९॥ वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ॥ वैकुंठवासिनोर्जन्म विप्रशापात्पुनः पुनः ॥५०॥ राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ॥ ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥५१॥ राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ॥ कृष्णं क्रतुं च शंसंतः स्वधामानि ययुर्मुदा ॥५२॥ दुर्योधनमृते पापं कलिं कुरुकुलामयम् ॥ यो न सेहे श्रियं स्फीतां दृष्ट्वा पांडुसुतस्य ताम् ॥५३॥ य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ॥ राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते ॥५४॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे शिशुपालवधो नाम चतुःसप्ततितमोऽध्यायः ॥७४॥ राजोवाच ॥ अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ॥ सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥१॥ ॥ ॥ ॥

र्जयविजययोर्विप्रशापात् पुनः पुनर्जन्म ते वर्णितम् ॥५०॥ अवभृथेन स्नातो युधिष्ठिरो, ब्रह्मक्षत्रियसभामध्ये इंद्र इव शुशुभे ॥५१॥ ततो राज्ञा सत्कृताः सर्वे देवमनुष्यादयः कृष्णं राजसूययज्ञं च प्रशंसंतः संतः स्वस्वस्थानानि ययुः ॥५२॥ दुर्योधनस्तु युधिष्ठिरस्य श्रियमसहमानो न मुमुदे ॥५३॥ य इदं शिशुपालवधादिकं कर्म राजमोक्षं यज्ञं च कीर्तयेत् स सर्वपापैः प्रमुच्यते ॥५४॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे चतुःसप्ततितमोऽध्यायः ॥७४॥ पंचयुक्सप्ततितमे यज्ञावभृथसंभ्रमः । सुयोधनस्य चाक्षांत्या मानभंगो दृशिभ्रमात् ॥१॥ राजोवाच ॥ हे ब्रह्मन्, अजातशत्रो राजसूयमहोदयं दृष्ट्वा तत्र ये मनुष्या राजानो देवादयश्च प्राप्तास्ते सर्वे एकं दुर्योधनं वर्जयित्वा

मुमुदिरे इति त्वन्मुखाच्छ्रुतं तत्र कारणमुच्यताम् ॥१॥२॥ श्रीशुक उवाच ॥ तव पितामहस्य यज्ञे प्रेमबंधनाबांधवास्तत्तत्कर्मणि नियुक्ता आसन् ॥३॥ तेच यथा—भीमः पाककर्मणि । दुर्योधनः कोशस्थाने । सहदेवः पूजायाम् । नकुलो नानावस्तुसाधने ॥४॥ अर्जुनो गुरूणां चंदनालेपनादौ । कृष्णः पादप्रक्षालने । द्रौपदी परिवेषणे । कर्णो दाने ॥५॥ तथा सात्यकिर्विकर्णो हार्दिक्यो विदुरादयः संतर्दनादयश्च ॥६॥ महायज्ञे नानाकर्मसु निरूपिताः संतस्तत्तत्कर्मसु प्रवर्ततेस्म ॥७॥ एवं यज्ञे शिशुपालतेजसि कृष्णे प्रविष्टे सति यज्ञसमाप्तौ ऋत्विगादिषु दक्षिणादिभिः सम्यक् पूजितेषु च सत्सु सर्वे गंगायामवभृथस्नानं चक्रुः ॥८॥ तस्मिन्नवभृथस्नानोत्सवे मृदंगभेर्यादीनि वाद्यानि नेदुः ॥९॥ नर्तक्यो ननृतुः ।

दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः ॥ इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥२॥ ऋषिरुवाच ॥ पितामहस्य ते यज्ञे राजसूये महात्मनः ॥ बांधवाः परिचर्यायां तस्यासन्प्रेमबंधनाः ॥३॥ भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ॥ सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥४॥ गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने ॥ परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥५॥ युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः॥ वाह्लीकपुत्रा भूर्याद्या ये च संतर्दनादयः ॥६॥ निरूपिता महायज्ञे नानाकर्मसु ते तदा ॥ प्रवर्तंते स्म राजेंद्र राज्ञः प्रियचिकीर्षवः ॥७॥ ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ॥ चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥८॥ मृदंगशंखपणवधुंधुर्यानकगोमुखाः ॥ वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥९॥ नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ॥ वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥१०॥ चित्रध्वजपताकाग्रैरिभेंद्रस्यंदनार्वभिः ॥ स्वलंकृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥११॥ यदुसृंजयकांबोजकुरुकेकयकोसलाः ॥ कंपयंतो भुवं सैन्यैर्यजमानपुरःसराः ॥१२॥ सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ॥ देवर्षिपितृगंधर्वास्तुष्टुवुः पुष्पवर्षिणः ॥१३॥ स्वलंकृता नरा नार्यो गंधस्रग्भूषणांबरैः ॥ विलिंपंत्योऽभिषिंचंत्यो विजह्रुर्विविधै रसैः ॥१४॥ तैलगोरसगंधोदहरिद्रासांद्रकुंकुमैः ॥ पुंभिर्लिप्ताः प्रलिंपंत्यो विजह्रुर्वारयोषितः ॥१५॥ गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ॥ ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ॥१६॥ ॥ ॥ ॥ ॥

गायका जगुः । तेषां गायकादीनां वीणादीनां च नादः स्वर्गमस्पृशत् ॥१०॥ तदा यदु-सृंजय-कांबोज-कुरु-कैकेयादयो राजानो यजमानपुरःसराश्चतुरंगसैन्यैर्भुवं कंपयंतः संतोऽवभृथस्नानार्थं निर्ययुः ॥११॥१२॥ तथा ऋत्विक्सदस्यादयो ब्रह्मघोषेण निर्ययुः । तदा देवाः पुष्पवृष्टिं कुर्वंतः संतस्तुष्टुवुः ॥१३॥ स्वलंकृता नरा नार्यश्च मिथः क्रीडां चक्रुः ॥१४॥ वारयोषितश्च तैल-गोरस-हरिद्रा—कुंकुमादिभिः पुरुषान् लिंपंत्यो विजह्रुः ॥१५॥ तथा राजपत्न्यो नृभिर्गुप्ताः सत्यो मातुलेयैः सखिभिश्च सिच्यमाना विरेजुः ॥१६॥

क्लिन्नांवरास्ता राजपत्न्यो देवरान् सखींश्च चर्मादिसेचनपात्रैः सिषिचुः । तदा तास्तैः सुंदरैर्विहारैः कामिनां मनसि क्षोभं दधुः ॥१७॥ तदा युधिष्ठिरः सुवर्णपुष्प-मालायुक्तं रथमारूढः सन् प्रयाजानुयाजादिक्रियाभिः सह क्रतुराडिव, स्वपत्नीभिः सह शुशुभे ॥१८॥ ततस्ते ऋत्विजः पत्नीसंयाजनामकानि कर्माण्यनुष्ठाय युधिष्ठिरं गंगायां स्नापयांचक्रुः ॥१९॥ तदा नरदुंदुभिभिः समं देवदुंदुभयो नेदुः । देवर्षिपितृमानवाः पुष्पवर्षाणि मुमुचुः ॥२०॥ ततः सर्वे वर्णाश्रमयुता जनास्तत्र स्नानं चक्रुः । यतो महापातक्यपि सद्यः पापान्मुच्यते ॥२१॥ अथ राजा श्रेष्ठे वस्त्रे परिधाय भूषणानि धृत्वा ऋत्विगादीन् वस्त्रभूषणैः पूजयामास ॥२२॥ ततो नृपो, बंधु-मित्र-ज्ञाति-सुहृदादीन् वस्त्रालंकारैः पूजयामास ॥२३॥

ता देवरानुत सखीन्सिषिचुर्दृतीभिः क्लिन्नांबरा विवृतगात्रकुचोरुमध्याः ॥ औत्सुक्यमुक्तकवराच्च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥१७॥ स सम्राड्रथमारूढः सदश्वं रुक्ममालिनम् ॥ व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥१८॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः॥ आचांतं स्नापयांचक्रुर्गंगायां सह कृष्णया ॥१९॥ देवदुंदुभयो नेदुर्नरदुंदुभिभिः समम् ॥ मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥२०॥सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः॥ महापातक्यपि यतः सद्यो मुच्येत किल्बिषात्॥२१॥ अथ राजाऽहते क्षौमे परिधाय स्वलंकृतः ॥ ऋत्विक्सदस्यविप्रादीनानर्चाभरणांबरैः ॥२२॥ बंधुज्ञातिनृपान्मित्रसुहृदोऽन्यांश्च सर्वशः ॥ अभीक्ष्णं पूजयामास नारायणपरो नृप ॥२३॥ सर्वे जनाः सुररुचो मणिकुंडलस्रगुष्णीषकंचुकदुकूलमहार्घ्यहाराः ॥ नार्यश्च कुंडलयुगालकवृंदजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ॥२४॥ अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः ॥ ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः ॥२५॥ देवर्षिपितृभूतानि लोकपालाः सहानुगाः ॥ पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥२६॥ हरिदासस्य राजर्षे राजसूयमहोदयम् ॥ नैवातृप्यन्प्रशंसंतः पिबन्मर्त्योऽमृतं तथा ॥२७॥ ततो युधिष्ठिरो राजा सुहृत्संबंधिबांधवान् ॥ प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥२८॥ भगवानपि तत्रांग न्यवात्सीत्तत्प्रियंकरः ॥ प्रस्थाप्य यदुवीरांश्च सांबादींश्च कुशस्थलीम् ॥२९॥ इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ॥ सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः ॥३०॥ एकदांतःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ॥ अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः ॥३१॥ ॥ ॥ ॥

तदा सर्वे नरा नार्यश्च मणिकुंडलोष्णीष-कंचुक-दुकूल-हारादिभिर्विरेजुः ॥२४॥ ततो ऋत्विजः सदस्या ब्रह्म-क्षत्रिय-विट्-शूद्रा राजानः ॥२५॥ देवर्षि-पितृ-मानवा लोकपालाश्च ये यज्ञे समागतास्ते राज्ञा पूजिताः संतस्तमनुज्ञाप्य स्वधामानि ययुः ॥२६॥ युधिष्ठिरस्य राजसूयमहोदयं प्रशंसंतस्ते सर्वे नैवातृप्यन् । मनुष्योऽमृतं पिबन् यथा न तृप्यति तद्वत् ॥२७॥ ततो युधिष्ठिरः सुहृदादीन् कृष्णं च प्रीत्या निवासयामास ॥२८॥ भगवानपि सांबादीन्प्रति द्वारकां प्रस्थाप्य स्वयं तत्र न्यवात्सीत् ॥२९॥ इत्थं धर्मराजः कृष्णेन सुदुस्तरं मनोरथमहार्णवमुत्तीर्य गतक्लेश आसीत् ॥३०॥ एकदा दुर्योधनो युधिष्ठिरस्यैश्वर्यं यज्ञमहोत्सवं च दृष्ट्वाऽतप्यत् ॥३१॥ ॥ ॥ ॥

यस्मिन् गृहे मयासुरेण रचिता देवदैत्यमनुष्याणां संपत्तयः प्रकाशंते ताभिः संपत्तिभिः सह द्रौपदी पतीन् सेवितवती ॥३२॥ यस्मिन् गृहे श्रीकृष्णस्य षोडशसहस्रं स्त्रियः श्रोणीभारेण शनकैरंघ्रिभूषणानि क्वणयंत्यः कुचकुंकुमरक्तहारैः कुंडलैश्च शोभंत्य इतस्ततश्चलंतिस्म ॥३३॥ कदाचिन्मयासुरनिर्मितायां सभायां बंधुभिः कृष्णेन च युक्तो युधिष्ठिरः ॥३४॥ सुवर्णसिंहासने आसीनो वंदिभिः स्तूयमानः सन्निंद्र इव शुशुभे ॥३५॥ ततो बंधुभिः सहाभिमानी दुर्योधनः खड्गहस्तो द्वारपालादीनधिक्षिपन् सभायां विवेश ॥३६॥ ततः स मय-माया-विमोहितो भूत्वा तस्यां सभायां स्थले जलभ्रांत्या वस्त्रांतमाकुंचितवान् । तथाऽग्रे जले स्थलभ्रांत्या चापतत् ॥३७॥ तदा भीमः स्त्रियोऽपरे राजानश्च राज्ञा निवार्यमाणा

यस्मिन्नरेंद्रदितिजेंद्रसुरेंद्रलक्ष्मीर्नाना विभांति किल विश्वसृजोपक्लृप्ताः ॥ ताभिः पतीन्द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥३२॥ यस्मिंस्तदा मधुपतेर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदंघ्रिशोभम् ॥ मध्येसुचारु कुचकुंकुमशोणहारं श्रीमन्मुखं प्रचलकुंडलकुंतलाढ्यम् ॥३३॥ सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ॥ वृतोऽनुजैर्बंधुभिश्च कृष्णेनापि स्वचक्षुषा ॥३४॥ आसीनः कांचने साक्षादासने मघवानिव ॥ पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च वंदिभिः ॥३५॥ तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप ॥ किरीटमाली न्यविशदसिहस्तः क्षिपन्रुषा ॥३६॥ स्थलेऽभ्यगृह्णाद्वस्त्रांतं जलं मत्वा स्थलेऽपतत् ॥ जले च स्थलवद्भ्रांत्या मयमायाविमोहितः ॥३७॥ जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ॥ निवार्यमाणा अप्यंग राज्ञा कृष्णानुमोदिताः ॥३८॥ स व्रीडितोऽवाग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ॥ हाहेति शब्दः सुमहानभूत्सतामजातशत्रुर्विमना इवाभवत् ॥ बभूव तूष्णीं भगवान्भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥३९॥ एतत्तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ॥ सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥४०॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे दुर्योधनमानभंगो नाम पंचसप्ततितमोऽध्यायः॥७५॥ ॥ श्रीशुक उवाच ॥ अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ॥ क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १ ॥ शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः ॥ यदुभिर्निर्जितः संख्ये जरासंधादयस्तथा ॥ २ ॥ शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ॥ अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥३॥ ॥ ॥ ॥

अपि कृष्णानुमोदिताः संतो जहसुः ॥ ३८ ॥ तदा दुर्योधनो लज्जितः सन् मुखमधः कृत्वा रुषा ज्वलन् तूष्णीं हस्तिनापुरं जगाम । तदा युधिष्ठिरः खेदयुक्तो बभूव । भगवान् भूभारं जिहीर्षुः सन् तूष्णीमासीत् । यस्य दृष्टिपातेन दुर्योधनस्य भ्रांतिर्जाता ॥३९॥ हे राजन्, यज्ञे दुर्योधनस्य खेदकारणं यत्त्वया पृष्टं तन्मया ते कथितम् ॥४०॥ इति श्रीमद्भागवतचू० दशमस्कंधे उत्त० पंचसप्ततितमोऽध्यायः ॥७५॥ ततः षट्सप्ततितमे वृष्णिशाल्वमहामृधे। द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गमः॥१॥ श्रीशुक उवाच॥ हे राजन्, अथान्यदपि कृष्णस्य शाल्ववधरूपमद्भुतं कर्म शृणु ॥१॥ रुक्मिणीविवाहे प्राप्तः शिशुपालमित्रः शाल्वस्तथा जरासंधादयश्च यदुभिर्निर्जिताः ॥२॥ तदा सर्वेषां राज्ञां शृण्वतां सतां शाल्वः

प्रतिज्ञां चकार । अहं यादवरहितां पृथ्वीं करिष्यामि । मम पराक्रमं पश्यत ॥३॥ इति प्रतिज्ञां कृत्वा प्रत्यहमेकवारं मुष्टिपरिमितां धूलिं भक्षयन् शिवमाराधयामास ॥४॥ ततो वर्षांते शिवस्तुष्टः सन् शाल्वंप्रति वरं वृणीष्वेत्युवाच ॥५॥ तदा शाल्वो देव-दैत्य-मनुष्य-गंधर्व-सर्प-राक्षसानामभेद्यं कामगं यादवभयंकरं च विमानं वव्रे ॥६॥ तदा शिवस्तथे-त्युक्त्वा विमानं कृत्वा दातुं मयासुरमाज्ञापितवान् । स च मयासुरो लोहमयं सौभनामकं विमानं निर्माय शाल्वाय ददौ ॥७॥ शाल्वश्चांधकारस्याश्रयं कामगं विमानं लब्ध्वा यादवकृतं वैरं स्मरन् द्वारकां ययौ ॥८॥ सेनया तां रुद्ध्वा फलोपवनानि पुष्पोद्यानानि ॥९॥ गोपुराणि गृहान् क्रीडास्थानानि च बभंज । तदा सौभविमानाद्वारकायां शस्त्रवृष्टयो

इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् ॥ आराधयामास नृप पांसुमुष्टिं सकृद्ग्रसन् ॥४॥ संवत्सरांते भगवानाशुतोष उमापतिः ॥ वरेण छंद-यामास शाल्वं शरणमागतम् ॥५॥ देवासुरमनुष्याणां गंधर्वोरगरक्षसाम् ॥ अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥६॥ तथेति गिरि-शादिष्टो मयः परपुरंजयः ॥ पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् ॥७॥ स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ॥ ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥८॥ निरुध्य सेनया शाल्वो महत्या भरतर्षभ ॥ पुरीं बभंजोपवनान्युद्यानानि च सर्वशः ॥९॥ सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ॥ विहारान्सविमानाग्र्यान्निपेतुः शस्त्रवृष्टयः ॥१०॥ शिला द्रुमाश्चाशनयः सर्पा आसारशर्कराः ॥ प्रचंडश्चक्र-वातोऽभूद्रजसाऽऽच्छादिता दिशः ॥११॥ इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ॥ नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥१२॥ प्रद्युम्नो भगवान्वीक्ष्य बाध्यमाना निजाः प्रजाः ॥ मा भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः ॥१३॥ सात्यकिश्चारुदेष्णश्च सांबोऽक्रूरः सहानुजः ॥ हार्दिक्यो भानुविंदश्च गदश्च शुकसारणौ ॥१४॥ अपरे च महेष्वासा रथयूथपयूथपाः ॥ निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥१५॥ ततः प्रववृते युद्धं शाल्वानां यदुभिः सह ॥ यथाऽसुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥१६॥ ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ॥ क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥१७॥ विव्याध पंचविंशत्या स्वर्णपुंखैरयोमुखैः ॥ शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥१८॥ ॥

निपेतुः ॥१०॥ शिला द्रुमाः सर्पाः शर्कराश्च निपेतुः । प्रचंडश्चक्रवातश्चोत्पन्नः । धूल्या दिशश्चाच्छादिताः ॥११॥ एवं सौभेन पीड्यमाना द्वारकावासिनः प्रजाः सुखं न प्रापुः ॥१२॥ तदा प्रद्युम्नः पीड्यमानास्ताः प्रजा वीक्ष्य माभैष्टेत्यभयं दत्वा रथमारुह्य युद्धार्थं नगरान्निर्ययौ ॥१३॥ तथा सात्यकिः चारुदेष्णः सांबः अक्रूरः हार्दिक्यः भानुविंदः गदः शुकः सारणः ॥१४॥ एतेऽन्ये च वीराश्चतुरंगया सेनया सह युद्धार्थं नगराद्बहिर्निर्ययुः ॥१५॥ ततः शाल्वस्य वीराणां यादववीरैः सह तुमुलं युद्धं जातम् ॥१६॥ तदा प्रद्युम्नो दिव्यास्त्रैः शाल्वस्य ताः शस्त्रवृष्ट्यादिरूपा माया नाशयामास ॥१७॥ किं च । शाल्वस्य सेनाधिपतिं विंशत्या स्वर्णमुखैर्बाणैर्विव्याध ॥१८॥ ॥ ॥

ततो वाणशतेन शाल्वमेकैकेन वाणेन वीरान् दशभिर्दशभिर्बाणैः सारथीन् त्रिभिस्त्रिभिर्वाणैः सर्वान् गजाश्वादीन् विव्याध ॥१९॥ तत्प्रद्युम्नस्याद्भुतं कर्म दृष्ट्वा सर्वे स्वपरसैनिकास्तं संमानितवंतः ॥२०॥ मयासुरनिर्मितं तत्सौभनामकं विमानं कदाचिद्बहुरूपं क्वचिद्दृश्यते क्वचिन्न दृश्यते एवं दुर्वितर्क्यमभूत् ॥२१॥ किंच । क्व० भूमौ क्व० आकाशे क्व० पर्वतमस्तके क्व० जले । एवमलातचक्रवद्भ्राम्यत् तद्विमानमनवस्थितमभूत् ॥२२॥ तदा विमानसहितः शाल्वो यत्र यत्र दृश्यते तत्र तत्र यादववीराः शरानमुंचन् ॥२३॥ एवं यदुवीरमुक्तैरग्निवद्दाहकैः सर्पवन्मारकैश्च वाणैः पीड्यमानं विमानं सैन्यं च दृष्ट्वा स शाल्वोऽमुह्यत् ॥२४॥ यदुवीरास्तु शत्रुसैन्यैः पीड्यमाना अपि स्वां स्वां रणभूमिं न तत्यजुः

शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् ॥ दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥१९॥ तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ॥ दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥२०॥ बहुरूपैकरूपं तद्दृश्यते न च दृश्यते ॥ मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥२१॥ क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ॥ अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम् ॥२२॥ यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः ॥ शाल्वस्ततस्ततोऽमुंचन् शरान्सात्वतयूथपाः ॥२३॥ शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ॥ पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः ॥२४॥ शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ॥ न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥२५॥ शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ॥ आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥२६॥ प्रद्युम्नं गदया शीर्णवक्षस्थलमरिंदमम् ॥ अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥२७॥ लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ॥ अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥२८॥ न यदूनां कुले जातः श्रूयते रणविच्युतः ॥ विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥२९॥ किं नु वक्ष्येऽभिसंगम्य पितरौ रामकेशवौ ॥ युद्धात्सम्यगपक्रांतः पृष्टस्तत्रात्मनः क्षमम् ॥३०॥ व्यक्तं मे कथयिष्यंति हसंत्यो भ्रातृजामयः ॥ क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ॥३१॥ सारथिरुवाच ॥ धर्मं विजानताऽऽयुष्मन्कृतमेतन्मया विभो ॥ सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥३२॥ ॥ ॥ ॥

॥२५॥ ततो द्युमान्नामा शाल्वप्रधानः प्रद्युम्नसमीपमागत्य तं गदया प्रहृत्य व्यनदत् ॥२६॥ तदा दारुकात्मजः सारथिर्गदाविशीर्णवक्षःस्थलं प्रद्युम्नं दृष्ट्वा तस्य रथं रणादन्यतो निनाय ॥२७॥ ततः प्रद्युम्नो मुहूर्तेन सावधानः सन् सारथिं जगाद । हे सूत, यद्रणात्त्वया ममापसर्पणं कृतं तदसाधु कृतम् ॥२८॥ यतो धैर्यहीनेन त्वया सारथिना प्राप्तदोषान्मत्तो विना यदुकुले जातः कोऽपि रणपलायितो न श्रूयते ॥२९॥ युद्धादपक्रांतोऽहं रामकृष्णौ पितरौप्रति गत्वा ताभ्यां पृष्टः सन् स्वयोग्यं कर्म किं नु वक्ष्यामि ॥३०॥ मम भ्रातॄणां भार्याश्च मां हसंत्यः सत्यो मम क्लैब्यं मांप्रति विचारयिष्यंति ॥३१॥ सारथिरुवाच ॥ हे आयुष्मन्, सूतो दुःखप्राप्तं रथिनं रथी च सारथिं रक्षेदिति धर्मं ज्ञात्वा मयै-

तत्कृतम् ॥३२॥ त्वं शत्रुगदया ताडितः सन् मूर्छितो जातः । अतो मया रणादपनीतः ॥३३॥ इति श्रीमद्भा० चू० द० उत्त० षट्सप्ततितमोऽध्यायः ॥७६॥ सप्तयुक्सप्ततितमे नानामायाविचक्षणः । कृष्णेनागत्य शाल्वस्तु हतः सौभं च चूर्णितम् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, ततः स प्रद्युम्नो जलमाचम्य धनुर्गृहीत्वा मां द्युमतः समीपं नयेति सारथिं जगाद ॥१॥ ततः प्रद्युम्नः स्वसैन्यानि नाशयंतं द्युमंतं प्रतिरुद्ध्य तमष्टभिर्बाणैरविद्ध्यत् ॥२॥ तत्र चतुर्भिश्चतुरोऽश्वान् एकेन सूतं द्वाभ्यां धनुर्ध्वजं च एकेन शिरश्चाच्छि-नत् ॥३॥ तदा गदसात्यकिसांबादयोऽपि शाल्वस्य सैन्यं जघ्नुः । तदा सौभस्थाः पुरुषाश्छिन्नमस्तकाः संतः समुद्रे पेतुः ॥४॥ एवं यदूनां शाल्वानां च सप्तविंशत्यहोरात्राणि घोरं

एतद्विदित्वा तु भवान्मयापोवाहितो रणात् ॥ उपसृष्टः परेणेति मूर्छितो गदया हतः ॥३३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्त-रार्धे शाल्वयुद्धे षट्सप्ततितमोऽध्यायः ॥७६॥ ॥ श्रीशुक उवाच ॥ स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ॥ नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥१॥ विधमंतं स्वसैन्यानि द्युमंतं रुक्मिणीसुतः ॥ प्रतिहत्य प्रत्यविद्ध्यन्नाराचैरष्टभिः स्मयन् ॥२॥ चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत् ॥ द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥३॥ गदसात्यकिसांबाद्या जघ्नुः सौभपतेर्बलम् ॥ पेतुः समुद्रे सौभेयाः सर्वे संछिन्नकंधराः ॥४॥ एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ॥ युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणम् ॥५॥ इंद्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ॥ राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥६॥ कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम् ॥ निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ ॥७॥ आह चाहमिहायात आर्यमिश्राभिसंगतः ॥ राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥८॥ वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम् ॥ सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥९॥ रथं प्रापय मे सूत शाल्वस्यांतिकमाशु वै ॥ संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥१०॥ इत्युक्तश्चोदयामास रथमास्थाय दारुकः ॥ विशंतं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥११॥ शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ॥ प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे ॥१२॥ तामापतंतीं नभसि महोल्कामिव रंहसा ॥ भासयंतीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥१३॥ ॥ ॥ ॥ ॥

युद्धं बभूव ॥५॥ अथ प्रसंगं कथयति । इंद्रप्रस्थं गतः कृष्णो राजसूययज्ञे समाप्ते सति शिशुपाले च निहते सति ॥६॥ भयंकराणि दुश्चिह्नानि पश्यन् सन् कुरुवृद्धान् कुंतीं मुनींश्चानुज्ञाप्य द्वारकां ययौ ॥७॥ तदा मार्गे एवमचिंतयत् । अहं रामसहित इहायातः । अतः शिशुपालपक्षीया राजानो मे नगरीं क्लेशयेयुः ॥८॥ एवं चिंतयन् द्वारकामेत्य यादवानां नाशं च वीक्ष्य द्वारकारक्षणार्थं रामं नियुज्य कृष्णो दारुकं प्राह ॥९॥ हे सारथे, मम रथं शाल्वस्य समीपं शीघ्रं प्रापय । अत्र विचारो न कर्तव्यः ॥१०॥ इत्युक्तो दारुको रथं प्रेरयामास । तदा स्वपरसैनिकाः प्रविशंतं गरुडध्वजं रथं ददृशुः ॥११॥ ततः शाल्वो युद्धे कृष्णं दृष्ट्वा दारुकोपरि शक्तिं प्राहरत् ॥१२॥ कृष्ण आगच्छंतीं तां शक्तिं आकाशे

वाणैः शतधाऽच्छिनत् ॥१३॥ तथा शाल्वं षोडशभिर्बाणैर्विद्ध्वा शरजालैः सौभविमानमविद्ध्यत् ॥१४॥ ततः शाल्वः कृष्णस्य दक्षिणं बाहुं बिभेद । तदा कृष्णहस्ताच्छार्ङ्गं धनुः पपात । तदद्भुतमासीत् ॥१५॥ तत्पश्यतां भूतानां मध्ये महान् हाहाकार आसीत् । तदा शाल्व उच्चैर्नादं कृत्वा श्रीकृष्णंप्रति जगाद ॥१६॥ हे मूढ, त्वया मे सख्युः शिशुपालस्य भार्या ( रुक्मिणी ) अस्मत्समक्षं हृता । स च शिशुपालः सभामध्ये निहतः ॥१७॥ तं त्वां यदि ममाग्रतः स्थास्यसि तर्हि बाणैर्मृत्युदशां प्रापयामि ॥१८॥ श्रीभगवानुवाच ॥ हे मंद, त्वं वृथा कत्थसे । समीपे स्थितं मृत्युं न पश्यसि । किंच । शूराः पराक्रमं दर्शयंति बहु न भाषंते ॥१९॥ इत्युक्त्वा कृष्णो गदया शाल्वं कंठमूले ताडयामास । तदा स

तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् ॥ अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः ॥१४॥ शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः॥ बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥१५॥ हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ॥ विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥१६॥ यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ॥ प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥१७॥ तं त्वाद्य निशितैर्बाणैरपराजितमानिनम् ॥ नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥१८॥ श्रीभगवानुवाच ॥ वृथा त्वं कत्थसे मंद न पश्यस्यंतिकेंऽतकम् ॥ पौरुषं दर्शयंति स्म शूरा न बहुभाषिणः ॥१९॥ इत्युक्त्वा भगवान् शाल्वं गदया भीमवेगया ॥ तताड जत्रौ संरब्धः स चकंपे वमन्नसृक् ॥२०॥ गदायां संनिवृत्तायां शाल्वस्त्वंतरधीयत ॥ ततो मुहूर्त आगत्य पुरुषः शिरसाऽच्युतम् ॥ देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥२१॥ कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल ॥ बद्ध्वाऽपनीतः शाल्वेन सौनिकेन यथा पशुः ॥२२॥ निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ॥ विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥२३॥ कथं राममसंभ्रांतं जित्वाऽजेयं सुरासुरैः ॥ शाल्वेनाल्पीयसा नीतः पिता मे बलवान्विधिः ॥२४॥इति ब्रुवाणे गोविंदे सौभराट् प्रत्युपस्थितः ॥ वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥२५॥ एष ते जनिता तातो यदर्थमिह जीवसि ॥ वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥२६॥ एवं निर्भर्त्स्य मायावी खड्गेनानकदुंदुभेः ॥ उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥२७॥

रक्तं वमन् चकंपे ॥२०॥ ततो गदायां निवृत्तायां शाल्वोंऽतरधीयत । ततो मुहूर्तेन कश्चित्पुरुष आगत्य श्रीकृष्णं नत्वा देवक्या प्रेषितोऽस्मीति रुदन् वच आह ॥२१॥ हे कृष्ण, हे पितृवत्सल, शाल्वेन तव पिता वसुदेवो बद्ध्वा नीतः ॥२२॥ कृष्ण एवं विपरीतं श्रुत्वा दयायुक्तः सन् प्राकृतवद्बभाषे ॥२३॥ अहो देवदैत्यैरजेयं रामं जित्वा शाल्वेन मे पिता कथं नीतः । तस्मात्प्रारब्धं बलवत्तरम् ॥२४॥ इति गोविंदे वदति सति शाल्वो मायिकं वसुदेवमानीय कृष्णं जगाद ॥२५॥ हे कृष्ण कृष्ण, एष ते जनिता पिता अस्ति । अधुना तव पश्यतः सत एनं वधिष्ये । त्वं रक्षितुं समर्थश्चेत्तर्ह्यमुं रक्ष ॥२६॥ स मायावी शाल्व एवं कृष्णं निर्भर्त्स्य तस्य वसुदेवस्य शिरश्छित्वा तद्गृहीत्वाऽऽकाशस्थं सौभविमानमाविशत् ॥२७॥

तदा स्वतःसिद्धज्ञानवानपि कृष्णो वसुदेवस्नेहेन मुहूर्तं शोकनिमग्नो भूत्वा ततस्तत्सर्वं शाल्वेन मायया निर्मितं ज्ञातत्वान् ॥२८॥ तदा तत्र दूतं पितुर्देहं च नापश्यत् । ततः सौभस्थं शाल्वं रिपुं वीक्ष्य तं हंतुमुद्योगं चक्रे ॥२९॥ एवं परमतं कथयित्वा तन्निराकरोति । हे राजर्षे, केचन ऋपयः एवं कृष्णे शोकमोहादिकं वदंति तत्पूर्व[१]परानुसंधान-विरुद्धमसंभावितं च ॥३०॥ असंभावितत्वमाह । अज्ञपुरुषे संभाव्याः शोक[२]मोह[३]भय[४]स्नेहादयः क्व । अखंडितज्ञानविज्ञानैश्वर्यो भगवांश्च क्व ॥३१॥ यस्य चरणसेवया सत्पुरुषा अविद्यां नाशयंति मोक्षं च लभंते तस्य शोकादिकं कुतः स्यात् न स्यादेव । अत एतत्परमतमसत्यम् ॥३२॥ किंतर्हि सत्यं तदाह । युद्धे शस्त्रसमूहैः प्रहारं कुर्वंतं शाल्वं शरै-

ततो मुहूर्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषंगतः ॥ महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम् ॥२८॥ न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः ॥ स्वाप्नं यथा चांबरचारिणं रिपुं सौभस्थमालोक्य निहंतुमुद्यतः॥२९॥ एवं वदंति राजर्षे ऋपयः केच नान्विताः ॥ यत्स्ववाचो विरुध्येत नूनं ते न स्मरंत्युत ॥३०॥ क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः ॥ क्व चाखंडितविज्ञानज्ञानैश्वर्य-स्त्वखंडितः ॥३१॥ यत्पादसेवोर्जितयाऽऽत्मविद्यया हिन्वंत्यनाद्यात्मविपर्ययग्रहम् ॥ लभंत आत्मीयमनंतमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥३२॥ तं शस्त्रपूगैः प्रहरंतमोजसा शाल्वं शरैः शौरिरमोघविक्रमः ॥ विद्धाऽच्छिनद्वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥३३॥ तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ॥ विसृज्य तद्भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥३४॥ आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाऽथ रथांगमद्भुतम् ॥ वधाय शाल्वस्य लयार्कसंनिभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥३५॥ जहार तेनैव शिरः सकुंडलं किरीटयुक्तं पुरुमायिनो हरिः ॥ वज्रेण वृत्रस्य यथा पुरंदरो बभूव हाहेति वचस्तदा नृणाम् ॥३६॥ तस्मिन्निपतिते पापे सौभे च गदया हते ॥ नेदुर्दुंदुभयो राजन्दिवि देवगणेरिताः ॥ सखीनामपचितिं कुर्वन्दंतवक्रो रुषाऽभ्यगात् ॥३७॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे शाल्ववधो नाम सप्तसप्ततितमोऽध्यायः ॥७७॥ ॥ ॥ ॥

विद्धा तस्य कवचं धनुः शिरोमणिं च छित्वा गदया सौभं विमानं बभंज ॥३३॥ तदा तत्सौभं तोये पपात । ततः शाल्वः सौभं त्यक्त्वा गदां गृहीत्वा भूतले स्थितः सन् शीघ्रं कृष्णमभ्यधावत् ॥३४॥ तदा कृष्णस्तस्य गदासहितं बाहुं बाणेनं छित्वा तद्वधाय प्रलयकालीन-सूर्यसदृशं चक्रं गृहीत्वा ॥३५॥ तेनैव चक्रेण कुंडल-किरीटसहितं शाल्वस्य शिरश्चिच्छेद । तदा नृणां हाहेति शब्दो बभूव ॥३६॥ तस्मिन् शाल्वे निपतिते गदया च सौभे भग्ने सति दिवि देवैर्वादिता दुंदुभयो नेदुः । ततो हे राजन्, मित्राणां प्रियं कुर्वन् दंतवक्रो रुषा श्रीकृष्णमभ्यगात् ॥३७॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे सप्तसप्ततितमोऽध्यायः ॥७७॥ ॥ ॥ ॥

१ न तावद्राजसूयार्थं रामेण सह श्रीकृष्णो गतः । संकर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् । २ वसुदेववधनिमित्तः शोकः । ३ मायिके वसुदेवे सत्योऽयमिति मोहः । ४ भयं दुर्निमित्तदर्शनकृतम् ।

ततोऽष्टसप्ततितमे दंतवक्रविदूरथौ । हत्वा हरिः पुरे रेमे रामः सूतं ततोऽवधीत् ॥१॥ श्रीशुक उवाच ॥ स दंतवक्रो मृतानां शिशुपालपौंड्रकशाल्वानां पारोक्ष्यसौहृदं कुर्वन् ॥१॥ एकः पदातिर्गदां गृहीत्वा पद्भ्यामिमां महीं कंपयन् कृष्णेन सह योद्धुं प्रवृत्तः ॥२॥ तदा कृष्णस्तं विलोक्य रथादुत्तीर्य गदामादाय समुद्रं वेलेव तंप्रति रुरोध ॥३॥ ततः स दंतवक्रो गदामुद्यम्य मुकुंदं प्राह । हे कृष्ण, त्वमद्य मम दृष्टिमार्गं प्राप्त एतद्भद्रं जातम् ॥४॥ हे कृष्ण, त्वं नो मातुलेयोऽपि मां हंतुमिच्छसि अतस्त्वां वज्रकल्पया गदया हनिष्ये ॥५॥ अनेन कर्मणैवाहं मित्राणामनृणत्वं प्राप्स्यामि ॥६॥ एवं कठोरवाक्यैः कृष्णं व्यथयन् सन् गदया मूर्ध्नि ताडयामास ॥७॥ तदा कृष्णो गदया ताडितोऽपि न चचाल

श्रीशुक उवाच ॥ शिशुपालस्य शाल्वस्य पौंड्रकस्यापि दुर्मतिः ॥ परलोकगतानां च कुर्वन्पारोक्ष्यसौहृदम् ॥१॥ एकः पदातिः संक्रुद्धो गदापाणिः प्रकंपयन् ॥ पद्भ्यामिमां महाराज महासत्वो व्यदृश्यत ॥२॥ तं तथाऽऽयांतमालोक्य गदामादाय सत्वरः ॥ अवप्लुत्य रथात्कृष्णः सिंधुं वेलेव प्रत्यधात् ॥३॥ गदामुद्यम्य कारूषो मुकुंदं प्राह दुर्मदः ॥ दिष्ट्या दिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥४॥ त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि ॥ अतस्त्वां गदया मंद हनिष्ये वज्रकल्पया ॥५॥ तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ॥ बंधुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥६॥ एवं रूक्षैस्तुदन्वाक्यैः कृष्णं तोत्रैरिव द्विपम् ॥ गदया ताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ॥७॥ गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः ॥ कृष्णोऽपि तमहन्गुर्व्या कौमोदक्या स्तनांतरे ॥८॥ गदानिर्भिन्नहृदय उद्वमन्रुधिरं मुखात् ॥ प्रसार्य केशबाह्वंघ्रीन्धरण्यां न्यपतद्व्यसुः ॥९॥ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ॥ पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥१०॥ विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ॥ आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥११॥ तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ॥ शिरो जहार राजेंद्र सकिरीटं सकुंडलम् ॥१२॥ एवं सौभं च शाल्वं च दंतवक्रं सहानुजम् ॥ हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः ॥१३॥ मुनिभिः सिद्धगंधर्वैर्विद्याधरमहोरगैः ॥ अप्सरोभिः पितृगणैर्यक्षैः किंनरचारणैः ॥१४॥ ॥ ॥ ॥

किंतु स्वकीयया कौमोदक्या गदया तं वक्षःस्थले जघान ॥८॥ तदा गदानिर्भिन्नहृदयो दंतवक्रो मुखाद्रक्तं वमन् केशबाहुचरणान् प्रसार्य गतप्राणो भूमौ पपात ॥९॥ तदा सर्वेषां पश्यतां सतां तस्मादुत्पन्नं ज्योतिः श्रीकृष्णं प्राविशत् ॥१०॥ ततस्तद्भ्राता विदूरथः शोकव्याप्तः सन् खड्गचर्मणी गृहीत्वा कृष्णजिघांसया प्राप्तः ॥११॥ तदा कृष्णश्चक्रेण तस्य किरीट–कुंडलसहितं मस्तकं जहार ॥१२॥ एवं सौभविमानं शाल्वं दंतवक्रं विदूरथं च हत्वा ॥१३॥ देव-मनुष्य-मुनि-सिद्ध-गंधर्व-विद्याधराप्सरोगण-पितृगण-यक्ष-किन्नर-चारणैरुपगीयमानविजयः पुष्पैरभिवर्षितश्च कृष्णो यदुभिर्वृतः सन् ध्वजतोरणादिभिरलंकृतां द्वारकापुरीं विवेश ॥१४॥ ॥ ॥ ॥

१ परोक्षे करणीयं सुहृत्कृत्यम् । २ तृतीये जन्मनि मुक्तिदानार्थमागतम् ।

॥१५॥ एवं योगेश्वरः कृष्णो महाबलानपि लीलया जयत्येव । तथापि कदाचिज्जरासंधादिभिर्जित इति पशुदृष्टीनां प्रतीयते ॥१६॥ एकदा रामः कुरूणां पांडवैः सह युद्धोद्योगं श्रुत्वा तीर्थयात्रामिषेण द्वारकायाः सकाशान्निर्ययौ ॥१७॥ स प्रथमं प्रभासे स्नात्वा देवर्षिपितृमानवान् संतर्प्य ततो ब्राह्मणैः सह सरस्वतीं प्रतिलोमं ययौ ॥१८॥ ततः पृथूदकं बिंदुसरस्त्रितकूपं सुदर्शनतीर्थं विशालं ब्रह्मतीर्थं चक्रतीर्थं प्राचीं सरस्वतीम् ॥१९॥ गंगायमुनयोस्तीरस्थानि तीर्थानि गत्वा ततो यत्र ऋषयः सत्रमासतेस्म तन्नैमिषारण्यं जगाम ॥२०॥ तदा मुनयो राममागतं ज्ञात्वोत्थाय तं प्रणम्यार्चयन् ॥२१॥ ततः पूजितो राम आसनं परिगृह्य तत्रासीनं व्यासशिष्यं रोमहर्षणं ददर्श ॥२२॥ तदा प्रत्युत्थानरहितमकृ-

उपगीयमानविजयः कुसुमैरभिवर्षितः ॥ वृतश्च वृष्णिप्रवरैर्विवेशालंकृतां पुरीम् ॥१५॥ एवं योगेश्वरः कृष्णो भगवान् जगदीश्वरः ॥ ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥१६॥ श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पांडवैः ॥ तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥१७॥ स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान् ॥ सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥१८॥ पृथूदकं बिंदुसरस्त्रितकूपं सुदर्शनम् ॥ विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥१९॥ यमुनामनु यान्येव गंगामनु च भारत ॥ जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥२०॥ तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ॥ अभिनंद्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥२१॥ सोऽर्चितः सपरीवारः कृताऽऽसनपरिग्रहः ॥ रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥२२॥ अप्रत्युत्थायिनं सूतमकृतप्रह्वणांजलिम् ॥ अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥२३॥ यस्मादसाविमान्विप्रानध्यास्ते प्रतिलोमजः ॥ धर्मपालांस्तथैवास्मान्वधमर्हति दुर्मतिः ॥२४॥ ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ॥ सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥२५॥ अदांतस्याविनीतस्य वृथा पंडितमानिनः ॥ न गुणाय भवंति स्म नटस्येवाजितात्मनः ॥२६॥ एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः ॥ वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥२७॥ एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि ॥ भावित्वात्तं कुशाग्रेण करस्थेनाहनत्प्रभुः ॥२८॥ हाहेति वादिनः सर्वे मुनयः खिन्नमानसाः ॥ ऊचुः संकर्षणं देवमधर्मस्ते कृतः प्रभो ॥२९॥ ॥

तनमस्कारमृषिभ्योऽप्युच्चासने स्थितं सूतं वीक्ष्य रामश्चुकोप ॥२३॥ अहो, असौ ब्राह्मण्यां क्षत्रियाज्जातः सूतोऽस्मानविगणय्य विप्रेभ्योऽप्युच्चासने आस्ते । अतो वधमर्हति ॥२४॥ अयमृषेर्व्यासस्य शिष्यो भूत्वा तस्मादितिहाससहितानि पुराणानि धर्मशास्त्राणि चाधीतवान् ॥२५॥ तथापि तानि वृथापंडितमानिनोऽनम्रस्यास्य यथोचितानुष्ठानाय न भवंति ॥२६॥ अत एतादृशानामुत्तमवेषधारिणां दुष्टानां वधार्थमेव लोके मयाऽवतारो धृतः ॥२७॥ इत्युक्त्वा दुष्टवधान्निवृत्तोऽपि रामो भावित्वात्तं करस्थेन कुशेनाहनत् ॥२८॥ तदा खिन्नमानसा मुनयो हाहेति वादिनः संतः संकर्षणमूचुः । हे प्रभो, त्वयाऽयमधर्मः कृतः ॥२९॥ ॥ ॥ ॥ ॥

१ उद्गमाभिमुखम् । २ नहि भवितव्यं केनापि परिहर्तुं शक्यत इत्यर्थः । तथा च पाद्मे-आषाढशुक्लद्वादश्यां पारणाहनि पार्वति । पूर्वार्धयामवेलायां भावित्वात्कृष्णमायया । मुग्धो दर्भकरो रामः प्राहनद्रोमहर्षणमिति ।

अस्माभिरस्य यावत्सत्रं समाप्यते तावद्ब्रह्मासनमायुश्च दत्तम् ॥३०॥ तदजानता त्वया ब्रह्मवधः कृतः । यद्यपि तव वेदो[1]ऽपि न शासनकर्ता तथापि हे लोकपावन, त्वमेतस्या ब्रह्महत्यायाः प्रायश्चित्तं करिष्यसि चेत्तर्हि लोकसंग्रहो भविष्यति । अन्यथा न भविष्यति ॥३१॥३२॥ श्रीभगवानुवाच ॥ हे ऋषयः, अहं लोकसंग्रहेच्छया वधप्रायश्चित्तं करिष्ये । अतो यन्मुख्यं प्रायश्चित्तं तत्कथ्यताम् ॥३३॥ किंच । हे मुनयः, एतस्य दीर्घमायुर्बलमिंद्रियपाटवमन्यच्च यद्भवद्भिरपेक्षितं तद्ब्रूत । अहं तत्सर्वं साधये ॥३४॥ ऋषय ऊचुः । हे राम, तवास्त्रस्य मृत्योरस्मद्वचसश्च यथा सत्यत्वं स्यात्तथा कुरु ॥३५॥ श्रीभगवानुवाच ॥ हे मुनयः, आत्मा वै पुत्र उत्पन्न इति वेदवचनम् । तस्मादस्य रोमहर्षणस्यो-

अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनंदन ॥ आयुश्चात्माक्षमं तावद्यावत्सत्रं समाप्यते ॥३०॥ अजानतैवाचरितस्त्वया ब्रह्मवधो यथा ॥ योगेश्वरस्य भवतो नाम्नायोऽपि नियामकः ॥३१॥ यद्येतद्ब्रह्महत्यायाः पावनं लोकपावन ॥ चरिष्यति भवाँल्लोकसंग्रहोऽनन्यचोदितः ॥३२॥ ॥ श्रीभगवानुवाच ॥ करिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया ॥ नियमः प्रथमे कल्पे यावान्स तु विधीयताम् ॥३३॥ दीर्घमायुर्बतैतस्य सत्वमिंद्रियमेव च ॥ आशासितं यत्तद्ब्रूत साधये योगमायया ॥३४॥ ऋषय ऊचुः ॥ अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ॥ यथा भवेद्वचः सत्यं तथा राम विधीयताम् ॥३५॥ ॥ श्रीभगवानुवाच ॥ आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ॥ तस्मादस्य भवेद्वक्ता आयुरिंद्रियसत्ववान् ॥३६॥ किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ ॥ अजानतस्त्वपचितिं यथा मे चिंत्यतां बुधाः ॥३७॥ ॥ ऋषय ऊचुः ॥ इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ॥ स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ॥३८॥ तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ॥ पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥३९॥ ततश्च भारतं वर्षं परीत्य सुसमाहितः ॥ चरित्वा द्वादश मासांस्तीर्थस्नायी विशुद्ध्यसे ॥४०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्त० बलदेवचरित्रे बल्वलवधोपक्रमो नामाष्टसप्ततितमोऽध्यायः ॥७८॥ ॥ ॥

ग्रश्रवाः पुत्र आयुरिंद्रियबलवान् सन् भवतां पुराणवक्ता भवेत् । एवं जाते सर्वं सिद्ध्येत् ॥३६॥ हे मुनिश्रेष्ठाः, अन्यो वः कः कामोऽस्ति तं प्रथमं ब्रूत । ततो ब्रह्मदंडं गृहीत्वा मम पापस्य प्रायश्चित्तं कथयत ॥३७॥ ऋषय ऊचुः ॥ हे भगवन्, इल्वलदैत्यस्य पुत्रो बल्वलो नाम दैत्योऽस्ति । स प्रतिपूर्णिमायामत्रागत्य नः सत्रं दूषयति ॥३८॥ सोऽस्मत्सत्रे पूय-रक्त-विष्ठा-मूत्र-सुरा-मांसानां वृष्टिं करोति । तं पापिष्ठं जहि । तन्न उत्तमं शुश्रूषणं स्यात् ॥३९॥ ततस्त्वं भरतखंडं प्रदक्षिणीकृत्य द्वादश मासान् तीर्थस्नायी सन् कृच्छ्राणि[3] चरित्वा विशुद्ध्यसे ॥४०॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे अष्टसप्ततितमोऽध्यायः ॥७८॥ ॥ ॥ ॥

१ ब्राह्मणो न हंतव्य इत्यादिलक्षणो वेदोऽपि । २ साक्षादजीवनान्ममास्त्रस्य मृत्योश्च सत्यता स्यात् । पुत्ररूपेण चायुरादिसिद्धेर्युष्मद्वचनस्यापि सत्यता स्यादिति भावः । ३ द्वादशभिर्दिनैरेकं कृच्छ्रं भवति । एवं द्वादशमासैस्त्रिंशत्कृच्छ्राणि चरित्वेत्यर्थः ।

ऊनाशीतितमे रामो वल्वलं द्विजतुष्टये । निहत्य तीर्थस्नानाद्यैः सूतहत्यामपानुदत् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, ततः पर्वणि प्राप्ते सति पांसुवर्षणः पूयगंधः प्रचंडो वायुरभूत् ॥१॥ ततो यज्ञशालायां मांसमेदोमयी वृष्टिरभूत् । ततः शूलधृक् वल्वलो दैत्यो ददृशे ॥२॥ महादेहं कज्जलवत्कृष्णं तप्तताम्रशिखाश्मश्रुमुग्रदंष्ट्रं तं दैत्यं दृष्ट्वा ॥३॥ रामो मुसलं हलं च सस्मार । तदा ते शीघ्रमुपतस्थतुः ॥४॥ ततो गगने चरंतं दैत्यं हलाग्रेणाकृष्य मुसलेन मूर्धनि जघान ॥५॥ तदा स वल्वलो रुधिरं वमन्नार्तस्वरं मुंचन् भुवि पपात ॥६॥ ततो मुनयो रामं संस्तुत्याशिषः प्रयुज्याभ्यषिंचन् ॥७॥ ततो रामायाम्लानपंकजां वैजयंतीं मालां दिव्यानि वस्त्राण्याभरणानि च ददुः ॥८॥ अथ तैरनुज्ञातो रामो ब्राह्मणैः

॥ श्रीशुक उवाच ॥ ततः पर्वण्युपावृत्ते प्रचंडः पांसुवर्षणः ॥ भीमो वायुरभूद्राजन्पूयगंधस्तु सर्वशः ॥१॥ ततोऽमेध्यमयं वर्षं वल्वलेन विनिर्मितम् ॥ अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलधृक् ॥२॥ तं विलोक्य बृहत्कायं भिन्नांजनचयोपमम् ॥ तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥३॥ सस्मार मुसलं रामः परसैन्यविदारणम् ॥ हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥४॥ तमाकृष्य हलाग्रेण वल्वलं गगनेचरम् ॥ मुसलेनाहनत्क्रुद्धो मूर्ध्नि वह्मद्रुहं बलः ॥५॥ सोऽपतद्भुवि निर्भिन्नललाटोऽसृक्समुत्सृजन् ॥ मुंचन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः ॥६॥ संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः ॥ अभ्यषिंचन्महाभागा वृत्रघ्नं विबुधा यथा ॥७॥ वैजयंतीं ददुर्मालां श्रीधामाम्लानपंकजाम् ॥ रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥८॥ अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ॥ स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ॥९॥ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ॥ स्नात्वा संतर्प्य देवादीन्जगाम पुलहाश्रमम् ॥१०॥ गोमतीं गंडकीं स्नात्वा विपाशां शोण आप्लुतः ॥ गयां गत्वा पितॄनिष्ट्वा गंगासागरसंगमे ॥११॥ उपस्पृश्य महेंद्राद्रौ रामं दृष्ट्वाऽभिवाद्य च ॥ सप्तगोदावरीं वेणां पंपां भीमरथीं ततः ॥१२॥ स्कंदं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ॥ द्रविडेषु महापुण्यं दृष्ट्वाऽद्रिं वेंकटं प्रभुः ॥१३॥ कामकोष्णीं पुरीं कांचीं कावेरीं च सरिद्वराम् ॥ श्रीरंगाख्यं महापुण्यं यत्र संनिहितो हरिः ॥१४॥ ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ॥ सामुद्रं सेतुमगमन्महापातकनाशनम् ॥१५॥ तत्राऽयुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः ॥ कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥१६॥ ॥ ॥

सह कौशिकीं नदीं गत्वा तत्र स्नात्वा । यतः सरयूर्नदी उत्पन्ना तत्सरोवरतीर्थमगात् ॥९॥ ततः प्रयागं गत्वा तत्र स्नात्वा देवादीन् संतर्प्य पुलहाश्रमं जगाम ॥१०॥ पश्चाद्गोमतीं गंडकीं विपाशां शोणनदं च गत्वा तत्र स्नात्वा गयां गत्वा पितॄन् संतर्प्य गंगासागरसंगमे जलमुपस्पृश्य ॥११॥ महेंद्रपर्वते परशुरामं दृष्ट्वा तं संपूज्य सप्तगोदावरीं वेणां पंपां भीमरथीं च गत्वा ॥१२॥ ततः कार्तिकेयं स्वामिनं दृष्ट्वा श्रीशैलं पर्वतं ययौ । ततो द्रविडदेशेषु स्थितं वेंकटाद्रिं दृष्ट्वा ॥१३॥ ततः कामकोष्णीं कांचीपुरीं श्रीरंगम् ॥१४॥ ऋषभाद्रिं दक्षिणमथुरां च गत्वा सेतुबंधं रामेश्वरं जगाम ॥१५॥ तत्र ब्राह्मणेभ्यो दशसहस्रं धेनूर्ददौ । ततः कृतमालां ताम्रपर्णीं कुलाचलं मलयं च दृष्ट्वा ॥१६॥

॥

तत्रासीनमगस्त्यं नमस्कृत्य तेनानुज्ञातः सन् दक्षिणसमुद्रं गत्वा तत्र कन्याख्यां दुर्गां देवीं ददर्श ॥१७॥ ततोऽनंतपुरमागत्य पंचाप्सरसनामकं सरोवरं गत्वा तत्र स्नात्वा ब्राह्मणेभ्यो दशसहस्रं धेनूर्ददौ ॥१८॥ ततः केरलान् त्रिगर्तांश्च देशान् गत्वा गोकर्णाख्यं शिवक्षेत्रं जगाम ॥१९॥ ततो द्वैपायनीमार्यां देवीं दृष्ट्वा शूर्पारकं क्षेत्रं जगाम ॥ ततः तापीं पयोष्णीं निर्विंध्यां चोपस्पृश्य दंडकारण्यं प्रविश्य ॥२०॥ नर्मदामगमत् । यस्यास्तीरे माहिष्मती पुरी वर्तते । ततो मनुतीर्थमुपस्पृश्य पुनः प्रभासमागमत् ॥२१॥ तत्र ब्राह्मणैः कथ्यमानं कुरुपांडवसंयुगे सर्वक्षत्रियमरणं श्रुत्वा भूमेर्भारं हृतं मेने ॥२२॥ ततो भीमदुर्योधनयोर्गदाभ्यां युद्ध्यतोः सतोस्तौप्रति निवारयिष्यन् कुरुक्षेत्रं जगाम ॥२३॥ तं दृष्ट्वा युधि-

तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च ॥ योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ॥ दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ॥१७॥ ततः फाल्गुनमासाद्य पंचाप्सरसमुत्तमम् ॥ विष्णुः संनिहितो यत्र स्नात्वाऽस्पर्शद्गवायुतम् ॥१८॥ ततोऽभिव्रज्य भगवान्केरलांस्तु त्रिगर्तकान् ॥ गोकर्णाख्यं शिवक्षेत्रं सांनिध्यं यत्र धूर्जटेः ॥१९॥ आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः ॥ तापीं पयोष्णीं निर्विंध्यामुपस्पृश्याथ दंडकम् ॥२०॥ प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ॥ मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥२१॥ श्रुत्वा द्विजैः कथ्यमानं कुरुपांडवसंयुगे ॥ सर्वराजन्यनिधनं भारं मेने हृतं भुवः ॥२२॥ स भीमदुर्योधनयोर्गदाभ्यां युध्यतोर्मृधे ॥ वारयिष्यन्विनशनं जगाम यदुनंदनः ॥२३॥ युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ॥ अभिवाद्याभवंस्तूष्णीं किं विवक्षुरिहागतः ॥२४॥ गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ॥ मंडलानि विचित्राणि चरंताविदमब्रवीत् ॥२५॥ युवां तुल्यबलौ वीरौ हे राजन्हे वृकोदर ॥ एकं प्राणाधिकं मन्य उतैकं शिक्षयाऽधिकम् ॥२६॥ तस्मादेकतरस्येह युवयोः समवीर्ययोः ॥ न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥२७॥ न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ॥ अनुस्मरंतावन्योऽन्यं दुरुक्तं दुष्कृतानि च ॥२८॥ दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ॥ उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥२९॥ तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन्मुदा ॥ क्रत्वंगं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥३०॥ तेभ्यो विशुद्धविज्ञानं भगवान्व्यतरद्विभुः ॥ येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥३१॥ ॥ ॥ ॥ ॥

ष्ठिरो नकुलसहदेवौ कृष्णार्जुनौ च वंदनं कृत्वा अत्रागतोऽयं किं वदिष्यतीति भिया तूष्णीमासन् ॥२४॥ ततो राम उभौ भीमदुर्योधनौ गदापाणी मंडलानि चरंतौ दृष्ट्वा जगाद ॥२५॥ हे राजन्, हे वृकोदर, युवां तुल्यबलौ स्तः । यत एकं ( भीमं ) बलेनाधिकमपरं ( त्वां सुयोधनं ) शिक्षयाऽधिकमहं मन्ये ॥२६॥ तस्माद्युवयोर्मध्ये एकतरस्य जयः पराजयो वा न दृश्यते । अतो विफलः संग्रामो विरमतु ॥२७॥ एवमुक्तौ तौ परस्परं बद्धवैरौ संतौ तद्रामवाक्यं न जगृहतुः ॥२८॥ तदा रामस्तयोर्दैवमिति मत्वा द्वारकां ययौ । तदा प्रीतैरुग्रसेनादिभिः संगतो बभूव ॥२९॥ स रामः पुनर्नैमिषं जगाम । तत्र ऋषयस्तं यज्ञमूर्तिं रामं यज्ञैरयाजयन् ॥३०॥ तदा भगवान् रामस्तेभ्यो विशुद्धं विज्ञानं ददौ ।

येन विज्ञानेनात्मनीदं विश्वं विश्वगं चात्मानं ते विदुः ॥३१॥ ततः स्वपत्न्या सहावभृथस्नानं कृत्वा ज्ञातिबंधुसुहृद्वृतः सन् स्वप्रभया चंद्र इव शुशुभे ॥३२॥ एवमनंतस्य रामस्यासंख्यानि कर्माणि संति ॥३३॥ तानि यः सायंप्रातः स्मरेत्स विष्णोः प्रियो भवेत् ॥३४॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे एकोनाशीतितमोऽध्यायः ॥७९॥ अथाशीतितमे कृष्णः श्रीदामानं गृहागतम् । संपूज्यापृच्छदर्थेप्सुं गुरुवासकथां मुदा ॥१॥ राजोवाच ॥ हे ब्रह्मन्, मुकुंदस्यान्यानि चरित्राणि वयं श्रोतुमिच्छामहे ॥१॥ हे ऋपे, उत्तमश्लोकस्य सत्कथाः श्रुत्वा सारवित् को नु पुमान् विरमेत् ॥२॥ किंच । या भगवद्गुणान् गृणीते सा वाक् । यौ भगवत्सेवाकरौ तौ हस्तौ । यच्छ्रीहरिं स्मरेत्तन्मनः । यो

स्वपत्न्यावभृथस्नातो ज्ञातिबंधुसुहृद्वृतः ॥ रेजे स्वज्योत्स्नयेवेंदुः सुवासाः सुष्ठ्वलंकृतः ॥३२॥ ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः ॥ अनंतस्याप्रमेयस्य मायामर्त्यस्य संति हि ॥३३॥ योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः ॥ सायंप्रातरनंतस्य विष्णोः स दयितो भवेत् ॥३४॥ इति श्रीम०म०द०उ० बलदेवतीर्थयात्रानिरूपणं नामैकोनाशीतितमोऽध्यायः ॥७९॥ ॥ राजोवाच ॥ भगवन्यानि चान्यानि मुकुंदस्य महात्मनः ॥ वीर्याण्यनंतवीर्यस्य श्रोतुमिच्छामहे प्रभो ॥१॥ को नु श्रुत्वा सकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः ॥ विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥२॥ सा वाग्यया तस्य गुणान् गृणीते करौ च तत्कर्मकरौ मनश्च ॥ स्मरेद्वसंतं स्थिरजंगमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥३॥ शिरस्तु तस्योभयलिंगमानमेत्तदेव यत्पश्यति तद्धि चक्षुः ॥ अंगानि विष्णोरथ तज्जनानां पादोदकं यानि भजंति नित्यम् ॥४॥ सूत उवाच ॥ विष्णुरातेन संपृष्टो भगवान्बादरायणिः ॥ वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥५॥ श्रीशुक उवाच ॥ कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ॥ विरक्त इंद्रियार्थेषु प्रशांतात्मा जितेंद्रियः ॥६॥ यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा ॥७॥ पतिव्रता पतिं प्राह म्लायता वदनेन सा ॥ दरिद्रा सीदमाना सा वेपमानाऽभिगम्य च ॥८॥ ननु ब्रह्मन्भगवतः सखा साक्षाच्छ्रियः पतिः ॥ ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः ॥९॥ ॥ ॥ ॥

भगवत्कथां शृणोति स कर्णः ॥३॥ यद्भगवंतं नमेत्तच्छिरः । यच्छ्रीहरिं पश्यति तच्चक्षुः । यानि विष्णोस्तद्भक्तानां च पादोदकं भजंति तान्यंगानि ॥४॥ सूत उवाच ॥ एवं परीक्षिता पृष्टः शुकः श्रीकृष्णे निमग्नहृदयस्तमब्रवीत् ॥५॥ श्रीशुक उवाच ॥ हे राजन्, श्रीकृष्णस्य कश्चिद्ब्राह्मणः[1] सखा आसीत् । स च विषयेषु विरक्तो ब्रह्मवेत्ता आसीत् ॥६॥ स यदृच्छाप्राप्तेनान्नेन निर्वाहं कुर्वन् गृहस्थाश्रम्यास । तस्य भार्या पतिव्रता यदृच्छालब्धमन्नादि भर्त्रे परिवेष्य स्वयं क्षुधया कृशा आसीत् ॥७॥ एकदा दरिद्रपीडिता म्लानमुखी सा स्त्री भयेन कंपमाना सती पतिमभिगम्य प्राह ॥८॥ हे ब्रह्मन्, तव साक्षाल्लक्ष्मीपतिः शरणागतवत्सलो ब्राह्मणभक्तो भगवान् सखाऽस्ति ॥९॥ ॥ ॥

१ श्रीदामा नाम ।

तंप्रति त्वं गच्छ । स दरिद्रपीडिताय कुटुंविने तुभ्यं वहु धनं दास्यति ॥१०॥ भोजवृष्ण्यंधकेश्वरः स कृष्णोऽधुना द्वारकायामास्ते । स पादकमलं स्मरतः पुंस आत्मानमपि यच्छति । स ईश्वरोऽप्यधुनार्थान् कामांश्च सेवते ॥११॥ एवं भार्यया वहुशः प्रार्थितो विप्रः श्रीकृष्णदर्शनमेव परो लाभ इति ॥१२॥ मनसा विचिंत्य गमनाय मतिं दधे । स्त्रियं चाह । हे कल्याणि, गृहे किंचिदुपायनमस्ति चेत्तर्हि दीयताम् ॥१३॥ ततः सा स्त्री विप्रगृहेषु चतुरो मुष्टीन् पृथुकतंडुलान् याचित्वा तान् वस्त्रखंडेन वद्धा भर्त्रे प्रादात् ॥१४॥ स तान् गृहीत्वा मम कृष्णदर्शनं कथं स्यादिति चिंतयन् द्वारकां ययौ ॥१५॥ ततः स त्रीणि सैन्यस्थानानि तथा तिस्रः प्रतोलीश्चातिक्रम्यांधकवृष्णीनां गृहेषु मध्ये ॥१६॥

तमुपेहि महाभाग साधूनां च परायणम् ॥ दास्यति द्रविणं भूरि सीदते ते कुटुंविने ॥१०॥ आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यंधकेश्वरः ॥ स्मरतः पादकमलमात्मानमपि यच्छति ॥ किं न्वर्थकामान्भजते नात्यभीष्टान्जगद्गुरुः ॥११॥ स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु ॥ अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥१२॥ इति संचिंत्य मनसा गमनाय मतिं दधे ॥ अप्यस्त्युपायनं किंचिद्गृहे कल्याणि दीयताम् ॥१३॥ याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतंडुलान् ॥ चैलखंडेन तान्बद्धा भर्त्रे प्रादादुपायनम् ॥१४॥ स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ॥ कृष्णसंदर्शनं मह्यं कथं स्यादिति चिंतयन् ॥१५॥ त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च स द्विजः ॥ विप्रोऽगम्यांधकवृष्णीनां गृहेष्वच्युतधर्मिणाम् ॥१६॥ गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः ॥ विवेशैकतमं श्रीमद्ब्रह्मानंदं गतो यथा ॥१७॥ तं विलोक्याच्युतो दूरात्प्रियापर्यंकमास्थितः ॥ सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥१८॥ सख्युः प्रियस्य विप्रर्षेरंगसंगातिनिर्वृतः ॥ प्रीतो व्यमुंचदब्बिंदून्नेत्राभ्यां पुष्करेक्षणः ॥१९॥ अथोपवेश्य पर्यंके स्वयं सख्युः समर्हणम् ॥ उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ॥२०॥ अग्रहीच्छिरसा राजन्भगवाँल्लोकपावनः ॥ व्यलिंपद्दिव्यगंधेन चंदनागुरुकुंकुमैः ॥२१॥ धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा ॥ अर्चित्वाऽऽवेद्य तांबूलं गां च स्वागतमब्रवीत् ॥२२॥ कुचैलं मलिनं क्षामं द्विजं धमनिसंततम् ॥ देवी पर्यचरत्साक्षाच्चामरव्यजनेन वै ॥२३॥ अंतःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ॥ विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥२४॥ ॥ ॥ ॥

हरेर्यानि षोडश-सहस्र-स्त्रीणां गृहाणि तेषु मध्ये श्रीमदेकं गृहं विवेश ॥१७॥ तदा श्रीकृष्णो दूरात्तं विप्रं विलोक्य स्त्रीपर्यंकाच्छीघ्रमुत्थाय तत्रैत्य मुदा तमालिलिंग ॥१८॥ ततः प्रियस्य तस्य सख्युरंगसंगेन प्रीतः कृष्णो नेत्राभ्यामानंदाश्रूणि व्यमुंचत् ॥१९॥ ततस्तं द्विजं पर्यंक उपवेश्य स्वयमेव पूजासाहित्यमानीय तस्य पादौ प्रक्षाल्य तज्जलम् ॥२०॥ लोकपावनोऽपि कृष्णः । शिरसा जग्राह । ततश्चंदनागुरुकुंकुमैस्तं व्यलिंपत् ॥२१॥ ततो धूपदीपादिभिस्तं मित्रं पूजयित्वा तांबूलं गां च समर्प्य भवतः स्वागतमित्यब्रवीत् ॥२२॥ तदा रुक्मिणी मलिनं कुचैलं शिराभिर्व्याप्तं द्विजं चामरव्यजनाभ्यां पर्यचरत् ॥२३॥ तदा कृष्णेन प्रीत्या मलिनं द्विजं सत्कृतं दृष्ट्वांऽतःपुरजनो विस्मितो वभूव ॥२४॥ ॥

आह च । अहो अनेन भिक्षुकेण किं पुण्यं कृतम् ॥२५॥ योऽसौ श्रीकृष्णेन पर्यंकस्थां श्रियं हित्वा संमानित आलिंगितश्च ॥२६॥ ततस्तौ द्विजकृष्णौ परस्परं करौ गृहीत्वा गुरुकुले वसतोरात्मनोः पूर्वाः कथाः कथयांचक्रतुः ॥२७॥ श्रीभगवानुवाच ॥ हे ब्रह्मन्, गुरुदक्षिणां दत्वा गुरुगृहान्निर्गतेन त्वया सदृशी भार्या परिणीता न वा ॥२८॥ किंच । हे विद्वन्, तव चित्तं गृहेषु विषयैराकृष्टं न भवतीति मया विदितम् । त्वं द्रव्यवस्त्रादिषु नैव प्रीयसे । ज्ञानिनस्तव योग्यमेवैतत् ॥२९॥ केचिद्विषयवासनास्त्यजंतोऽपि लोकसंग्रहार्थं कर्माणि कुर्वंति । यथाऽहं लोकसंग्रहार्थं कर्माणि करोमि तद्वत् ॥३०॥ हे द्विज, कच्चिदावयोर्गुरुकुले वासं स्मरसि । यतो गुरोः परमात्मतत्त्वं ज्ञात्वा ब्राह्मणः संसारस्य पारं प्राप्नोति ॥३१॥ इह संसारे त्रयो गुरवः संति । यस्माज्जन्ममात्रं जातं स पिता प्रथमो गुरुः । तत उपनीय वेदाध्यापको द्वितीयो गुरुः । ततः सर्वेषामप्याश्रमिणां ज्ञानप्रदो यः

किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ॥ श्रिया हीनेन लोकेऽस्मिन्गर्हितेनाधमेन च ॥२५॥ योऽसौ त्रिलोकगुरुणा श्रीनिवासेन संभृतः ॥ पर्यंकस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥२६॥ कथयांचक्रतुर्गाथाः पूर्वा गुरुकुले सतोः ॥ आत्मनोर्ललिता राजन्करौ गृह्य परस्परम् ॥२७॥ श्रीभगवानुवाच ॥ अपि ब्रह्मन्गुरुकुलाद्भवता लब्धदक्षिणात् ॥ समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥२८॥ प्रायो गृहेषु ते चित्तमकामविहतं तथा ॥ नैवातिप्रीयसे विद्वन्धनेषु विदितं हि मे ॥२९॥ केचित्कुर्वंति कर्माणि कामैरहतचेतसः ॥ त्यजंतः प्रकृतीर्दैवीर्यथाऽहं लोकसंग्रहम् ॥३०॥ कच्चिद्गुरुकुले वासं ब्रह्मन्स्मरसि नौ यतः ॥ द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥३१॥ स वै सत्कर्मणां साक्षाद्द्विजातेरिह संभवः ॥ आद्योऽग यत्राश्रमिणां यथाऽहं ज्ञानदो गुरुः ॥३२॥ नन्वर्थकोविदा ब्रह्मन्वर्णाश्रमवतामिह ॥ ये मया गुरुणा वाचा तरंत्यंजो भवार्णवम् ॥३३॥ नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा ॥ तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥३४॥ अपि नः स्मर्यते ब्रह्मन्वृत्तं निवसतां गुरौ ॥ गुरुदारैश्चोदितानामिंधनानयने क्वचित् ॥३५॥ प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज ॥ वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥३६॥ सूर्यश्चास्तं गतस्तावत्तमसा चावृता दिशः ॥ निम्नं कूलं जलमयं न प्राज्ञायत किंचन ॥३७॥ वयं भृशं तत्र महानिलांबुभिर्निहन्यमाना मुहुरंबुसंप्लवे ॥ दिशोऽविदंतोऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमातुराः ॥३८॥ ॥ ॥

स तु साक्षादहमेव तृतीयो गुरुः ॥३२॥ अतो ज्ञानप्रदगुरुरूपं मामाश्रित्य ये संसारं तरंति ते बुद्धिमंतः ॥३३॥ हे ब्रह्मन्, अहमीश्वरो गुरुशुश्रूषया यथा तुष्येयं तथा ब्रह्मचारि-गृहस्थ-वानप्रस्थ-यतिधर्मैर्न तुष्येयम् ॥३४॥ हे ब्रह्मन्, गुरुकुले वसतामस्माकं वृत्तं त्वया स्मर्यते किमु । एकदा गुरुदारैः काष्ठानयनार्थं वयं प्रेरिताः ॥३५॥ तदा महारण्ये प्रविष्टानां सतामकाले प्रचंडो वायुर्वर्षं च जातम् ॥३६॥ तावत्सूर्योऽप्यस्तं गतः । तदा तमसा दिशो व्याप्ताः । तदोच्चं नीचं च स्थानं नादृश्यत ॥३७॥ तत्र महावायुजलैः पीडिता वयं दिशोऽजानंतो गृहीतान्योन्यहस्ता धृतकाष्ठभाराः संतः परितो भ्रमणं कृतवंतः ॥३८॥ ॥ ॥ ॥ ॥

एतद्विदित्वा सूर्ये उदिते सति सांदीपनिर्गुरुः शिष्यानन्विष्यमाणः सन् शीतादिना पीडितानस्मान् ददर्श । आह च ॥३९॥ हे पुत्रकाः, अहो अस्मदर्थे यूयं भृशं दुःखिताः । सर्वेषां प्राणिनां देहः प्रियः । तमनादृत्य यूयं मत्परा जाताः ॥४०॥ गुरौ देहार्पणकरणमिति यः एष एव सच्छिष्यैर्गुरोः प्रत्युपकारः कर्तव्यः ॥४१॥ भो द्विजश्रेष्ठाः, अहं तुष्टोऽस्मि, युष्माकं मनोरथाः सफलाः संतु । किंच । मत्तोऽधीतानि युष्माकं छंदांसि सदाऽगतसाराणि भवंतु ॥४२॥ एवंविधान्यनेकानि वृत्तानि त्वया स्मर्यंते किम् । यतो गुरुप्रसादेनैव पुमान् पूर्णो भवति ॥४३॥ ब्राह्मण उवाच । हे देवदेव, येषामस्माकं सत्यसंकल्पेन त्वया सह गुरौ वासोऽभूत्तैरस्माभिः किं न संपादितं सर्वमपि संपादितमेव ॥४४॥ किंच । यस्य

एतद्विदित्वा उदिते रवौ सांदीपनिर्गुरुः ॥ अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥३९॥ अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ॥ आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥४०॥ एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ॥ यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥४१॥ तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः संतु मनोरथाः ॥ छंदांस्ययातयामानि भवंत्विह परत्र च ॥४२॥ इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु ॥ गुरोरनुग्रहेणैव पुमान्पूर्णः प्रशांतये ॥४३॥ ब्राह्मण उवाच ॥ किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ॥ भवता सत्यकामेन येषां वासो गुरावभूत् ॥४४॥ यस्य छंदोमयं ब्रह्म देह आवपनं विभो ॥ श्रेयसां तस्य गुरुषु वासोऽत्यंतविडंबनम् ॥४५॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे श्रीदामचरितेऽशीतितमोऽध्यायः ॥८०॥ श्रीशुक उवाच ॥ स इत्थं द्विजमुख्येन सह संकथयन्हरिः ॥ सर्वभूतमनोऽभिज्ञः स्मयमान उवाच तम् ॥१॥ ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्प्रियम् ॥ प्रेम्णा निरीक्षणेनैव प्रेक्षन्खलु सतां गतिः ॥२॥ श्रीभगवानुवाच ॥ किमुपायनमानीतं ब्रह्मन्मे भवता गृहात् ॥ अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥३॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ४ ॥ इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः ॥ पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ॥५॥ ॥ ॥ ॥ ॥

तत्र वेदाख्यं शरीरं तस्य तत्र गुरौ वास इत्येतदत्यंतं मनुष्यानुकरणमस्ति ॥४५॥ इति श्रीमद्भा० चूर्णिका० दश० उत्त० अशीतितमोऽध्यायः ॥८०॥ एकाशीतितमे सख्युर्जग्ध्वा पृथुकतंडुलान् । श्रियं निर्मितवानिंद्रदुर्लभां तु तदाश्रमे ॥१॥ श्रीशुक उवाच ॥ हे राजन्, तेन द्विजमुख्येन सहेत्थं कथाः कथयन् सर्वभूतमनोऽभिज्ञो भगवान् श्रीकृष्णः ॥१॥ तं प्रियं ब्राह्मणं प्रेम्णाऽवलोकयन् क्ष्वेल्या इदमाह ॥२॥ श्रीभगवानुवाच । हे ब्रह्मन्, त्वया गृहान्मह्यमुपायनं किमानीतम् । यतो भक्तैः प्रेम्णा स्वल्पमप्यानीतं मे वहु भवति । अभक्तेनानीतं भूर्यपि मम तोषाय न भवति ॥३॥ यो भक्त्या मम पत्रं पुष्पं फलं जलं वाऽर्पयति तदहमश्नामि ॥४॥ हे राजन्, इत्युक्तोऽपि स श्रीदामा द्विजो लज्जयाऽवाङ्मुखः

१ मदर्थं पृथुकानानीय दातुं लज्जित इति जानन्नित्यर्थः ।

सन् लक्ष्मीपतये तस्मै पृथुकप्रसृतिं न ददौ ॥५॥ ततः सर्वभूतानामंतःकरणसाक्षी भगवान् तस्यागमनकारणं विज्ञायाऽचिंतयत् । अयं पुरा संपत्तिप्राप्तये मां नाभजत् ॥६॥ इदानीं तु पत्न्याः प्रियं कर्तुमिच्छया मां प्राप्तः । अतोऽस्मै देवानामपि दुर्लभाः संपदो दास्यामि ॥७॥ इत्थं विचिंत्य भगवान् द्विजस्यातिजीर्णवस्त्रे चीरेण वद्धान् पृथुकतंडुलानिदं किमिति स्वयं जहार ॥८॥ हे सखे, त्वयेदं ममातिप्रियमानीतम् । एते पृथुकतंडुला विश्वात्मानं मां तर्पयंति ॥९॥ इति वदन् कृष्ण एका मुष्टिं जग्ध्वा द्वितीयां जग्धुमाददे । तावत्तत्परा लक्ष्मीर्हस्तं जगृहे ॥१०॥ आह च । हे विश्वात्मन्, इह लोके परलोके च सर्वसंपत्समृद्धिप्राप्त्यर्थमेतावता तव संतोषेणालम् ॥११॥ ततः स ब्राह्मणस्तां रात्रिमच्युतमंदिरे

सर्वभूतात्मदृक्साक्षात्तस्यागमनकारणम् ॥ विज्ञायाचिंतयन्नायं श्रीकामो माऽभजत्पुरा ॥६॥ पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया ॥
प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभाः ॥७॥ इत्थं विचिंत्य वसनाचीरबद्धान्द्विजन्मनः ॥ स्वयं जहार किमिदमिति पृथुकतंडुलान् ॥८॥
नन्वेतदुपनीतं मे परमप्रीणनं सखे ॥ तर्पयंत्यंग मां विश्वमेते पृथुकतंडुलाः ॥९॥ इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे ॥ तावच्छ्री-
र्जगृहे हस्तं तत्परा परमेष्ठिनः ॥१०॥ एतावताऽलं विश्वात्मन्सर्वसंपत्समृद्धये ॥ अस्मिँलोकेऽथवाऽमुष्मिन्पुंसस्त्वत्तोषकारणम् ॥११॥ ब्राह्मणस्तां
तु रजनीमुषित्वाऽच्युतमंदिरे ॥ भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा ॥१२॥ श्वोभूते विश्वभावेन स्वसखेनाभिवंदितः ॥ जगाम
स्वालयं तात पथ्यनुव्रज्य नंदितः ॥१३॥ स चालब्ध्वा धनं कृष्णान्न तु याचितवान्स्वयम् ॥ स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥१४॥
अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ॥ यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥१५॥ क्वाहं दरिद्रः पापीयान्क्व कृष्णः श्रीनिकेतनः ॥
ब्रह्मबंधुरिति स्माहं बाहुभ्यां परिरंभितः ॥१६॥ निवासितः प्रियाजुष्टे पर्यंके भ्रातरो यथा ॥ महिष्या वीजितः श्रांतो बालव्यजनहस्तया
॥१७॥ शुश्रूषया परमया पादसंवाहनादिभिः ॥ पूजितो देवदेवेन विप्रदेवेन देववत् ॥१८॥ स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् ॥
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥१९॥ ॥ ॥ ॥ ॥

उषित्वाऽऽत्मानं स्वर्गवासिनमिव मेने ॥१२॥ ततो द्वितीयेऽह्नि सूर्ये उदिते सति श्रीकृष्णेनाभिवंदितः स ब्राह्मणो मार्गेऽनुव्रज्यानंदितः सन् स्वगृहं जगाम ॥१३॥ स कृष्णाद्धनमलब्ध्वापि स्वयं न याचितवान् । किंतु श्रीकृष्णदर्शनतृप्तः सन् स्वगृहं जगाम ॥१४॥ तृप्तिमेवाह । अहो श्रीकृष्णस्य ब्राह्मणभक्तिरद्य मया दृष्टा । यतो लक्ष्मीमुरसि बिभ्रता दरिद्रतमोऽहमालिंगितः ॥१५॥ अहो अहं नीचो दरिद्रः क्व । श्रीनिवासः कृष्णश्च क्व । तथापि तेनाहं ब्राह्मणोऽयमिति मत्वा बाहुभ्यमालिंगितः॥१६॥ किंच । बंधुवत्स्वपर्यंकेऽहं निवासितः । अपिच । बालव्यजनहस्तया रुक्मिण्या वीजितः ॥१७॥ तथा कृष्णेन पादसंवाहनादिशुश्रूषया देववत् पूजितः ॥१८॥ ततः स्वस्य द्रव्यालाभे कारणं कल्पयति । यद्यपि

२ एतावता पुंस इहामुत्र च मत्कटाक्षविलासभूतानां सर्वसंपदां समृद्धयेऽलम् । अतः परं द्वितीयमुष्टिभक्षणेन मा मामेतदधीनां कुर्विति ।

स्वर्गापवर्गयोरणिमादिसिद्धीनामपि तच्चरणपूजनमेव कारणम् ॥१९॥ तथापि दरिद्रोऽयं धनं प्राप्य मत्तो भूत्वा मां न स्मरेत् । इति हेतोर्मह्यं स्वल्पमपि धनं श्रीकृष्णो न ददौ ॥२०॥ एवं मार्गे चिंतयन् द्विजो निजगृहसमीपं प्राप्तः । कीदृशं गृहम् । सूर्याग्निचंद्र-सदृशैर्विमानैः सर्वतो वेष्टितम् ॥२१॥ विचित्रोपवनैरुद्यानैश्च युक्तम् । यत्र पक्षिवृंदानि नादं कुर्वंति । यत्र च प्रफुल्लित-कमल-कुमुदादियुक्तानि सरोवराणि शोभंते ॥२२॥ तथा स्वलंकृतैः स्त्रीपुरुषैर्व्याप्तम् । एतादृशं गृहं दृष्ट्वा किमिदं कस्य वा स्थानं कथं तन्मम गृहमेवं-रूपमभूत् ॥२३॥ इति तर्कयंतं तं नरा नार्यश्चोपायनानि गृहीत्वा महता गीतवाद्येनादृतवंतः ॥२४॥ तदा पतिमागतं श्रुत्वा तत्पत्नी, रूपधारिणी लक्ष्मीः स्व-कमलादिव तूर्णं स्वगृ-

अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ॥ इति कारुणिको नूनं धनं मेऽभूरि नाददात् ॥२०॥ इति तच्चिंतयन्नंतः प्राप्तो निजगृहांतिकम् ॥ सूर्यानलेंदुसंकाशैर्विमानैः सर्वतो वृतम् ॥२१॥ विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः ॥ प्रोत्फुल्लकुमुदांभोजकह्लारोत्पलवारिभिः ॥२२॥ जुष्टं स्वलंकृतैः पुंभिः स्त्रीभिश्च हरिणाक्षिभिः ॥ किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥२३॥ एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः ॥ प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा ॥२४॥ पतिमागतमाकर्ण्य पत्न्युद्धर्षाऽतिसंभ्रमा ॥ निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥२५॥ पतिव्रता पतिं दृष्ट्वा प्रेमोत्कंठाऽश्रुलोचना ॥ मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥२६॥ पत्नीं वीक्ष्य विस्फुरंतीं देवीं वैमानिकीमिव ॥ दासीनां निष्ककंठीनां मध्ये भांतीं स विस्मितः ॥२७॥ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमंदिरम् ॥ मणिस्तंभशतोपेतं महेंद्रभवनं यथा ॥२८॥ पयःफेननिभाः शय्या दांता रुक्मपरिच्छदाः ॥ पर्यंका हेमदंडानि चामरव्यजनानि च ॥२९॥ आसनानि च हैमानि मृदूपस्तरणानि च ॥ मुक्तादामविलंबीनि वितानानि द्युमंति च ॥३०॥ स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नदीपान्भ्राजमानाँल्ललनारत्नसंयुतान् ॥३१॥ विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसंपदाम् ॥ तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥३२॥ नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ॥ महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥३३॥ ॥ ॥ ॥

हान्निश्चक्राम ॥२५॥ ततः सा पतिव्रता प्रेमोत्कंठाश्रुलोचना सती पतिं मनसा परिषस्वजे ॥२६॥ तदा दासीनां मध्ये देवपत्नीमिव शोभंतीं पत्नीं वीक्ष्य ॥२७॥ प्रीतः स तया सह मणिस्तंभशतोपेतं निजमंदिरं विवेश ॥२८॥ यत्र पयःफेननिभाः शय्याः । सुवर्णपरिच्छदाः गजदंतमयाः पर्यंकाः स्वर्णदंडानि चामरव्यजनानि ॥ २९ ॥ यत्र हैमान्यासनानि मुक्तागुच्छयुक्तानि वितानानि च शोभंते॥३०॥स्वच्छस्फटिककुड्येषु रत्नदीपाः प्रकाशंते॥३१॥तत्र स ब्राह्मणः सर्वसंपदां समृद्धिं विलोक्य स्थिरचित्तः सन् आकस्मिक्येषा समृद्धिः कुत आगतेति तर्कयामास ॥३२॥ दुर्भगस्य दरिद्रस्य मे समृद्धिहेतुः श्रीकृष्णस्यावलोकनादन्यो नैव ॥३३॥ ॥ ॥ ॥ ॥

१ तत्र भगवता स्वर्गस्थानीतत्वात् स्वर्गिणामिव तयोर्दंपत्योरपि दिव्यं रूपं बभूवेति भावः ।

मम सखा भगवानब्रुवाण एव याचकाय पर्जन्यवद्बहु धनं ददाति ॥३४॥ किंच । स्वदत्तं बह्वपि स्वल्पं मन्यते । सुहृत्कृतं स्वल्पमपि बहु मन्यते । अत एव मया समीपे आनीतां पृथुकतंडुलैकमुष्टिं प्रीतियुतः सन् स्वयं गृहीतवान् ॥३५॥ तस्य भगवतः प्रेम सख्यं मैत्री दास्यं तद्भक्तसंगतिश्च मम जन्मनि जन्मनि स्यात् न तु विभूतिः ॥३६॥ यतो भगवान्, धनिनां मदोद्भवं निपातं पश्यन् भक्ताय संपदो राज्यं विभूतीश्च न ददाति । मम तु भक्त्यभावादेवं जातम् । अतस्तद्भक्तिरेव स्यात् ॥३७॥ इत्थं बुद्ध्या निश्चित्य शनैः शनैर्विषयाणां त्यागस्याभ्यासं कुर्वन् नातिलंपटः सन् स्त्रिया सह विषयान् बुभुजे ॥३८॥ तस्य यज्ञपतेर्देवदेवस्य श्रीकृष्णस्य ब्राह्मणाः परं दैवतम् ॥३९॥ एवं स विप्रो भक्तैः पराजितं

नन्वब्रुवाणो दिशते समक्षं याचिष्णवे भूर्यपि भूरिभोजः ॥ पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ॥३४॥ किंचित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी ॥ मयोपनीतां पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥३५॥ तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात् ॥ महानुभावेन गुणाऽऽलयेन विषज्जतस्तत्पुरुषप्रसंगः ॥३६॥ भक्ताय चित्रा भगवान्हि संपदो राज्यं विभूतीर्न समर्धयत्यजः ॥ अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥३७॥ इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ॥ विषयान् जायया त्यक्ष्यन्बुभुजे नातिलंपटः ॥३८॥ तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ॥ ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३९ ॥ एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम् ॥ तद्ध्यानवेगोद्ग्रथितात्मबंधनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥४०॥ एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ॥ लब्धभावो भगवति कर्मबंधाद्विमुच्यते ॥४१॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे पृथुकोपाख्यानं नामैकाशीतितमोऽध्यायः ॥८१॥ श्रीशुक उवाच ॥ अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ॥ सूर्योपरागः सुमहानासीत्कल्पक्षये यथा ॥१॥ तं ज्ञात्वा मनुजा राजन्पुरस्तादेव सर्वतः॥ स्यमंतपंचकं क्षेत्रं ययुः श्रेयोविधित्सया ॥२॥ ॥ ॥

भगवंतं दृष्ट्वा तद्ध्यानेन गताहंकारः सन् स्वल्पेन कालेन तत्स्वरूपं लेभे॥४०॥ एतत्पृथुकोपाख्यानं श्रीकृष्णस्य ब्राह्मणभक्तिं च श्रुत्वा नरो भगवति प्राप्तभक्तिः सन् कर्मबंधान्मुच्यते ॥४१॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे एकाशीतितमोऽध्यायः ॥८१॥ ॥ द्व्यशीतितम आगत्य कुरुक्षेत्रं रविग्रहे । वृष्णीन् दृष्ट्वा मुदा भूपाश्चक्रुः कृष्णकथा मिथः॥१॥ श्रीशुक उवाच ॥ हे राजन्, एकदा द्वारकायां रामकृष्णयोर्वसतोः सतोः सर्वग्रासं सूर्यग्रहणमासीत् ॥१॥ तज्ज्योतिर्विद्भिः कथ्यमानमादावेव ज्ञात्वा सर्वदेशेभ्यो मनुष्याः पुण्यसंपादनेच्छया स्यमंतपंचकं नाम कुरुक्षेत्रं ययुः ॥२॥ ॥ ॥ ॥ ॥ ॥ ॥

१ यथा समुद्रपूरकोऽपि वदान्यः पर्जन्यः कदाचिद्बह्वपि कृतं वर्षमल्पमेव मन्यमानो लज्जयैव समक्षमवर्षन् रात्रौ निद्राणे कर्षके तत्क्षेत्रमाप्लावयत्येवं श्रीकृष्णोऽपि स्वभोगापेक्षया तद्देयमिंद्रादिपदमतितुच्छं मन्वानस्तस्य च भजनं बहु मन्यमानः समक्षमब्रुवाण एव ददातीति ।

यत्र परशुरामो नृपाणां रक्तप्रवाहेण नव महाह्रदान् चक्रे ॥३॥ किंच । कर्मणाऽस्पृष्टोऽपि भगवान् रामो यत्र लोकसंग्रहार्थं यज्ञं चकार ॥४॥ तत्र महातीर्थयात्रायां भरतखंडस्थाः प्रजास्तथाऽक्रूर-वसुदेवोग्रसेन-कृष्ण-गद-सांब-प्रद्युम्नादयो यादवाश्च स्वपापं नाशयितुं ययुः ॥५॥६॥ अनिरुद्धः कृतवर्मा च द्वारकारक्षणार्थमासाते । ततस्ते यादवा गजाश्व-रथ-पत्तिभिः सह स्वर्णमालिनो महातेजस उत्तमवस्त्रालंकारधारिणो भार्यासहिता मार्गे देवा इवाशोभंत ॥७॥८॥ ततस्ते तत्र गत्वोपोष्य रामह्रदेषु विधिवत्स्पर्शस्नानं कृत्वा ब्राह्मणेभ्यः सालंकृता धेनूर्ददुः ॥९॥ पुनर्मुक्तिस्नानं कृत्वा कृष्णे नो भक्तिरस्त्विति ब्राह्मणेभ्यः श्रेष्ठमन्नं ददुः ॥१०॥ ततो विप्रानुज्ञां गृहीत्वा यादवाः स्वयं भुक्त्वा निपिडच्छायेषु वृक्षाधो-

निःक्षत्रियां महीं कुर्वन्रामः शस्त्रभृतां वरः ॥ नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥३॥ ईजे च भगवान्रामो यत्रास्पृष्टोऽपि कर्मणा ॥ लोकस्य ग्राहयन्नीशो यथान्योऽघापनुत्तये ॥४॥ महत्यां तीर्थयात्रायां तत्रागन्भारतीः प्रजाः ॥ वृष्णयश्च तथाक्रूरवसुदेवाहुकादयः ॥५॥ ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ गदप्रद्युम्नसांबाद्याः सुचंद्रशुकसारणैः ॥६॥ आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ॥ ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः ॥७॥ गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ व्यरोचंत महातेजाः पथि कांचनमालिनः ॥ दिव्यस्रग्वस्त्रसंनाहाः कलत्रैः खेचरा इव ॥८॥ तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ ब्राह्मणेभ्योऽददुर्धेनूर्वासःस्रग्रुक्ममालिनीः ॥९॥ रामह्रदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ॥१०॥ स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ भुक्त्वोपविविशुः कामं स्निग्धच्छायांघ्रिपांघ्रिषु ॥११॥ तत्रागतांस्ते ददृशुः सुहृत्संबंधिनो नृपान् ॥ मत्स्योशीनरकौसल्यविदर्भकुरुसृंजयान् ॥१२॥ कांबोजकैकयान्मद्रान्कुंतीनानर्तकेरलान् ॥१३॥ अन्यांश्चैवात्मपक्षीयान्परांश्च शतशो नृप ॥ नंदादीन्सुहृदो गोपान्गोपीश्चोत्कंठिताश्चिरम् ॥१४॥ अन्योन्यसंदर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ॥ आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥१५॥ स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापांगदृशोऽभिरेभिरे ॥ स्तनैः स्तनान्कुंकुमपंकरूषितान्निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥१६॥ ततोऽभिवाद्य ते वृद्धान्यविष्ठैरभिवादिताः ॥ स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथा मिथः ॥१७॥ पृथा भ्रातॄन्स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि ॥ भ्रातृपत्नीर्मुकुंदं च जहौ संकथया शुचः ॥१८॥

भागेषु पटगृहेषु च यथेच्छं वासं चक्रुः ॥११॥ ततस्तत्रागतान् सुहृत्संबंधिनो नृपान् ददृशुः । तानाह । मत्स्योशीनर-कौशल्य-विदर्भ-कुरु-सृंजयान् ॥१२॥ कांबोज-कैकय-मद्र-कुंत्यानर्त-केरलान् । अन्यांश्च स्वपरपक्षीयान् नृपान् नंदादिगोपान् चिरमुत्कंठिता गोपीश्च ददृशुः ॥१३॥१४॥ ततस्तेऽन्योऽन्यसंदर्शनहर्षवेगेन परस्परं गाढमालिंग्य प्रेमाश्रूणि मुंचंतो मुदं प्रापुः ॥१५॥ तथा स्त्रियश्चान्योन्यं हर्षिताः सत्यः स्तनैः स्तनान्निहत्य दोर्भिरालिंगनं कृतवत्यः ॥१६॥ ततस्ते यादवैः संगताः सर्वे लोका वृद्धान् प्रणम्य कनिष्ठैरभिवादिताः संतः कुशलं पृष्ट्वा मिथः कृष्णकथाश्चक्रुः ॥१७॥ कुंती तु तत्रागतान् भ्रातृभगिन्यादीन् मातापितरौ कृष्णं च वीक्ष्य मिथः सप्रेमगोष्ठ्या शोकान् जहौ ॥१८॥ ॥

कुंत्युवाच ॥ हे भ्रातः वसुदेव, अहमपूर्णमनोरथमात्मानं मन्ये । यत आपत्सु मद्वार्ता यूयं नानुस्मरथ ॥१९॥ यस्य दैवं नानुकूलं तं स्वजनमपि सुहृत्संबंधिबांधवा नानुस्मरंति ॥२०॥ वसुदेव उवाच ॥ हे अंब, त्वमस्मान् मा सूयेथाः । यतो लोक ईशस्य वशे वर्तते ॥२१॥ किंच । कंसेन तापिता वयं दश दिशो याताः । संप्रत्येव पुनर्दैवेन स्वस्थानं प्राप्ताः ॥२२॥ श्रीशुक उवाच ॥ हे राजन्, ततो वसुदेवादिभिः पूजिता नृपाः कृष्णदर्शनेन तृप्ता आसन् ॥२३॥ ततो भीष्मो द्रोणो धृतराष्ट्रो गांधारी सभार्याः पांडवाः कुंती सृंजयो विदुरः कृपः ॥२४॥ कुंतिभोजः विराटः भीष्मकः नग्नजित् पुरुजितद्रुपदः शल्यः धृष्टकेतुः काशिराजः ॥२५॥ दमघोषः जनकः मद्रः केकयः युधामन्युः सुशर्मा बाह्लिकादयश्च ॥२६॥

कुंत्युवाच ॥ आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् ॥ यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥१९॥ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ॥ नानुस्मरंति स्वजनं यस्य दैवमदक्षिणम् ॥२०॥ वसुदेव उवाच ॥ अंब मास्मानसूयेथा दैवक्रीडनकान्नरान् ॥ ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा ॥२१॥ कंसप्रतापिताः सर्वे वयं याता दिशं दिशम् ॥ एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥२२॥ श्रीशुक उवाच ॥ वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः ॥ आसन्नच्युतसंदर्शपरमानंदनिर्वृताः ॥२३॥ भीष्मोद्रोणोंऽबिकापुत्रो गांधारी ससुता तथा ॥ सदाराः पांडवाः कुंती सृंजयो विदुरः कृपः ॥२४॥ कुंतिभोजो विराटश्च भीष्मको नग्नजिन्महान् ॥ पुरुजिद्द्रुपदः शल्यो धृष्टकेतुः सकाशिराट् ॥२५॥ दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ ॥ युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥२६॥ राजानो ये च राजेंद्र युधिष्ठिरमनुव्रताः ॥ श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः ॥२७॥ अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः ॥ प्रशशंसुर्मुदा युक्ता वृष्णीन्कृष्णपरिग्रहान् ॥२८॥ अहो भोजपते यूयं जन्मभाजो नृणामिह ॥ यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥२९॥ यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादावनेजनपयश्च वचश्च चास्त्रम् ॥ भूः कालभर्जितभगापि यदंघ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥३०॥ तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिंडबंधः ॥ येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥३१॥ श्रीशुक उवाच ॥ नंदस्तत्र यदून्प्राप्तान् ज्ञात्वा कृष्णपुरोगमान् ॥ तत्रागमद्वृतो गोपैरनस्थार्थैर्दिदृक्षया ॥३२॥ ॥ ॥

धर्मराजमनुव्रता ये राजानस्ते सर्वे च स्त्रीसहितं लक्ष्म्याः स्थानं कृष्णस्वरूपं वीक्ष्य विस्मिता बभूवुः ॥२७॥ ततो रामकृष्णाभ्यां पूजितास्ते राजानो यादवान् मुदा प्रशशंसुः ॥२८॥ अहो उग्रसेन, नृणां मध्ये यूयं सफलजन्मानः । यतो निरंतरं योगिनामपि दुर्दर्शं श्रीकृष्णं पश्यथ ॥२९॥ यस्य श्रीकृष्णस्य कीर्तिः, पादोदकरूपा गंगा, वाक्यरूपो वेदश्च विश्वं पुनाति । उत च कालगत्या भाग्यहीनत्वं प्राप्तापि भूमिर्यस्य चरणस्पर्शेन शक्तियुक्ता भूत्वाऽस्माकं सर्वपदार्थान् ददाति ॥३०॥ येषां वो गृहे स्वयं विष्णुराविर्भूतः । उत च येषां वो गृहेऽपि श्रीकृष्णेन सहासनभोजनादयो व्यवहारा भवंति ते यूयं सफलजन्मानः ॥३१॥ श्रीशुक उवाच ॥ नंदस्तत्र यादवान् प्राप्तान् ज्ञात्वा तेषां द्रष्टुमिच्छया गोपैः सह तत्र

स्वयं जगाम ॥३२॥ यादवास्तं नंदं दृष्ट्वा हृष्टमानसाः संतो गाढमालिंगनं चक्रुः ॥३३॥ ततो वसुदेवः प्रीतो नंदमालिंग्य कंसकृतान् क्लेशान् तथा गोकुले पुत्रस्थापनं च स्मरन् प्रेम्णा विह्वलो बभूव ॥३४॥ ततः कृष्णरामौ, यशोदानंदौप्रति प्रणम्य प्रेम्णा साश्रुकंठौ संतौ किंचन नोचतुः ॥३५॥ तदा यशोदानंदौ रामं कृष्णं चोत्संगे आरोप्य बाहुभ्यामालिंग्य वियोगशोकान् जहतुः ॥३६॥ तदा रोहिणी देवकी च यशोदामालिंग्य तत्कृतां मैत्रीं स्मरंत्यावूचतुः ॥३७॥ हे यशोदे, इंद्रस्यैश्वर्यं प्राप्यापि तव मैत्रीं का विस्मरेत । यस्या मैत्र्याः प्रतिक्रिया कर्तुं न शक्यते ॥३८॥ किंच । हे व्रजेश्वरि, युवयोः पित्रोर्न्यस्तावेतौ रामकृष्णौ नेत्रे पक्ष्मभ्यामिव रक्षकाभ्यां युवाभ्यां सकाशात् पोषणपालनादि प्राप्य वासं

तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः ॥ परिषस्वजिरे गाढं चिरदर्शनकातराः ॥३३॥ वसुदेवः परिष्वज्य संप्रीतः प्रेमविह्वलः ॥ स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासं च गोकुले ॥३४॥ कृष्णरामौ परिष्वज्य पितरावभिवाद्य च ॥ न किंचनोचतुः प्रेम्णा साश्रुकंठौ कुरूद्वह ॥३५॥ तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च ॥ यशोदा च महाभागा सुतौ विजहतुः शुचः ॥३६॥ रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् ॥ स्मरंत्यौ तत्कृतां मैत्रीं बाष्पकंठ्यौ समूचतुः ॥३७॥ का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि ॥ अवाप्याप्यैंद्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥३८॥ एतावदृष्टपितरौ युवयोः स्म पित्रोः संप्रीणनाभ्युदयपोषणपालनानि ॥ प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्र च भयौ न सतां परः स्वः ॥३९॥ श्रीशुक उवाच ॥ गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपंति ॥ दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥४०॥ भगवांस्तास्तथाभूता विविक्त उपसंगतः ॥ आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥४१॥ अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ॥ गतांश्चिरायितान् शत्रुपक्षक्षपणचेतसः ॥४२॥ अप्यवध्यायथास्मान्स्विदकृतज्ञाविशंकया ॥ नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥४३॥ वायुर्यथा घनानीकं तृणं तूलं रजांसि च ॥ संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥४४॥ मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥ दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥४५॥ अहं हि सर्वभूतानामादिरंतोऽन्तरं बहिः ॥ भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरंगनाः ॥४६॥ ॥ ॥ ॥ ॥

चक्रतुः ॥३९॥ श्रीशुक उवाच ॥ हे राजन्, ततो गोप्यश्चिरात्कृष्णं प्राप्तं दृष्ट्वा, स्वदृष्टिषु पक्ष्मकृतं ब्रह्माणं शपंत्यः सत्यो दृग्भिस्तं हृदि कृत्यालिंग्य च ताः सर्वा अंतःकरणेन तत्स्वरूपतां प्रापुः ॥४०॥ भगवानप्येकांते ता उपगम्यालिंग्य कुशलं च पृष्ट्वा प्रहस्य जगाद ॥४१॥ हे सख्यः, यूयं शत्रुनाशार्थं चिरकालं गतान् नः स्मरथ किम् ॥४२॥ किंच । यूयमस्मान् कृतघ्ना एत इति निंदथ किम् । ओमिति चेत्तर्हि श्रृणुत । भगवान् भूतानां संयोगवियोगौ करोति ॥४३॥ यथा वायुर्मेघतृणादिकं संयोज्य पुनः पृथक्करोति । तथेश्वरो भूतानां संयोगवियोगौ करोति ॥४४॥ किंच । मयि प्राणिनां भक्तिर्मोक्षाय कल्पते । अतो भवतीनां मयि स्नेह आसीत् तदतिभद्रम् ॥४५॥ हे अंगनाः, यथा शरावादिविकाराणां

पंच महाभूतान्याद्यंतादिरूपाणि संति तथा व्यापक आत्माऽहं सर्वभूतानामादिरंतोंऽतरं बहिश्चास्मि ॥४६॥ अत एतदुभयं परिपूर्णे मयि भासत इति यूयं पश्यत ॥४७॥ श्रीशुक उवाच ॥ एवं श्रीकृष्णेन स्वस्वरूपोपदेशेन बोधिता गोप्यस्तत्स्वरूपानुस्मरणेन नष्टलिंगशरीरास्तमेव प्रापुः ॥४८॥ आहुश्च । हे भगवन्, योगेश्वरैरपि हृदि विचिंत्यं ते चरणकमलं गृहसेविनामप्यस्माकं मनसि सदाऽऽविर्भवतु ॥४९॥ इति श्रीमद्भा० चू० दश० उत्त० द्व्यशीतितमोऽध्यायः ॥८२॥ त्र्यशीतितम एवं च स्त्रीणां कृष्णकथोत्सवे । द्रौपद्यै कृष्ण-भार्याभिरुक्ताः स्वस्वकरग्रहाः ॥१॥ श्रीशुक उवाच ॥ एवं कृष्णो गोपीरनुगृह्य ततो युधिष्ठिरादीन् कुशलं पप्रच्छ ॥१॥ एवं लोकनाथेन संमानितास्ते सर्वे युधिष्ठिरादय ऊचुः

एवं ह्येतानि भूतानि भूतेष्वात्माऽऽत्मना ततः ॥ उभयं मय्यथ परे पश्यताभातमक्षरे ॥४७॥ श्रीशुक उवाच ॥ अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥४८॥ आहुश्च ते नलिननाभ पदारविंदं योगेश्वरैर्हृदि विचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबं गेहंजुषामपि मनस्युदियात्सदा नः ॥४९॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे वृष्णिगोपसंगमो नाम द्व्यशीतितमोऽध्यायः ॥ ८२॥ श्रीशुक उवाच ॥ तथाऽनुगृह्य भगवान्गोपीनां स गुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम् ॥१॥ त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः ॥ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥२॥ कुतोऽशिवं त्वच्चरणांबुजासवं महन्मनस्तो मुखनिः-सृतं क्वचित् ॥ पिबंति ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदम् ॥३॥ हित्वाऽऽत्मधाम विधुतात्मकृतत्र्यवस्थमानंदसंप्लवमखंडमकुंठ-बोधम् ॥ कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नताः स्म ॥४॥ ऋषिरुवाच ॥ इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वंधक-कौरवस्त्रियः ॥ समेत्य गोविंदकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते ॥५॥ द्रौपद्युवाच ॥ हे वैदर्भ्यच्युतो भद्रे हे जांबवति कौसले ॥ हे सत्यभामे कालिंदि शैब्ये रोहिणि लक्ष्मणे ॥६॥ हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान्स्वयम् ॥ उपयेमे यथा लोकमनुकुर्वन्स्वमायया ॥७॥

॥२॥ हे भगवन्, तव कीर्तिं कर्णपुटैर्ये पिबंति तेषामभद्रं कुतः स्यान्न कुतोऽपि ॥३॥ हे प्रभो, स्वरूपप्रकाशेन निरस्ता जाग्रदाद्यवस्था यस्मिंस्तं सर्वानंदकदंबरूपमकुंठचिच्छक्तिं परमहंसगतिं संप्रति वेदरक्षणार्थं धृतमनुष्यावतारं त्वां वयं नताः स्मः ॥४॥ श्रीशुक उवाच ॥ हे राजन्, एवं श्रीकृष्णं जनेषु स्तुवत्सु सत्सु यादवकौरवस्त्रियो मिथो मिलित्वा त्रैलोक्यगीता गोविंदकथाः परस्परं वर्णयामासुः । तास्ते वर्णयामि । शृणु ॥५॥ द्रौपद्युवाच ॥ हे रुक्मिणि, हे भद्रे, हे जांबवति, हे सत्ये, हे सत्यभामे, हे कालिंदि, हे मित्रविंदे, हे लक्ष्मणे, हे [2]रोहिणि, हे कृष्णपत्न्यः, भगवान् वो यथोपयेमे तत्कथयत ॥६॥७॥ ॥ ॥ ॥ ॥ ॥

१ भूतभौतिकरूपं भोग्यं, भोक्तारं चात्मानम् । २ रोहिणीनाम काचित् स्त्री पट्टमहिषीतुल्याऽभूत् । अतस्तस्याः पृथक् प्रश्नः ।

रुक्मिण्युवाच ॥ हे द्रौपदि, शिशुपालाय मां संपादयितुं जरासंधादिषु राजसु गृहीतधनुर्बाणेषु सत्सु तेषां मूर्ध्नि पदं दत्वा कृष्णो मां निन्ये तस्य चरणो मम पूजनायास्तु ॥८॥ सत्यभामोवाच ॥ यो मे पित्रा सत्राजितेन प्रापितं दुर्यशो दूरीकर्तुं जांबवंतं जित्वा स्यमंतकं मणिमानीय मत्पित्रे दत्तवान् । ततः स मत्पिता सत्राजित्, मणिना सह मामपि श्रीकृष्णाय दत्तवान् ॥९॥ जांबवत्युवाच ॥ मत्पिता जांबवान् श्रीकृष्णं निजनाथं रामं न ज्ञात्वा तेन सह सप्तविंशति दिनानि युयुधे । ततोऽसौ राम एवेति तं ज्ञात्वा पादौ प्रगृह्य मणिना सह मां तस्मै समर्पितवान् । साऽहं तस्य भगवतो दास्यस्मि ॥१०॥ कालिंद्युवाच ॥ यस्य चरणस्पर्शनेच्छया तपश्चरंतीं मां ज्ञात्वाऽर्जुनेन सह तत्रागत्य यो मम पाणिं जग्राह तस्याहं गृहसंमार्जनकर्त्र्यस्मि ॥११॥ मित्रविंदोवाच ॥ यो मम स्वयंवरे भूपान् मे भ्रातॄंश्च जित्वा मां स्वपुरं निन्ये तस्य चरणक्षालनकर्तृत्वं मम

रुक्मिण्युवाच ॥ चैद्याय माऽर्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरितांघ्रिरेणुः ॥ निन्ये मृगेंद्र इव भागमजावियूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥८॥ सत्यभामोवाच ॥ यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथ रत्नमदात्स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥९॥ जांबवत्युवाच ॥ प्राज्ञाय देहकृदमुं निजनाथदैवं सीतापतिं त्रिणवहान्यमुनाऽभ्ययुध्यत् ॥ ज्ञात्वा परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥१०॥ कालिंद्युवाच ॥ तपश्चरंतीमाज्ञाय स्वपादस्पर्शनाशया ॥ सख्योपेत्याग्रहीत्पाणिं योऽहं तद्गृहमार्जनी ॥११॥ मित्रविंदोवाच ॥ यो मां स्वयंवर उपेत्य विजित्य भूपान्निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ॥ भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियौकस्तस्यास्तु मेऽनुभवमंघ्र्यवनेजनत्वम् ॥१२॥ सत्योवाच ॥ सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृंगान्पित्रा कृतान्क्षितिपवीर्यपरीक्षणाय ॥ तान्वीरदुर्मदहनस्तरसा निगृह्य क्रीडन्बबंध ह यथा शिशवोऽजतोकान् ॥१३॥ य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरंगिणीम् ॥ पथि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥१४॥ भद्रोवाच ॥ पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ॥ कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥१५॥ अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि ॥ कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥१६॥ लक्ष्मणोवाच ॥ ममापि राज्ञ्यच्युतजन्म कर्म श्रुत्वा मुहुर्नारदगीतमास ह ॥ चित्तं मुकुंदे किल पद्महस्तया वृतः सुसंमृश्य विहाय लोकपान् ॥१७॥ ॥

प्रतिजन्मन्यस्तु ॥१२॥ सत्योवाच ॥ मम पित्रा राजवीर्यपरीक्षार्थं संपादितान् वीर-दुर्मद-नाशकान् तीक्ष्णशृंगान् सप्त वृषभान् यः शीघ्रं दमयित्वा क्रीडन्निव बबंध ॥१३॥ किंच । मार्गे राजन्यान् निर्जित्य मां द्वारकांप्रति निन्ये तस्य मम दास्यमस्तु ॥१४॥ भद्रोवाच ॥ हे द्रौपदि, मम पिता श्रुतकीर्तिर्मातुलेयपुत्राय कृष्णाय स्वयमाहूय तच्चित्तां मामक्षौहिण्या सेनया सखीजनैश्च सह दत्तवान् ॥१५॥ तस्य पादस्पर्शो मम जन्मनि जन्मनि भूयात् ॥१६॥ लक्ष्मणोवाच ॥ हे राज्ञि, नारदेन गीतं श्रीकृष्णस्य जन्म कर्म च श्रुत्वा मम चित्तं श्रीकृष्णासक्तमासीत् ॥१७॥ ॥ ॥ ॥ ॥ ॥ ॥

तदा मे पिता बृहत्सेननामा, मम मतं ज्ञात्वा श्रीकृष्णप्राप्त्युपायं चकार ॥१८॥ हे द्रौपदि, यथा तव स्वयंवरेऽर्जुनप्राप्तीच्छया मत्स्यः कृतस्तथा मत्स्यं कारितवान् । स मत्स्यो बहिरेवाच्छन्नो नांतः । अतः स्तंभलग्नयोर्ध्वदृष्ट्या संलक्ष्यते । अयं तु न तथा किंतु । स्तंभमूले निहितकलशोदके केवलं दृश्यते । अतो दृष्टिरधस्तादुपरि च लक्ष्यमिति श्रीकृष्णव्यतिरेकेण न कस्यापि भेद्यः ॥१९॥ तच्छ्रुत्वा भूपाः सर्वास्त्रशस्त्रतत्त्वज्ञा मत्पितुः पुरं ययुः ॥२०॥ ततः पित्रा यथायोग्यं पूजितास्ते मत्स्यं वेद्धुं सशरं धनुर्जगृहुः ॥२१॥ केचित्तद्गृहीत्वा सज्यं कर्तुमसमर्था जाताः । केचिद्धनुषो मौर्वीमाकृष्य हस्तान्निःसृतेन तेन धनुषा ताडिताः संतो भुवि पेतुः ॥२२॥ अपरे जरासंध-शिशुपाल-भीम-दुर्योधनादयो वीरा धनुः सज्यं कृत्वा मत्स्यस्य स्थितिं न ज्ञातवंतः ॥२३॥ ततोऽर्जुनो जले मत्स्याभासं वीक्ष्य तदवस्थितिं ज्ञात्वा बाणं ससर्ज । स बाणो मत्स्यं नाच्छिनत् । केवलं तं पस्पर्श

ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ॥ बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥१८॥ यथा स्वयंवरे राज्ञि मत्स्यः पार्थेप्सया कृतः ॥ अयं तु बहिराच्छन्नो दृश्यते स जले परम् ॥१९॥ श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः पुरम् ॥ सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः ॥२०॥ पित्रा संपूजिताः सर्वे यथावीर्यं यथावयः ॥ आददुः सशरं चापं वेद्धुं पर्षदि मद्धियः ॥२१॥ आदाय व्यसृजन्केचित्सज्यं कर्तुमनीश्वराः ॥ आकोष्ठं ज्यां समुत्कृष्य पेतुरेकेऽमुना हताः ॥२२॥ सज्यं कृत्वा परे वीरा मागधांबष्ठचेदिपाः ॥ भीमो दुर्योधनः कर्णो नाविंदंस्तदवस्थितिम् ॥२३॥ मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् ॥ पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे परम् ॥२४॥ राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ॥ भगवान्धनुरादाय सज्यं कृत्वाऽथ लीलया ॥२५॥ तस्मिन्संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ॥ छित्त्वेषुणाऽपातयत्तं सूर्ये चाभिजिति स्थिते ॥२६॥ दिवि दुंदुभयो नेदुर्जयशब्दयुता भुवि ॥ देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥२७॥ तद्रंगमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ॥ नूत्ने निवीय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कवरीधृतस्रक् ॥२८॥ उन्नीय वक्त्रमुरुकुंतलकुंडलत्विड्गंडस्थलं शिशिरहासकटाक्षमोक्षैः ॥ राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥२९॥ तावन्मृदंगपटहाः शंखभेर्यानकादयः॥निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः॥३०॥एवं वृते भगवति मयेशे नृपयूथपाः॥न सेहिरे याज्ञसेनि स्पर्धंतो हृच्छयातुराः॥३१॥

॥२४॥ एवं भग्नमानेषु सर्वराजन्येषु सत्सु भगवान् धनुरादाय सज्यं कृत्वा ॥२५॥ तस्मिन् बाणं संधाय जले सकृद्वीक्ष्य सर्वार्थसाधकेऽभिजिन्मुहूर्ते बाणेन तं मत्स्यं छित्वा पातयामास ॥२६ ॥ तदा दिवि दुंदुभयो नेदुः । देवाः पुष्पवर्षाणि मुमुचुः ॥२७॥ तदा हस्ते रत्नमालां गृहीत्वा नूपुरशब्दयुक्ताभ्यां पद्भ्यां तं रंगमंडपमहं प्राविशम् ॥२८॥ ततः कृष्णासक्तहृदयाऽहं परितो राज्ञो निरीक्ष्य कृष्णस्य स्कंधे मालां निदधे ॥२९॥ तदा मृदंगभेर्यादयो नेदुः । नर्तक्यो ननृतुः । गायका जगुः ॥३०॥ हे द्रौपदि, मयैवं भगवति श्रीकृष्णे वृते सति स्पर्धमाना नृपास्तत्र सेहिरे ॥३१॥

॥ ॥ ॥ ॥ ॥ ॥

ततः कृष्णो मां रथमारोप्य चतुर्भुजः सन् द्वाभ्यां मामालिंग्य द्वाभ्यां धनुर्वाणौ गृहीत्वा संग्रामे तस्थौ ॥३२॥ तदा दारुकः सुवर्णोपस्कृतं रथं प्रेरयामास ॥३३॥ तदा केचन राजानो मार्गे प्रतिबंधं कर्तुं पुरतो गत्वा धृतचापाः संयत्ता बभूवुः ॥३४॥ ततस्ते कृष्णबाणौघैश्छिन्नबाह्वंघ्रिकंधराः संतो भुवि पेतुः। केचिद्रणं त्यक्त्वा दुद्रुवुः ॥३५॥ एवं युद्धं कृत्वा कृष्णो ध्वजतोरणपताकादिभिरलंकृतां द्वारकां प्राविशत्। यथा सूर्योऽस्ताचलं प्रविशति तद्वत् ॥३६॥ तदा मे पिता मित्रसंबंधिबांधवान् वस्त्रालंकारादिभिः पूजयामास ॥३७॥ श्रीकृष्णाय च शय्यासनपरिच्छदैर्दासीभिर्गजाश्वरथपत्तिभिश्च सहायुधानि ददौ ॥३८॥ इमा अष्टौ वयमात्मारामस्य तस्य श्रीकृष्णस्य गृहदासिका बभूविम ॥३९॥ महिष्य

मां तावद्रथमारोप्य हयरत्नचतुष्टयम् ॥ शार्ङ्गमुद्यम्य संनद्धस्तस्थावाजौ चतुर्भुजः ॥३२॥ दारुकश्चोदयामास कांचनोपस्करं रथम् ॥ मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥३३॥ तेऽन्वसज्जंत राजन्या निषेद्धुं पथि केचन ॥ संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥३४॥ ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वंघ्रिकंधराः ॥ निपेतुः प्रधने केचिदेके संत्यज्य दुद्रुवुः ॥३५॥ ततः पुरीं यदुपतिरत्यलंकृतां रविच्छदध्वजपटचित्रतोरणाम् ॥ कुशस्थलीं दिवि भुवि चाभिसंस्तुतां समाविशत्तरणिरिव स्वकेतनम् ॥३६॥ पिता मे पूजयामास सुहृत्संबंधिबांधवान् ॥ महार्हवासोलंकारैः शय्यासनपरिच्छदैः ॥३७॥ दासीभिः सर्वसंपद्भिर्भटेभरथवाजिभिः ॥ आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥३८॥ आत्मारामस्य तस्येमा वयं वै गृहदासिकाः ॥ सर्वसंगनिवृत्त्याऽद्धा तपसा च बभूविम ॥३९॥ महिष्य ऊचुः ॥ भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षितिजये जितराजकन्याः ॥ निर्मुच्य संसृतिविमोक्षमनुस्मरंतीः पादांबुजं परिणिनाय य आप्तकामः ॥४०॥ न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत ॥ वैराज्यं पारमेष्ठ्यं च आनंत्यं वा हरेः पदम् ॥४१॥ कामयामह एतस्य श्रीमत्पादरजः श्रियः ॥ कुचकुंकुमगंधाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥४२॥ व्रजस्त्रियो यद्वांछंति पुलिंद्यस्तृणवीरुधः ॥ गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥४३॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे त्र्यशीतितमोऽध्यायः ॥८३॥ श्रीशुक उवाच ॥ श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ॥ कृष्णेऽखिलात्मनि हरौ प्रणयानुबंधं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः ॥१॥ ॥

ऊचुः ॥ हे द्रौपदि, दिग्विजये भौमं हत्वा तेन रुद्धा राजकन्या अस्मान् ज्ञात्वा प्रतिबंधान्निर्मुच्य पूर्णकामोऽपि यः श्रीकृष्णो नः परिणीतवान् ॥४०॥ हे साध्वि द्रौपदि, वयं सार्वभौमं पदमैंद्रं पदमणिमादिसिद्धीर्ब्रह्मपदं मोक्षपदं च नेच्छामहे ॥४१॥ किंतु। तस्य श्रीकृष्णस्य चरणरजो मूर्ध्ना धारयितुमिच्छामहे ॥४२॥ यथा गोप्यः पुलिंद्यो वीरुधो गावो गोपाश्च कृष्णस्य चरणस्पर्शमिच्छंति तद्वद्वयमपीच्छामहे ॥४३॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे त्र्यशीतितमोऽध्यायः ॥८३॥ चतुर्भिरधिकाशीतितमे मुनिसमागमे। वसुदेवमखोत्साहबंधुप्रस्थापनादिकम् ॥१॥ श्रीशुक उवाच ॥ हे राजन्, तत्कृष्णपत्नीभाषणं कुंती गांधारी द्रौपदी सुभद्रा तथा राजपत्न्यो गोप्यश्च श्रुत्वा श्रीकृष्णे च तासां

स्नेहातिशयं ज्ञात्वा विस्मयं प्रापुः ॥१॥ इति स्त्रीभिः स्त्रीषु नृभिश्च नृषु संभाषमाणेषु सत्सु कृष्णरामयोर्द्रष्टुमिच्छया तत्र मुनयः समाजग्मुः ॥२॥ ते च—व्यासः नारदः च्यवनः देवलः असितः शतानंदः भारद्वाजः गौतमः ॥३॥ परशुरामः वसिष्ठः गालवः भृगुः पुलस्त्यः कश्यपः अत्रिः मार्कंडेयः बृहस्पतिः ॥४॥ द्वितः त्रितः एकतः सनकादयः अंगिराः अगस्त्यः याज्ञवल्क्यः वामदेवादयश्च ॥५॥ तानृषीन् दृष्ट्वा पांडवादयो रामकृष्णौ चोत्थाय प्रणेमुः ॥६॥ ततस्ते सर्वे रामकृष्णौ च तान् पूजयामासुः ॥७॥ ततः श्रीकृष्णः सुखेनासने स्थितान् तान्प्रति सर्वेषां शृण्वतां सतां जगाद ॥८॥ श्रीभगवानुवाच ॥ अहो वयं सफलजन्मानः । यतो दुष्प्रापं वो योगेश्वराणां दर्शनमस्माकं जातम् ॥९॥ तीर्थस्नानादिमात्रे तपोबुद्धीनां तथा प्रतिमायां देवतादृष्टीनां योगेश्वरदर्शनमसंभावितमस्ति ॥१०॥ उदकमयानि तीर्थानि मृत्तिकाशिलामया देवाश्च बहुना कालेन पुनंति । साधवस्तु

इति संभाषमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु ॥ आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥२॥ द्वैपायनो नारदश्च च्यवनो देवलोऽसितः ॥ विश्वामित्रः शतानंदो भरद्वाजोऽथ गौतमः ॥३॥ रामः सशिष्यो भगवान्वसिष्ठो गालवो भृगुः ॥ पुलस्त्यः कश्यपोऽत्रिश्च मार्कंडेयो बृहस्पतिः ॥४॥ द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रास्तथांगिराः ॥ अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥५॥ तान्दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ॥ पांडवाः कृष्णरामौ च प्रणेमुर्विश्ववंदितान् ॥६॥ तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत् ॥ स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥७॥ उवाच सुखमासीनान्भगवान्धर्मगुप्तनुः ॥ सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥८॥ श्रीभगवानुवाच ॥ अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् ॥ देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥९॥ किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥१०॥ नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनंत्युरुकालेन दर्शनादेव साधवः ॥११॥ नाग्निर्न सूर्यो न च चंद्रतारका न भूर्जलं खं श्वसनोऽथ वाङ् मनः ॥ उपासिता भेदकृतो हरंत्यघं विपश्चितो घ्नंति मुहूर्तसेवया ॥१२॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ॥ यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥१३॥ श्रीशुक उवाच ॥ निशम्येत्थं भगवतः कृष्णस्याकुंठमेधसः ॥ वचो दुरन्वयं विप्रास्तूष्णीमासन्भ्रमद्धियः ॥१४॥ चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् ॥ जनसंग्रह इत्यूचुः स्मयंतस्तं जगद्गुरुम् ॥१५॥

दर्शनादेव पुनंति ॥११॥ अग्नि-सूर्य-चंद्र-तारका भूमि-जल-वाय्वाकाशरूपा देवताश्चोपासिताः संतः पापं हरंति । न तु तन्मूलकमज्ञानं नाशयंति । साधवस्तु मुहूर्तमात्रसेवया भक्तिज्ञानाद्युपदेशद्वाराऽज्ञानसहितं पापं नाशयंति ॥१२॥ अतो यस्य देहेऽहमिति बुद्धिः स्त्रीपुत्रादिषु स्वीया इति बुद्धिः मूर्तावेव पूज्यबुद्धिः जले एव तीर्थबुद्धिश्चास्ति तत्त्ववित्सु ता बुद्धयो न संति स नरो वृषभ-गर्दभ-सदृशो ज्ञातव्यः ॥१३॥ श्रीशुक उवाच ॥ इत्थं कृष्णस्य भाषणं श्रुत्वा ऋषयः प्रथमं तूष्णीमासन् ॥१४॥ ततश्चिरं विचार्य हसंतः संतो जनसंग्रहमात्रमेतदिति तं जगद्गुरुं प्रोचुः ॥१५॥

॥ ॥ ॥ ॥ ॥ ॥

मुनय ऊचुः । यस्य मायया वयं विमोहिताः स त्वमनीश्वरवदाचरसि । अतस्तव चेष्टितमतर्क्यम् ॥१६॥ हे कृष्ण, त्वमिच्छारहित एक एव बहुप्रकारेणात्मना विश्वं सृजसि पासि हरसि ॥१७॥ तथापि भक्तरक्षणार्थं दुष्टनिग्रहाय च शुद्धसत्वात्मकं रूपं बिभर्षि ॥१८॥ किंच । शुद्धं वेदाख्यं ब्रह्म ते स्वरूपमस्ति ॥१९॥ अतो वेदरक्षकं ब्राह्मणकुलं त्वं पूजयसि । तस्मादेव त्वं ब्राह्मणभक्तेषु श्रेष्ठोऽसि ॥२०॥ हे प्रभो, त्वत्समागमेनाद्य नो जन्मनस्तपसो विद्याया दृष्टेश्च साफल्यं जातम् । यतस्त्वं सर्वकल्याणानां परमोऽवधिरसि ॥२१॥ तस्मै भगवते कृष्णाय परमात्मने तुभ्यं नमः ॥२२॥ हे ईश, अमी भूपा वृष्णयश्च सृष्ट्यादिकारणमीश्वरं त्वां न विंदंति ॥२३॥ यथा पुरुषः स्वप्नान् पश्यन् मनसा भातं सिंह–

मुनय ऊचुः ॥ यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः ॥ यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥१६॥ अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ॥ भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडंबनम् ॥१७॥ अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्वं खलनिग्रहाय च ॥ स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥१८॥ ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः ॥ यत्रोपलब्धं सद्व्यक्तमव्यक्तं च ततः परम् ॥१९॥ तस्माद्ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसि सद्धाम तद्ब्रह्मण्याग्रणीर्भवान् ॥२० अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः ॥ त्वया संगम्य सद्गत्या यदंतः श्रेयसां परः ॥२१॥ नमस्तस्मै भगवते कृष्णायाकुंठमेधसे ॥ स्वयोगमायया च्छन्नमहिम्ने परमात्मने ॥२२॥ न यं विदंत्यमी भूपा एकारामाश्च वृष्णयः ॥ मायाजवनिकाछन्नमात्मानं कालमीश्वरम् ॥२३॥ यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ॥ नाममात्रेंद्रियाभातं न वेद रहितं परम् ॥२४॥ एवं त्वा नाममात्रेषु विषयेष्विंद्रियेहया ॥ मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥२५॥ तस्याद्य ते ददृशिमांघ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः ॥ उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥२६॥ श्रीशुक उवाच ॥ इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् ॥ राजर्षे स्वाश्रमान्गंतुं मुनयो दधिरे मनः ॥२७॥ तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः ॥ प्रणम्य चोपसंगृह्य बभाषेदं सुयंत्रितः ॥२८॥ वसुदेव उवाच ॥ नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ॥ कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥२९॥ ॥

व्याघ्रादिरूपमात्मानं वेद । तद्रहितं देवदत्तादिरूपमात्मानं न वेद ॥२४॥ एवं पुमान् स्वप्नतुल्येषु विषयेषु मायया भ्रमच्चित्तः सन् स्वरूपविस्मरणाज्जगत्साक्षिणं त्वां न वेद ॥२५॥ तस्य तव योगेश्वरैर्हृदि चिंतितं चरणकमलं वयं ददृशिम । अतोऽस्मान् भक्ताननुगृहाण ॥२६॥ श्रीशुक उवाच ॥ इति कृष्णं धर्मं धृतराष्ट्रं चानुज्ञाप्य ऋषयः स्वाश्रमान् गंतुं मनो दधिरे ॥२७॥ तद्वीक्ष्य वसुदेवस्तानृषीनुपव्रज्य प्रणम्य बभाषे ॥२८॥ वसुदेव उवाच ॥ हे ऋषयः, वः नमोऽस्तु । येन कर्मणा कर्मनाशो भवति तन्ममोच्यताम् ॥२९॥

तदा श्रीकृष्णं हित्वाऽस्मान् पृच्छतीति विस्मितान् मुनीन्नारद आह । हे विप्राः, श्रीकृष्णमर्भकं मत्वा वसुदेव आत्मनः श्रेयो युष्मान् पृच्छतीत्याश्चर्यं नहि ॥३०॥ यतो मर्त्यानां सांनिध्यमनादरे कारणं भवति । यथा गंगातीरस्थो जनो गंगोदकं हित्वा शुद्ध्यर्थमन्यज्जलं याति ॥३१॥ किंच । यस्य ज्ञानं केनापि कारणेन विश्वस्य लयोत्पत्त्यादिना वा न नश्यति ॥३२॥ तमद्वितीयं श्रीकृष्णं प्राकृतो जनस्तत्प्रकाशितैः सत्वादिगुणप्रवाहैराच्छादितं संतं मनुष्यं मन्यते । यथा सूर्यप्रकाशितेन राह्वादिनाऽऽच्छादितं सूर्यं नीलादिरूपं मन्यते तद्वत् ॥३३॥ अथ मुनयोऽच्युतरामयोर्धर्मादीनां राज्ञां च शृण्वतां सतां वसुदेवमाहुः ॥३४॥ हे वसुदेव, यज्ञैः श्रद्धया विष्णुं यजेत । एष कर्मणा कर्मनाशो निरूपितः ॥३५॥ कविभिरयमेव सुगमो मोक्षोपायो दर्शितः ॥३६॥ अयमेव गृहस्थाश्रमिणः श्रेयस्करो मार्गोऽस्ति ॥३७॥ बुधो यज्ञदानैर्वित्तेच्छां विसृजेत् । गृहोचितभोगैः स्त्रीपुत्रेच्छां क्षयानुसं-

नारद उवाच ॥ नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया ॥ कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥३०॥ संनिकर्षोऽत्र मर्त्यानामनादरणकारणम् ॥ गांगं हित्वा यथाऽन्यांभस्तत्रत्यो याति शुद्धये ॥३१॥ यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै ॥ स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥३२॥ तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ॥ प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥३३॥ अथोचुर्मुनयो राजन्नाभाष्यानकदुंदुभिम् ॥ सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥३४॥ कर्मणा कर्मनिर्हार एष साधुनिरूपितः ॥ यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥३५॥ चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ॥ दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥३६॥ अयं स्वस्त्ययनः पंथा द्विजातेर्गृहमेधिनः ॥ यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥३७॥ वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ आत्मलोकैषणां देव कालेन विसृजेद्बुधः ॥ ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥३८॥ ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितृणां प्रभो ॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत् ॥३९॥ त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ॥ यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भव ॥४०॥ वसुदेव भवान्नूनं भक्त्या परमया हरिम् ॥ जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ॥४१॥ श्रीशुक उवाच ॥ इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ॥ तानृषीनृत्विजो वव्रे मूर्ध्नाऽऽनम्य प्रसाद्य च ॥४२॥ ॥ ॥ ॥

धानेन कालेन च स्वर्गादिलोकेच्छां त्यजेत् । एवं त्यक्तेच्छाः सर्वे धीरास्तपोवनं ययुः ॥३८॥ किंच । अयं द्विजो देवर्षिपितृणां त्रिभिर्ऋणैः सह जातोऽस्ति। अतो यज्ञाध्ययनपुत्रैस्तानि ऋणान्यनपाकृत्य देहं त्यजन्नधः पतेत् ॥३९॥ त्वं तु ऋषिपित्रोर्ऋणाभ्यां मुक्तोऽसि । अथ यज्ञैर्देवर्णमुन्मुच्य गृहात्प्रव्रज ॥४०॥ हे वसुदेव, अविशुद्धचित्तानामयं क्रमः । त्वं तु कृतार्थ एव । यतस्त्वं पूर्वं प्रेमलक्षणया भक्त्या हरिं पूजितवानसि । तेन च भगवानपि युवयोः पुत्रतां प्राप्तोऽस्ति ॥४१॥ श्रीशुक उवाच ॥ एवं ऋषीणां वचनं श्रुत्वा वसुदेवस्तानृषीन् प्रणम्य ऋत्विजो वव्रे ॥४२॥ ॥ ॥ ॥ ॥ ॥ ॥

ततस्ते ऋषयस्तस्मिन् क्षेत्रे यज्ञैर्वसुदेवं याजयामासुः ॥४३॥ तस्यां यज्ञदीक्षायां प्रवृत्तायां वृष्णयो राजानस्तन्महिष्यश्च सुवाससः स्वलंकृता मुदिता गृहीतार्हणहस्ताः संतो यज्ञशालामुपाजग्मुः ॥४४॥४५॥ तदा मृदंग-शंख-भेर्यादयो नेदुः । नटनर्तक्यो ननृतुः । सूतादयस्तुष्टुवुः । गंधर्वा गंधर्व्यश्च जगुः ॥४६॥ तत ऋषयः पत्नीभिः सहितं वसुदेवं ताराभिः सहितं चंद्रमिवाभ्यषिंचन् ॥४७॥ तदाऽष्टादशभिः पत्नीभिर्दीक्षितो वसुदेवो बभौ ॥४८॥ तस्य ऋत्विजश्च रत्नालंकृताः पीतांबरधारिणो विरेजुः ॥४९॥ तदा रामकृष्णौ स्वपुत्रदारै रेजतुः ॥५०॥ एवं प्राकृतैर्वैकृतैश्च यज्ञैर्द्रव्य-ज्ञान-क्रियेश्वरं हरिमीजे ॥५१॥ अथ वसुदेव ऋत्विग्भ्यो दक्षिणा गोभूकन्याश्च ददौ ॥५२॥ ततः पत्नीसंयाजनामकानि कर्माण्य-

त एनमृषयो राजन्वृता धर्मेण धार्मिकम् ॥ तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः ॥४३॥ तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः ॥ स्नाताः सुवाससो राजन्राजानः सुष्ठ्वलंकृताः ॥४४॥ तन्महिष्यश्च मुदिता निष्ककंठ्यः सुवाससः ॥ दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥४५॥ नेदुर्मृदंगपटहशंखभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ॥ जगुः सुकंठ्यो गंधर्व्यः संगीतं सहभर्तृकाः ॥४६॥ तमभ्यषिंचन्विधिवदक्तमभ्यक्तमृत्विजः ॥ पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥४७॥ ताभिर्दुकूलवलयैर्हारनूपुरकुंडलैः ॥ स्वलंकृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥४८॥ तस्यर्त्विजो महाराज रत्नकौशेयवाससः ॥ ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥४९॥ तदा रामश्च कृष्णश्च स्वैः स्वैर्बंधुभिरन्वितौ ॥ रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥५०॥ ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥५१॥ अथर्त्विग्भ्योऽददात्काले यथाम्नातं स दक्षिणाः ॥ स्वलंकृतेभ्योऽलंकृत्य गोभूकन्या महाधनाः ॥५२॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ॥ सस्नू रामह्रदे विप्रा यजमानपुरःसराः ॥५३॥ स्नातोऽलंकारवासांसि वंदिभ्योऽदात्तथा स्त्रियः ॥ ततः स्वलंकृतो वर्णानाश्वभ्योऽन्नेन पूजयत् ॥५४॥ बंधून्सदारान्ससुतान्पारिबर्हेण भूयसा ॥ विदर्भकोसलकुरून्काशिकेकयसृंजयान् ॥५५॥ सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान् ॥ श्रीनिकेतमनुज्ञाप्य शंसंतः प्रययुः क्रतुम् ॥५६॥ धृतराष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ ॥ नारदो भगवान्व्यासः सुहृत्संबंधिबांधवाः ॥५७॥ ॥ ॥ ॥ ॥ ॥

नुष्ठाय यजमानपुरःसराः सर्वे ऋषयो रामह्रदे स्नानं चक्रुः ॥५३॥ ततो वसुदेवः स्त्रियश्च स्नात्वाऽलंकारवासांसि वंदिभ्यो ददुः। ततो वसुदेवः श्वचांडालपर्यंतानि सर्वभूतान्यन्नेन संतर्प्य ॥५४॥ स्त्रीपुत्रसहितान् बंधून् विदर्भकोसलादिदेशानां राज्ञः सदस्यर्त्विक्सुरगणान् मनुष्य-भूत-पितृ-चारणांश्च वस्त्रादिभिः पूजयामासुः। ततस्ते बंध्वादयः श्रीकृष्णमनुज्ञाप्य स्वस्वस्थानानि प्रययुः ॥५५॥५६॥ ततो धृतराष्ट्रो विदुरो युधिष्ठिरभीमार्जुनाः भीष्मो द्रोणो नकुलसहदेवौ नारदो व्यासः सुहृत्संबंधिनोऽन्ये जनाश्च यदूनालिंग्य वियोगदुःखेन

१ अग्निहोत्राद्यंगसहितज्योतिष्टोमदर्शपूर्णमासादिभिः । २ अतिदेशप्राप्तांगैः सौरसत्रादिभिः । ३ द्रव्यं पुरोडाशादि, ज्ञानं मंत्रः, क्रिया कर्म, तेषामीश्वरम् ।

स्वस्वदेशान् ययुः ॥५७॥५८॥ नंदस्तु कृष्णरामोग्रसेनाद्यैः पूजितः सन् गोपालैः सह प्रीत्या तत्रैवावात्सीत् ॥५९॥ एकदा प्रीतमना वसुदेवो नंदस्य हस्तं गृहीत्वा जगाद ॥६०॥ वसुदेव उवाच ॥ हे भ्रातः, इमं ईशकृतं स्नेहपाशं शूराणां योगिनामपि दुस्त्यजमहं मन्ये ॥६१॥ किंच । उपकारमजानत्स्वप्यस्मासु भवद्भिर्निरुपमा मैत्री समर्पिताऽस्ति । इयमुपकारशून्यापि कदाचिदपि न निवर्तते ॥६२॥ हे भ्रातः, वयं पूर्वमसामर्थ्याद्वः प्रियं नाचराम । अधुना श्रीमदांधाक्षाः पुरः सतोऽपि वो न पश्यामः ॥६३॥ अतः श्रेयस्कामस्य पुंसो राज्यसंपत्तिर्माभूत् ॥६४॥ श्रीशुक उवाच ॥ एवं वसुदेवो नंदकृतां मैत्रीं स्मरन्नश्रुलोचनो रुरोद ॥६५॥ ततो यदुभिरद्य श्व इति मानितो नंदः कृष्णरामयोः प्रेम्णा तत्र

बंधून्परिष्वज्य यदून्सौहृदाक्लिन्नचेतसः ॥ ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥५८॥ नंदस्तु सह गोपालैर्बृहत्या पूजयाऽर्चितः ॥ कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बंधुवत्सलः ॥५९॥ वसुदेवोंऽजसोत्तीर्य मनोरथमहार्णवम् ॥ सुहृद्वृतः प्रीतमना नंदमाह करे स्पृशन् ॥६०॥ वसुदेव उवाच ॥ भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः ॥ तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम् ॥६१॥ अस्मास्वप्रतिकल्पेयं यत्कृताऽज्ञेषु सत्तमैः ॥ मैत्र्यर्पिताऽफला वापि न निवर्तेत कर्हिचित् ॥६२॥ प्रागकल्पाच्च कुशलं भ्रातर्वो नाचरामहि ॥ अधुना श्रीमदांधाक्षा न पश्याम पुरः सतः ॥६३॥ मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ॥ स्वजनानुत बंधून्वा न पश्यति ययांऽधदृक् ॥६४॥ श्रीशुक उवाच ॥ एवं सौहृदशैथिल्यचित्त आनकदुंदुभिः ॥ रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥६५॥ नंदस्तु सख्युः प्रियकृत्प्रेम्णा गोविंदरामयोः ॥ अद्य श्व इति मासांस्त्रीन्यदुभिर्मानितोऽवसत् ॥६६॥ ततः कामैः पूर्यमाणः सव्रजः सहबांधवः ॥ परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥६७॥ वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ॥ दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥६८॥ नंदो गोपाश्च गोप्यश्च गोविंदचरणांबुजे ॥ मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥६९॥ बंधुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ॥ वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः ॥७०॥ जनेभ्यः कथयांचक्रुर्यदुदेवमहोत्सवम् ॥ यदासीत्तीर्थयात्रायां सुहृत्संदर्शनादिकम् ॥७१॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे तीर्थयात्रानुवर्णनं नाम चतुरशीतितमोऽध्यायः ॥८४॥ ॥ ॥ ॥ ॥

त्रीन् मासान् गोपैः सहावसत् ॥६६॥६७॥ ततो वसुदेवोग्रसेन-कृष्णोद्धव-रामादिभिर्दत्तं पारिबर्हं गृहीत्वा यदुभिः प्रस्थापितः सन् ययौ ॥६८॥ स नंदो गोपा गोप्यश्च कृष्णचरणकमले संलग्नं मनः पुनर्हर्तुमसमर्थाः संतो मथुरां ययुः ॥६९॥ ततो वृष्णयो नंदादिषु गतेषु वर्षाकालं प्राप्तं वीक्ष्य पुनर्द्वारकां ययुः ॥७०॥ तीर्थयात्रायां जातं यज्ञोत्सवं सुहृत्संदर्शनादिकं च द्वारकावासिभ्यो जनेभ्यः कथयांचक्रुः ॥७१॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे चतुरशीतितमोऽध्यायः ॥८४॥ ॥ ॥

१ प्रातर्निर्गमेऽपराह्णे गम्यतामिति । अपराह्णे निर्गमे श्वो गम्यतामिति पुनःपुनरेवं मानितः सन् ।

पंचाशीतितमे रामकृष्णौ संप्रार्थितौ सुतौ ॥ पित्रे ज्ञानमथो मात्रे मृतान् पुत्रानयच्छताम् ॥१॥ श्रीशुक उवाच ॥ एकदा वसुदेवः कृतचरणवंदनौ रामकृष्णौप्रति स्वयमभिवाद्य प्रीत्या प्राह ॥१॥ स पुत्रयोः प्रभावसूचकमृषिवचः श्रुत्वा तत्पराक्रमैरुत्पन्नविश्वासः सन् बभाषे ॥२॥ हे कृष्ण, हे राम, अस्य जगतः कारणयोः प्रकृतिपुरुषयोरपि कारणौ यावीश्वरौ तौ साक्षाद्युवामित्यहं मन्ये ॥३॥ हे ईश, कर्तृकर्मादिसप्तविभक्त्यर्थप्रतिपादितं भोक्तृभोग्यरूपमिदं विश्वं साक्षादीश्वरस्त्वमेवासि ॥४॥ हे अधोक्षज, स्वसृष्टस्यास्य जगतो धारणकर्ता पोषणकर्ता च त्वमेवासि ॥५॥ प्राणेंद्रियादीनां विश्वकारणानां याः शक्तयस्ताः परमकारणस्येश्वरस्य तवैव संति । पारतंत्र्यात् । यथा वेधशक्तिर्न वाणस्य अपि तु पुरुषस्य

श्रीबादरायणिरुवाच ॥ अथैकदाऽऽत्मजौ प्राप्तौ कृतपादाभिवंदनौ ॥ वसुदेवोऽभिनंद्याह प्रीत्या संकर्षणाच्युतौ ॥१॥ मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम् ॥ तद्वीर्यैर्जातविश्रंभः परिभाष्याभ्यभाषत ॥२॥ कृष्ण कृष्ण महायोगिन्संकर्षण सनातन ॥ जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ ॥३॥ यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥ स्यादिदं भगवान्साक्षात्प्रधानपुरुषेश्वरः ॥४॥ एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज ॥ आत्मनाऽनुप्रविश्यात्मन्प्राणो जीवो बिभर्ष्यजः ॥५॥ प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः ॥ पारतंत्र्याद्वैसादृश्याद्द्वयोश्चेष्टैव चेष्टताम् ॥६॥ कांतिस्तेजः प्रभा सत्ता चंद्राग्न्यर्कर्क्षविद्युताम् ॥ यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गंधोऽर्थतो भवान् ॥७॥ तर्पणं प्राणनमपां देवत्वं ताश्च तद्रसः ॥ ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥८॥ दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ॥ नादो वर्णस्त्वमोंकार आकृतीनां पृथक्कृतिः ॥९॥ इंद्रियं त्विंद्रियाणां त्वं देवाश्च तदनुग्रहः ॥ अवबोधो भवान्बुद्धेर्जीवस्यानुस्मृतिः सती ॥१०॥ भूतानामसि भूतादिरिंद्रियाणां च तैजसः ॥ वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥११॥ नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ॥ यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥१२॥ सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ॥ त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥१३॥ तस्मान्न संत्यमी भावा यर्हि त्वयि विकल्पिताः ॥ त्वं चामीषु विकारेषु ह्यन्यदा व्यावहारिकः ॥१४॥ ॥ ॥

तद्वत् ॥६॥ किंच । चंद्रस्य कांतिः अग्नेस्तेजः अर्कस्य प्रभा विद्युल्लतानां स्फुरणं पर्वतानां स्थैर्यं भूमेर्गंधः ॥७॥ अपां रसः वायोर्गतिः एषा सर्वा तवैव शक्तिः ॥८॥ दिशामवकाशो दिशश्च त्वम् । आकाशं तदाश्रया शब्दरूपा परा-पश्यंती-मध्यमा-वैखरीनाम्नी वाणी त्वम् ॥९॥ इंद्रियाणां विषयप्रकाशनशक्तिस्त्वम् । बुद्धेर्निश्चयशक्तिर्जीवस्य पूर्वपरानुसंधानशक्तिश्च त्वमेवासि ॥१०॥ भूतेंद्रियदेवतानां कारणं त्रिविधोऽप्यहंकारस्त्वमसि ॥११॥ यथा नश्वरेषु घटकुंडलादिकार्येषु मृत्सुवर्णादिकारणमनश्वरं तथा नश्वरेषु पदार्थेषु शिष्यमाणोऽनश्वरस्त्वमसि ॥१२॥ हे विभो, एते सत्वादयस्त्रयो गुणास्तद्वृत्तयश्च परे ब्रह्मणि त्वयि मायया कल्पिताः संति ॥१३॥ अतो वस्तुतस्ते त्वयि न संति । त्वमविकल्प एवावशिष्यसे ॥१४॥

एवं तव सूक्ष्मां गतिमज्ञात्वा अज्ञा देहाभिमानेन कृतैः कर्मभिर्जन्ममरणे प्राप्नुवंति ॥१५॥ किंच । यदृच्छया मनुष्यदेहं प्राप्य स्वार्थे प्रमत्तस्य ममायुर्व्यर्थं गतम् ॥१६॥ हे कृष्ण, असौ देहोऽहं ममैते पुत्रादय इत्येवमिदं जगत्त्वं स्नेहपाशैर्बध्नासि ॥१७॥ किंच । युवां मम सुतौ न । किंतु भूभारहरणायावतीर्णौ साक्षात्प्रधानपुरुषौ स्तः ॥१८॥ अतो हे आर्तबंधो, संसारभयनाशकं ते चरणकमलमहं शरणं प्राप्तोऽस्मि । एतावत्कालपर्यंतं जातया विषयासक्त्या अलम् । यया देहेऽहंबुद्धिस्त्वयि परमेश्वरे च पुत्रबुद्धिर्जाता ॥१९॥ किंच । अहं परमेश्वरो नेति वदसि चेत्तर्हि हे भगवन्, पूर्वं सूतिकागृहे युवयोः पुत्रत्वेन प्रति[1]युग्ममज एवाहमवतीर्ण इति भवान्नूनं जगाद । तस्य नानावताराान् दधत आकाशवत्स-

गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः ॥ गतिं सूक्ष्मावबोधेन संसरंतीह कर्मभिः ॥१५॥ यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ॥ स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥१६॥ असावहं ममैवैते देहे चास्यान्वयादिषु ॥ स्नेहपाशैर्निबध्नाति भवान्सर्वमिदं जगत् ॥१७॥ युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ ॥ भूभारक्षत्रक्षपण अवतीर्णौ तथाऽऽत्थ ह ॥१८॥ तत्ते गतोऽस्म्यरणमद्य पदारविंदमापन्नसंसृतिभयापहमार्तबंधो ॥ एतावताऽलमलमिंद्रियलालसेन मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥१९॥ सूतीगृहे ननु जगाद भवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ॥ नानातनूर्गगनवद्विदधज्जहासि को वेद भूम्न उरुगायविभूतिमायाम् ॥२०॥ श्रीशुक उवाच ॥ आकर्ण्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः ॥ प्रत्याह प्रश्रयानम्रः प्रहसन् श्लक्ष्णया गिरा ॥२१॥ श्रीभगवानुवाच ॥ वचो वः समवेतार्थं तातैतदुपमन्महे ॥ यन्नः पुत्रान्समुद्दिश्य तत्वग्राम उदाहृतः ॥२२॥ अहं यूयमसावार्य इमे च द्वारकौकसः ॥ सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम् ॥२३॥ आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ॥ आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥२४॥ खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् ॥ आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि ॥२५॥ ॥ ॥ ॥ ॥

वंगतस्य भगवतो मायां को वेद न कोऽपि ॥२०॥ श्रीशुक उवाच ॥ हे राजन्, श्रीकृष्ण इत्थं पितुर्वाक्यं श्रुत्वा हसन् मधुरया वाण्या तमाह ॥२१॥ श्रीभगवानुवाच । हे तात, नः पुत्रानुद्दिश्य त्वया तत्वसमूहो निरूपितोऽस्ति । एतत्ते वचो यथार्थं वयं मन्यामहे ॥२२॥ हे पितः, अहं कृष्णः असौ रामो यूयमेते यादवाश्च चराचरं जगदपि सर्वेऽपि मत्सदृशा ब्रह्मरूपा एव संतीति भवद्भिर्विचारणीयाः ॥२३॥ यत आत्मैको निर्गुणोऽप्यात्मसृष्टैर्गुणैः कृत्वा तत्कृतेषु देहेषु बहुधा प्रतीयते ॥२४॥ एकोऽप्यात्मा उपाधिसंबंधान्नानात्वं प्राप्नोति ॥२५॥ ॥ ॥ ॥ ॥ ॥ ॥

---

१ यदा युवयोः सुतपाः पृश्निरिति युग्मम् । यदा च कश्यपोऽदितिश्चेति युग्मं अधुना च वसुदेवो देवकीति युग्मम् । एवं प्रतियुग्मम् ।२ एको बहुधा—स्वयंज्योतिर्दृश्यत्वेन नित्योऽनित्यत्वेन निर्गुणः सगुणत्वेनेत्यादि बहुधात्वम् । ३ मनुष्यादिषु ज्ञानस्याविर्भावेन, वृक्षादिषु ज्ञानस्य तिरोभावेन, मशकादिष्वल्पत्वेन हस्त्यादिषु च महात्त्वेनेत्याद्युपाधिसंबंधान्नानात्वम् ।

श्रीशुक उवाच ॥ एवमुक्तो वसुदेवो विनष्टनानाबुद्धिः सन् तूष्णीं बभूव ॥२६॥ अथ देवकी रामकृष्णाभ्यां गुरोः पुत्रमानीतं श्रुत्वा विस्मिता सती कंसेन हिंसितान् स्वपुत्रान् स्मृत्वा अश्रुलोचना भूत्वा कृष्णरामौ संबोध्य दीनवत् प्राह ॥२७॥२८॥ देवक्युवाच ॥ हे राम, हे कृष्ण, युवामीश्वरावित्यहं जाने ॥२९॥ युवां भूमेर्भारायमाणानां राज्ञां नाशार्थं मध्यवतीर्णौ स्तः ॥३०॥ हे विश्वात्मन्, यस्य मायिकांशैर्ब्रह्मादिभिः विश्वस्योत्पत्तिस्थितिलया भवंति तं त्वामहं शरणं गताऽस्मि ॥३१॥ किंच । गुरुणा मृतपुत्रानयने प्रेरितौ युवां यमसदनात्तत्सुतमानीतवंतौ ॥३२॥ तथा मे मनोरथं पूर्णं कुरुतम् । अहं कंसहतान् पुत्रान् द्रष्टुमिच्छामि ॥३३॥ श्रीशुक उवाच ॥ एवं मात्रा प्रेरितौ रामकृष्णौ योग-

श्रीशुक उवाच ॥ एवं भगवता राजन्वसुदेव उदाहृतः ॥ श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत् ॥२६॥ अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता ॥ श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥२७॥ कृष्णरामौ समाश्राव्य पुत्रान्कंसविहिंसितान् ॥ स्मरंती कृपणं प्राह वैक्ल-व्यादश्रुलोचना ॥२८॥ देवक्युवाच ॥ राम रामाप्रमेयात्मन्कृष्ण योगेश्वरेश्वर ॥ वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥२९॥ कालविध्वस्त-सत्वानां राज्ञामुच्छास्त्रवर्तिनाम् ॥ भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥३०॥ यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ॥ भवंति किल विश्वात्मंस्तं त्वाद्याहं गतिं गता ॥३१॥ चिरान्मृतसुतादाने गुरुणा किल चोदितौ ॥ आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम् ॥३२॥ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ॥ भोजराजहतान्पुत्रान्कामये द्रष्टुमाहृतान् ॥३३॥ श्रीशुक उवाच ॥ एवं संचोदितौ मात्रा रामः कृष्णश्च भारत ॥ सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥३४॥ तस्मिन्प्रविष्टावुपलभ्य दैत्यराड्विश्वात्मदैवं सुतरां तथाऽऽत्मनः ॥ तद्दर्शनाह्ला-दपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥३५॥ तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ॥ दधार पादावव-निज्य तज्जलं सवृंद आब्रह्म पुनद्यदंबु ह ॥३६॥ समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ॥ तांबूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥३७॥ स इंद्रसेनो भगवत्पदांबुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया ॥ उवाच हानंदजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥३८॥ बलिरुवाच ॥ नमोऽनंताय बृहते नमः कृष्णाय वेधसे ॥ सांख्ययोगवितानाय ब्रह्मणे परमात्मने ॥३९॥ दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ॥ रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया ॥४०॥ ॥ ॥ ॥

मायया सुतलं गत्वा बलेर्गृहं विविशतुः ॥३४॥ तदा बलिस्तौ प्राप्तौ दृष्ट्वा सद्य उत्थायानंदेन परिवारसहितो ननाम ॥३५॥ ततस्तयोर्वरासनं दत्वा तत्र स्थितयोस्तयोः पादौ प्रक्षाल्य तज्जलं सकुटुंबः शिरसा दधार ॥३६॥ ततस्तौप्रति वस्त्राभरणानुलेपन-तांबूलामृतभक्षणादिभिः कुल-वित्त-देहार्पणेन च पूजयामास ॥३७॥ स बलिः प्रेम्णा द्रवयुक्तया बुद्ध्या भग-वच्चरणकमलं वारंवारं धारयन् हृष्टरोमा भूत्वा गद्गदाक्षरं जगाद ॥३८॥ बलिरुवाच ॥ हे देव, अनंताय कृष्णाय ब्रह्मणे परमात्मने तुभ्यं नमोऽस्तु ॥३९॥ योगेश्वराणामपि दुर्दर्शौ युवां

रजस्तमःस्वभावानां नो दर्शनं प्राप्तौ । एतन्महद्भाग्यम् ॥४०॥ दैत्य-दानव-गंधर्व-सिद्ध-विद्याधर-चारण-यक्ष-रक्षः-पिशाचाः ॥४१॥ वयमन्ये च सत्वरूपे त्वयि नित्यं बद्धवैराः स्मः ॥४२॥ यथा केचन वैरेण केचन भक्त्या केचन कामतस्त्वां प्राप्तास्तथा सत्वगुणात्मका देवादयोऽपि त्वां न प्राप्ताः ॥४३॥ हे योगेश्वर, योगेश्वरा अपि तव योगमायां न जानंति । वयं तु कुतो जानीमः ॥४४॥ अतः हे ईश, अहं गृहांधकूपान्निर्गत्य वने वृक्षेभ्यो गलितानि फलादीनि भक्षयित्वा त्वां ध्यायन् त्वद्भक्तैः सह यथा चरामि तथा मदुपरि कृपां कुरु ॥४५॥ हे प्रभो, अस्मान् किंचिदाज्ञाप्य निष्पापान् कुरु । यस्य तवाज्ञां गृह्णन् पुमान् कर्मबंधान्मुच्यते ॥४६॥ श्रीभगवानुवाच ॥ हे बले, पूर्वं स्वायंभुवमन्वंतरे मरीचेः प्रजापतेः सकाशादूर्णायां भार्यायां जाताः षट् पुत्रा आसन् । ते स्वकन्यांप्रति मैथुनायोद्युक्तं ब्रह्माणं जहसुः ॥४७॥ ततस्ते ब्रह्मशापेन तत्क्षणादेवासुरीं योनिं प्राप्ताः संतो

दैत्यदानवगंधर्वाः सिद्धविद्याध्रचारणाः ॥ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥४१॥ विशुद्धसत्वधाम्यद्धा त्वयि शास्त्रशरीरिणि ॥ नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशः ॥४२॥ केचनोद्बद्धवैरेण भक्त्या केचन कामतः ॥ न तथा सत्वसंरब्धाः संनिकृष्टाः सुरादयः ॥४३॥ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ॥ न विदंत्यपि योगेशा योगमायां कुतो वयम् ॥४४॥ तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविंदधिषणान्यगृहांधकूपात् ॥ निष्क्रम्य विश्वशरणांघ्र्युपलब्धवृत्तिः शांतो यथैक उत सर्वसखैश्चरामि ॥४५॥ शाध्यस्मानीशितव्येश निष्पापान्कुरु नः प्रभो ॥ पुमान्यच्छ्रद्धयाऽऽतिष्ठंश्चोदनाया विमुच्यते ॥४६॥ श्रीभगवानुवाच ॥ आसन्मरीचेः षट् पुत्रा ऊर्णायां प्रथमेऽन्तरे ॥ देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥४७॥ तेनासुरीमगन्योनिमधुनाऽवद्यकर्मणा ॥ हिरण्यकशिपोर्जाता नीतास्ते योगमायया ॥४८॥ देवक्या उदरे जाता राजन्कंसविहिंसिताः ॥ सा तान् शोचत्यात्मजान्स्वांस्त इमेऽध्यासतेंऽतिके ॥४९॥ इत एतान्प्रणेष्यामो मातृशोकापनुत्तये ॥ ततः शापाद्विनिर्मुक्ता लोकं यास्यंति विज्वराः ॥५०॥ स्मरोद्गीथः परिष्वंगः पतंगः क्षुद्रभृद्घृणी ॥ षडिमे मत्प्रसादेन पुनर्यास्यंति सद्गतिम् ॥५१॥ इत्युक्त्वा तान्समादाय इंद्रसेनेन पूजितौ ॥ पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥५२॥ तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्यांकमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥५३॥ अपाययत्स्तनं प्रीता सुतस्पर्शपरिस्नुता ॥ मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥५४॥

हिरण्यकशिपोः सकाशाज्जाताः ॥४८॥ ते च योगमायया ततो नीताः संतो देवक्या उदरे जाताः । ते च कंसेन हताः । सा च देवकी तानात्मजान् मत्वा शोचति । ते चेमे तव समीप आसते ॥४९॥ अत इत एतान् मातृशोकदूरीकरणार्थं वयं नेष्यामः । तत एते शापान्मुक्ताः संतो देवलोकं गमिष्यंति ॥५०॥ ते च–स्मरः उद्गीथः परिष्वंगः पतंगः क्षुद्रभृत् घृणी चेतीमे षट् मद्भ्रातरो मत्प्रसादेन पुनः सद्गतिं यास्यंति ॥५१॥ इत्युक्त्वा तान् गृहीत्वा रामकृष्णौ पुनर्द्वारकामेत्य मात्रे तान् पुत्रान् समर्पयामासतुः ॥५२॥ तदा देवकी तान् बालकान् दृष्ट्वा स्नेहेन स्रवत्स्तनी भूत्वा ॥५३॥ प्रीत्या तानालिंग्यांकमारोप्य च स्तनं पाययामास ॥५४॥ ॥ ॥ ॥

ते च कृष्णस्य पीतावशेषममृतमयं दुग्धं पीत्वा नारायणांगस्पर्शेन देवा वयमिति प्राप्तज्ञानाः संतो ॥५५॥ गोविंदं देवकीं वसुदेवं रामं च नमस्कृत्य सर्वभूतानां पश्यतां सतां देवलोकं ययुः ॥५६॥ तेषां मृतानामागमनं निर्गमं च दृष्ट्वा देवकी श्रीकृष्णस्य तां पुत्रादिरूपेण रचितां मायां मेने ॥५७॥ हे राजन्, एवंविधानि श्रीकृष्णस्यानंतानि चरित्राणि संति ॥५८॥ सूत उवाच ॥ इदं श्रीशुकेन वर्णितं कृष्णस्य चरितं यः शृणोति श्रावयेद्वा स भगवति प्रवेशितचित्तः सन् तस्य निर्भयं लोकं याति ॥५९॥ इति श्रीम० भू० दश० उत्त० पंचाशीतितमोऽध्यायः ॥८५॥ षडशीतितमे दंभात्सुभद्रामर्जुनोऽहरत् । गत्वा च मिथिलां कृष्णो नृपविप्रावनंदयत ॥१॥ राजोवाच ॥ हे ब्रह्मन्, अर्जुनो

पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः ॥ नारायणांगसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥५५॥ ते नमस्कृत्य गोविंदं देवकीं पितरं बलम् ॥ मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम् ॥५६॥ तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम् ॥ मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥५७॥ एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ॥ वीर्याण्यनंतवीर्यस्य संत्यनंतानि भारत ॥५८॥ सूत उवाच ॥ य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ॥ जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥५९॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे मृताग्रजानयनं नाम पंचाशीतितमोऽध्यायः ॥८५॥ राजोवाच ॥ ब्रह्मन्वेदितुमिच्छामः स्वसारं रामकृष्णयोः ॥ यथोपयेमे विजयो या ममासीत्पितामही ॥१॥ श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ॥ गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥२॥ दुर्योधनाय रामस्तां दास्यतीति न चापरे ॥ तल्लिप्सुः स यतिर्भूत्वा त्रिदंडी द्वारकामगात् ॥३॥ तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः ॥ पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च सः ॥४॥ एकदा गृहमानीय आतिथ्येन निमंत्र्य तम् ॥ श्रद्धयोपहृतं भैक्ष्यं बलेन बुभुजे किल ॥५॥ सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ॥ प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥६॥ सापि तं चकमे वीक्ष्य नारीणां हृदयंगमम् ॥ हसंती व्रीडितापांगी तन्न्यस्तहृदयेक्षणा ॥७॥ ॥ ॥ ॥

रामकृष्णयोर्भगिनीं सुभद्रां यथोपयेमे तद्वयं ज्ञातुमिच्छामः ॥१॥ श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पृथ्वीं पर्यटन् प्रभासं गतः । तत्र रामः सुभद्रां दुर्योधनाय दास्यत्यपरे वसुदेवादयश्च न दास्यंतीति शुश्राव । तां सुभद्रां हर्तुमिच्छुरर्जुनो रामवंचनाय पूज्यतमं त्रिदंडिवेषं धृत्वा द्वारकां जगाम ॥२॥३॥ तत्र स्वार्थसाधकः सोऽर्जुनो वृष्टिकालीनान् चतुरो मासानुवास । तत एकदाऽजानता रामेणातिथ्येन निमंत्र्य गृहमानीतः सोऽर्जुनः श्रद्धया परिविष्टं अन्नं बुभुजे ॥४॥५॥ तदा तत्र महतीं वीरमनोहरां कन्यां वीक्ष्य तस्यां रत्यभिप्रायेण क्षुभितं मनो दधे ॥६॥ साऽपि स्त्रीणां मोहकं तं वीक्ष्य हसंती लज्जया च पश्यंती सती तमिच्छितवती ॥७॥ ॥ ॥ ॥

१ अनेन सूतिकागृहे यदा श्रीकृष्णः प्राकृतो बालको जातस्तदा तेन देवक्याः स्तनपानं कृतमिति सूचितं भवति ।

ततोऽर्जुनस्तां हर्तुमवसरं प्रेप्सुः कामेन भ्रमच्चित्तः सन् सुखं न लेभे ॥८॥ तत एकदा देवयात्रानिमित्तेन नगराद्बहिर्निर्गतां रथस्थां तामर्जुनो वसुदेवदेवक्योः कृष्णस्य चानुमतेन ॥९॥ रथस्थः सन् धनुरादायासमंताद्वेष्टनं कुर्वतो भटान् विद्राव्य स्वभागं सिंह इव जहार ॥१०॥ तच्छ्रुत्वा रामः पूर्णिमायां समुद्र इव क्षोभं प्राप । तदा कृष्णेन चरणौ गृहीत्वा शांतिं प्रापितः ॥११॥ ततः स रामो वरवध्वोर्महाधनोपस्कर-हस्ति-रथाश्व-नर-योषितः पारिबर्हाणि प्राहिणोत् ॥१२॥ ( तदा यादवाः पांडवाश्च प्रीतियुक्ता अभवन् । अथान्यदपि श्रीकृष्णस्य भक्तवात्सल्यं श्रृणु ॥१॥ ) श्रीशुक उवाच ॥ हे राजन्, श्रीकृष्णस्य सखा शांतो विषयेष्वलंपटः श्रुतदेव इति विप्र आसीत् ॥१३॥ स गृहस्थाश्रमी यदृच्छाला-

तां परं समनुध्यायन्नंतरं प्रेप्सुरर्जुनः ॥ न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥८॥ महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् ॥ जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥९॥ रथस्थो धनुरादाय शूरांश्चारुंधतो भटान् ॥ विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥१०॥ तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ॥ गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥११॥ प्राहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बलः ॥ महाधनोपस्करेभरथाश्वनरयोषितः ॥१२॥ ( अभवन् प्रीतिसंहृष्टा बांधवा यदुपांडवाः ॥ अथान्यदपि कृष्णस्य वात्सल्यं भक्तयोः श्रृणु ॥१॥ ) श्रीशुक उवाच ॥ कृष्णस्यासीद्द्विजश्रेष्ठः श्रुतदेव इति श्रुतः ॥ कृष्णैकभक्त्या पूर्णार्थः शांतः कविरलंपटः ॥१३॥ स उवास विदेहेषु मिथिलायां गृहाश्रमी ॥ अनीहया गताहार्यनिर्वर्तितनिजक्रियः ॥१४॥ यात्रामात्रं त्वहरहर्दैवादुपनमत्युत ॥ नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥१५॥ तथा तद्राष्ट्रपालोंग बहुलाश्व इति श्रुतः ॥ मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥१६॥ तयोः प्रसन्नो भगवान्दारुकेणाहृतं रथम् ॥ आरुह्य साकं मुनिभिर्विदेहान्प्रययौ प्रभुः ॥१७॥ नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ॥ अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥१८॥ तत्र तत्र तमायांतं पौरा जानपदा नृप ॥ उपतस्थुः सार्घहस्ता ग्रहैः सूर्यमिवोदितम् ॥१९॥ आनर्तधन्वकुरुजांगलकंकमत्स्यपांचालकुंतिमधुकेकयकोसलार्णाः ॥ अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥२०॥ ॥

भसंतुष्टः सन् मिथिलानगर्यामुवास । स शरीरादिनिर्वाहमात्रं भोज्यं स्वीकृत्य तेन तुष्टः सन् नित्यनैमित्तिकानि कर्माणि चकार ॥१४॥१५॥ तथा तद्देशपालको बहुलाश्व इति-नाम्ना विख्यातो राजा आसीत् । एतावुभावपि श्रीकृष्णभक्तौ ॥१६॥ अतस्तयोः प्रसन्नो भगवान् रथमारुह्य ऋषिभिः सह विदेहान् देशान् प्रययौ ॥१७॥ तेच ऋषयः—नारदः वामदेवः अत्रिः व्यासः परशुरामः अहं ( शुकः ) असितः अरुणिः बृहस्पतिः कण्वः मैत्रेयः च्यवनादयश्च ॥१८॥ एवमादिभिर्मुनिभिः सह प्राप्तं श्रीकृष्णं श्रुत्वा तत्र तत्र देशेषु पुरवासिनो देशवासिनश्च जनाः पूजासाहित्यं गृहीत्वा समीपमाजग्मुः ॥१९॥ तदा आनर्त-कुरु-जांगल-कंक-मत्स्य-पांचालादिदेशवर्तिनो नरा नार्यश्च दृष्टिभिस्तन्मुखकमलं पपुः ॥२०॥

१ रामादिकृतसम्मानजनितम् ।

स कृष्णोऽपि तेभ्योऽभयं तत्त्वज्ञानं च कृपादृष्ट्यैव यच्छन् तैर्गीतं स्वयशः शृण्वन् शनैर्विदेहान् ययौ ॥२१॥ तदा मिथिलानगरवासिनो जनाः प्राप्तं श्रीकृष्णं श्रुत्वा पूजासाहित्यं गृहीत्वा संमुखं जग्मुः ॥२२॥ ते चोत्तमश्लोकं कृष्णमृषींश्च दृष्ट्वा शिरोभिः प्रणेमुः ॥२३॥ तदा मैथिलश्रुतदेवौ स्वानुग्रहाय प्राप्तं कृष्णं मत्वा तस्य पादयोः पेततुः ॥२४॥ ततो मैथिलः श्रुतदेवश्च युगपन्मुनिभिः सह कृष्णमातिथ्येन न्यमंत्रयेताम् ॥२५॥ भगवान् तदंगीकृत्य द्वयोः प्रियचिकीर्षया ब्राह्मणैः सह द्वे रूपे धृत्वोभाभ्यामलक्षितः सन्नुभयोर्गृहं प्राविशत् ॥२६॥ ततो जनको गृहमागतान् सहकृष्णान् दत्तेष्वासनेषूपविष्टान् मुनीन्नत्वा तदंघ्रीन् प्रक्षाल्य तज्जलम् ॥२७॥२८॥ सकुटुंबो मूर्ध्ना धायरन् गंध-माल्य-भूषण-धूप-

तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ॥ शृण्वन्दिगंतधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥२१॥ तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप ॥ अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥२२॥ दृष्ट्वा त उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ॥ कैर्धृतांजलिभिर्नेमुः श्रुतपूर्वास्तथा मुनीन् ॥२३॥ स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुम् ॥ मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥२४॥ न्यमंत्रयेतां दाशार्हमातिथ्येन सह द्विजैः ॥ मैथिलः श्रुतदेवश्च युगपत्संहतांजली ॥२५॥ भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया ॥ उभयोराविशद्गेहमुभाभ्यां तदलक्षितः ॥२६॥ श्रोतुमप्यसतां दूरान्जनकः स्वगृहागतान् ॥ आनीतेष्वासनाग्र्येषु सुखासीनान्महामनाः ॥२७॥ प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः ॥ नत्वा तदंघ्रीन्प्रक्षाल्य तदपो लोकपावनीः ॥२८॥ सकुटुंबोऽवहन्मूर्ध्ना पूजयांचक्र ईश्वरान् ॥ गंधमाल्यांबराकल्पधूपदीपार्घगोवृषैः ॥२९॥ वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ॥ पादावंकगतौ विष्णोः संस्पृशन् शनकैर्मुदा ॥३०॥ राजोवाच ॥ भवान्हि सर्वभूतानामात्मा साक्षी स्वदृग्विभो ॥ अथ नस्त्वत्पदांभोजं स्मरतां दर्शनं गतः ॥३१॥ स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् ॥ यदात्थैकांतभक्तान्मे नानंतः श्रीरजः प्रियः ॥३२॥ को नु त्वच्चरणांभोजमेवंविद्विसृजेत्पुमान् ॥ निष्किंचनानां शांतानां मुनीनां यस्त्वमात्मदः ॥३३॥ योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ॥ यशो वितेने तच्छांत्यै त्रैलोक्यवृजिनापहम् ॥३४॥ नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे ॥ नारायणाय ऋषये सुशांतं तप ईयुषे ॥३५॥ दिनानि कतिचिद्भूमन्गृहान्नो निवस द्विजैः ॥ समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥३६॥

दीपादिभिस्तान् पूजयांचक्रे ॥२९॥ ततो विष्णोः पादावंकगतौ कृत्वा शनैः संमर्दयन् मधुरवाण्या तं प्रसन्नं कुर्वन्नुवाच ॥३०॥ राजोवाच । हे विभो, भवान् सर्वजीवानामात्मा प्रकाशकश्चास्ति । अतएव एकांतभक्तान्मेऽनंतो बंधुरपि लक्ष्मीर्भार्यापि ब्रह्मा पुत्रोऽपि प्रियो नास्तीति स्ववचनं सत्यं कर्तुं त्वं स्वचरणकमलं स्मरतां नो दर्शनं प्राप्तोऽसि ॥३१॥ ॥३२॥ अत एवंवेत्ता को नु पुमान् त्वच्चरणकमलं विसृजेत् न कोऽपि ॥ यतस्त्वं शांतानां मुनीनामात्मस्वरूपप्रदोऽसि ॥३३॥ यो भवान् यदुकुलेऽवतीर्य संसारोपशमाय यशो वितेने ॥३४॥ तस्मै कृष्णाय शांताय नारायणाय तुभ्यं नमः ॥३५॥ किंच । हे भूमन्, मुनिभिः सह कतिचिद्दिनानि नो गृहान् स्थित्वा पादरजसेदं निमेः कुलं पुनीहि ॥३६॥

इति राज्ञा प्रार्थितो भगवान् मिथिलापुरवासिनां कल्याणं कुर्वन्नुवास ॥३७॥ तथा श्रुतदेवोऽपि स्वगृहे मुनिभिः सह प्राप्तं श्रीकृष्णं नत्वा हर्षितः सन् वस्त्रं परिभ्रमयन् ननर्त ॥३८॥ ततस्तान् दर्भपीठाद्यासनेषूपवेश्य तदंघ्रीन् प्रक्षाल्य ॥३९॥ तदंभसा गृह-कुटुंबसहितमात्मानं स्नापयांचक्रे ॥४०॥ तत आमलकादिफलैः कंदमूलैरुशीरवासितजलैः कस्तूरीमृत्तिकया तुलसीभिः कमलैश्च सर्वान् संपूज्य सत्ववर्धकेनान्नेन भोजयामास ॥४१॥ ततः स विप्रो गृहांधकूपे पतितस्य मम मुनिभिः कृष्णेन च सह संगमः कुतो जात इति तर्कयामास ॥४२॥ ततस्तेषां समीपे स्त्रीपुत्रस्वजनैः सह स्थितः श्रुतदेवः श्रीकृष्णचरणौ संमर्दयन् जगाद ॥४३॥ श्रुतदेव उवाच ॥ हे भगवन्, त्वमस्मान्प्रत्यद्यैव प्राप्त इति न।

इत्युपामंत्रितो राज्ञा भगवाँल्लोकभावनः ॥ उवास कुर्वन्कल्याणं मिथिलानरयोषिताम् ॥३७॥ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहान्जनको यथा ॥ नत्वा मुनीन्सुसंहृष्टो धुन्वन्वासो ननर्त ह ॥३८॥ तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः ॥ स्वागतेनाभिनंद्यांघ्रीन्सभार्योऽवनिजे मुदा ॥३९॥ तदंभसा महाभाग आत्मानं सगृहान्वयम् ॥ स्नापयांचक्र उद्धर्षो लब्धसर्वमनोरथः ॥४०॥ फलार्हणोशीरशिवामृतांबुभिर्मृदा सुरभ्या तुलसीकुशांबुजैः ॥ आराधयामास यथोपपन्नया सपर्यया सत्वविवर्धनांधसा ॥४१॥ स तर्कयामास कुतो ममान्वभूद्गृहांधकूपे पतितस्य संगमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥४२॥ सूपविष्टान्कृतातिथ्यान् श्रुतदेव उपस्थितः ॥ सभार्यः स्वजनापत्य उवाचांघ्र्यभिमर्शनः ॥४३॥ श्रुतदेव उवाच ॥ नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥४४॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥४५॥ शृण्वतां गदतां शश्वदर्चतां त्वाऽभिवंदताम् ॥ नृणां संवदतामंतर्हृदि भास्यमलात्मनाम् ॥४६॥ हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योऽप्यंत्युपेतगुणात्मनाम् ॥४७॥ नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ॥ सकारणाकारणलिंगमीयुषे स्वमाययाऽसंवृतरुद्धदृष्टये ॥४८॥ स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ॥ एतदंतो नृणां क्लेशो यद्भवानक्षगोचरः ॥४९॥ श्रीशुक उवाच ॥ तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥५०॥ ॥ ॥ ॥ ॥

किंतु यदा शक्तिभिरिदं जगत् सृष्ट्वा तस्मिन् स्वसत्तया प्रविष्टस्तदैव प्राप्तोऽसि। त्वद्दर्शनं तु केवलमद्यैव प्राप्तम् ॥४४॥ त्वं मायया लोकं सृष्ट्वा तस्मिन् प्रविश्य नानात्वेनावभासे ॥४५॥ किंच। नित्यं श्रवण-कीर्तन-पूजन-वंदनादिकं कुर्वतां नृणां हृदि त्वं भासि। मम तु नेत्रगोचरो जात इति महद्भाग्यम् ॥४६॥ त्वं हृदिस्थोऽपि कर्मविक्षिप्तचेतसामतिदूरस्थोऽसि। श्रवण-कीर्तनादिपराणां तु समीपे तिष्ठसि ॥४७॥ अतो निवृत्तदेहाभिमानिनां मोक्षदात्रेऽज्ञानिनां संसारदात्रे तुभ्यं नमोऽस्तु ॥४८॥ एवंभूतस्त्वं स्वभृत्यान्नः शिक्षय ॥४९॥ श्रीशुक उवाच ॥ हे राजन्, भगवानेवं तदुक्तं श्रुत्वा स्वहस्तेन तस्य हस्तं गृहीत्वा प्रहस्य तमाह ॥५०॥ ॥ ॥ ॥

श्रीभगवानुवाच ॥ हे ब्रह्मन्, तवानुग्रहाय प्राप्तानमून् मुनीन् विद्धि ॥५१॥ हे विप्र, देव-क्षेत्र-तीर्थानि दर्शन-स्पर्शन-पूजनैः कालेन पुनंति । एते तु दर्शनात्सद्यः पुनंति ॥५२॥ ब्राह्मणो जन्मनैव श्रेष्ठोऽस्ति तत्रापि तपो-विद्या-संतोषयुक्तो मदुपासनायुक्तश्च श्रेष्ठ इति किमु वक्तव्यम् ॥५३॥ हे द्विज, ममैतच्चतुर्भुजं रूपं ब्राह्मणात्प्रियं नास्ति । यतः सर्ववेदमयो विप्रः अहं च सर्वदेवमयः ॥५४॥ दुष्टबुद्धय एवमविदित्वा विप्ररूपं मामवजानंति ॥५५॥ विप्रः सर्वत्र मद्दृष्ट्या जगतः कारणभूता ये महदादयस्तान् सर्वान् मद्रूपानिति जानाति ॥५६॥ तस्मादेतान् ब्रह्मर्षीन् मच्छ्रद्धया पूजय । तेनाहमर्चितोऽस्मि ॥५७॥ श्रीशुक उवाच ॥ इत्थं प्रभुणाऽऽज्ञापितः श्रुतदेवः सकृष्णान् मुनीनैकात्म्यभावेनाराध्य एवं बहुला-

श्रीभगवानुवाच ॥ ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरंति मया लोकान्पुनंतः पादरेणुभिः ॥५१॥ देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ॥ शनैः पुनंति कालेन तदप्यर्हत्तमेक्षया ॥५२॥ ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ॥ तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥५३॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥५४॥ दुष्प्रज्ञा अविदित्वैवम-वजानंत्यसूयवः ॥ गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥५५॥ चराचरमिदं विश्वं भावा ये चास्य हेतवः ॥ मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया ॥५६॥ तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयाऽर्चय ॥ एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥५७॥ श्रीशुक उवाच ॥ स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान्द्विजोत्तमान् ॥ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥५८॥ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥५९॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे श्रुतदेवानुग्रहो नाम षडशीतितमो ऽध्यायः ॥८६॥ परीक्षिदुवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ॥ कथं चरंति श्रुतयः साक्षात्सदसतः परे ॥१॥ श्रीशुक उवाच ॥ बुद्धींद्रियमनःप्राणान्जनानामसृजत्प्रभुः ॥ मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥२॥ ॥ ॥

श्वोऽप्याराध्योभौ सद्गतिमापतुः ॥५८॥ हे राजन्, भगवानेवं स्वभक्तयोः सन्मार्गमुपदिश्य पुनर्द्वारकां जगाम ॥५९॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे षडशीतितमोऽध्यायः ॥८६॥ सप्ताशीतितमे नारायणनारदवादतः । वेदैः स्तुतिर्गुणालंबा निर्गुणावधि वर्ण्यते ॥१॥ तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानो राजा पृच्छति ॥ राजोवाच ॥ हे ब्रह्मन्, अनिर्देश्ये निर्गुणे कार्यकारणातीतेऽसंगे ब्रह्मणि सगुणवस्तुप्रतिपादकाः श्रुतयः साक्षात्कथं प्रवर्तंते ॥१॥ श्रीशुक उवाच ॥ हे राजन्, नित्यमुक्तः प्रभुर्जीवानामर्थ-धर्मकाममोक्षार्थं बुद्धींद्रियमनःप्राणान् ससर्ज । अस्यायमभिप्रायः । सर्वश्रुतयः सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियंतारं सर्वोपास्यं सर्वकर्मफलप्रदातारं

१ स्वस्मिन्नादरमत्यधिकं ब्राह्मणेषु च मंदमिवालक्ष्य लोकसंग्रहपरो भगवान्मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्वित्येवं तमुपदिशति । २ त्रिकांडविषयाणां वेदानां ब्रह्मपरत्वम् । ३ ईश्वरेण बुद्ध्यादीनां सर्जनाभावे जीवानां साधनाभावात् चतुर्विधपुरुषार्थसिद्धिः स्यादिति भावः ।

सच्चिदानंदं भगवंतं तेनोत्पादिता सृष्टिं जीवानां चतुर्विधपुरुषार्थसिद्धिं च वर्णयित्वा परंपरादिसंबंधेन ब्रह्मपरतां प्राप्नुवंति । तत्र काश्चिच्छ्रुतय ईश्वरस्य ब्रह्मतां वर्णयित्वा तेन सह संसारिणो जीवस्याभेदं निरूप्य तात्पर्यवृत्त्या ब्रह्मणि पर्यवसानं गच्छंति । काश्चिदुपाधिनिषेधद्वारा तत्पदार्थशोधनेन काश्चित्प्रणवाद्युपासनकथनद्वारा ज्ञानसाधनविधानेन । काश्चिच्च विधेय-निषेध्य-विशेषण-कथनादिद्वारा तात्पर्यवृत्त्या स्वरूपकथनेन च ब्रह्मपरतां प्राप्नुवंति ॥२॥ अत्र चानादिशिष्टपरंपरागतत्वान्न संदेहो युक्त इत्याह । एवं पूर्वोक्तप्रकारेण सर्वाऽप्युपनिषद्ब्रह्मपराऽस्ति । य एतां श्रद्धया धारयेत् स परं पदं प्राप्नुयात् ॥३॥ हे राजन्, अत्रार्थे तव नारायणनारदसंवादरूपमितिहासं वर्णयिष्यामि ॥४॥ एकदा नारदो लोकान् पर्यटन् नारायणमृषिं द्रष्टुं बदरिकाश्रमं ययौ ॥५॥ योऽस्मिन् भारतखंडे नृणां कल्याणार्थं कल्पपर्यंतं तप आस्थितः ॥६॥ नारदस्तत्र गत्वा कलापग्रामवासिभिर्ऋषिभिः

सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ॥ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिंचनः ॥३॥ अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ॥ नारदस्य च संवादमृषेर्नारायणस्य च ॥४॥ एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः ॥ सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥५॥ यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम् ॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥६॥ तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥७॥ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ॥ यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥८॥ श्रीभगवानुवाच ॥ स्वायंभुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ॥ तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥९॥ श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ॥ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ तत्र हायमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥१०॥ तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥११॥ सनंदन उवाच ॥ स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ॥ तदंते बोधयांचक्रुस्तल्लिंगैः श्रुतयः परम् ॥१२॥ यथा शयानं सम्राजं वंदिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयंत्यनुजीविनः ॥१३॥ ॥ ॥ ॥

परिवेष्टितं तं नारायणं प्रणम्येदमेव पप्रच्छ ॥७॥ तदा नारायण ऋषीणां शृण्वतां सतां यः पूर्वं सनकादीनां जनलोके ब्रह्मवादो जातस्तं नारदाय जगाद ॥८॥ श्रीनारायण उवाच ॥ हे नारद, पुरा जनलोके तत्रस्थानां सनकादीनां ब्रह्मविचारो बभूव ॥९॥ तदा श्वेतद्वीपाधिपतिमनिरुद्धं द्रष्टुं त्वयि श्वेतद्वीपं गते सति स ब्रह्मवादः प्रवृत्तः । तत्र मां त्वं यं पृच्छसि अयं प्रश्नोऽभूत् ॥१०॥ तत्र सर्वे सनकाद्याः शास्त्राध्ययन-तपश्चर्या-स्वभावैः समाना अपि एकं वक्तारं कृत्वाऽन्ये त्रयः पप्रच्छुः ॥११॥ सनंदन उवाच ॥ हे ऋषयः, इदं स्वसृष्टं जगत् प्रलये संहृत्य शक्तिभिः सह शयानमीश्वरं पुनः सृष्ट्यारंभे प्रथमं तन्निःश्वासभूताः श्रुतयस्तत्प्रतिपादकवाक्यैस्तमीश्वरं बोधयामासुः ॥१२॥ यथा शयानं राजानमुषसि वंदि-

१ सत्यं ज्ञानमनंतं ब्रह्मेत्याद्याः । २ तत्त्वमसीत्याद्याः । ३ अस्थूलमनणु इत्याद्याः । ४ स्वयंप्रकाशः कूटस्थः साक्षी एक इत्यादिकथनेन । ५ अखंडः असंगः अद्वितीयः निर्विकारः अव्ययः अक्षर इत्यादिकथनेन । ६ वैतंडिकतर्काऽनभिनिवेशेन । ७ प्रश्नोत्तरैर्निर्णयरूपः संवादः ।

नस्तत्पराक्रमवर्णनेन बोधयंति तद्वत् ॥१३॥ श्रुतय ऊचुः ॥ हे अजित, त्वमुत्कर्षं प्रकटय । केन व्यापारेणेति चेत्तर्हि सर्वजीवानामानंदाद्यावरणाय गृहीतगुणां मायां नाश यतस्त्वं प्राप्तसमस्तैश्वर्योऽसि । त्वमेव जीवानामंतर्यामी सर्वशक्त्युद्बोधको मायाहंतेत्यत्राहं वेद एव प्रमाणमस्मि । सृष्टिकाले मायया सह क्रीडां कुर्वंतं त्वां वेदाः प्रतिपादयंति ॥१४॥ हे ईश, इंद्राग्न्यादिदेवतासहितमेतत्सर्वं जगत्त्वमेवासीति विद्वांसो जानंति । यतोऽविकारिणस्त्वत्तो विकारिणोऽस्य जगत उत्पत्तिलयौ भवतः । यथा घटादेरुत्पत्तिलयौ मृत्तिकाया भवतस्तद्वत् । अतो ऋषयो मनोवचनोचरितं त्वय्येव धृतवंतो न पृथक् । अत्र दृष्टांतः । यथा नृणां यत्रकुत्रापि क्षिप्तानि पदानि भुवि अदत्तानि न भवंति तद्वत् ॥१५॥ हे मायानियंतः, विवेकिनः सर्वजन–पापनाशकं तव कीर्तिसुधा–समुद्रं प्रविश्य पापानि जहुः । यदा त्वत्कथामात्रेण पापत्यागस्तदा ये त्वत्स्वरूपमनुभवंति तेषां सर्वसंतापनिवृत्तिर्भ-

श्रुतय ऊचुः ॥ जय जय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः ॥ अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽत्मना च चरतोऽनुचरेन्निगमः ॥१४॥ बृहदुपलब्धमेतदवयंत्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात् ॥ अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथा भवंति भुवि दत्तपदानि नृणाम् ॥१५॥ इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ॥ किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजंति ये पदमजस्रसुखानुभवम् ॥१६॥ दृतय इव श्वसंत्यसुभृतो यदि तेऽनुविधा महदहमादयोंडमसृजन्यदनुग्रहतः ॥ पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥१७॥ उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम् ॥ तत उदगादनंत तव धाम शिरः परमं पुनरिह यत्समेत्य न पतंति कृतांतमुखे ॥१८॥ स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्यलनवत्स्वकृतानुकृतिः ॥ अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोऽन्वयंत्यभिविपण्यव एकरसम् ॥१९॥ ॥ ॥ ॥ ॥

वतीति किमु वक्तव्यम् ॥१६॥ हे ईश, मनुष्यास्ते यदि भक्ताः स्युस्तर्हि सफलजीवना भवंति । अन्यथा भस्त्रा इव वृथाश्वासाः । यतो महदहंकारादयस्त्वत्तः सामर्थ्यं प्राप्य समष्टिव्यष्टिरूपमिदं ब्रह्मांडं सृष्टवंतः । तत्र च सृष्टौ अन्नमयादीन् पंच कोशान् प्रविश्य तत्तदाकारः सन् यश्चेतयते सोऽतर्यामी त्वमसि । एषु कोशेषु काष्ठेष्वग्नेरिव तवान्वयोऽस्ति । तथाप्यन्नमयादिषु पुच्छत्वेनोक्तमन्नमयादेर्व्यतिरिक्तं तत्साक्षिभूतमबाध्यं सत्यं यद्वस्तु तत्त्वमसि । तस्य शाखाचंद्रवच्छुद्धस्वरूपलक्षणार्थमन्वय उक्तः ॥१७॥ हे अनंत, ऋषिसांप्रदायमार्गेषु ये स्थूलदृष्टयस्ते उदरालंबनं मणिपूरचक्रस्थं ब्रह्म ध्यायंति । अरुणऋषेर्वंशस्था ऋषयस्तु नाडीप्रसारणस्थानं हृदयस्थं सूक्ष्ममेवोपासते । ततो हृदयात्सुषुम्नानाडीरूपं तवोपलब्धिस्थानमूर्ध्वं ब्रह्मरंध्रंप्रति गतमस्ति । यत्प्राप्य जनाः पुनः संसारे न पतंति ॥१८॥ हे प्रभो, त्वं स्वकृतेषु देवतिर्यङ्मनुष्यादिदेहेषु कारणतया प्रविशन्निव वर्तमानः सन्

१ अविकारिभ्यश्चिंतामणिमंत्रकामधेन्वादिभ्यो विकारवतांनानापदार्थानामुत्पत्तिलयदर्शनादिति भावः । २ मनसा आचरितं तात्पर्यं वचनाचरितमिंद्राग्न्याद्यभिधानम् । ३ मृत्पाषाणादिषु ।

काष्ठेष्वग्निरिव न्यूनाधिकभावेनावभाससे । अतो निर्मलबुद्धयः पुरुषा एषु मिथ्याभूतेषु देहेषु सत्यं तव स्वरूपं जानंति । अतोऽप्रच्युतस्वरूपस्य तवैवोपास्यत्वम् ॥१९॥ काश्चिच्छ्रुतयो भगवतश्चरणभजनं मोक्षोपायं वदंति । हे ईश, स्वकर्मोपार्जितमनुष्यादिदेहेषु भोक्तृत्वेन वर्तमानं जीवं त्वद्रूपमेवेति ज्ञानिनो वदंति । एवं जीवस्य तत्त्वं विशोध्य, अन्यथेदं न प्राप्स्यत इति विचारवंतः पुरुषा मनुष्यलोके संसारनिवर्तकं तव चरणं सेवंते ॥२०॥ काश्चित्पुनर्भक्तिमेव दृढीकुर्वंति । भो ईश्वर, दुर्बोधस्यात्मस्वरूपस्य ज्ञानार्थं प्रकटितमूर्तेस्तव चरितमहासमुद्रे स्नानेन श्रमरहिताः केचिद्भक्तिरसिकाः पुरुषाः तव चरणकमले हंसवद्रममाणानां साधूनां समागमेन गृहादिकं त्यक्त्वा तव श्रवणकीर्तनादिषु निमग्नाः संतो मोक्षमपि नेच्छंति । कुतोऽन्यत् ॥२१॥ काश्चिच्छ्रुतय ईश्वरे प्रीतिमुपदिशंति । हे ईश, त्वत्सेवौपयिकमिदं शरीरं स्वाधीनतया वर्तते । तथापि ये जीवाः सुसेव्यं त्वां न भजंति ते देहाद्यभिमानेनात्मघातिनः संतोऽनेकभययुक्ते संसारे भ्रमंति ॥२२॥ हे समर्थ, प्राणेंद्रियादीन् जित्वा दृढयोगाभ्यासं कुर्वतो ऋषयो हृदये यत्तत्त्वमुपासते । तथा त्वच्च-

स्वकृतपुरेष्वमीष्वबहिरंतरसंवरणं तव पुरुषं वदंत्यखिलशक्तिधृतोंऽशकृतम् ॥ इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेंऽघ्रिमभवं भुवि विश्वसिताः ॥२०॥ दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥ न परिलषंति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसंगविसृष्टगृहाः ॥२१॥ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ॥ न बत रमंत्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमंत्युरुभये कुशरीरभृतः ॥२२॥ निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ॥ स्त्रिय उरगेंद्रभोगभुजदंडविषक्तधियो वयमपि ते समाः समदृशोंऽघ्रिसरोजसुधाः ॥२३॥ क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु देवगणा उभये ॥ तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ २४॥ जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरंत्युपदिशंति त आरुपितैः॥त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे ॥२५॥

रणकमलं चिंतयंत्यो वयं श्रुत्यभिमानिन्यो देवता अपि यत्तत्त्वं समत्वेन पश्यामस्तत्तत्त्वं शत्रवोऽपि तव स्मरणमात्रेण प्रापुः । गोप्योऽपि कामतः प्रापुः ॥२३॥ काश्चिच्छ्रुतयो भगवत्तत्त्वं दुर्ज्ञेयं वदंत्यो भक्तिमेव श्रेष्ठां मत्वा स्तुवंति । हे भगवन्, अहो अस्मिन् जगति पूर्वसिद्धं त्वां अर्वाचीनोत्पत्तिनाशवान् को नु पुमान् जानाति । न कोऽपि । यतस्त्वत्तो ब्रह्मोत्पन्नः । ब्रह्माणमनु देवगणा उत्पन्नाः । यदा त्वं सर्वमुपसंहृत्य शयनं करोषि । तदा जीवानां ज्ञानसाधनं नास्ति । यतस्तदा स्थूलमाकाशादिकं सूक्ष्मं महदादिकं स्थूलसूक्ष्मात्मकं शरीरं, जीवनां बोधकं वेदशास्त्रादिकं च नास्ति।अतस्त्वदेकशरणतया श्रवणकीर्तनादिरूपा त्वद्भक्तिरेव सुकरेति ॥२४॥ इतोऽपि ज्ञानं न सुशकं उपदेष्टृणामपि भ्रमबाहुल्यादिति काश्चिदाहुः । ये वैशेषिकादयो जगत उत्पत्तिं वदंति । ये पातंजलादयो ब्रह्मत्वस्योत्पत्तिं वदंति । ये नैयायिकाः एकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदंति ।

१ सप्तपदार्थवादिनो नवीनास्तार्किकाः काणादाः । २ पंच ज्ञानेंद्रियाणि मनश्चेति षट् । एषां षण्णां विषयाः षट् । ज्ञानानि च षट् । शरीरं सुखं दुःखं चेत्येकविंशतिः ।

ये सांख्यादय आत्मनि घटाकाशमहाकाशवद्भेदं वदंति । ये च मीमांसकाः कर्मफलं सत्यं वदंति ते सर्वे भ्रांत्यैवोपदिशंति न तत्त्वदृष्ट्या । यतस्त्रिगुणमयः पुरुष इति यो भेदः सोऽपि त्वद्विषयाज्ञानविलसित एव । स ज्ञानस्वरूपे त्वयि न संभवति ॥२५॥ हे प्रभो, मनोमात्रविलसितमिदं त्रिगुणात्मकं जगन्मिथ्याभूतमपि अधिष्ठानस्यात्मनस्तव सत्यतया सत्यवत्प्रतीयते । आत्मविदस्त्विदं विश्वमात्मतया सदिति जानंति । यथा सुवर्णाभिलाषिणः पुरुषाः सुवर्णस्य विकारं कुंडलादिकमपि सुवर्णतयैव गृह्णंति तद्वत् ॥२६॥ काश्चिच्छ्रुतयो भक्त्या ज्ञानस्य सुकरत्वमाहुः । हे भगवन्, सर्वभूतावासतया त्वां ये सेवंते ते एव मुच्यंते । ये त्वद्भक्तिरहितास्तान् त्वं वेदरूपदामन्या पशूनिव बध्नासि । ये त्वयि कृतप्रेमाणस्ते आत्मानमन्यांश्च पवित्रयंति नेतरे ॥२७॥ हे ईश, त्वमिंद्रियरहितोऽपि सर्वप्राणिनामिंद्रियशक्तिप्रवर्तकोऽसि । अतो ब्रह्मादयो देवा अपि तव वलिं समर्पयंति । मनुष्यादिभिश्च दत्तं हव्यकव्यादिकं वलिं स्वयं भक्षयंति । यथा खंडमंडलपतयो नृपाः सार्वभौमाय वलिं समर्पयंति प्रजाभिर्दत्तं च वलिं स्वयं गृह्णंति तद्वत् । कथं वलिं हरंति

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्सदभिमृशंत्यशेषमिदमात्मतयाऽऽत्मविदः ॥ नहि विकृतिं त्यजंति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥२६॥ तव परि ये चरंत्यखिलसत्त्वनिकेततया त उत पदाऽऽक्रमंत्यविगणय्य शिरो निर्ऋतेः ॥ परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनंति न ये विमुखाः ॥२७॥ त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहंति समदंत्यजयाऽनिमिषाः ॥ वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥२८॥ स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ॥ नहि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवापदस्य तव शून्यतुलां दधतः ॥२९॥ अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ॥ अजनि च यन्मयं तदविमुच्य नियंतृ भवेत्सममनुजानतां यदमतं मतदुष्टतया ॥३०॥ ॥ ॥ ॥ ॥

तदाह । त्वत्तो भीताः संतो यस्मिन् कर्मणि ये नियुक्तास्ते तत्कर्म कुर्वंति ॥२८॥ हे नित्यमुक्त, यदा तव मायया सहावलोकनलेशेन क्रीडा भवति तदाऽऽविर्भूतकर्मोपस्थापितलिंगशरीराः स्थावरजंगमा जीवा उत्पद्यंते । तथापि परमकारुणिकस्याकाश इव समस्य वाङ्मनसयोरगोचरस्य तव कश्चित् स्वकीयः परकीयश्च नास्ति ॥२९॥ हे शाश्वत, जीवा यदि असंख्याताः नित्याः सर्वव्यापकाश्च स्युस्तर्हि तेषां त्वत्समत्वात् शिक्षणीयत्वं नास्तीति कृत्वा त्वया कृतं नियमनं न स्यात् इतरथा तु घटेत । कथमिति चेत्तर्हि यस्माद्बिंवरूपादुपाधिवशेन विकारमयं जीवनामकं प्रतिबिंबं जातं तद्बिंबरूपं, स्वप्रतिबिंबस्य कारणत्वेन नियामकं भवेत् । किं तदिति चेत्तर्हि यत् सर्वानुस्यूतम् । जानीम इति वदतामविज्ञातप्रायम् । अविषयत्वात् । एवंभूतं तत्किमपि नियंतृ भवेत् ॥३०॥ ॥ ॥ ॥ ॥ ॥

१ आत्मकार्यत्वान्न पृथगित्यर्थः । २ त्वदाज्ञापालनमेव बलिसमर्पणमित्यर्थः । ३ तेषामनित्यत्वादौ सति नित्यादेस्त्वत्तो नियमनं घटेतेत्यर्थः ।

काश्चिच्छ्रुतय उपाधिजन्मनैव जीवानां जन्मोच्यते न स्वतः अघटनादित्याहुः । अजयोः प्रकृतिपुरुषयोर्जीवरूपेणोत्पत्तिर्न घटते। उभयोः संयोगेन जीवा जायंते। यथा केवलेन जलेन वायुना वा जलबुद्बुदा न भवंति किंतु मिलिताभ्यां जलवायुभ्यां भवंति तद्वत् । ते इमे जीवा अनेकप्रकारकार्योपाधिभिः सह त्वयि लीयंते । तत्र सुषुप्तिप्रलययोर्मधुनि सर्व-कुसुमरसा इव लीयंते । मुक्तौ च सरितः समुद्रे इव निरुपाधौ त्वयि लीयंत इति विवेकः ॥३१॥ काश्चिच्छ्रुतयः संसारनिवृत्तये भगवद्भावं कथयंति । हे ईश, विवेकिनः पुरुषा जीवेषु त्वन्मायया भ्रमणं ज्ञात्वा त्वयि भक्तिं कुर्वंति । एवं त्वामेव शरणं भजतां संसारभयं कथं भवेन्न कथंचिदपि । यतस्तव भ्रुकुटिचालनरूपः कालो, भवान् रक्षको येषां नहि तेष्वभक्तेष्वेव जन्ममरणादिलक्षणं भयं सृजति ॥३२॥ ईश्वरे भावो मनोनियमे सति भवति सोऽपि गुरुसेवनादिति काश्चिच्छ्रुतयो गुरुसेवनं विदधति । हे अज, ये पुरुषा

न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवंत्यसुभृतो जलबुद्बुदवत् ॥ त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥३१॥ नृषु तव मायया भ्रमममीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ॥ कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥३२॥ विजितहृषीकवायुभिरदांतमनस्तुरगं य इह यतंति यंतुमतिलोलमुपायखिदः ॥ व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज संत्यक्तकर्णधरा जलधौ ॥३३॥ स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ॥ इति सदजानतां मिथुनतो रतये चरतां सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥३४॥ भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदांबुजहृदोऽघभिदंघ्रिजलाः ॥ दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥३५॥ सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ॥ व्यवहृतये विकल्प इषितोऽधपरंपरया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥३६॥ ॥ ॥ ॥ ॥

गुरोश्चरणं हित्वा जितेंद्रियप्राणैरपि नरैर्दमयितुमशक्यं मनोरूपमश्वं वशीकर्तुं यत्नं कुर्वंति ते बहुव्यसनाकुलाः संत इह संसारे, अस्वीकृतनाविका वणिजः समुद्रे इव दुःखमेव प्राप्नुवंति ॥३३॥ काश्चिच्छ्रुतयो भक्तेरंगं वैराग्यं कथयंति । हे ईश, सुखस्वरूपे आत्मनि त्वयि सति त्वां सेवमानस्य पुंसः स्वजन-पुत्र-देह-स्त्री-प्राणादिभिः क उपयोगः । एवं सत्यं परमार्थसुखमजानानान् अतएव स्त्रिया सह रतिसुखार्थं गृहे स्थितान् पुरुषान् संसारे को नु स्वजनादिरर्थः सुखयति न कोऽपि । अतस्त्वद्भजनमेवोचितम् ॥३४॥ काश्चिच्छ्रुतयः तत्संगेन तत्त्वज्ञानं दृढं भवतीत्याहुः । निरहंकारा ऋषयः स्वतः पवित्रा अपि भूमौ पुण्यतीर्थ-क्षेत्राण्येव सेवंते । यतः प्रायस्तत्रैव सत्संगो भवति । ते पुनर्विवेकधैर्यादि-नाशकान् गृहान् न सेवंते । सकृदपि ये पुरुषा मनस्त्वयि धारयंति तेऽपि गृहाद्यासक्ता न भवंति किं पुनरेवंभूताः ॥३५॥ काश्चिच्छ्रुतयः प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रका-

[1] प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा । देशभाषादिभिः शिष्यं बोधयेत्स गुरुः स्मृत इति ।

रमाहुः इदं विश्वं सत्यरूपाद्ब्रह्मण उत्पन्नत्वात्सत्यात्मकं यथा कनकादुत्पन्नं कुंडलादि कनकात्मकं तद्वदिति चेन्न। कामधेनोरुत्पन्नं इच्छितफलप्राप्त्यादिकं कामधेनुर्न भवति। तस्मादुत्पन्नत्वेनैव भेदप्रतीतेः। क्वचिदसंभवः। यथा मुद्गरादुत्पन्नो घटध्वंसो मुद्गरो न भवति। क्वचिन्मिथ्या। रज्जोरुत्पन्नः सर्पो रज्जुर्न किंतु मिथ्या तद्वत्। व्यवहारसिद्धये त्वंधपरंपरया भ्रम इष्ट एव कूटकार्षापणादिनापि व्यवहारदर्शनात्। ननु अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिना कर्मफलस्य नित्यत्वप्रतिपादनाद्वेदप्रतिपादितं द्वैतमपि सत्यमिति चेत्तर्हि हे भगवन्, ते वेदलक्षणा वाणी कर्मश्रद्धाभाराक्रांतान् मंदबुद्धीन् मोहयति ॥३६॥ तदेवं प्रपंचस्य सत्त्वे साधकं नास्तीत्युक्तम्। इदानीमसत्त्वं सृष्टिलयश्रुतय आहुः। यत इदं विश्वं सृष्टेः पूर्वं नासीत्। तथा प्रलयानंतरमपि न भविष्यति। अतो मध्येऽपि त्वयि सत्ये मिथ्यारूपमेव भाति। यथा घटकुंडलादौ नाममात्रताकारणं मृत्सुवर्णाद्येव सत्यं तद्वत्। अतो ये इदं जगत्सत्यमिति वदंति ते अज्ञाः ॥३७॥ काश्चिच्छ्रुतयो जीवेश्वरविशेषं वदंति। हे ईश, स जीवो यदा माययाऽविद्यामालिंगेत् तदा देहादि-

न यदिदमग्र आस न भविष्यदतो निधनादनुमितमंतरा त्वयि विभाति मृषैकरसे ॥ अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयंत्यबुधाः ॥३७॥ स यदजया त्वजामनुशयीत गुणांश्च जुषन्भजति सरूपतां तदनु मृत्युमपेतभगः ॥ त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥३८॥ यदि न समुद्धरंति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदिगतोऽस्मृतकंठमणिः ॥ असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतांतकादनधिरूढपदाद्भवतः ॥३९॥ त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ॥ अनुयुगमन्वहं सगुणगीतपरंपरया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥ द्युपतय एव ते न ययुरंतमनंततया त्वमपि यदंतरांऽडनिचया ननु सावरणाः ॥ ख इव रजांसि वांति वयसा सह यच्छ्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधनाः ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥

धर्मान् सेवमानः सन् आच्छादितानंदादिगुणो भूत्वा संसारं प्राप्नोति। तदर्थमेव सर्वं कर्मकांडम्। त्वं तु त्वचं सर्प इव तां मायां त्यक्त्वा अपरिमितैश्वर्यः सन् अणिमाद्यष्टैश्वर्ययुक्ते परमैश्वर्ये विराजसे। अतस्त्वमेव सेव्यत्वम् ॥३८॥ हे भगवन्, ये जनाः सर्वसंगं परित्यज्य यतयो भूत्वाऽपि यदि हृदि स्थिताः कामवासना नोत्पाटयंति तर्हि तेषां हृदयस्थोऽपि त्वं विस्मृतकंठमणिरिव दुष्प्रापोऽसि। किंच। इंद्रियतर्पकाणां दांभिकानामिह लोकेऽनिवृत्तान्मृत्योर्लोकाराधन-द्रव्यसंपादनादिक्लेशाच्च दुःखम्। परलोके चाप्राप्तस्वरूपात्त्वत्तो धर्मातिक्रमनिबंधनदंडरूपनरकप्राप्तेश्च दुःखमिति ॥३९॥ हे षड्गुणैश्वर्ययुक्त, त्वज्ज्ञानवान् पुरुषः प्राचीनपुण्यपापकर्मणोः फलभूतान् सुखदुःखसंबंधान् नानुसंधत्ते। तथा देहाभिमानिनां लोकानां प्रवृत्तिनिवृत्तिकरीर्गिरश्च नानुसंधत्ते। यतो मनुजैः सत्संप्रदायानुसारेण प्रतिदिनं श्रवणेन चित्ते धृतस्त्वं तेषां मोक्षरूपो भवसि ॥४०॥ काश्चिच्छ्रुतयो वाङ्मनसयोरगोचरस्य भगवतोऽविषयत्वेनैव ज्ञानमिति वक्तुं तस्यापरिमितं महिमानमाहुः। हे भगवन्, स्वर्गादिलोकपतयो ब्रह्मादयोऽपि तवांतं न प्रापुः। आस्तां ब्रह्मादीनां

वार्ता । यतस्त्वमप्यात्मनोऽतं न यासि । अनंतत्वमेवाहुः । यस्य तव मध्ये उत्तरोत्तरं दशगुण-सप्तावरण-युक्ता ब्रह्मांडसमूहाः कालचक्रेण खे रजांसीव एकदैव परिभ्रमंति । अतः श्रुतयो निषेधमुखेनावधिभूते त्वयि तात्पर्यवृत्त्या पर्यवसानं प्राप्नुवंति ॥४१॥ श्रीनारायण उवाच ॥ हे नारद, एवं ब्रह्मपुत्राः सनकादय आत्मतत्त्वनिरूपणं श्रुत्वा सनंदनं पूजयामासुः ॥४२॥ एवं सर्वश्रुतिपुराणरहस्यतात्पर्यं सनकादिभिः समुद्धृतमस्ति ॥४३॥ हे नारद, नृणां विषयवासनाभंजनमेतद्ब्रह्मनिरूपणं त्वं धारयन् यथेच्छं महीं चर ॥४४॥ श्रीशुक उवाच ॥ एवं नारायणेन कथितं श्रुत्वा कृतकृत्यः स नैष्ठिको नारदः श्रुतमर्थं मनसि धारयन् जगाद ॥४५॥ नारद उवाच ॥ य ईश्वरो भूतानां मोक्षार्थमवतारान् धत्ते । तस्मै भगवते कृष्णाय नमोऽस्तु ॥४६॥ एवं नारदो नारायणं तच्छिष्यांश्च नत्वा मम पितुर्व्यासस्याश्रमं जगाम ॥४७॥ तदा तेन संमानितः स नारदो नारायणमुखाच्छ्रुतं तत्सर्वं

श्रीभगवानुवाच ॥ इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् ॥ सनंदनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥४२॥ इत्यशेषसमाम्नायपुराणोपनिषद्रसः ॥ समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥४३॥ त्वं चैतद्ब्रह्मदायाद श्रद्धयाऽऽत्मानुशासनम् ॥ धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥४४॥ श्रीशुक उवाच ॥ एवं स ऋषिणाऽऽदिष्टं गृहीत्वा श्रद्धयाऽऽत्मवान् ॥ पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥४५॥ नारद उवाच ॥ नमस्तस्मै भगवते कृष्णायामलकीर्तये ॥ यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥४६॥ इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ॥ ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥४७॥ सभाजितो भगवता कृतासनपरिग्रहः ॥ तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥४८॥ इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया ॥ यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि श्रुतिश्चरेत् ॥४९॥ योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः ॥ यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥५०॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे नारदनारायणसंवादे वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः ॥८७॥ राजोवाच ॥ देवासुरमनुष्येषु ये भजंत्यशिवं शिवम् ॥ प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम् ॥१॥ ॥

व्यासाय कथयामास ॥४८॥ एवं हे राजन्, त्वया निर्गुणे ब्रह्मणि श्रुतिः कथं चरेदिति यत्पृष्टं तन्मया कथितम् ॥४९॥ किंच । योऽनुशायिनां जीवानां समस्तपुरुषार्थसिद्धये सृष्ट्यादि करणीयमित्यवलोकनकर्ता भवति । यो जगत उत्पत्तिस्थितिलयेषु वर्तते । यः प्रकृतेः पुरुषस्य च नियंता । य इदं जगत्सृष्ट्वा जीवेन सह तत्प्रविष्टः सन् जीवस्य भोगायतनानि शरीराणि सृष्ट्वा तानि च पालयति । यं च प्राप्य स जीवः कारणरूपामविद्यां त्यजति । तमप्रच्युतस्वरूपस्थित्या निरस्तमायं भयनिवर्तकं हरिं निरंतरं ध्यायेत् ॥५०॥ इति श्रीमद्भागवचू० दश० उत्त० वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः॥८७॥अष्टाशीतितमे विष्णुभक्तः कैवल्यमश्नुते। ततोऽर्वाग्देवभक्तस्तु विभूतिमिति वर्ण्यते॥१॥राजोवाच ॥ हे ब्रह्मन्,

१ नहि शशविषाणाज्ञानं सार्वज्ञं तदप्राप्तिर्वा शक्तिवैभवं विहंति । २ नहि निरवधिर्निषेधः संभवत्यतोऽवधिभूते त्वयि फलंतीत्यर्थः ।

देवदैत्यमनुष्येषु ये शिवं भजंति ते वहुधा भोगवंतो धनिनश्च भवंति । ये लक्ष्मीपतिं हरिं भजंति ते तथा न भवंति ॥१॥ अत्र महान् संदेहः । यतो विरुद्धस्वभावयोः शिवविष्ण्वोर्भक्तानां विरुद्धं फलं प्राप्यते । अत एतज्ज्ञातुमिच्छामः ॥२॥ श्रीशुक उवाच ॥ हे राजन्, परमानंदोऽपीश्वरो यदा प्रकृतियुक्तो भवति तदा तस्या गुणैर्विष्ण्वादिसंज्ञा धत्ते । तत्र सात्विकादिभेदेनाहंकारस्त्रिविधः ॥३॥ तस्मादहंकारात् षोडश विकारा अभवन् । अतो भक्त आराध्यदेवतागुणानुरूपा विभूतीः प्राप्नोति ॥४॥ परमानंदरूपो हरिस्तु निर्गुणः प्रकृतेः परः । तस्य भजनेन निर्गुणो भवेत् ॥५॥ हे राजन्, अश्वमेधेषु समाप्तेषु युधिष्ठिरो राजा श्रीकृष्णमिदमेव पप्रच्छ ॥६॥ तदा भगवान् प्रीतः सन् तस्मै प्राह ॥७॥

एतद्वेदितुमिच्छामः संदेहोऽत्र महान्हि नः ॥ विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः ॥२॥ श्रीशुक उवाच ॥ शिवः शक्तियुतः शश्वत्त्रिलिंगो गुणसंवृतः ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥३॥ ततो विकारा अभवन्षोडशामीषु कंचन ॥ उपधावन्विभूतीनां सर्वासामश्नुते गतिम् ॥४॥ हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ॥ स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥५॥ निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः ॥ शृण्वन्भगवतो धर्मानपृच्छदिदमच्युतम् ॥६॥ स आह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः ॥ नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले ॥७॥ श्रीभगवानुवाच ॥ यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ॥ ततोऽधनं त्यजंत्यस्य स्वजना दुःखदुःखितम् ॥८॥ स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया ॥ मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥९॥ तद्ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनंतकम् ॥ अतो मां सुदुराराध्यं हित्वाऽन्यान्भजते जनः ॥१०॥ ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः ॥ मत्ताः प्रमत्ता वरदान्विस्मरंत्यवजानते ॥११॥ श्रीशुक उवाच ॥ शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ॥ सद्यः शापप्रसादोऽंग शिवो ब्रह्मा न चाच्युतः ॥१२॥ अत्र चोदाहरंतीममितिहासं पुरातनम् ॥ वृकासुराय गिरिशो वरं दत्वाऽऽप संकटम् ॥१३॥ वृको नामासुरः पुत्रः शकुनेः पथि नारदम् ॥ दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥१४॥

श्रीभगवानुवाच ॥ हे धर्म, अहं यंप्रत्यनुगृह्णामि तस्य धनं शनैर्हरिष्ये । ततोऽधनं तं स्वजनास्त्यजंति ॥८॥ स पुनर्बंधूनामाग्रहेण धनाद्यर्जने प्रवृत्तोऽपि यदा मदनुग्रहेण निष्फलोद्योगः स्यात्तदा विरक्तो भूत्वा मद्भक्तैः सह मैत्रीं करोति । तदा तदुपर्यहमनुग्रहं करिष्यामि ॥९॥ अतो दुराराध्यं मां हित्वा जना अन्यान् भजंते ॥१०॥ ततः शीघ्रप्रसन्नेभ्यस्तेभ्यः प्राप्तराज्याद्यैश्वर्येण मत्तास्ते वरदानमपि विस्मृत्यावज्ञां कुर्वंति ॥११॥ श्रीशुक उवाच ॥ हे राजन्, शापप्रसादयोः समर्था ब्रह्मविष्णुशिवादयः संति । तथापि सद्यः शापदः प्रसादकरश्च शिवो ब्रह्मा चास्ति न विष्णुः ॥१२॥ अस्मिन् विषये इतिहासं कथयिष्यामि । शिवो वृकासुराय वरं दत्वा संकटं प्राप ॥१३॥ एकदा शकुनिदैत्यस्य पुत्रो वृकासुरो

१ तत्र सत्वगुणांशाधिको विष्णू रजोगुणांशाधिको ब्रह्मा तमोगुणांशाधिकः शिव इति । २ अंतःकरण-दशेंद्रिय-पंचमहाभूतरूपाः । ३ सत्वगुणांशाधिकस्य विष्णोः शांतत्वात्तद्भक्ता निर्गुणा भवंति । रजस्तमोगुणांशाधिकयोर्ब्रह्मशिवयोर्भक्ता विभूतियुक्ता भवंति । अंशतः सत्वांशयोस्तयोर्भक्ता निर्गुणाश्च भवंति । अंशतश्च विष्णोर्ध्रुवादयो भक्ताः संपत्तिभाजोऽपि भवंतीति भावः ।

मार्गे नारदं दृष्ट्वा त्रिषु मध्ये कः शीघ्रं तुष्यतीति पप्रच्छ ॥१४॥ तदा नारद आह । हे दैत्य, त्वं शिवं भज । स स्वल्पगुणदोषाभ्यां शीघ्रं तुष्यति कुप्यति च ॥१५॥ स रावणस्य वाणासुरस्य च तुष्टः सन्नतुलमैश्वर्यं दत्वा ततः संकटं प्राप ॥१६॥ इत्याकर्ण्य वृकासुरः केदारक्षेत्रे गत्वा स्वमांसेनाग्निमुखं शंकरं जुह्वानः सन् ॥१७॥ षट्दिनपर्यंतं देवमप्राप्य खिन्नः सन् सप्तमदिवसे स्वशिरः खड्गेन छेत्तुमुद्युक्तः ॥१८॥ तदा महादयालुः शिवोऽग्नेः सकाशादुत्थाय दैत्यहस्तौ धृत्वा न्यवारयत् । आह च । तदा दैत्यः शिवस्पर्शेन परिपूर्णदेहो बभूव ॥१९॥ तं शिव उवाच ॥ हे वृक, त्वमभीष्टं वरं वृणीष्व तुभ्यं दास्यामि ॥२०॥ इत्याकर्ण्य स पापीयान् , यस्य यस्य मस्तके हस्तमहं धास्ये स स

स आह देवं गिरिशमुपाधावाशु सिद्ध्यसि ॥ योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥१५॥ दशास्यवाणयोस्तुष्टः स्तुवतोर्बंदिनोरिव ॥ ऐश्वर्यमतुलं दत्वा तत आप सुसंकटम् ॥१६॥ इत्यादिष्टस्तमसुर उपाधावत्स्वगात्रतः ॥ केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम् ॥१७॥ देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि ॥ शिरोऽवृश्चत्स्वधितिना तत्तीर्थक्लिन्नमूर्धजम् ॥१८॥ तदा महाकारुणिकः स धूर्जटिर्यथा वयं चाग्निरिवोत्थितोऽनलात् ॥ निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद्भूय उपस्कृताकृतिः ॥१९॥ तमाह चांगालमलं वृणीष्व मे यथाऽभिकामं वितरामि ते वरम् ॥ प्रीये यतो येन नृणां प्रपद्यतामहो त्वयाऽऽत्मा भृशमर्द्यते वृथा ॥२०॥ देवं स व्रव्रे पापीयान्वरं भूतभयावहम् ॥ यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥२१॥ तच्छ्रुत्वा भगवान्रुद्रो दुर्मना इव भारत ॥ ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा ॥२२॥ इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः ॥ स तद्वरपरीक्षार्थं शंभोर्मूर्ध्नि किलासुरः ॥ स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः ॥२३॥ तेनोपसृष्टः संत्रस्तः पराधावत्सवेपथुः ॥ यावदंतं दिवो भूमेः काष्ठानामुदगादुदक् ॥२४॥ अजानंतः प्रतिविधिं तूष्णीमासन्सुरेश्वराः ॥ ततो वैकुंठमगमद्भास्वरं तमसः परम् ॥२५॥ यत्र नारायणः साक्षान्न्यासिनां परमा गतिः ॥ शांतानां न्यस्तदंडानां यतो नावर्तते गतः ॥२६॥ तं तथाव्यसनं दृष्ट्वा भगवान्वृजिनार्दनः ॥ दूरात्प्रत्युदियाद्भूत्वा बटुको योगमायया ॥२७॥ मेखलाजिनदंडाक्षैस्तेजसाऽग्निरिव ज्वलन् ॥ अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥२८॥ ॥ ॥ ॥ ॥

म्रियतामिति भयावहं वरं वव्रे ॥२१॥ तच्छ्रुत्वा शिवो दुःखित इव भूत्वा सर्पायामृतमिव तस्मै वरं ददौ ॥२२॥ ततो वृको गौरीं हर्तुमिच्छुः सन् तद्वरपरीक्षार्थं शंभोर्मस्तके हस्तं स्थापयितुमारेभे ॥२३॥ तदा पृष्ठतोऽनुगतः स शिवः स्वकृताद्वरदानाद्भीतः सन् स्वर्गादिलोकेष्वधावत् ॥२४॥ तदा देवास्तं दृष्ट्वा प्रतीकारमजानंतः संतस्तूष्णीमासन् । ततः शिव उत्तरस्यां दिश्यंधकारात्परं श्वेतद्वीपं जगाम ॥२५॥ यत्र भक्तानां परमगतिरूपः साक्षान्नारायण आस्ते ॥२६॥ तदा दुःखनाशको हरिस्तं शिवं दुःखितं दृष्ट्वा दूराद्योगमायया मेखलाजिनदंडादिभिर्युक्तं वटुवामनरूपं धृत्वा दैत्यसंमुखमेत्य नम्र इव तमभिवादयामास ॥२७॥२८॥ ॥ ॥ ॥ ॥

श्रीभगवानुवाच ॥ हे वृकासुर, त्वं दूरमागत्य श्रांतोऽसि । तस्मात्क्षणं विश्रम्यताम् ॥२९॥ किंच । तव यन्निश्चितं तदस्मच्छ्रवणाय योग्यं चेत्तर्हि कथ्यताम् । अहं ते कार्यसाधिकां युक्तिं कथयिष्यामि ॥३०॥ श्रीशुक उवाच ॥ एवं भगवता पृष्टो वृकासुरो यथा पूर्वमात्मना कृतं तत्सर्वं तस्मै जगाद ॥३१॥ तच्छ्रुत्वा श्रीभगवानुवाच ॥ हे वृक, एवं चेत्तर्हि शिवस्य वाक्यं वयं न सत्यं मन्यामहे । यो दक्षप्रजापतेः शापात्पिशाचानामिव वृत्तिं प्राप्तः ॥३२॥ तव तस्मिन् शिवे विश्वासश्चेत्तर्हि स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥३३॥ यदि शंभोर्वचनमसत्यं स्यात्तर्हि मिथ्यावादिनमेनं जहि । यतः पुनर्मिथ्या न वदिष्यति ॥३४॥ इत्यादिभिरतिरम्यैर्भगवद्वाक्यैर्मोहितः स कुबुद्धिः स्वशिरसि हस्तं व्यधात् ॥३५॥ तदैव स भिन्नशिराः सन् भूमौ पपात । तदा दिवि जयशब्दः साधुशब्दश्चाभवत् ॥३६॥ वृकासुरे मृते सति देवर्षिपितृगंधर्वाः पुष्पवर्षाणि मुमुचुः । एवं भगवता शिवः

श्रीभगवानुवाच ॥ शाकुनेय भवान्व्यक्तं श्रांतः किं दूरमागतः ॥ क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक् ॥२९॥ यदि नः श्रवणायालं युष्मद्व्यवसितं विभो ॥ भण्यतां प्रायशः पुंभिर्धृतैः स्वार्थान्समीहते ॥३०॥ श्रीशुक उवाच ॥ एवं भगवता पृष्टो वचसाऽमृतवर्षिणा ॥ गतक्लमोऽब्रवीत्तस्मै यथापूर्वमनुष्ठितम् ॥३१॥ श्रीभगवानुवाच ॥ एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि ॥ यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥३२॥ यदि वस्तत्र विश्रंभो दानवेंद्र जगद्गुरौ ॥ तर्ह्यंगाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥३३॥ यद्यसत्यं वचः शंभोः कथंचिद्दानवर्षभ ॥ तदैनं जह्यसद्वाचं न यद्वक्ताऽनृतं पुनः ॥३४॥ इत्थं भगवतश्चित्रैर्वचोभिः स सुपेशलैः ॥ भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्व्यधात् ॥३५॥ अथापतद्भिन्नशिरा वज्राहत इव क्षणात् ॥ जयशब्दो नमःशब्दः साधुशब्दोऽभवद्दिवि ॥३६॥ मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ॥ देवर्षिपितृगंधर्वा मोचितः संकटाच्छिवः ॥३७॥ मुक्तं गिरिशमभ्याह भगवान्पुरुषोत्तमः ॥ अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥३८॥ हतः को नु महत्स्वीश जंतुर्वै कृतकिल्बिषः ॥ क्षेमी स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ ॥३९॥ य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः ॥ गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः ॥४०॥ इति श्रीमद्भा० महा० दश० उत्त० रुद्रमोक्षणं नामाष्टाशीतितमोऽध्यायः ॥८८॥ श्रीशुक उवाच ॥ सरस्वत्यास्तटे राजन्नृषयः सत्रमासत ॥ वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥१॥

संकटान्मोचितः ॥३७॥ ततो भगवान् शिवमाह । अहो देव महादेव, अयं पापी दैत्यः स्वपापेनैव हतः ॥३८॥ हे ईश, महत्सु कृतापराधः पुमान् को नु क्षेमी स्यात् न कोऽपि । तदा विश्वेश्वरे त्वयि कृतापराधः क्षेमी न स्यादिति किमु वक्तव्यम् ॥३९॥ एवं यो हरेः शिव-मोक्षण-चरित्रं कथयेच्छृणोति वा स शत्रुभयात्संसाराच्च मुच्यते ॥४०॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे अष्टाशीतितमोऽध्यायः ॥८८॥ नवाशीतितमे देवः को महानिति संशये । परीक्ष्य विष्णोरुत्कर्षं मुनिभ्योऽवर्णयद्भृगुः ॥१॥ श्रीशुक उवाच ॥ हे राजन्, एकदा सरस्वत्यास्तटे ऋषयः सत्रमकुर्वत । तदा त्रिषु देवेषु मध्ये को महानिति तेषां संशयोऽभूत् ॥१॥ ॥ ॥ ॥

ततस्ते ऋषयो महत्त्वज्ञातुमिच्छया भृगुं प्रेषयामासुः । तदा भृगुर्ब्रह्मणः सभां जगाम ॥२॥ स ब्रह्मणः सत्वपरीक्षार्थं तस्मै नमस्कारादिकं न चक्रे । तदा ब्रह्मा तस्मै भृगवे चुक्रोध ॥३॥ ततो ब्रह्मा विचार्य स्वकार्येण पुत्रेण निमित्तेन क्रोधं शमयामास ॥४॥ ततः स भृगुः कैलासं जगाम । तदा शिव उत्थाय मुदा तं भ्रातरमालिंगितुं प्रवृत्तः ॥५॥ तदा त्वममंगलोऽसीत्युक्त्वाऽऽलिंगनं नैच्छत् । तदा क्रुद्धः शिवः शूलमुद्यम्य तं हंतुमुद्युक्तः ॥६॥ तद्दृष्ट्वा पार्वती शिवस्य पादयोः पतित्वा तं सांत्वयामास । ततो भृगुर्यत्र विष्णुस्तिष्ठति तद्वैकुंठं जगाम ॥७॥ तत्र पर्यंके लक्ष्म्या उत्संगे मस्तकं स्थापयित्वा सुप्तं विष्णुं दृष्ट्वा तं पादेन वक्षसि ताडयामास । तदा हरिर्लक्ष्म्या सहोत्थाय पर्यंकाच्छीघ्रमवरुह्य तं शिरसा ननाम ॥८॥ आह च । हे ब्रह्मन्, भवतः स्वागतम् । त्वमत्रासने उपविश । युष्मानागतान्न जानतां नः यूयं क्षंतुमर्हथ ॥९॥ हे मुने, तव चरणावतीव कोमलौ । ( वज्रवत्कर्कशेन मम वक्षःस्थलेन दुःखितौ जातौ ॥ ) इत्युक्त्वा विप्रचरणौ स्वहस्तेन मर्दयन् जगाद ॥१०॥ हे मुने, त्वं तीर्थानामपि तीर्थत्वनिमित्तेन पादोदकेन सहलोकं मां पुनीहि ॥११॥ हे भगवन्, अद्याहं लक्ष्म्या एकांतपात्रमासम् । हे विप्र, भवच्चरणस्पर्शेन हतपापस्य ममोरसि चिह्नरूपेण लक्ष्मीर्वत्स्यति ॥१२॥ श्रीशुक उवाच ॥ एवं हरौ ब्रुवति सति तस्य मंजुलया वाण्या भृगुस्तर्पितः सन् भक्त्युत्कंठो भूत्वा तूष्णीं बभूव ॥१३॥ ततो भृगुः पुनर्यज्ञस्थानमेत्य स्वानुभूतं सर्वमृषिभ्यो वर्णयामास ॥१४॥ तन्निशम्यापराधातिरेकेऽपि निर्विकारित्वेन विस्मिता मुनयो गतसंशयाः संतो विष्णुं महत्तमं निश्चितवंतः । यस्मिन् विष्णौ शांतिः अभयम् ॥१५॥

तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ॥ तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद्ब्रह्मणः सभाम् ॥२॥ न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्वपरीक्षया ॥ तस्मै चुक्रोध भगवान्प्रज्वलन्स्वेन तेजसा ॥३॥ स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः ॥ अशीशमद्यथा वह्निं स्वयोन्या वारिणाऽऽत्मभूः ॥४॥ ततः कैलासमगमत्स तं देवो महेश्वरः ॥ परिरब्धुं समारेभ उत्थाय भ्रातरं मुदा ॥५॥ नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ॥ शूलमुद्यम्य तं हंतुमारेभे तिग्मलोचनः ॥६॥ पतित्वा पादयोर्देवी सांत्वयामास तं गिरा ॥ अथो जगाम वैकुंठं यत्र देवो जनार्दनः ॥७॥ शयानं श्रिय उत्संगे पदा वक्षस्यताडयत् ॥ तत उत्थाय भगवान्सह लक्ष्म्या सतां गतिः ॥८॥ स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम् ॥ आह ते स्वागतं ब्रह्मन्निषीदात्रासने क्षणम् ॥ अजानतामागतान्वः क्षंतुमर्हथ नः प्रभो ॥९॥ अतीव कोमलौ तात चरणौ ते महामुने ॥ ( वज्रकर्कशमद्वक्षःस्पर्शेन परिपीडितौ ॥ ) इत्युक्त्वा विप्रचरणौ मर्दयन्स्वेन पाणिना ॥१०॥ पुनीहि सहलोकं मां लोकपालांश्च मद्गतान् ॥ पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥११॥ अद्याहं भगवन् लक्ष्म्या आसमेकांतभाजनम् ॥ वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥१२॥ श्रीशुक उवाच ॥ एवं ब्रुवाणे वैकुंठे भृगुस्तन्मंद्रया गिरा ॥ निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कंठोऽश्रुलोचनः ॥१३॥ पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ॥ स्वानुभूतमशेषेण राजन्भृगुरवर्णयत् ॥१४॥ तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ॥ भूयांसं श्रद्दधुर्विष्णुं यतः शांतिर्यतोऽभयम् ॥१५॥

॥ ॥ ॥

धर्मः ज्ञानं वैराग्यं अंतःकरणस्य मलनाशकं यशश्चास्ति ॥१६॥ किंच । यं शांतानां समचेतसां साधूनां परमां गतिमाहुः ॥१७॥ किंच । यस्य प्रिया मूर्तिः सत्वगुणः । यं च साधवो भजंति ॥१८॥ तस्य भगवतो यद्यपि देवा असुरा राक्षसाश्चेति त्रिविधा आकृतयः संति तथापि तासु सत्वमेव पुरुषार्थहेतुः ॥१९॥ श्रीशुक उवाच ॥ इति निश्चित्य सरस्वतीतीर-वासिन ऋषयो हरिसेवया मुक्तिं प्रापुः ॥२०॥ सूत उवाच ॥ एतत् श्रीशुकमुखान्निर्गतं हरेः प्रशस्तं यशो यः संसारी पुरुषः शृणोति स मुक्तो भवति ॥२१॥ स चोक्तलक्षणो भगवान् श्रीकृष्ण एवेति दर्शयितुमाख्यानांतरमाह । श्रीशुक उवाच ॥ एकदा द्वारकायां विप्रपत्न्याः पुत्रो जातमात्रः सन् भुवं स्पृष्ट्वा ममार ॥२२॥ तदा विप्रस्तं मृतं

धर्मः साक्षाद्यतो ज्ञानं वैराग्यं च तदन्वितम् ॥ ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥१६॥ मुनीनां न्यस्तदंडानां शांतानां समचेतसाम् ॥ अकिंचनानां साधूनां यमाहुः परमां गतिम् ॥१७॥ सत्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः ॥ भजंत्यनाशिषः शांता यं वा निपुणबुद्धयः ॥१८॥ त्रिविधाकृतयस्तस्य राक्षसा असुराः सुराः॥ गुणिन्या मायया सृष्टाः सत्वं तत्तीर्थसाधनम् ॥१९॥ श्रीशुक उवाच ॥ एवं सारस्वता विप्रा नृणां संशयनुत्तये ॥ पुरुषस्य पदांभोजसेवया तद्गतिं गताः ॥२०॥ सूत उवाच ॥ इत्येतन्मुनितनयास्यपद्मगंधपीयूषं भवभयभित्परस्य पुंसः ॥ सुश्लोकं श्रवणपुटैः पिबत्यभीक्ष्णं पांथोऽध्वभ्रमणपरिश्रमं जहाति ॥२१॥ श्रीशुक उवाच ॥ एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः ॥ जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥२२॥ विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः ॥ इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥२३॥ ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः ॥ क्षत्रबंधोः कर्मदोषात्पंचत्वं मे गतोऽर्भकः ॥२४॥ हिंसाविहारं नृपतिं दुःशीलमजितेंद्रियम् ॥ प्रजा भजंत्यः सीदंति दरिद्रा नित्यदुःखिताः ॥२५॥ एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च ॥ विसृज्य स नृपद्वारि तां गाथां समगायत ॥२६॥ तामर्जुन उपश्रुत्य कर्हिचित्केशवांतिके ॥ परेते नवमे बाले ब्राह्मणं समभाषत ॥२७॥ किंस्विद्ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः ॥ राजन्यबंधुरेते वै ब्राह्मणाः सत्रमासते ॥२८॥ धनदारात्मजापृक्ता यत्र शोचंति ब्राह्मणाः ॥ ते वै राजन्यवेषेण नटा जीवंत्यसुंभराः ॥२९॥

पुत्रं गृहीत्वा राजद्वारि निधाय विलपन् जगाद ॥२३॥ ब्रह्मद्विषः शठबुद्धेः विषयात्मनः क्षत्रियबंधोः कर्मदोषान्मे बालो मृत्युं प्राप्तः ॥२४॥ किंच । दुःशीलमजितेंद्रियं नृपतिं भजंत्यः प्रजा नित्यं दुःखिता भवंति ॥२५॥ एवं द्वितीयं तृतीयं च मृतं पुत्रं राजद्वारे निधाय तां गाथां जगौ ॥२६॥ कदाचित्कृष्णसमीपे स्थितोऽर्जुनो नवमे बाले मृते सति द्विजस्य तां गाथां श्रुत्वा ब्राह्मणं समभाषत ॥२७॥ हे ब्रह्मन्, त्वं किमर्थं वृथा रोदिषि । यतस्त्वन्निवासे धनुर्धरमात्रोऽपि कश्चिन्नास्ति । ब्राह्मणभक्तस्य तु का वार्ता । एते यादवास्तु सत्रयागे मिलिता ब्राह्मणा इव भवितुमर्हंति ॥२८॥ यस्मिन् राज्ये राजसु जीवत्सु सत्सु धन-स्त्री-पुत्रादिवियुक्ता ब्राह्मणाः शोचंति ते राजानो राजवेषेण नटा इव

१ ब्रह्मद्विषः शठबुद्धेरित्यादिकाम् । मयि न कश्चिद्दोषोऽतो राजदोषेणैव मत्पुत्रा म्रियंत इति वारंवारं चुक्रोशेत्यर्थः ।

हे कृष्णार्जुनौ, एते द्विजपुत्रा युवयोर्दिदृक्षुणा मयात्राऽऽनीताः । युवां धर्मरक्षणाय मे कलया भुव्यवतीर्णौ स्तः । अतो भूभारं दूरीकृत्य शीघ्रं मे समीपमागच्छतम् ॥५९॥ युवां साक्षान्नरनारायणौ पूर्णकामावपि लोकसंग्रहार्थं धर्ममाचरताम् ॥६०॥ इत्याकर्ण्य कृष्णार्जुनौ तामाज्ञां स्वीकृत्य तमादिनारायणं नत्वा द्विजपुत्रान् गृहीत्वा ॥६१॥ द्वारकामागत्य विप्राय यथारूपं यथावयः पुत्रान् ददतुः ॥६२॥ पार्थो वैष्णवं धाम दृष्ट्वा परमविस्मितः सन् पुंसां यत्किंचित्पौरुषं तत् श्रीकृष्णकृपया प्राप्तं मेने ॥६३॥ भगवानेवमनेकानि चरित्राणि दर्शयन् विषयान् बुभुजे । वहुदक्षिणैर्यज्ञैश्च देवानयजत् ॥६४॥ ब्राह्मणादिषु प्रजासु सर्वान् कामानिंद्र इव ववर्ष ॥६५॥ एवमधर्मिष्ठान्नृपान् हत्वा कांश्चिदर्जुनादिभिर्घातयित्वा

द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये ॥ कलावतीर्णाववनेर्भरासुरान्हत्वेह भूयस्त्वरयेतमंति मे ॥५९॥ पूर्णकामावपि युवां नरनारायणावृषी ॥ धर्ममाचरतां स्थित्यै ऋषभौ लोकसंग्रहम् ॥६०॥ इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना ॥ ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥६१॥ न्यवर्ततां स्वकं धाम संप्रहृष्टौ यथागतम् ॥ विप्राय ददतुः पुत्रान्यथारूपं यथावयः ॥६२॥ निशाम्य वैष्णवं धाम पार्थः परमविस्मितः ॥ यत्किंचित्पौरुषं पुंसां मेने कृष्णानुकंपितम् ॥६३॥ इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन् ॥ बुभुजे विषयान्ग्राम्यानीजे चात्यूर्जितैर्मखैः ॥६४॥ प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु ॥ यथाकालं यथैवेंद्रो भगवान् श्रैष्ठ्यमास्थितः ॥६५॥ हत्वा नृपानधर्मिष्ठान्घातयित्वाऽर्जुनादिभिः ॥ अंजसा वर्तयामास धर्मं धर्मसुतादिभिः ॥६६॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे द्विजकुमारानयनं नाम एकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ श्रीशुक उवाच ॥ सुखं स्वपुर्यां निवसन्द्वारकायां श्रियः पतिः ॥ सर्वसंपत्समृद्धायां जुष्टायां वृष्णिपुंगवैः ॥१॥ स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकांतिभिः ॥ कंदुकादिभिर्हर्म्येषु क्रीडंतीभिस्तडिद्द्युभिः ॥२॥ नित्यं संकुलमार्गायां मदच्युद्भिर्मतंगजैः ॥ स्वलंकृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥ उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ॥ निर्विशद्भृंगविहगैर्नादितायां समंततः ॥४॥ रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ॥ तावद्विचित्ररूपोऽसौ तद्गेहेषु महर्धिषु ॥५॥ प्रोत्फुल्लोत्पलकह्लारकुमुदांभोजरेणुभिः ॥ वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥६॥ ॥ ॥ ॥ ॥ ॥

युधिष्ठिरादिभिर्धर्मं प्रवर्तयामास ॥६६॥ इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे नवाशीतितमोऽध्यायः ॥८९॥ चरमे तु पुनः प्रोक्ता कृष्णलीला समासतः । यदुवंशप्रसूतानामानंत्यं च सकारणम् ॥१॥ श्रीशुक उवाच ॥ श्रीकृष्णः स्वपुर्यां द्वारकायां निवसन् । कथंभूतायाम् । सर्वसंपत्समृद्धायाम् ॥१॥ गृहेषु क्रीडंतीभिरुत्तमवेषाभिः स्त्रीभिः मदोन्मत्तैर्गजैः स्वलंकृतैर्भटैः कनकोज्ज्वलैरश्वै रथैश्च नित्यं व्याप्तमार्गायाम् ॥२॥३॥ पुष्पितवृक्षपंक्तिषु उद्यानोपवनेषु भ्रमरादिभिर्नादितायाम् ॥४॥ एवं भूतायां द्वारकायां षोडशसहस्रस्त्रीणां वल्लभः श्रीकृष्णस्तावद्रूपधरः सन् तासां गृहेषु रेमे ॥५॥ तथा कमलरेणुभिः सुवासित-जलासु नदीषु जलं विगाह्य स्त्रीणां कुचकुंकुमैर्लिप्तांगः स्त्रीभिरालिंगितश्च सन्

ताभिः सह विजहार ॥६॥७॥ तदा मृदंग-वीणा-पणवादिवाद्यानि वादयद्भिर्गंधर्वैरुपगीयमानः सूत-मागध-वंदिभिः स्तूयमानः ॥८॥ स्त्रीभिर्जलक्षेपणपात्रैः सिच्यमानश्च सन् स्वयं
ताः प्रतिसिंचन् चिक्रीड ॥९॥ तदा क्लिन्नवस्त्रा विवृतोरुकुचप्रदेशास्ताः स्त्रियो जलक्षेपणयंत्रग्रहणेच्छया कांतमालिंग्य जातेन मदनोत्सवेन लसद्वदनाः सत्यो विरेजुः
॥१०॥ कृष्णस्तु स्त्रीभिर्मुहुः सीच्यमानः स्वयं च ताः सिंचन् करिणीभिर्गज इव रेमे ॥११॥ ततः कृष्णः स्त्रियश्च स्वकीयानि क्रीडालंकारवस्त्राणि नटनर्तकीभ्यो ददुः ॥१२॥ एवं
विहरतः कृष्णस्य हास्यविलोकन-भाषणैस्तासां स्त्रीणां बुद्धयस्तन्मया जाताः ॥१३॥ कदाचित्कृष्णसान्निध्याभावे श्रीकृष्णं चिंतयंत्यः स्त्रिय उन्मत्तवद्यानि वाक्यान्यूचुस्तानि त्वं

विजहार विगाह्यांभो ह्रदिनीषु महोदयः ॥ कुचकुंकुमलिप्तांगः परिरब्धश्च योषिताम् ॥७॥ उपगीयमानो गंधर्वैर्मृदंगपणवानकान् ॥ वादयद्भिर्मुदा वीणां सूतमागधवंदिभिः ॥८॥ सिच्यमानोऽच्युतस्ताभिर्हसंतीभिः स्म रेचकैः ॥ प्रतिसिंचन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥९॥ ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिंचंत्य उद्धृतबृहत्कबरप्रसूनाः ॥ कांतं स्म रेचकजिहीरषयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥१०॥ कृष्णस्तु तत्स्तनविषज्जितकुंकुमस्रक् क्रीडाऽभिषंगधुतकुंतलवृंदबंधः ॥ सिंचन्मुहुर्युवतिभिः प्रतिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः ॥११॥ नटानां नर्तकीनां च गीतवाद्योपजीविनाम् ॥ क्रीडालंकारवासांसि कृष्णोऽदात्तस्य च स्त्रियः ॥१२॥ कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः ॥ नर्मक्ष्वेलिपरिष्वंगैः स्त्रीणां किल हृता धियः ॥१३॥ ऊचुर्मुकुंदैकधियो गिर उन्मत्तवज्जडम् ॥ चिंतयंत्योऽरविंदाक्षं तानि मे गदतः शृणु ॥१४॥ महिष्य ऊचुः ॥ कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ॥ वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥१५॥ नेत्रे निमीलयसि नक्तमदृष्टबंधुस्त्वं रोरवीषि करुणं बत चक्रवाकि ॥ दास्यं गता वयमिवाच्युतपादजुष्टां किंवा स्रजं स्पृहयसे कबरेण वोढुम् ॥१६॥ भो भो सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ॥ किंवा मुकुंदापहृतात्मलांछनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥१७॥ त्वं यक्ष्मणा बलवताऽसि गृहीत इंदो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ॥ कच्चिन्मुकुंदगदितानि यथा वयं त्वं विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥१८॥ ॥ ॥ ॥

मत्तः शृणु ॥१४॥ महिष्य ऊचुः । हे कुररि, रात्र्यां श्रीकृष्णे निद्रिते सति त्वं निद्राभंगं कुर्वती विलपसि न शेषे । सा त्वं वयमिव श्रीकृष्णहास्यादिभिर्मोहं प्राप्तासि किम् ॥१५॥
हे चक्रवाकि, त्वमदृष्टपतिः सती नेत्रे निमील्य शब्दं करोषि । अतो वयमिव श्रीकृष्णचरणसंलग्नां मालां केशबंधेन धारयितुमिच्छसि किम् ॥१६॥ हे समुद्र, त्वमलब्धनिद्रः
सन् शब्दं करोषि । अतोऽस्माभिः प्राप्तां दशां त्वमपि प्राप्तोऽसि किम् ॥१७॥ हे चंद्र, त्वं क्षयरोगेण गृहीतः । अत एव क्षीणः सन् स्वकिरणैस्तमो न क्षिणोषि । तत्किं कृष्ण-

१ यथा वयं संभोगेन हृतकुंकुमादिलांछनास्तथा त्वमपि हृतकौस्तुभादिलांछनो जातोऽसि किम् ।

गदितानि विस्मृत्य तच्चिंतया वयमिव स्तब्धभाषणो दृश्यसे ॥१८॥ हे मलयवायो, तवाप्रियमस्माभिः किं कृतम् । यस्त्वं कृष्णकटाक्षैर्भिन्ने नो हृदि मदनं प्रेरयसि । तत्तवानुचितम् ॥१९॥ हे मेघ, त्वं श्रीकृष्णस्य सखाऽसि । अतो वयमिव त्वं कृष्णं ध्यात्वा गद्गदकंठः सन् बाष्पधारा मुहुर्विसृजसि ॥२०॥ हे कोकिल, त्वं कृष्णस्य शब्दमिव शब्दं भाषसे । अतस्ते प्रियमद्याहं किं करवाणि ॥२१॥ हे पर्वत, त्वं न चलसि न वदसि च । तत्किं कृष्णचरणं स्वशिखररूपैः स्तनैर्धर्तुं वयमिव कामयसे ॥२२॥ हे नद्यः, वयं कृष्णस्य प्रेमावलोकनमप्राप्य यथा कृशाः स्म तद्वद्यूयमपि शुष्यद्ध्रदाः स्थ ॥२३॥ हे हंस, तव स्वागतम् । त्वयाऽत्र स्थीयताम् । त्वं पयः पिब । शौरेः कथां ब्रूहि । त्वां कृष्णदूतं वयं जानीमः ।

किं त्वाचरितमस्माभिर्मलयानिल तेऽप्रियम् ॥ गोविंदापांगनिर्भिन्ने हृदीरयसि नः स्मरम् ॥१९॥ मेघ श्रीमंस्त्वमसि दयितो यादवेंद्रस्य नूनं श्रीवत्सांकं वयमिव भवान्ध्यायति प्रेमबद्धः ॥ अत्युत्कंठः शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसंगः ॥२०॥ प्रियराव पदानि भाषसेऽमृतसंजीविकयाऽनया गिरा ॥ करवाणि किमद्य ते प्रियं वद मे वल्गितकंठ कोकिल ॥२१॥ न चलसि न वदस्युदारबुद्धे क्षितिधर चिंतयसे महांतमर्थम् ॥ अपि बत वसुदेवनंदनांघ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥२२॥ शुष्यद्ध्रदाः करशिता बत सिंधुपत्न्यः संप्रत्यपास्तकमलश्रिय इष्टभर्तुः ॥ यद्वद्वयं मधुपतेः प्रणयावलोकमप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म ॥२३॥ हंस स्वागतमास्यतां पिब पयो ब्रूह्यंग शौरेः कथां दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा ॥ किंवा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥२४॥ इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ॥ क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥२५॥ श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः ॥ उरुगायोरुगीतो वा पश्यंतीनां कुतः पुनः ॥२६॥ याः संपर्यचरन्प्रेम्णा पादसंवाहनादिभिः ॥ जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥२७॥ एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः ॥ गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम् ॥२८॥ आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् ॥ आसन्षोडशसाहस्रं महिष्यश्च शताधिकम् ॥२९॥ तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः॥ रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः ॥३०॥ ॥ ॥ ॥ ॥

स कृष्णः कुशल्यास्ते किम् । हे कृष्णदूत, पूर्वमेकांते नः उक्तं तत् श्रीकृष्णः स्मरति किम् । वयं तं कस्माद्भजामः । अहो स युष्मान् कामार्थमाह्वयतीति चेत्तर्हि लक्ष्मीं विहाय तमाकारय । स्त्रीषु मध्ये लक्ष्मीरेवैकनिष्ठा किम् ॥२४॥ एवं कृष्णस्त्रियः कृष्णे क्रियमाणेनेदृशेन भावेन परमां गतिं लेभिरे ॥२५॥ यः श्रुतमात्रोऽपि स्त्रीणां मन आकर्षति स भगवानात्मानं पश्यंतीनां मन आकर्षतीति किं वक्तव्यम् ॥२६॥ किंच । याः स्त्रियो जगद्गुरुं पतिबुद्ध्याऽभजन् तासां तपः किं वर्ण्यते ॥२७॥ एवं भगवान् वेदोक्तधर्ममाचरन् गृहं धर्मार्थकामानां स्थानमित्यदर्शयत् ॥२८॥ एवं धर्ममाचरतः कृष्णस्याष्टशताधिकं षोडशसहस्रं स्त्रिय आसन् ॥२९॥ तासां मध्ये रुक्मिण्यादयोऽष्टौ पट्टमहिष्यः प्रागुक्तास्तासां

पुत्राश्चोक्ताः ॥३०॥ हे राजन्, श्रीकृष्ण एकैकस्यां दश दश पुत्रान् जनयामास ॥३१॥ ते च सर्वे १६१०८० भवंति। तेषां मध्येऽष्टादश महारथाः। तेषां नामानि मत्तः शृणु ॥३२॥ प्रद्युम्नः अनिरुद्धः दीप्तिमान् भानुः सांबः मधुः बृहद्भानुः चित्रभानुः वृकः अरुणः ॥३३॥ पुष्करः देववाहुः श्रुतदेवः सुनंदनः चित्रबाहुः विरूपः कविः न्यग्रोधः ॥३४॥ एतेषां मध्ये प्रथमः प्रद्युम्नः पितृवदेवासीत् ॥३५॥ स रुक्मिणः कन्यां रुक्मवतीमुपयेमे। तस्मादनिरुद्धः पुत्रो जातः ॥३६॥ स रुक्मिणः पौत्रीं रोचनानाम्नीमुपयेमे। तस्य वज्रः पुत्रः। यो मौसलादवशेषितः ॥३७॥ तस्य प्रतिबाहुः पुत्रः। तस्य सुबाहुः तस्य शांतसेनः तस्य शतसेनः पुत्रो जातः ॥३८॥ एतस्मिन् कुले स्वल्पधनाः स्वल्पप्रजाः स्वल्पवीर्या

एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान् ॥ यावंत्य आत्मनो भार्या अमोघगतिरीश्वरः ॥३१॥ तेषामुद्दामवीर्याणामष्टादश महारथाः ॥ आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥३२॥ प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान्भानुरेव च ॥ सांबो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥३३॥ पुष्करो वेदवाहुश्च श्रुतदेवः सुनंदनः ॥ चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च ॥३४॥ एतेषामपि राजेंद्र तनुजानां मधुद्विषः ॥ प्रद्युम्न आसी-त्प्रथमः पितृवद्रुक्मिणीसुतः ॥३५॥ स रुक्मिणो दुहितरमुपयेमे महारथः ॥ तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥३६॥ स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ॥ वज्रस्तस्याभवद्यस्तु मौसलादवशेषितः[1] ॥३७॥ प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः ॥ सुबाहोः शांतसेनोऽभूच्छतसेनस्तु तत्सुतः ॥३८॥ न ह्येतस्मिन्कुले जाता अधना अवहुप्रजाः ॥ अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥३९॥ यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ॥ संख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥४०॥ तिस्रः कोट्यः सहस्राणामष्टाशीति शतानि च ॥ आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतम् ॥४१॥ संख्यानं यादवानां कः करिष्यति महात्मनाम् ॥ यत्रायुतानामयुतलक्षेणास्ते स आहुकः ॥४२॥ देवासुराहवहता दैतेया ये सुदारुणाः ॥ ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥४३॥ तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ॥ अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥४४॥ तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः ॥ ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥४५॥

ब्राह्मणभक्तिरहिताश्च न जज्ञिरे ॥३९॥ हे राजन्, यदुवंशप्रसूतानां पुंसां वर्षशतैरपि संख्या कर्तुं न शक्यते ॥४०॥ अपरिमितानां यादवकुमाराणां गुरवस्त्रिस्रः कोट्यः अष्टाशीति शतानि च ३०००८८०० आसन्। इति श्रुतम् ॥४१॥ हे राजन्, यादवानां संख्यानं कः करिष्यति। यत्र दशसहस्राणां दशसहस्रलक्षेण सहोग्रसेनो राजा राज्यं चकार ॥४२॥ हे राजन्, देवासुरयुद्धे ये मृता दैत्यास्ते मनुष्येषूत्पन्नाः संतः प्रजा बबाधिरे ॥४३॥ तेषां नाशाय हरिणा प्रेरिता देवा यदोः कुलेऽवतीर्णाः। तेषामेकाधिकं शतं कुलान्यासन् ॥४४॥ तेषां मध्ये प्रभुत्वेन भगवान् कृष्ण आसीत् ॥४५॥ ॥ ॥ ॥ ॥ ॥ ॥

१ शापजनितमुसलनिमित्तेन जातायादवसंहाराद्भगवताऽवशेषितः।

ते यादवाः शय्यासनादिषु सह संतमपि श्रीकृष्णं परमात्मानं न विदुः ॥४६॥ हे नृप, यदुषु यत् कृष्णकीर्तिरूपं तीर्थं जातं तेन गंगारूपं तीर्थं स्वल्पं कृतम् । यस्य कृष्णस्य शत्रवो
मित्राणि च तत्सारूप्यं प्रापुः । यस्य सर्वतः परिपूर्णा लक्ष्मीरस्ति । यस्य नाम श्रुतमुच्चारितं वा सत् पापनाशकमस्ति । येन च ऋषिवंशेषु धर्मः प्रवर्तितः । तस्य श्रीकृष्णस्य भूभार–
हरणादिकमाश्चर्यं नहि ॥४७॥ हे राजन्, स जीवाश्रयो देवकीजन्मवादः स्थावरजंगमानां संसारदुःखहंता गोपीनां भोगद्वारा मोक्षप्रदः श्रीकृष्णो जयति ॥४८॥ एतावता श्रीकृ-
ष्णस्य पदयोश्चित्तासक्तिमिच्छन् पुरुषो धर्मरक्षणार्थं मत्स्यकूर्माद्यवतारान् दधतो विशेषतः श्रीकृष्णस्य परमात्मनो मनुष्यावतारचेष्टानुरूपाणि चरित्राणि शृणुयात् ॥४९॥ एवं

शय्यासनाटनालापक्रीडास्नानादिकर्मसु ॥ न विदुः संतमात्मानं वृष्णयः कृष्णचेतसः ॥४६॥ तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पाद-
शौचं विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ॥ यन्नामामंगलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः कृष्णस्यैतन्न चित्रं क्षिति-
भरहरणं कालचक्रायुधस्य ॥४७॥ जयति जननिवासो देवकीजन्मवादो यदुवरपर्षत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥ स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन्कामदेवम् ॥४८॥ इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्तलीलातनोस्तदनुरूपविडंबनानि ॥ कर्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥४९॥ मर्त्यस्तयाऽनुसवमेधितया मुकुंदश्रीमत्कथाश्रवणकीर्तनचिंतयैति ॥ तद्धाम दुस्तरकृतांतजवापवर्गं
ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥५०॥ ( चित्रं न चैतदुरुगायविचित्रलीलाविध्वस्तकल्मषकदंबकमुक्तिरूपम् ॥ स्त्रीणां सुदुस्त्यजकृतांत-
जवापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥१॥ ) इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां दशमस्कंधे
उत्तरार्धे श्रीकृष्णचरितानुवर्णनं नाम नवतितमोऽध्यायः ॥९०॥ इति श्रीमद्भागवते दशमकंधे उत्तरार्द्धं स्कंधश्चायं समाप्तः ॥ ॥

मनुष्यो रात्रिंदिवं संवर्धितया श्रीकृष्णकथा-श्रवण-कीर्तनचिंतया दुस्तर-कालवेग-नाशकं तस्य लोकं प्राप्नोति ॥५०॥ ( भगवतो विचित्र-लीलानुकरणेन नष्टपापा गोप्यो मुक्तिं
प्रापुरित्यपि नाश्चर्यम् । यस्या मुक्तेः प्राप्त्यर्थं राजानोऽपि राज्यं त्यक्त्वा वनं ययुः ॥१॥ ) इति श्रीमद्भागवतचूर्णिकायां दशमस्कंधे उत्तरार्धे श्रीकृष्णचरितानुवर्णनं नाम
नवतितमोऽध्यायः ॥९०॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ कृष्णकीर्तिः सर्वतीर्थोपरि विराजत इत्यर्थः । २ देवक्यां जन्मेति वादमात्रं यस्य सः । ३ अधिकारिविशेषानपेक्षमेव वृंदावन-गत-तरु-तृण-लतादीनामपि दुःख-हंतृत्व-दर्शनात् ।

॥ श्रीगणेशाय नमः ॥ अथैकादशस्कंधचूर्णिका प्रारभ्यते ॥ विजयंते परानंदकृष्णपादरजःस्रजः । या धृता मूर्ध्नि जायंते महेंद्रादिमहःस्रजः ॥१॥ उक्तैकत्रिंशताऽध्यायैर्मुक्तिरेकादशे ततः । जायंतेयेतिहासाद्यैः समासव्याससयोगतः ॥२॥ तत्र तु प्रथमेऽध्याये यदुवंशस्य संक्षयः । उपक्षिप्तो विरागाय मौसलव्यपदेशतः ॥३॥ श्रीशुक उवाच ॥ अथ सरामः कृष्णो दैत्यवधं कृत्वा हिंसापर्यवसानं कलहं जनयन् भूभारमपाकृतवान् ॥१॥ दुर्योधनादिभिः कपटद्यूतादिना कोपं कारिता ये पांडवास्तान् निमित्तं कृत्वा कौरव-पांडव-पक्षयोर्मिलितान् नृपान् हत्वा भगवान् भूभारं जहार ॥२॥ अपि च । भगवान् यदुभिर्भूमेर्भारभूता राजसेना हत्वाऽचिंतयत् । अहो भूमेर्भारो लोकदृष्ट्या गतोऽप्यगत एवेत्यहं मन्ये । यतोऽसह्यं यदुकुलमास्ते ॥३॥ मदाश्रयस्य गज-तुरगादिभिरुच्छृंखलस्य चास्य कुलस्यान्यतः पराभवो न स्यात् । अतोऽस्मिन् कुलेंऽतः कलहं विधायाहं वैकुंठं गमिष्यामि ॥४॥ एवं कृतनि-

ॐ नमो भगवते वासुदेवाय ॥ श्रीबादरायणिरुवाच ॥ कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ॥ भुवोऽवतारयद्भारं जविष्ठं जनयन्कलिम् ॥१॥ ये कोपिताः सुबहु पांडुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ॥ कृत्वा निमित्तमितरेतरतः समेतान्हत्वा नृपान्निरहरत्क्षितिभार- मीशः ॥२॥ भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिंतयदप्रमेयः ॥ मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद्यादवं कुलमहो अविषह्यमास्ते ॥३॥ नैवान्यतः परिभवोऽस्य भवेत्कथंचिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ॥ अंतः कलिं यदुकुलस्य विधाय वेणुस्तंबस्य वह्निमिव शांतिमुपैमि धाम ॥४॥ एवं व्यवसितो राजन्सत्यसंकल्प ईश्वरः ॥ शापव्याजेन विप्राणां संजह्रे स्वकुलं विभुः ॥५॥ स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ॥ गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ॥६॥ आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यंजसा नु कौ ॥ तमोऽनया तरिष्यंतीत्यगात्स्वं पदमीश्वरः ॥७॥ राजोवाच ॥ ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ॥ विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम् ॥८॥ यन्निमित्तः स वै शापो यादृशो द्विजसत्तम ॥ कथमेकात्मनां भेद एतत्सर्वं वदस्व मे ॥९॥ श्रीशुक उवाच ॥ बिभ्रद्वपुः सकलसुंदरसंनिवेशं कर्माचरन्भुवि सुमंगलमाप्तकामः ॥ आस्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ॥१०॥ कर्माणि पुण्यनिवहानि सुमंगलानि गायज्जगत्कलिमलापहराणि कृत्वा ॥ कालात्मना निवसता यदुदेवगेहे पिंडारकं समगमन्मुनयो विसृष्टाः ॥११॥

श्चय ईश्वरो ब्राह्मणानां शापनिमित्तेन स्वकुलं संहृतवान् ॥५॥ एवमवतारप्रयोजनं संपाद्य तदानींतनानां सर्वेषां नृणां चक्षुरादिवृत्तीः स्वैकनिष्ठाः कृत्वा ॥६॥ जनिष्यमाणानां च संसारतारणार्थं स्वकीर्तिं भूमौ विस्तार्यानया कीर्त्यैव सुखेनाज्ञानं तरिष्यंतीत्यभिप्रेत्येश्वरः स्वस्थानं जगाम ॥७॥ राजोवाच ॥ ब्राह्मणभक्तानां दातॄणां कृष्णचेतसां च यदूनां ब्राह्मणशापः कथमभूत् ॥८॥ किंच । स शापो येन निमित्तेन यादृशो जातः । तथैकचित्तानां तेषां कथं कलहो जातः । एतत्सर्वं वद ॥९॥ श्रीशुक उवाच ॥ हे नृप, भगवानतिसुंदरं शरीरं धारयन् पूर्णमनोरथोऽपि द्वारकायां कर्माण्याचरन् रममाणः सन् स्वकुलं संहर्तुमैच्छत् ॥१०॥ एकदा कर्मार्थं द्वारकायामाहूता मुनयः पुण्यप्रदानि कर्माणि कृत्वा

श्रीकृष्णेन विसर्जिताः संतो द्वारकासमीपस्थं पिंडारकंनाम तीर्थं जग्मुः ॥११॥ ते च-विश्वामित्रः असितः कण्वः दुर्वासाः भृगुः अंगिराः कश्यपः वामदेवः अत्रिः वसिष्ठः नारदादयश्च ॥१२॥ एकदा क्रीडंतो यदुकुमाराः स्त्रीवेषैः सांबं वेषयित्वा तानृषीनुपव्रज्य अविनीता अपि विनीतवत्पप्रच्छुः । हे विप्राः, एषा गर्भिणी युष्मान् स्वमुखेन प्रष्टुं विलज्जती सती अस्मन्मुखेन पृच्छति । अत इयं किं कन्यां वा पुत्रं वा जनयिष्यति तद्ब्रूत ॥१३॥१४॥१५॥ एवं वंचिता मुनयः कुपिताः संत ऊचुः । हे मंदाः इयं वः कुलनाशनं मुसलं जनयिष्यति ॥१६॥ तच्छ्रुत्वा अतिभीतास्ते बालाः सहसा तदुदरं विमुच्य तत्र लोहमयं मुसलं ददृशुः ॥१७॥ मंदभाग्यैरस्माभिः किमिदं कृतम् । अस्मान् जनाः किं वदिष्यंति ।

विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरंगिराः ॥ कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ॥१२॥ क्रीडंतस्तानुपव्रज्य कुमारा यदुनंदनाः ॥ उपसंगृह्य पप्रच्छुरविनीता विनीतवत् ॥१३॥ ते वेषयित्वा स्त्रीवेषैः सांबं जांबवतीसुतम् ॥ एषा पृच्छति वो विप्रा अंतर्वल्यसितेक्षणा ॥१४॥ प्रष्टुं विलज्जती साक्षात्प्रब्रूतामोघदर्शनाः ॥ प्रसोष्यंती पुत्रकामा किंस्वित्संजनयिष्यति ॥१५॥ एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप ॥ जनयिष्यति वो मंदा मुसलं कुलनाशनम् ॥१६॥ तच्छ्रुत्वा तेऽतिसंत्रस्ता विमुच्य सहसोदरम् ॥ सांबस्य ददृशुस्तस्मिन्मुसलं खल्वयस्मयम् ॥१७॥ किं कृतं मंदभाग्यैर्नः किं वदिष्यंति नो जनाः ॥ इति विह्वलिता गेहानादाय मुसलं ययुः ॥१८॥ तच्चोपनीय सदसि परिम्लानमुखश्रियः ॥ राज्ञ आवेदयांचक्रुः सर्वयादवसंनिधौ ॥१९॥ श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप ॥ विस्मिता भयसंत्रस्ता बभूवुर्द्वारकौकसः ॥२०॥ तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः ॥ समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥२१॥ कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः ॥ उह्यमानानि वेलायां लग्नान्यासन्किलैरकाः ॥२२॥ मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ॥ तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् ॥२३॥ भगवान् ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा ॥ कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥२४॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे विप्रशापो नाम प्रथमोऽध्यायः ॥१॥ ॥ ॥ ॥ ॥

एवं विह्वलितास्ते मुसलं गृहीत्वा गृहान् ययुः ॥१८॥ तन्मुसलं सभायां नीत्वोग्रसेनाय तद्वृत्तं निवेदयामासुः । न तु कृष्णाय ॥१९॥ ततः सर्वे द्वारकौकसोऽमोघं विप्रशापं श्रुत्वा मुसलं च दृष्ट्वा भयभीता बभूवुः ॥२०॥ उग्रसेनोऽपि श्रीकृष्णमपृष्ट्वैव तन्मुसलं चूर्णयित्वा समुद्रोदके प्राक्षिपत् । अवशिष्टं लोहं च प्राक्षिपत् ॥२१॥ तल्लोहं कश्चिन्मत्स्यो जग्रास । तच्चूर्णानि तरंगैः समुद्रतटे लग्नानि । तानि निर्ग्रंथितृणानि जातानि ॥२२॥ स मत्स्यः समुद्रेऽन्यमत्स्यैः सह मत्स्यघातिभिर्जालेन गृहीतः । तदुदरस्थं लोहं लुब्धकः शराग्रे चकार ॥२३॥ ज्ञातसर्वार्थो भगवान् समर्थोऽपि तं विप्रशापं अन्यथा कर्तुं नैच्छत् किंतु अन्वमोदत ॥२४॥ इति श्रीमद्भागवतचूर्णिकायां एकादशस्कंधे प्रथमोऽध्यायः ॥१॥ ॥

द्वितीये निमिजायंतसंवादेनाह नारदः । धर्मान् भागवतान् भक्त्या वसुदेवाय पृच्छते ॥१॥ श्रीशुक उवाच ॥ श्रीकृष्णरक्षितायां द्वारकायां कृष्णदर्शनलालसो नारदः पुनः पुनरुवास ॥१॥ हे नृप, एवममरैरप्युपास्यमानं श्रीकृष्णचरणं मृत्युभीतः पुमान् को नु न भजेत् ॥२॥ एकदा वसुदेवो गृहागतं सुखासीनं नारदं नत्वा जगाद ॥३॥ वसुदेव उवाच ॥ हे भगवन्, यथा पित्रोरागमनं बालानां मंगलाय भवति तथा भवत आगमनं सर्वदेहिनां स्वस्तये भवति ॥४॥ किंच । देवानां चरितं वृष्ट्यादिद्वारा भूतानां सुखाय अतिवृष्ट्यादिद्वारा दुःखाय च भवति । त्वया सदृशानां साधूनां तु सुखायैव भवति ॥५॥ ये यथा देवान् भजंति ते देवा अपि छायेव कर्मानुरूपं तान् तथैव भजंति । साधवस्तु दीनवत्सला एव ॥६॥ हे ब्रह्मन्, अतस्त्वांप्रति भागवतधर्मान् पृच्छामः । यान् श्रुत्वा मर्त्यः सर्वभयान्मुच्यंते ॥७॥ हे नारद, पुरा अहं मुक्तिदमनंतं पुत्रप्राप्त्यर्थं पूजितवान् न तु

श्रीशुक उवाच ॥ गोविंदभुजगुप्तायां द्वारवत्यां कुरूद्वह ॥ अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥१॥ को नु राजन्निंद्रियवान्मुकुंदचरणांबुजम् ॥ न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः॥२॥ तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ॥ अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥३॥ वसुदेव उवाच ॥ भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनाम् ॥ कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥४॥ भूतानां देवचरितं दुःखाय च सुखाय च ॥ सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥५॥ भजंति ये यथा देवान्देवा अपि तथैव तान् ॥ छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥६॥ ब्रह्मंस्तथाऽपि पृच्छामो धर्मान्भागवतांस्तव ॥ यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ॥७॥ अहं किल पुराऽनंतं प्रजार्थो भुवि मुक्तिदम् ॥ अपूजयं न मोक्षाय मोहितो देवमायया ॥८॥ यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ॥ मुच्येमह्यंजसैवाद्धा तथा नः शाधि सुव्रत ॥९॥ श्रीशुक उवाच ॥ राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ॥ प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥१०॥ नारद उवाच ॥ सम्यगेतद्व्यवसितं भवता सात्वतर्षभ ॥ यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान् ॥११॥ श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ॥ सद्यः पुनाति सद्धर्मो देव विश्वद्रुहोऽपि हि ॥१२॥ त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ॥ स्मारितो भगवानद्य देवो नारायणो मम ॥१३॥ अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ आर्षभाणां च संवादं विदेहस्य महात्मनः ॥१४॥ ॥

मोक्षार्थम् ॥८॥ अतो वयं संसारादनायासेन यथा मुच्येमहि तथा नः शिक्षय ॥९॥ श्रीशुक उवाच ॥ हे राजन्, एवं वसुदेवेन कृतप्रश्नो नारदः प्रीतः सन् तमाह ॥१०॥ नारद उवाच ॥ हे वसुदेव, त्वया निश्चयः समीचीनः कृतः । यतः सर्वशोधकान् भगवद्धर्मान् पृच्छसे ॥ ११ ॥ भगवतो धर्मः श्रुतः पठितः ध्यातः अनुमोदितो वाऽपि जगद्द्रोहिणोऽपि जनान् सद्यः पुनाति ॥१२॥ हे वसुदेव, त्वया पुण्य-श्रवण-कीर्तनो नारायणो देवो मम संस्मारितः ॥१३॥ अस्मिन् भगवद्धर्मनिर्णये ऋषभ-योगीश्वर-पुत्राणां जनकस्य च संवादरूपमितिहासमहं कथयामि तं शृणु ॥१४॥ ॥ ॥ ॥ ॥ ॥ ॥

स्वायंभुवमनोः पुत्रः प्रियव्रतः । तस्याग्नीध्रः । तस्य नाभिः । तस्य ऋषभः ॥१५॥ तं मोक्षधर्मकथनेच्छयाऽवतीर्णं वासुदेवांशमाहुः । तस्य पुत्रशतमासीत् ॥१६॥ तन्मध्ये भरतो ज्येष्ठः । यस्य नाम्नेदमजनाभं नाम वर्षं भारतमिति विख्यातमासीत् ॥१७॥ स भुक्तभोगां महीं त्यक्त्वा गृहान्निर्गत्य हरिं सेवमानः सन् त्रिभिर्जन्मभिस्तत्सायुज्यं प्राप ॥१८॥ अन्येषु नवनवति ( ९९ ) पुत्रेषु मध्ये नव पुत्रा नवानां ब्रह्मावर्तादीनां भूखंडानां पतय आसन् । एकाशीति सुताः कर्ममार्गप्रवर्तका ब्राह्मणा बभूवुः ॥१९॥ नव च योगीश्वरा मुनय आत्मविद्यानिपुणा अभवन् ॥२०॥ ते च—कविः हरिः अंतरिक्षः प्रबुद्धः पिप्पलायनः आविर्होत्रः द्रुमिलः चमसः करभाजनश्चेति ॥२१॥ एते भगवद्रूपं विश्वं स्वात्मन ऐक्येन

प्रियव्रतो नाम सुतो मनोः स्वायंभुवस्य यः ॥ तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥१५॥ तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ॥
अवतीर्णं सुतशतं तस्यासीद्ब्रह्मपारगम् ॥१६॥ तेषां वै भरतो ज्येष्ठो नारायणपरायणः ॥ विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥१७॥
स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ॥ उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥१८॥ तेषां नव नवद्वीपपतयोऽस्य समंततः ॥
कर्मतंत्रप्रणेतार एकाशीतिर्द्विजातयः ॥१९॥ नवाभवन्महाभागा मुनयो ह्यर्थशंसिनः ॥ श्रमणा वातरशना आत्मविद्याविशारदाः ॥२०॥
कविर्हरिरंतरिक्षः प्रबुद्धः पिप्पलायनः ॥ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥२१॥ त एते भगवद्रूपं विश्वं सदसदात्मकम् ॥ आत्मनो-
ऽव्यतिरेकेण पश्यंतो व्यचरन्महीम् ॥२२॥ अव्याहतेष्टगतयः सुरसिद्धसाध्यगंधर्वयक्षनरकिन्नरनागलोकान् ॥ मुक्ताश्चरंति मुनिचारणभूतनाथ-
विद्याधरद्विजगवां भुवनानि कामम् ॥२३॥ त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ॥ वितायमानमृषिभिरजनाभे महात्मनः ॥२४॥ तान्दृष्ट्वा
सूर्यसंकाशान्महाभागवतान्नृप ॥ यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥२५॥ विदेहस्तानभिप्रेत्य नारायणपरायणान् ॥ प्रीतः संपूजयां-
चक्र आसनस्थान्यथार्हतः ॥२६॥ तान्रोचमानान्स्वरुचा ब्रह्मपुत्रोपमान्नव ॥ पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥२७॥ विदेह उवाच ॥
मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः ॥ विष्णोर्भूतानि लोकानां पावनाय चरंति हि ॥२८॥ दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः ॥
तत्रापि दुर्लभं मन्ये वैकुंठप्रियदर्शनम् ॥२९॥ अत आत्यंतिकं क्षेमं पृच्छामो भवतोऽनघाः ॥ संसारेऽस्मिन्क्षणार्धोऽपि सत्संगः शेवधिर्नृणाम् ॥३०॥

पश्यंतः संतो महीं व्यचरन् ॥२२॥ अकुंठितगतयो मुक्तास्ते सुर-सिद्ध-साध्य-गंधर्व-यक्ष-नर-किंनरनागलोकान् तथा मुनि-चारणादीनां स्थानानि यथेच्छं चरंति ॥२३॥ त एकदा भारतवर्षे ऋषिभिरनुष्ठीयमानं निमेर्यज्ञं स्वेच्छयोपजग्मुः॥२४॥ तान् सूर्यसदृशान् महाभागवतान् दृष्ट्वा निमिरग्नयो ऋत्विगादयश्चोपतस्थिरे ॥२५॥ ततो नारायणपरान् तान् ज्ञात्वा विदेहः प्रीतः सन् तेषां पूजां चकार ॥२६॥ ततो नम्रतया तान् नव योगीश्वरान् प्रपच्छ ॥२७॥ विदेह उवाच ॥ अहं वो भगवतः पार्षदान् मन्ये । यतो विष्णुभक्ता लोकपावनार्थं सर्वत्र चरंति ॥२८॥ क्षणभंगुरोऽपि मनुष्यदेहो जीवानां दुर्लभः । तत्रापि भगवद्भक्तदर्शनं दुर्लभं मन्ये ॥२९॥ हे ऋषयः, अतो युष्मान्प्रति उत्तमं कल्याणसाधनं पृच्छामः।

यतोऽत्र संसारे क्षणार्धकालभवोऽपि सत्संगो निखिलाभवदानंदकरो ज्ञेयः॥३०॥ अतो यूयं भागवतान् धर्मान् अस्मान् प्रतिब्रूत। यैर्धर्मैस्तुष्टो हरिः शरणागतायात्मानमपि दास्यति॥३१॥ नारद उवाच॥ हे वसुदेव, एवं निमिना पृष्टास्ते योगीश्वरा ऋत्विक्-सभासद-सहितं तं निमिं जगदुः॥३२॥कविरुवाच ॥ हे नृप, अत्र संसारेऽच्युतस्य चरणकमलोपासनं निर्भयं मन्ये । यस्मिन् पादांबुजोपासने निःशेषं भयं निवर्तते ॥३३॥ श्रीभगवता स्वमुखेनैवाज्ञानां पुंसामनायासेनात्मप्राप्तये ये ये उपायाः प्रोक्तास्तान् भागवतान् धर्मान् विद्धि॥३४॥ हे राजन्, नरो यान् धर्मानाश्रित्य विघ्नैर्न विहन्यते । इह मार्गे नेत्रे निमील्य धावन्नपि न स्खलेन्न च पतेत् ॥३५॥ देह-वाङ्-मन-इंद्रिय-बुद्धिभिः स्वभावेन च यत्करोति तत्सर्वं नारायणाय

धर्मान्भागवतान्ब्रूत यदि नः श्रुतये क्षमम् ॥ यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥३१॥ नारद उवाच ॥ एवं ते निमिना पृष्ठा वसुदेव महत्तमाः ॥ प्रतिपूज्याब्रुवन्प्रीत्या ससदस्यर्त्विजं नृपम् ॥३२॥ कविरुवाच ॥ मन्येऽकुतश्चिद्भयमच्युतस्य पादांबुजोपासनमत्र नित्यम् ॥ उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥३३॥ ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ॥ अंजः पुंसामविदुषां विद्धि भागवतान्हि तान् ॥३४॥ यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित् ॥ धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥३५॥ कायेन वाचा मनसेंद्रियैर्वा बुद्ध्याऽऽत्मना वाऽनुसृतस्वभावात् ॥ करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥३६॥ भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः ॥ तन्मायया$\,$ऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥३७॥ अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा ॥ तत्कर्म संकल्पविकल्पकं मनो बुधो निरुंध्यादभयं ततः स्यात् ॥३८॥ शृण्वन्सुभद्राणि रथांगपाणेर्जन्मानि कर्माणि च यानि लोके ॥ गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसंगः ॥३९॥ एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ॥ हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥४०॥ ॥ ॥ ॥

समर्पयेत् ॥३६॥ किंच । ईश्वर-पराङ्मुखस्य तन्मायया भयं भवति । अतो बुद्धिमान् पुरुषो भक्त्या तमेव भजेत् ॥३७॥ अयं द्वैतप्रपंचो मिथ्याभूतोऽपि विषयचिंतकस्य पुंसो मनसा निमित्तेन यथा स्वप्नमनोरथौ भवतस्तथा प्राप्तो भवति। अतः संकल्पविकल्पात्मकं मनः स्वाधीनं कुर्यात्। ततोऽभयं स्यात्॥३८॥ किंच। हरेः कल्याणकारकाणि जन्मानि कर्माणि तदर्थकानि नामानि च गायन् शृण्वंश्चासंगो लोके विचरेत्॥३९॥एवं भजन् पुमान् हरिनामकीर्त्या हरौ जातप्रेमा भूत्वा विवशः सन् पिशाच-गृहीतवत्कदाचिद्धसंति [11]रोदिति क्रोशति[12] गायति[13] नृत्यति च

१ कव्यादयो नव योगीश्वरा भगवद्धर्मादिनवप्रश्नानामुत्तराण्याहुः । तत्र कविर्भागवतान् धर्मानुवाच । २ 'यत्करोषि यदश्नासि' इत्यादिना । ३ एषु भागवतधर्मेषु । ४ अज्ञात्वापीत्यर्थः । ५ पदन्यासस्थानमतिक्रम्य शीघ्रं परतः पदन्यासेन गतिर्धावनं तद्वदत्रापि किंचित्किंचिदतिक्रम्यातिशीघ्रानुष्ठानं कुर्वन्नपि । ६ प्रत्यवायी न भवेत् । ७ फलान्न भ्रश्येत् । ८ तथा सति सकलमपि कर्म भागवतो धर्मो भवति । ९ तान्येव जन्मानि कर्माणि चार्थो येषां तानि तदर्थकानि देवकीनंदनगोवर्धनोद्धरणादीनि । १० कदाचिद्भक्तपराजितं भगवंतमाकलय्योच्चैर्हसति । ११ एतावंतं कालमुपेक्षितोऽस्मीति रोदिति । १२ अत्यौत्सुक्यात्क्रोशति । १३ हे हरे, मामनुगृहाणेति अतिहर्षेण गायति ।

॥४०॥ किंच । आकाशं वायुं अग्निं जलं पृथ्वीं ग्रहान् वृक्षान् यत्किंचिद्भूतमात्रं च तत्सर्वं हरेः शरीरमिति ज्ञात्वा प्रणमेत्॥४१॥ यथा भुंजानस्य पुरुषस्य सुखं उदरभरणं क्षुधानिवृत्तिश्च प्रतिग्रासं भवंति तथा हरिं भजतः पुंस एकदैव प्रेमलक्षणा भक्तिः प्रेमास्पदभगवद्रूपस्फूर्तिः गृहादिषु वैराग्यं च भवंति । ततश्च स भगवत्प्रसादेन कृतार्थो भवति ॥४२॥ ॥४३॥ राजोवाच ॥ हे ऋषयः, भगवद्भक्तः यादृशस्वभावः यथा वर्तते यैश्च चिह्नैर्भगवत्प्रियो ज्ञायते तं भागवतं कथयत ॥४४॥ हरिरुवाच ॥ यः स्वस्य सर्वभूतेषु ब्रह्मभावेन समन्वयं पश्येत् तथा ब्रह्मरूपे आत्मनि भूतानि च पश्येत् । स भागवतोत्तमः ॥४५॥ य ईश्वरे भक्तेषु अज्ञेषु शत्रुषु च प्रेम-मैत्री-कृपोपेक्षाः करोति स मध्यमः ॥४६॥ यः श्रद्धया हरेर्मूर्तावेव पूजां करोति न तद्भक्तेषु अन्येषु वा स भक्तोऽधुनैव प्रारब्धभक्तिः शनैरुत्तमोऽपि भविष्यति ॥४७॥ य इंद्रियैर्विषयान् गृहीत्वाऽपि प्रतिकूलान् न द्वेष्टि अनुकूलैश्च

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन् ॥ सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यः ॥४१॥ भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः ॥ प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥४२॥ इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ॥ भवंति वै भागवतस्य राजंस्ततः परां शांतिमुपैति साक्षात् ॥४३॥ राजोवाच ॥ अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ॥ यथा चरति यद्ब्रूते यैर्लिंगैर्भगवत्प्रियः ॥४४॥ हरिरुवाच ॥ सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ॥ भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥४५॥ ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ॥ प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥४६॥ अर्चायामेव हरये पूजां यः श्रद्धयेहते ॥ न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥४७॥ गृहीत्वाऽपींद्रियैरर्थान्यो न द्वेष्टि न हृष्यति ॥ विष्णोर्मायामिदं पश्यन्स वै भागवतोत्तमः ॥४८॥ देहेंद्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ॥ संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥४९॥ न कामकर्मबीजानां यस्य चेतसि संभवः ॥ वासुदेवैकनिलयः स वै भागवतोत्तमः ॥५०॥ न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ॥ सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥५१॥ न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ॥ सर्वभूतसमः शांतः स वै भागवतोत्तमः॥५२॥त्रिभुवनविभवहेतवेऽप्यकुंठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ॥ न चलति भगवत्पदारविंदाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ५३

न हृष्यति स उत्तमो भक्तः ॥४८॥ किंच । देहस्य जन्मनाशौ इंद्रियाणां श्रमः प्राणस्य क्षुधातृषे मनसो भयं बुद्धेस्तृष्णा एतैः संसारधर्मैर्यो न मुह्यति स भक्तश्रेष्ठः ॥४९॥ यस्य चित्ते काम-कर्म-वासनानामुत्पत्तिर्न भवति यश्च केवलं वासुदेवाश्रयः स भागवतोत्तमः ॥५०॥ यस्य जन्म-कर्म-वर्णाश्रमादिभिरस्मिन् देहेऽहंभावो न भवति स हरेः प्रियः ॥५१॥ यस्य वित्तेषु स्वीयं परकीयमिति आत्मनि च स्वः पर इति च भेदो नास्ति स भागवतोत्तमः ॥ ५२ ॥ यस्त्रैलोक्यराज्यार्थमपि निमिषार्धमपि भगवच्चरणकमल-भजनान्न चलति स विष्णुभक्तेषु श्रेष्ठः ॥ ५३ ॥

॥ ॥ ॥ ॥ ॥ ॥

भक्तस्य हृदये हरेः साक्षात्कारेण शांते जाते सति तत्र कामसंतापः कथमुत्पन्नो भवेत् । चंद्रे उदिते सूर्यताप इव ॥५४॥ एतावता प्रेमरशनया धृतचरणकमलो हरिर्यस्य हृदयं न मुंचति स भगवद्भक्तश्रेष्ठो ज्ञातव्यः ॥५५॥ इति श्रीमद्भागवतचू० एकादशस्कंधे द्वितीयोऽध्यायः ॥२॥ माया तत्तरणं ब्रह्म कर्म प्रश्नचतुष्टये । तृतीये तूत्तरं दत्तमार्षभैर्मुनिभिः पृथक् ॥१॥ राजोवाच ॥ हे योगिनः, मायाविनामपि मोहिनीं विष्णोर्मायां वयं ज्ञातुमिच्छामः ॥१॥ संसारतापतप्तोऽहं तस्य तापस्य भेषजं हरिकथामृतरूपं युष्मद्वचो जुषमाणः सन् न तृप्यामि ॥२॥ अंतरिक्ष उवाच ॥ आद्यः पुरुषो हरिः स्वोपासकानां जीवानां विषयभोगार्थं मोक्षार्थं च महाभूतैर्देवमनुष्यादीनि भूतानि ससर्ज ॥३॥ तेषु चांतर्यामिरूपेण प्रविश्य मनोरूपेणैकधा इंद्रियरूपेण दशधा चात्मानं विभजन् विषयान् सेवते ॥४॥ स जीव ईश्वरेण प्रकाशितैरिंद्रियैर्विषयान् भुंजानः सन् शरीरमात्मत्वेन स्वीकृत्य शरीरादौ

भगवत उरुविक्रमांघ्रिशाखानखमणिचंद्रिकया निरस्तताप ॥ हृदि कथमुपसीदतां पुनः स प्रभवति चंद्र इवोदितेऽर्कतापः ॥५४॥ विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ॥ प्रणयरशनया धृतांघ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥५५॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे नारदवसुदेवसंवादे द्वितीयोऽध्यायः ॥२॥ राजोवाच ॥ परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ॥ मायां वेदितुमिच्छामो भगवंतो ब्रुवंतु नः ॥१॥ नानुतृप्ये जुषन्युष्मद्वचो हरिकथामृतम् ॥ संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥२॥ अंतरिक्ष उवाच ॥ एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ॥ ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ॥३॥ एवं सृष्टानि भूतानि प्रविष्टः पंचधातुभिः ॥ एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान् ॥४॥ गुणैर्गुणान्स भुंजान आत्मप्रद्योतितैः प्रभुः ॥ मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥५॥ कर्माणि कर्मभिः कुर्वन्सनिमित्तानि देहभृत् ॥ तत्तत्कर्मफलं गृह्णन्भ्रमतीह सुखेतरम् ॥६॥ इत्थं कर्मगतीर्गच्छन्बह्वभद्रवहाः पुमान् ॥ आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः ॥७॥ धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ॥ अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ॥८॥ शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि ॥ तत्कालोपचितोष्णार्को लोकांस्त्रीन्प्रतपिष्यति ॥९॥ पातालतलमारभ्य संकर्षणमुखानलः ॥ दहन्नूर्ध्वशिखो विष्वग्वर्धते वायुनेरितः ॥१०॥ सांवर्तको मेघगणो वर्षति स्म शतं समाः ॥ धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥११॥ ॥

सज्जते ॥५॥ ततः सवासनानि कर्माणि कुर्वन् तत्फलं च सुखदुःखात्मकं गृह्णन् जीव इह संसारे भ्रमति ॥६॥ एवं भ्रमन् महाप्रलयपर्यंतं जन्ममरणे प्राप्नोति ॥७॥ एवं मायामयीं सृष्टिमुक्त्वा प्रलयं दर्शयति । महाभूतानां लयसमये प्राप्ते सति स्थूलसूक्ष्मात्मकं सर्वं कार्यजातं अव्यक्तंप्रति नेतुं काल आकर्षति ॥८॥ तदा प्रथमं शतवर्षपर्यंतं भूमौ अनावृष्टिर्भविष्यति । तावत्कालपर्यंतं सूर्यो लोकत्रयं प्रतपिष्यति ॥९॥ ततः शेषमुखाग्निः पाताल-तलमारभ्य सर्वतो दहन् वर्धते ॥१०॥ ततो मेघगणो हस्तिशुंडा-तुल्याभिर्धाराभिः शतं वर्षाणि वर्षति । तदा विराड् जले लीयते ॥११॥ ॥ ॥ ॥ ॥ ॥ ॥

तदा विराडभिमानी ब्रह्मा निरिंधनोऽग्निरिव अव्यक्तं प्रविशति ॥१२॥ ततो वायुना हृतगंधा भूर्जले लीयते । तज्जलं तेजसि लीयते । तत्तेजो वायौ लीयते । वायुराकाशे लीयते ॥१३॥१४॥ आकाशं तामसाहंकारे लीयते । इंद्रियाणि बुद्धिश्च राजसाहंकारे लीयंते । मनो देवैः सह सात्विकाहंकारे लीयते । स त्रिविधोऽप्यहंकारो महत्तत्वे लीयते । स महान् मायायां लीयते ॥१५॥ हे जनक, एषा सृष्टि-स्थिति-लय- कारिणी त्रिगुणा भगवतो माया ते वर्णिता । त्वं भूयः किं श्रोतुमिच्छसि ॥१६॥ जनक उवाच ॥ हे महर्षे, एतां दुस्तरां मायां शरीरेऽहंबुद्धियुक्ताः पुरुषा यथाऽनायासेन तरंति तथा मह्यमुच्यताम् ॥१७॥ प्रबुद्ध उवाच ॥ हे नृप, दुःखपरिहाराय सुखप्राप्तये च कर्म कुर्वतां नृणां फलवैपरीत्यं पश्येत्

ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ॥ अव्यक्तं विशते सूक्ष्मं निरिंधन इवानलः ॥१२॥ वायुना हृतगंधा भूः सलिलत्वाय कल्पते ॥ सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते ॥१३॥ हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ॥ हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥१४॥ कालात्मना हृतगुणं नभ आत्मनि लीयते ॥ इंद्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ प्रविशंति ह्यहंकारं स्वगुणैरहमात्मनि॥१५॥ एषा माया भगवतः सर्गस्थित्यंतकारिणी ॥ त्रिवर्णा वर्णिताऽस्माभिः किं भूयः श्रोतुमिच्छसि ॥१६॥राजोवाच॥ यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ॥ तरंत्यंजः स्थूलधियो महर्ष इदमुच्यताम् ॥ १७ ॥ प्रबुद्ध उवाच ॥ कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ॥ पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥१८॥ नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ॥ गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥१९॥ एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ॥ स तुल्यातिशयध्वंसं यथा मंडलवर्तिनाम् ॥२०॥ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ॥ शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥२१॥ तत्र भागवतान्धर्मान् शिक्षेद्गुर्वात्मदैवतः ॥ अमाययाऽनुवृत्त्या यैस्तुष्येदात्माऽऽत्मदो हरिः ॥२२॥ सर्वतो मनसोऽसंगमादौ संगं च साधुषु ॥ दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥२३॥ शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ॥ ब्रह्मचर्यमहिंसां च समत्वं द्वंद्वसंज्ञयोः ॥२४॥ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ॥ विविक्तचीरवसनं संतोषं येन केनचित् ॥२५॥ ॥

॥१८॥ नित्यदुःखदेन आत्मनो मृत्युरूपेण च धनेन तथा गृह-पुत्राप्त-पशुभिः एतैश्चंचलैः किं सुखं स्यान्न किमपीति पश्येत् ॥१९॥ एवं कर्मनिर्मितं परलोकमपि नश्वरं पश्येत् ॥२०॥ तस्मादुत्तमं श्रेयो ज्ञातुमिच्छुः पुमान् वेदब्रह्मणि न्यायतो निष्णातं परब्रह्मणि चापरोक्षानुभवेन निष्णातं गुरुं शरणं गच्छेत् ॥२१॥ तस्माच्च भगवद्धर्मान् शिक्षेत । यैर्धर्मैर्हरिस्तुष्यति ॥२२॥ किंच । सर्वत्र मनसोऽसंगं, आदौ साधुसंगं, हीनेषु दयां, समेषु मैत्रीं, उत्तमेषु नम्रतां च शिक्षेत ॥२३॥ तथा बाह्यमाभ्यंतरं च शौचं स्वधर्माचरणं क्षमां मौनं स्वाध्यायं ब्रह्मचर्यं अहिंसाम् ॥२४॥ सर्वत्र सच्चिद्रूपेण स्थितस्यात्मनोऽवलोकनं एकांतशीलत्वं गृहाद्यभिमानराहित्यं यथालाभेन संतोषम् ॥२५॥ ॥ ॥

१ केनापि प्रमाणेन न व्यज्यत इत्यव्यक्तं ब्रह्मैव । यद्वा प्रकृतिं प्रविशति । अभक्तस्य ब्रह्मणोऽपि पुनरावृत्तिश्रवणात् ।

भगवत्प्रतिपादके शास्त्रे श्रद्धां अन्यशास्त्रेऽनिंदां मनसः प्राणायामेन, वाचो मौनेन कर्मणोऽनीहया च दंडं शिक्षेत ॥२६॥ हरेर्जन्म-कर्म-गुणानां श्रवणं कीर्तनं ध्यानं हरौ सर्व-कर्म-समर्पणम् ॥२७॥ यज्ञ-दान-तपो-जपादेर्भगवदर्पणकरणं स्त्री-पुत्र-गृह-प्राणानामपि भगवते सेवकतया निवेदनं यत्तच्छिक्षेत ॥२८॥ एवं कृष्ण एव आत्मा नाथश्च येषां तेषु मनुष्येषु तत्रापि स्वधर्मशीलेषु ततोऽपि भगवद्भक्तेषु परिचर्यां शिक्षेत ॥२९॥ भगवद्भक्तैः सह संगम्य भगवद्यशसः परस्परानुकथनं परस्परं संतोषं च शिक्षेत ॥३०॥ एवं मिथः पापनाशकं हरिं स्मरंतः स्मारयंतश्च ये ते साधनभक्त्या जातया प्रेमलक्षणभक्त्या रोमांचितां तनुं बिभ्रति ॥३१॥ ते क्वचिद्धरिचिंतया रुदंति । क्वचिद्धसंति । क्वचिन्नृत्यंति । एवं परमेश्वरं प्राप्य तृप्ताः संतस्तूष्णीं भवंति ॥३२॥ इति भागवतान् धर्मान् शिक्षन् नारायणपरः पुमान् मायामनायासेन तरति ॥३३॥ राजोवाच ॥ हे ऋषयः, नारायणनामकस्य ब्रह्मणः

श्रद्धां भागवते शास्त्रेऽनिंदामन्यत्र चापि हि ॥ मनोवाक्कर्मदंडं च सत्यं शमदमावपि ॥२६॥ श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ॥ जन्म-कर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥२७॥ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ॥ दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनम् ॥२८॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ॥ परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥२९॥ परस्परानुकथनं पावनं भगवद्यशः ॥ मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥३०॥ स्मरंतः स्मारयंतश्च मिथोऽघौघहरं हरिम् ॥ भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥३१॥ क्वचिद्रुदंत्यच्युतचिंतया क्वचिद्धसंति नंदंति वदंत्यलौकिकाः ॥ नृत्यंति गायंत्यनुशीलयंत्यजं भवंति तूष्णीं परमेत्य निर्वृताः ॥३२॥ इति भागवतान्धर्मान् शिक्षन्भक्त्या तदुत्थया ॥ नारायणपरो मायामंजस्तरति दुस्तराम् ॥३३॥ राजोवाच ॥ नारायणाभिधानस्य ब्रह्मणः परमात्मनः ॥ निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥३४॥ पिप्पलायन उवाच ॥ स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च ॥ देहेंद्रियासुहृदयानि चरंति येन संजीवितानि तदवेहि परं नरेंद्र ॥३५॥ नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेंद्रियाणि च यथाऽनलमर्चिषः स्वाः ॥ शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ॥३६॥ सत्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदंति जीवम् ॥ ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥३७॥ ॥ ॥

स्वरूपमस्मान् वक्तुमर्हथ ॥३४॥ पिप्पलायन उवाच ॥ योऽस्य जगत उत्पत्ति-स्थिति-लयानां हेतुरपि वस्तुतो हेतुरहितः स नारायणः । यच्च जाग्रत्स्वप्नसुषुप्तिषु समाध्यादौ चानुवर्तमानं तद्ब्रह्म । येन च संजीवितानि देहेंद्रियादीनि प्रवर्तंते स परमात्मा । एवं लक्षणभेदैर्नारायणादिनामभिरुच्यमानमपि परमेकमेव तत्त्वं त्वं जानीहि ॥३५॥ एतत्तत्त्वं मनः वाक् चक्षुः बुद्धिः प्राणश्च न प्राप्नुवंति । वेदोऽपि आत्मनः प्रमाणभूतं तत्तत्त्वं जडनिरासेनार्थादुक्तं यथा भवति तथा प्राह न साक्षात् । कुतः बोधकस्य स्वस्य निषेधरूपत्वात् ॥३६॥ यदादौ एकं ब्रह्म तदेव सत्वरजस्तमोगुणात्मकं प्रधानं वदंति । ततस्तदेव ब्रह्म क्रियाशक्त्या सूत्रं ज्ञानशक्त्या महत्तत्वं जीवोपाधित्वेनाहंकाररूपं देवतेंद्रिय-विषयरूपं च भाति ॥३७॥

तस्य देश-काल-वस्तु-परिच्छेद-रहितस्य ब्रह्मणः अस्ति जायते वर्धते विपरिणमते अपक्षीयते नश्यतीति षड्विकारा न संति ॥३८॥ यथा प्राणः स्वेदजादिचतुर्विधेषु देहेषु तदभिमानेन तत्र तत्र गच्छति । वस्तुतस्तु तेभ्यो भिन्नस्तथा परं ब्रह्मापि जगतो विकारैरलिप्तं सज्जाग्रदादिसाक्षित्वेनावभासते ॥३९॥ यदा पुमान् भगवदिच्छाजनितया भक्त्या चेतसो वासना नाशयेत् तदा तस्मिन् शुद्धे चेतस्यात्मतत्त्वं प्राप्यते । निर्मलयोर्दृशोः सत्योर्यथा पूर्वसिद्धः सूर्यप्रकाशः प्राप्यते तद्वत् ॥४०॥ राजोवाच ॥ हे ऋषयः, यूयमस्मान्प्रति कर्मयोगं वदत । येन पुमानिह कर्माणि विधूय ज्ञानं विंदते ॥४१॥ इममेव प्रश्नं पूर्वमहं सनकादीनपृच्छम् । तस्योत्तरं ते नाब्रुवन् तत्र कारणमुच्यताम् ॥४२॥ आविर्होत्र उवाच ॥ हे

नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणां हि ॥ सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेंद्रियबलेन विकल्पितं सत् ॥३८॥ अंडेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र ॥ सन्ने यदिंद्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥३९॥ यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि ॥ तस्मिन्विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः ॥४०॥ राजोवाच ॥ कर्मयोगं वदत नः पुरुषो येन संस्कृतः ॥ विधूयेहाशु कर्माणि नैष्कर्म्यं विंदते परम् ॥४१॥ एवं प्रश्नमृषीन्पूर्वमपृच्छं पितुरंतिके ॥ नाब्रुवन्ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥४२॥ आविर्होत्र उवाच ॥ कर्माकर्मविकर्मेति वेदवादो न लौकिकः ॥ वेदस्य चेश्वरात्मत्वात्तत्र मुह्यंति सूरयः ॥४३॥ परोक्षवादो वेदोऽयं बालानामनुशासनम् ॥ कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥४४॥ नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेंद्रियः ॥ विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥४५॥ वेदोक्तमेव कुर्वाणो निःसंगोऽर्पितमीश्वरे ॥ नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥४६॥ य आशु हृदयग्रंथिं निर्जिहीर्षुः परात्मनः ॥ विधिनोपचरेद्देवं तंत्रोक्तेन च केशवम् ॥४७॥ लब्धानुग्रह आचार्यात्तेन संदर्शितागमः ॥ महापुरुषमभ्यर्चेन्मूर्त्याऽऽभिमतयाऽऽत्मनः ॥४८॥ ॥ ॥

राजन्, वेदेन विहितं कर्म । निषिद्धमकर्म । विहिताकरणं विकर्म । एतत्त्रयं वेदैकगम्यं न लौकिकम् । तच्च दुष्करम् । यतस्तत्र कर्मादौ विद्वांसोऽपि मुह्यंति । अतस्तदा तव बालत्वात्तज्ज्ञानं न स्यादित्याशयेन सनकादय उत्तरं नैवाब्रुवन् ॥४३॥ अयं वेदः परोक्षवादरूपोऽस्ति । अतो बालानामनुशासनं यथा भवति तथा औषधदानवत् कर्ममोक्षायैव कर्माणि विधत्ते ॥४४॥ योऽज्ञो वेदोक्तं कर्म नाचरेत् । स तेनाऽधर्मेण मृत्योरनंतरं मृत्युं प्राप्नोति ॥४५॥ वेदविहितं कर्मेश्वरार्पणबुद्ध्या कुर्वाणो नरोंऽतःकरणशुद्धिद्वारा मोक्षं प्राप्नोति । फलश्रुतिस्तु रुच्युत्पादकैव ॥४६॥ अतो य आत्मनो हृदयग्रंथिं निर्हर्तुमिच्छुः स आगमोक्तविधिना हरिं भजेत् ॥४७॥ आचार्यात्पूजाप्रकारं ज्ञात्वा आत्मनोऽभिमतया

१ वेदे एव वाक्यपौर्वापर्येण तात्पर्यावधारणाज्ज्ञायते । २ यत्रान्यथा स्थितोऽर्थः संगोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः । ३ यथा पिता बालमौषधं पाययन् खंडलड्डुकादिभिः प्रलोभयन् पाययति ददाति च तानि खंडलड्डुकादीनि । नैतावता औषधपानस्य तल्लाभः प्रयोजनमपि त्वारोग्यम् । तथा वेदोऽप्यवांतरफलैः प्रलोभयन् कर्ममोक्षायैव कर्माणि विधत्ते ।

रामकृष्णादिमूर्त्या हरिं भजेत् ॥४८॥ शुचिर्भूतो मूर्तेः संमुखमासीनः प्राणायामभूतशुद्ध्यादिभिर्देहं संशोध्य न्यासं रक्षणविधिं कृत्वा गंधपुष्पादीनि पूजाद्रव्याणि संपाद्य तानि संप्रोक्ष्य च ॥४९॥५०॥ पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि संस्थाप्य देहे मूर्तौ च कृतन्यासः सन् ॥५१॥ सांगोपांगां सपार्षदां तां स्वाभीष्टमूर्तिं यथालब्धैः पाद्यार्घ्याचमनीयाद्यैः स्नानवस्त्रभूषणैः ॥५२॥ गंधाक्षत-पुष्प-धूप-दीप-नैवेद्यादिभिः संपूज्य स्तोत्रैः स्तुत्वा हरिं प्रणमेत् ॥५३॥ ततस्तन्मयमात्मानं ध्यायन् निर्माल्यं शिरस्याधाय देवं देहे मूर्तिं मंदिरे करंडादिषु वा संस्थाप्य पूजाविधिं समापयेत् ॥५४॥ एवमग्नौ सूर्ये जले अतिथौ हृदये वा य आत्मानमीश्वरं पूजयति स शीघ्रं संसारान्मुच्यते ॥५५॥ इति श्रीमद्भागवतचू० एकादशस्कंधे तृतीयोऽध्यायः ॥३॥ चतुर्थे त्ववतारेहाप्रश्नस्योत्तरमुक्तवान् । जयंतीनंदनो नाम्ना द्रुमिलो मुनिसत्तमः ॥१॥ राजोवाच ॥ हे ऋषयः, इह हरिर्यैर्यैः स्वेच्छया गृहीते-

शुचिः संमुखमासीनः प्राणसंयमनादिभिः ॥ पिंडं विशोध्य संन्यासकृतरक्षोऽर्चयेद्धरिम् ॥४९॥ अर्चादौ हृदये चापि यथा लब्धोपचारकैः ॥ द्रव्यक्षित्यात्मलिंगानि निष्पाद्य प्रोक्ष्य चासनम् ॥५०॥ पाद्यादीनुपकल्प्याथ संनिधाप्य समाहितः ॥ हृदादिभिः कृतन्यासो मूलमंत्रेण चार्चयेत् ॥५१॥ सांगोपांगां सपार्षदां तां तां मूर्तिं स्वमंत्रतः ॥ पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥५२॥ गंधमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ॥ सांगं संपूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिम् ॥५३॥ आत्मानं तन्मयं ध्यायन्मूर्तिं संपूजयेद्धरेः ॥ शेषामाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥५४॥ एवमग्न्यर्कतोयादावतिथौ हृदये च यः ॥ यजतीश्वरमात्मानमचिरान्मुच्यते हि सः ॥५५॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे तृतीयोऽध्यायः ॥३॥ राजोवाच ॥ यानि यानीह कर्माणि यैर्यैः स्वच्छंदजन्मभिः ॥ चक्रे करोति कर्ता वा हरिस्तानि ब्रुवंतु नः ॥१॥ द्रुमिल उवाच ॥ यो वा अनंतस्य गुणाननंताननुक्रमिष्यन्स तु बालबुद्धिः ॥ रजांसि भूमेर्गणयेत्कथंचित्कालेन नैवाखिलशक्तिधाम्नः ॥२॥ भूतैर्यदा पंचभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ॥ स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥३॥ यत्काय एष भुवनत्रयसंनिवेशो यस्येंद्रियैस्तनुभृतामुभयेंद्रियाणि ॥ ज्ञानं स्वतः श्वसनतो बलमोज ईहा सत्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥४॥ आदावभूच्छतधृती रजसाऽस्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ॥ रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥५॥

रवतारैर्यानि यानि कर्माणि चक्रे करोति करिष्यति च तानि नो ब्रुवंतु ॥१॥ द्रुमिल उवाच ॥ हे नृप, यः पुमाननंतस्यानंतान् गुणान् गणयितुमिच्छति स मंदमतिः । कोऽपि महामतिर्महता कालेन भूमे रजांसि कदाचित् गणयेत् परंतु भगवतो गुणान् नैव गणयेत् । अतः संक्षेपतस्तान् वक्ष्यामि ॥२॥ आदौ पुरुषावतारमाह । भगवान् पंचभूतैर्विराड्देहं निर्माय तस्मिन् प्रविष्टः सन् पुरुषाभिधानं प्राप ॥३॥ यस्य देहात्त्रैलोक्यरचना जाता । यस्येंद्रियेभ्यो जीवानामिंद्रियाणि । सत्वगुणाज्ज्ञानम् । प्राणाद्देहेंद्रिय-कर्म-शक्तयश्च जाताः ॥ ४ ॥ योऽस्य जगतः सृष्टौ रजोगुणेनादौ ब्रह्माऽभूत् । यः पालनार्थे सत्वगुणेन विष्णुरभूत् । यश्च नाशार्थं तमसा रुद्रोऽभूत् स आद्यः पुरुषावतारः ॥५॥ ॥ ॥

नरनारायणावतारमाह । धर्मस्य मूर्त्यां भार्यायां नारायणो नर इति द्विमूर्त्या जातः । स आत्मस्वरूपप्रकाशकं कर्म नारदादिभ्य उक्त्वा स्वयं च चचार । सोऽद्यापि तपः कुर्वन् बदरिकाश्रमे आस्ते ॥६॥ इंद्रस्तस्य तपो ज्ञात्वाऽयं तपसा मम स्थानं ग्रहीतुमिच्छतीति विशंक्य तस्य तपोनाशाय सपरिवारं कामं प्रेषयामास । स कामोऽप्सरोगण-वसंत-सुमंद-वायुभिः सह तस्य बदरिकाश्रमं गत्वा स्त्रीणां प्रेक्षणरूपैर्बाणैस्तं विव्याध ॥७॥ नारायण एवमिंद्रकृतमपराधं ज्ञात्वा प्रहस्य शापभिया कंपमानान् तानाह । हे कामादयः, यूयं मा भैष्ट । यूयं मत्त आतिथ्यं गृहीत्वेमं ममाश्रममातिथ्ययुक्तं कुरुध्वम् ॥८॥ एवं नारायणे वदति सति कामादयो नम्रमस्तका भूत्वा दयावंतं तमूचुः । हे विभो, मायातः परे त्वयि एतदक्षोभ-दयादिकमाश्चर्यं नहि ॥९॥ हे देव, स्वर्गमुलंघ्य तव स्थानं वैकुंठं गच्छतां त्वत्सेवकानां देवकृता बहवो विघ्ना भवंति । तथापि त्वद्भक्तो विघ्नानां मूर्ध्नि पदं धत्ते । यदा

धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर ऋषिप्रवरः प्रशांतः ॥ नैष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेवितांघ्रिः ॥६॥ इंद्रो विशंक्य मम धाम जिघृक्षतीति कामं न्ययुंक्त सगणं स बदर्युपाख्यम् ॥ गत्वाऽप्सरोगणवसंतसुमंदवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥७॥ विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान् ॥ मा भैष्ट भो मदन मारुत देववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥८॥ इत्थं ब्रुवत्यभयदे नरदेवदेवाः सव्रीडनम्रशिरसः सघृणं तमूचुः ॥ नैतद्विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे ॥९॥ त्वां सेवतां सुरकृता बहवोंऽतरायाः स्वौको विलंघ्य परमं व्रजतां पदं ते ॥ नान्यस्य बर्हिषि बलीन्ददतः स्वभागान्धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥१०॥ क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्य केचित् ॥ क्रोधस्य यांति विफलस्य वशं पदे गोर्मज्जंति दुश्चरतपश्च वृथोत्सृजंति ॥११॥ इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ॥ दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥१२॥ ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ॥ गंधेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥१३॥ तानाह देवदेवेशः प्रणतान्प्रहसन्निव ॥ आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥१४॥ ओमित्यादेशमादाय नत्वा तं सुरवंदिनः ॥ उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥१५॥ इंद्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम् ॥ ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥१६॥ ॥ ॥

त्वद्भक्तस्यापि विघ्नाभावस्तदा त्वयि कुतो विघ्नशंका ॥१०॥ तवाभक्तास्तु क्षुधा-तृषा-शीतोष्णवृष्ट्यादीन् दुस्तर-समुद्रान् विलंघ्य गोष्पदे मज्जंति । यतो निष्फलस्य क्रोधस्य वशं यांति । ते शापादिना दुश्चरं तपश्च वृथोत्सृजंति ॥११॥ एवं ब्रुवतां तेषां स्वसेवां कुर्वतीर्योगनिर्मिता अद्भुतदर्शना स्त्रीर्दर्शयामास ॥१२॥ तदा लक्ष्मीरिव रूपवतीस्ताः स्त्रियो दृष्ट्वा तासां रूपौदार्यातिशयेन निस्तेजसस्ते कामादयस्तासां गंधेन मुमुहुः ॥१३॥ तदा नारायणः प्रहस्य तान् जगाद । आसां स्त्रीणां मध्ये एकां स्वर्गस्य भूषणरूपां स्त्रीं वृणीध्वम् ॥१४॥ एवं प्रभोराज्ञां स्वीकृत्य तं नत्वा अप्सरःश्रेष्ठामुर्वशीं पुरस्कृत्य स्वर्गं ययुः ॥१५॥ तत इंद्राय नत्वा सभायां देवानां शृण्वतां सतां नारायणतपोबलमूचुः तदेंद्रो विस्मितो जातः ॥१६॥

अन्यानवतारानाह । ईश्वरो हंसः दत्तः सनत्कुमारः मत्पिता ऋषभश्च भूत्वा आत्मयोगमवदत् । ततो हयग्रीवो भूत्वा मधुनामानं दैत्यं हत्वा तेन नीतान् वेदानानीतवान् ॥१७॥ तथा प्रलये मत्स्यो भूत्वा मनोः पृथिव्या ओषधीनां च रक्षणं चक्रे । वराहावतारे महीमुद्धरता तेन हिरण्याक्षो हतः । कूर्मावतारेऽमृतमथने पृष्ठे मंदराचलो धृतः । हयवतारे शरणागतो गजेंद्रो ग्राहान्मोचितः ॥१८॥ अन्यावतारे कश्यपार्थे समिदाहरणे गोष्पदे निमग्नान् वालखिल्यानुद्धृत्य संकटान्मोचयामास । अन्यस्मिन्नवतारे वृत्रवधतो ब्रह्महत्यायां प्रविष्टमिंद्रं मोचयामास । अन्यस्मिन्नवतारे दैत्यगृहे रुद्धा देवस्त्रियो मोचयामास । तथा नृसिंहरूपेण हिरण्यकशिपुर्हतः ॥१९॥ प्रतिमन्वंतरेष्ववतारान् धृत्वा देवार्थे दैत्यान् हत्वा भुवनान्यपालयत् ॥ तथा वामनो भूत्वा याच्ञाछलेन बलेः पृथ्वीं हृत्वेंद्राय ददौ ॥२०॥ तथा परशुरामो भूत्वा एकविंशतिवारं भूमिं निःक्षत्रियां चकार । स सीतापती रामो भूत्वा

हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान्पिता नः ॥ विष्णुः शिवाय जगतां कलयाऽवतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥१७॥ गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरतांऽभसः क्ष्माम् ॥ कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुंचदार्तम् ॥१८॥ संस्तुन्वतोऽब्धिपतितान् श्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ॥ देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेंद्रमभयाय सतां नृसिंहे ॥१९॥ देवासुरे युधि च दैत्यपतीन्सुरार्थे हत्वांऽतरेषु भुवनान्यदधात्कलाभिः ॥ भूत्वाथ वामन इमामहरद्बलेः क्ष्मां याच्ञाछलेन समदाददितेः सुतेभ्यः ॥२०॥ निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः ॥ सोऽब्धिं बबंध दशवक्त्रमहन्सलंकं सीतापतिर्जयति लोकमलघ्नकीर्तिः ॥२१॥ भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ॥ वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान्कलौ क्षितिभुजो न्यहनिष्यदंते ॥२२॥ एवंविधानि कर्माणि जन्मानि च जगत्पतेः ॥ भूरीणि भूरियशसो वर्णितानि महाभुज ॥२३॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे चतुर्थोऽध्यायः ॥४॥ ॥ राजोवाच ॥ भगवंतं हरिं प्रायो न भजंत्यात्मवित्तमाः ॥ तेषामशांतकामानां का निष्ठाऽविजितात्मनाम् ॥१॥ ॥ चमस उवाच ॥ मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ॥ चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥२॥ ॥ ॥ ॥ ॥

सेतुं बद्ध्वा लंकेशं रावणं जघान । सोऽधुना जयति ॥२१॥ तथा भूभारनाशाय यदुषु जातः सन् दुष्कराणि कर्माणि करिष्यति । तथा बुद्धो भूत्वा यज्ञान् कुर्वाणान् दैत्यान् वेदविरुद्धैर्वादैर्मोहयिष्यति । स कलौ कल्किर्भूत्वा शूद्रप्रायान् राज्ञो हनिष्यति ॥२२॥ हे नृप, एवमीश्वरस्य नानाविधानि जन्मानि कर्माणि च ते वर्णितानि ॥२३॥ इति श्रीमद्भागवतचू० एकादशस्कंधे चतुर्थोऽध्यायः ॥४॥ पंचमे भक्तिहीनानां का निष्ठा को युगे युगे । पूजाविधिरिति प्रश्नद्वयस्योत्तरमुच्यते ॥१॥ राजोवाच ॥ हे आत्मवित्तमाः, हरिं ये बहुधा न भजंति तेषामशांतकामानां किं प्राप्यं तद्वदत ॥१॥ चमस उवाच ॥ हे राजन्, आदौ पुरुषस्य मुख-बाहूरु-पादेभ्य आश्रमैः सह सत्वादिगुणैर्ब्राह्मणादयश्चत्वारो वर्णाः

पृथक् पृथक् जाताः ॥२॥ एषां मध्ये स्वजनकमीश्वरं ये न भजंति अवजानंति च ते वर्णाश्रमाद्भ्रष्टाः संतोऽधः पतंति ॥३॥ तत्र येऽज्ञा येषां च हरिकथाश्रवणं हरिकीर्तनं च दूरतः स्थितं ते भवद्विधानां राज्ञां सामादिभिरुपायैरनुग्रहं कर्तुं योग्याः संति ॥४॥ ये च ब्राह्मण-क्षत्रिय-वैश्या उपनयनादिना हरिभजने श्रेष्ठमधिकारं प्राप्यापि कर्मफलेषु सज्जंते तेषामुपेक्षा कार्या ॥५॥ ते मूर्खाः कर्म कर्तुमज्ञा अपि पंडिता वयमित्यभिमानवंतो यज्ञादिसाधनैः स्वर्गे अप्सरोभिः सह विहरिष्याम इति प्रियशब्दान् वदंति ॥६॥ अतएव स्वयं घोरसंकल्पा अहिमन्यवो दांभिकाः पापाश्च ते भगवद्भक्तान् विहसंति ॥७॥ किंच । स्त्रीसक्तास्ते मैथुनसुखेषु गृहेषु मयाद्येदं लब्धम् । इमं मनोरथं प्राप्स्ये । इदं मे धनमस्ति । पुनरिदं धनं भविष्यतीत्याशिषो वदंति । यदा अविधिना यजंति तदा जीविकार्थं पशून् घ्नंति ॥८॥ संपत्ति-विद्या-रूप-बलादिभिर्जातेन गर्वेणांधबुद्धयस्ते ईश्वरसहितान् सतोऽव-

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ॥ न भजंत्यवजानंति स्थानाद्भ्रष्टाः पतंत्यधः ॥३॥ दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्तनाः ॥ स्त्रियः शूद्रादयश्चैव तेऽनुकंप्या भवादृशाम् ॥४॥ विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदांतिकम् ॥ श्रौतेन जन्मनाऽथापि मुह्यंत्याम्नायवादिनः ॥५॥ कर्मण्यकोविदाः स्तब्धा मूर्खाः पंडितमानिनः ॥ वदंति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः ॥६॥ रजसा घोरसंकल्पाः कामुका अहिमन्यवः ॥ दांभिका मानिनः पापा विहसंत्यच्युतप्रियान् ॥७॥ वदंति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः ॥ यजंत्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नंति पशूनतद्विदः ॥८॥ श्रिया विभूत्याऽभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ॥ जातस्मयेनांधधियः सहेश्वरान्सतोऽवमन्यंति हरिप्रियान्खलाः ॥९॥ सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् ॥ वेदोपगीतं च न शृण्वतेऽबुधा मनोरथानां प्रवदंति वार्तया ॥१०॥ लोके व्यवायामिषमद्यसेवा नित्यास्तु जंतोर्नहि तत्र चोदना ॥ व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥११॥ धनं च धर्मैकफलं यतो वै ज्ञानं सविज्ञानमनुप्रशांति ॥ गृहेषु युंजंति कलेवरस्य मृत्युं न पश्यंति दुरंतवीर्यम् ॥१२॥ यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ॥ एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ॥१३॥ ॥

मन्यंते ॥९॥ एवं वर्तमानास्ते सर्वप्राणिषु आकाशमिव स्थितमीश्वरं वेदगीतमपि न शृण्वते । यतः स्त्रीसंग-मांस-मद्यसेवा-विषयाणां वार्तया निवृत्तिपरं संतं वेदं प्रवृत्तिपरं वर्णयंति ॥१०॥ लोके स्त्रीसंग-मांस-मद्यसेवाः प्राणिमात्रस्य रागत एव नित्यप्राप्ताः । अतस्तासु विधिर्नास्ति । किंतु तासु विवाह-यज्ञ-सुराग्रहैरनुज्ञारूपो नियमः क्रियते । अतस्तासु निवृत्तिरेवेष्टा ॥११॥ प्रवृत्तिवादिनो ये जनास्ते धर्मद्वाराऽऽत्मप्रापकं धनं गृहेषु देहाद्यर्थं युंजंति । यतस्ते देहस्य मृत्युं न पश्यंति ॥१२॥ यस्माद्यज्ञे सुराया अवघ्राणमेव विहितं न पानम् । तथा देवतोद्देशेन पशोर्यद्धननं तदालभनं न तु हिंसा । एवं मैथुनमपि प्रजार्थं न रत्यै । एवं शुद्धं धर्मं ते न विदुः ॥१३॥ ॥ ॥

१ विवाहविषय एव व्यवायः कार्यः । यज्ञ एवामिषसेवा । सौत्रामण्यामेव मद्यसेवेति नियमः क्रियते । २ या वेदविहिता हिंसा न सा हिंसेति कीर्त्यते इतिवचनात् ।

ये त्वेवं शुद्धं धर्मं न ज्ञात्वा निःशंकतया पशून् द्रुह्यंति ते पशवो मृत्वा परलोके तान् खादंति ॥१४॥ अत एव ये देहे स्नेहबद्धा भूत्वा अन्यदेहेषु स्थितमात्मानं हरिं द्विषंति तेऽधः पतंति ॥१५॥ अज्ञास्तत्त्वज्ञैरनुकंपितास्तरंति । तत्त्वज्ञास्तु स्वतस्तरंति । ये तु नात्यंतमज्ञा न च तत्त्वज्ञास्तेंऽतरालवर्तिनः सकामास्त्रिवर्गप्रधानाः स्वयमेवात्मानं घातयंति ॥१६॥ एते अज्ञाने ज्ञानमानिनः संतः काल-ध्वस्त-मनोरथा भूत्वा दुःखं प्राप्नुवंति ॥१७॥ तथा वासुदेवपराङ्मुखास्ते प्रयत्नेन संपादिता गृहापत्य-सुहृच्छ्रिय इह हित्वाऽनिच्छंतोऽपि नरकं प्रविशंति ॥१८॥ राजोवाच ॥ हे ऋषयः, स भगवान्, कस्मिन् काले कीदृग्वर्णवान् कीदृगाकारश्चास्ति । तथा नृभिः केन नाम्ना केन च विधिना पूज्यते तदुच्यताम् ॥१९॥

ये त्वनेवंविदोऽसंतः स्तब्धाः सदभिमानिनः ॥ पशून्द्रुह्यंति विस्रब्धाः प्रेत्य खादंति ते च तान् ॥१४॥ द्विषंतः परकायेषु स्वात्मानं हरिमीश्वरम् ॥ मृतके सानुबंधेऽस्मिन्बद्धस्नेहाः पतंत्यधः ॥१५॥ ये कैवल्यमसंप्राप्ता ये चातीताश्च मूढताम् ॥ त्रैवर्गिका ह्यक्षणिका आत्मानं घातयंति ते ॥१६॥ एत आत्महनोऽशांता अज्ञाने ज्ञानमानिनः ॥ सीदंत्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥१७॥ हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः ॥ तमो विशंत्यनिच्छंतो वासुदेवपराङ्मुखाः ॥१८॥ राजोवाच ॥ कस्मिन्काले स भगवान्किंवर्णः कीदृशो नृभिः ॥ नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥१९॥ करभाजन उवाच ॥ कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ॥ नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥२०॥ कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलांबरः ॥ कृष्णाजिनोपवीताक्षान्बिभ्रद्दंडकमंडलू ॥२१॥ मनुष्यास्तु तदा शांता निर्वैराः सुहृदः समाः ॥ यजंति तपसा देवं शमेन च दमेन च ॥२२॥ हंसः सुपर्णो वैकुंठो धर्मो योगेश्वरोऽमलः ॥ ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥२३॥ त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ॥ हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥२४॥ तं तदा मनुजा देवं सर्वदेवमयं हरिम् ॥ यजंति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥२५॥ विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ॥ वृषाकपिर्जयंतश्च उरुगाय इतीर्यते ॥२६॥ द्वापरे भगवान् श्यामः पीतवासा निजायुधः ॥ श्रीवत्सादिभिरंकैश्च[1] लक्षणैरुपलक्षितः ॥२७॥ तं तदा पुरुषं मर्त्या महाराजोपलक्षणम्[2] ॥ यजंति वेदतंत्राभ्यां परं जिज्ञासवो नृप ॥२८॥

करभाजन उवाच ॥ कृतादिषु चतुर्युगेषु केशवो नानावर्णनामाकारः सन् विविधेन मार्गेण पूज्यते ॥२०॥ तत्र कृतयुगे श्वेतवर्णः चतुर्बाहुः वल्कलांबरधरः कृष्णाजिन-यज्ञोपवीताक्षमाला-दंडकमंडलुधारी ब्रह्मचारी वर्तते ॥२१॥ तदा शांता निर्वैरा मनुष्या देवं ध्यानेन शमदमाभ्यां च यजंति ॥२२॥ हंसः सुपर्णो वैकुंठो योगेश्वर इत्यादिभिर्नामभिर्गीयते ॥२३॥ त्रेतायुगे भगवान् रक्तवर्णश्चतुर्बाहुर्यज्ञपतिः स्रुक्स्रुवादियुक्त आस्ते ॥२४॥ तं तदा ब्रह्मवादिनो मनुष्या वेदत्रयोक्तकर्मभिर्यजंति ॥२५॥ विष्णुर्यज्ञ उरुक्रमो जयंत इति नामभिर्गीयते ॥२६॥ अथ द्वापरे भगवान् श्यामः पीतवासाः शंख-चक्र-गदा-पद्म-धारी श्रीवत्सादिलांछनैरुपलक्षित आस्ते ॥२७॥ तदा ज्ञानेच्छवो मनुष्या महाराजोपलक्षणं पर-

१ श्रीवत्सो नाम वक्षसो दक्षिणभागे रोम्णां प्रदक्षिणावर्तः । २ छत्रचामरादियुक्तम् ।

मेश्वरं वैदिकेन तांत्रिकेण च मार्गेण पूजयंति ॥२८॥ वासुदेवाय संकर्षणाय प्रद्युम्नाय अनिरुद्धाय नारायणाय पुरुषाय सर्वभूतात्मने तुभ्यं नमः ॥२९॥३०॥ इति नामभिर्नानातंत्रमार्गेणेश्वरं स्तुवंति ॥३१॥ अथ कलाविंद्रनीलमणिवदुज्ज्वलं सांगोपांगास्त्रपार्षदं श्रीकृष्णं नामोच्चारणप्रधानैरर्चनैर्विवेकिनो जना आराधयंति ॥३२॥ स्तुतिमाह। हे शरणागतरक्षक महापुरुष, मनोरथपूरकं परमपावनं शिवविरिंचिस्तुतं सुखात्मकं सेवक-दुःख-नाशकं संसारार्णवतारकं च तव चरणकमलमहं वंदे ॥३३॥ किंच। यो भवान् रामावतारे देवैरपीष्टां राज्यलक्ष्मीं हित्वा दशरथवचसाऽरण्यं जगाम। तथा सीतयाऽभिलषितं मायामृगंप्रति योऽन्वधावत्। तस्य तव भगवतश्चरणारविंदं वंदे ॥३४॥ एवं युगानुरूपाभ्यां

नमस्ते वासुदेवाय नमः संकर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥२९॥ नारायणाय ऋषये पुरुषाय महात्मने ॥ विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥३०॥ इति द्वापर उर्वीश स्तुवंति जगदीश्वरम् ॥ नानातंत्रविधानेन कलावपि यथा शृणु ॥३१॥ कृष्णवर्णं त्विषाऽकृष्णं सांगोपांगास्त्रपार्षदम् ॥ यज्ञैः संकीर्तनप्रायैर्यजंति हि सुमेधसः ॥३२॥ ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिंचिनुतं शरण्यम् ॥ भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं वंदे महापुरुष ते चरणारविंदम् ॥३३॥ त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् ॥ मायामृगं दयितयेप्सितमन्वधावद्वंदे महापुरुष ते चरणारविंदम् ॥३४॥ एवं युगानुरूपाभ्यां भगवान्युगवर्तिभिः ॥ मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ॥३५॥ कलिं सभाजयंत्यार्या गुणज्ञाः सारभागिनः ॥ यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥३६॥ नह्यतः परमो लाभो देहिनां भ्राम्यतामिह ॥ यतो विंदेत परमां शांतिं नश्यति संसृतिः ॥३७॥ कृतादिषु प्रजा राजन्कलाविच्छंति संभवम् ॥ कलौ खलु भविष्यंति नारायणपरायणाः ॥३८॥ क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥३९॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ ये पिबंति जलं तासां मनुजा मनुजेश्वर ॥ प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥४०॥ देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् ॥ सर्वात्मना यः शरणं शरण्यं गतो मुकुंदं परिहृत्य कर्तम् ॥४१॥

नामरूपाभ्यां युगवर्तिभिर्मनुष्यैर्हरिरिज्यते ॥३५॥ गुणज्ञाः श्रेष्ठास्तु एषु चतुर्षु युगेषु मध्ये कलिमेव संमानयंति। यत्र हरिकीर्तनेनैव सर्वः स्वार्थो लभ्यते ॥३६॥ तस्मात्कलौ हरिनामसंकीर्तनात्परमो लाभो नास्ति। यतस्तेनैव शांतिं प्राप्नोति संसृतिश्च नश्यति ॥३७॥ अतः कृतयुगादिषु वर्तमानाः प्रजाः कलौ जन्मेच्छंति। यतस्तत्र नारायणपरा जना भविष्यंति ॥ ३८ हे महाराज, क्वचित्क्वचिद्द्रविडदेशेषु तत्रापि यत्र ताम्रपर्णी कृतमाला पयस्विनी ॥३९॥ कावेरी प्रतीची च महानद्यः संति। तासां जलं ये पिबंति ते बहुधा भगवति भक्ता भवंति ॥४०॥ यः पुमान् वासुदेवः सर्वमिति बुद्ध्वा सर्वभावेन मुकुंदं शरणं गतः स देवर्षि-पितृ-भूत-मनुष्याणां ऋणी न स्यात् ॥४१॥ ॥ ॥

१ आगमोक्तेन। २ अंगानि हृदयादीनि। उपांगानि कौस्तुभादीनि। अस्त्राणि सुदर्शनादीनि पार्षदाः सुनंदादयस्तत्सहितम्।

किंच । तस्य स्वपादमूलं भजतो भक्तस्य कर्माकरणजनितं पापं न स्यादेव । यदि कथंचित्स्यात्तर्हि तदपि हृदिस्थो हरिर्धुनोति ॥४२॥ नारद उवाच ॥ एवं मिथिलेश्वरो जनको राजा भगवद्धर्मान् श्रुत्वा प्रीतः सन् जयंत्याः पुत्रान् नव योगीश्वरान् पूजयामास ॥४३॥ ततस्ते सिद्धाः सर्वलोकस्य पश्यतः सतोंऽतर्दधिरे । ततो जनकस्तान् धर्माननुतिष्ठन् परमां गतिं प्राप ॥४४॥ हे वसुदेव, त्वमप्येतान् धर्मानास्थितः सन् निःसंगो भूत्वा परं पदं यास्यसि ॥४५॥ यतो युवयोर्दंपत्योः पुत्रतां हरिः प्राप्तः । अतो युवयोर्यशसा जगत्पूर्णमस्ति ॥४६॥ तथा कृष्णे पुत्रस्नेहं कुर्वतोर्युवयोर्देहस्तस्य कृष्णस्य दर्शनालिंगन-भाषण-शयनासन-भोजनैः पवित्रो जातः ॥४७॥ किंच । यं शयनासनादौ वैरेणापि ध्यायंतः शिशुपाल-पौंड्र-शाल्वादयस्तत्सारूप्यं प्रापुः । तस्मिन् पुत्रादिबुद्ध्याऽनुरक्तबुद्धीनां सारूप्यं स्यादिति किं वक्तव्यम् ॥४८॥ हे वसुदेव, मायामनुष्यभावेन गूढैश्वर्ये सर्वात्मनीश्वरे

स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ॥ विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि संनिविष्टः ॥४२॥ नारद उवाच ॥ धर्मान्भागवतानित्थं श्रुत्वाऽथ मिथिलेश्वरः ॥ जायंतेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत् ॥४३॥ ततोंऽतर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ॥ राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥४४॥ त्वमप्येतान्महाभाग धर्मान्भागवतान् श्रुतान् ॥ आस्थितः श्रद्धया युक्तो निःसंगो यास्यसे परम् ॥४५॥ युवयोः खलु दंपत्योर्यशसा पूरितं जगत् ॥ पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ॥४६॥ दर्शनालिंगनालापैः शयनासनभोजनैः ॥ आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥४७॥ वैरेण यं नृपतयः शिशुपालपौंड्रशाल्वादयो गतिविलासविलोकनाद्यैः ॥ ध्यायंत आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥ ४८ ॥ माऽपत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे ॥ मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥४९॥ भूभारासुरराजन्यहंतवे गुप्तये सताम् ॥ अवतीर्णस्य निर्वृत्त्यै यशो लोके वितन्यते ॥५०॥ श्रीशुक उवाच ॥ एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः ॥ देवकी च महाभागा जहतुर्मोहमात्मनः ॥५१॥ इतिहासमिमं पुण्यं धारयेद्यः समाहितः ॥ स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥५२॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे पंचमोऽध्यायः ॥५॥ ॥ श्रीशुक उवाच ॥ अथ ब्रह्माऽऽत्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् ॥ भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः ॥१॥ ॥ ॥

कृष्णे त्वं पुत्रबुद्धिं मा कृथाः ॥४९॥ यतो भूभारभूतानामसुराणां नाशाय साधूनां रक्षणाय चावतीर्णस्य तस्य यशो लोके लोकानां मोक्षार्थं वितन्यते ॥५०॥ श्रीशुक उवाच ॥ एतन्नारदभाषणं श्रुत्वा देवकीवसुदेवौ विस्मितौ भूत्वा स्वमोहं जहतुः ॥५१॥ य इमं पवित्रमितिहासं मनसि धारयेत्सोऽस्मिन्नेव देहे मोहं विधूय ब्रह्मत्वाय कल्पते ॥५२॥ इति श्रीमद्भागवतचू० एकादश० पंचमोऽध्यायः ॥५॥ षष्ठे ब्रह्मादिभिः स्तुत्वा गंतुं विज्ञापितं हरिम् । उद्धवः प्रार्थयामास स्वधाम नय मामिति ॥१॥ श्रीशुक उवाच ॥ अथ सनकादिभिः सह ब्रह्मा भूतगणैः सह शिवः ॥१॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मरुद्गणैः सहेंद्रः आदित्य-वसु-रुद्र-विश्व-साध्याः ॥२॥ गंधर्वाप्सरसः नाग-सिद्ध-चारण-गुह्यका ऋषयः पितरः विद्याधर-किंनराः ॥३॥ एते सर्वे (महानंदयुक्ता नृत्यगीतादियुक्ताश्च) येन वपुषा श्रीकृष्णो लोके यशो विस्तारितवान् तदतिसुंदरं वपुर्द्रष्टुं द्वारकायां जग्मुः । तत्र चाद्भुतदर्शनं कृष्णमवितृप्तनेत्राः संतो ददृशुः ॥४॥५॥ स्वर्गोद्यानस्थैः पुष्पैर्वृष्टिं कुर्वंतः संतः शृंखलाबंध-पदार्थाभिर्गीर्भिः कृष्णं तुष्टुवुः ॥६॥ देवा ऊचुः । हे नाथ, मुमुक्षुभिर्यद्धृदि चिंत्यते तत्ते चरणकमलं वयं नताः स्मः । अहो भाग्यम् ॥७॥ हे अजित, त्वं मायया स्वात्मनि विश्वं सृजसि पासि संहरसि च तथापि तैः कर्मभिरात्मारामस्त्वं न लिप्यसे ॥८॥ हे स्तुत्य, त्वद्यशःश्रवणेन पुष्टया श्रद्धया सतां यथा शुद्धिः स्यात्तथा दुष्टचित्तानां

इंद्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ ॥ ऋभवोंऽगिरसो रुद्रा विश्वे साध्याश्च देवताः ॥२॥ गंधर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ॥ ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥३॥ द्वारकामुपसंजग्मुः सर्वे कृष्णदिदृक्षवः ॥ ( प्रभूतमोदसंयुक्ता नृत्यगीतकृतश्रमाः ॥ ) वपुषा येन भगवान्नरलोकमनोरमः ॥ यशो वितेने लोकेषु सर्वलोकमलापहम् ॥४॥ तस्यां विभ्राजमानायां समृद्धायां महर्धिभिः ॥ व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥५॥ स्वर्गोद्यानोपगैर्माल्यैश्छादयंतो यदूत्तमम् ॥ गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥६॥ ॥ देवा ऊचुः ॥ नताः स्म ते नाथ पदारविंदं बुद्धींद्रियप्राणमनोवचोभिः ॥ यच्चिंत्यतेंऽतर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥७॥ त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुंपसि तद्गुणस्थः ॥ नैतैर्भवानजित कर्मभिरज्यते वै यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥८॥ शुद्धिर्नृणां न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः ॥ सत्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥९॥ स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ॥ यः सात्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय ॥१०॥ यश्चिंत्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा ॥ अध्यात्मयोग उत योगिभिरात्ममायां जिज्ञासुभिः परमभागवतैः परीष्टः ॥११॥ पर्युष्टया तव विभो वनमालयेयं संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः ॥ यः सुप्रणीतममुयाऽर्हणमाददन्नो भूयात्सदांघ्रिरशुभाशयधूमकेतुः ॥१२॥ ॥ ॥ ॥ ॥ ॥

पुरुषाणामुपासनादिभिः शुद्धिर्न स्यात् ॥९॥ हे प्रभो, यस्तव चरणः मुमुक्षुभिर्मोक्षार्थं चिंतितः । भक्तैः समानैश्वर्याय पूजितः । ज्ञानिभिर्वैकुंठप्राप्तये पूजितः । याज्ञिकैर्यज्ञे हविर्गृहीत्वा चिंतितः । योगिभिरणिमादिसिद्ध्यर्थं चिंतितः । तथा मुक्तैः सर्वप्रकारेण पूजितः सोऽस्माभिर्दृष्टः । सोऽस्माकं विषयवासना-दाहको भवतु ॥१०॥११॥ यस्त्वं भक्तार्पितया वनमालया सह सपत्नीमिव स्पर्धमानां लक्ष्मीमनादृत्य पर्युषितयापि वनमालया भक्तैरर्पितेयमिति प्रीत्या सुष्ठु संपादितं पूजनं स्वीकृतवान् । तस्य तव चरणो नो विषय-

१ यत्र श्लोकस्यांतिमेन पदेन तदर्थेन वाऽन्यः श्लोक आरभ्यते स शृंखलाबंधः । सोऽत्र स्तुतावस्ति ।

वासना-दाहकः स्यात् ॥१२॥ हे ईश, यस्ते चरणो वलिबंधने त्रिभिर्विक्रमैर्युतः दैत्य-देवसैन्ययोर्भयाभयकरः गंगारूपया पताकया युक्त उच्छ्रितो विजयध्वज इव जातः । स नः पुनातु ॥१३॥ हे भगवन्, ब्रह्मादयः सर्वेऽपि नासिकामाविद्ध्य बद्धा वृषभा इवास्वतंत्राः संतः कालरूपस्य तव वशे भवंति । एवंभूतस्य तव चरणोऽस्माकं कल्याणं करोतु ॥१४॥ हे उत्तमपूरुष, अस्य जगत उत्पत्ति-पालन-नाशानां त्वं हेतुरसि । प्रकृत्यादीनां नियंता कालश्च त्वमेवासि ॥१५॥ पुरुषस्त्वत्तः शक्तिं प्राप्य मायायां गर्भमिव महत्तत्वं धत्ते । स महान् सप्तावरणसहितं ब्रह्मांडकोशं ससर्ज ॥१६॥ अतस्त्वमस्य स्थावरजंगमात्मकस्य जगत ईश्वरोऽसि । हे हृषीकपते, त्वं माययोत्पन्नेंद्रियवृत्त्या विषयान् सेवमानोऽपि तैर्न

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ॥ स्वर्गाय साधुषु खलेष्वितराय भूमन्पादः पुनातु भगवन्भजतामघं नः ॥१३॥ नस्योतगाव इव यस्य वशे भवंति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ॥ कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥१४॥ अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ॥ सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥१५॥ त्वत्तः पुमान्समधिगम्य ययाऽस्य वीर्यं धत्ते महांतमिव गर्भममोघवीर्यः ॥ सोऽयं तयाऽनुगत आत्मन आंडकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥१६॥ तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ॥ अर्थान् जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥१७॥ स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्यस्तु षोडशसहस्रमनंगबाणैर्यस्येंद्रियं विमथितुं करणैर्न विभ्व्यः ॥१८॥ विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हंतुम् ॥ आनुश्रवं श्रुतिभिरंघ्रिजमंगसंगैस्तीर्थद्वयं शुचिषदस्त उपस्पृशंति ॥१९॥ बादरायणिरुवाच ॥ इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम् ॥ अभ्यभाषत गोविंदं प्रणम्यांबरमाश्रितः ॥२०॥ ब्रह्मोवाच ॥ भूमेर्भारावताराय पुरा विज्ञापितः प्रभो ॥ त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥२१॥ धर्मश्च स्थापितः सत्सु सत्यसंधेषु वै त्वया ॥ कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥२२॥ अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ॥ कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ॥२३॥ ॥ ॥ ॥ ॥

लिप्तोऽसि । अन्ये जीवास्तु विषयसेवनाद्वासनामात्रेण बद्ध्यंते ॥१७॥ षोडशसहस्रं पत्न्यस्तु कामबाणैर्यस्य ते मनो वशीकर्तुं न समर्थाः । स भवान् कर्मभिरलिप्तः ॥१८॥ हे ईश, तव कथामृतनद्यो गंगाद्या नद्यश्च त्रिलोक्याः पापानि हंतुं समर्थाः संति । अतो ये वर्णाश्रमधर्मस्थिता जनास्ते तत्कथामृतरूपं गंगारूपं च तीर्थं श्रवणेंद्रियेणांगसंगेन च सेवंते ॥१९॥ बादरायणिरुवाच ॥ एवं स्तुत्वा देवैः सह ब्रह्मा हरिं प्रणम्य आकाशमाश्रित्योवाच ॥२०॥ ब्रह्मोवाच ॥ हे प्रभो, अस्माभिर्भूभारहरणाय यथा पूर्वं त्वं विज्ञापितस्तथैव त्वया संपादितम् ॥२१॥ तथा त्वया सत्सु धर्मः स्थापितः । कीर्तिश्च दिक्षु विस्तारिता ॥२२॥ यदोर्वंशेऽवतीर्य जगतो हितार्थं कर्माणि कृतवान् ॥२३॥ ॥

तानि तव चरित्राणि कलौ साधवो मनुष्याः श्रृण्वंतः कीर्तयंतश्च संतोऽनायासेन संसारं तरिष्यंति ॥२४॥ हे कृष्ण, यदुकुलेऽवतीर्णस्य तव पंचविंशाधिकं वर्षाणां शतं विनिर्गतम् ॥२५॥ तथा देवकार्यमपि नावशिष्टम्। इदं यदुकुलं च विप्रशापेन नष्टप्रायम् ॥२६॥ अतो यदि त्वं मन्यसे तर्हि स्वं वैकुंठं प्रविश। लोकैश्च सहितानस्मान् पाहि ॥२७॥ ( श्रीशुक उवाच ॥ एवं ब्रह्मादिदेवैः स्तुतो भगवान् तान् प्रतिनंद्याह ॥१॥ ) श्रीभगवानुवाच ॥ हे ब्रह्मन्, त्वया यदुक्तं तन्मयाऽवधारितम्। वः सर्वं कार्यं कृतम्। भूमेर्भारोऽवतारितः ॥२८॥ इदं च श्रियोन्मत्तं लोकघातकं यादवकुलं मया विप्रशापेन निरुद्धम् ॥२९॥ यदीदमसंहृत्याहं गमिष्यामि तर्ह्यनेनायं लोको नंक्ष्यति ॥३०॥ अत इदानीं ब्राह्मणशापा-

यानि ते चरितानीश मनुष्याः साधवः कलौ ॥ श्रृण्वंतः कीर्तयंतश्च तरिष्यंत्यंजसा तमः ॥२४॥ यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ॥ शरच्छतं व्यतीयाय पंचविंशाधिकं प्रभो ॥२५॥ नाधुना तेऽखिलाधार देवकार्यावशेषितम् ॥ कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥२६॥ ततः स्वधाम परमं विशस्व यदि मन्यसे ॥ सलोकाँल्लोकपालान्नः पाहि वैकुंठकिंकरान् ॥२७॥ ( श्रीशुक उवाच ॥ संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ॥ प्रतिनंद्याह तान् राजन् मायामनुज ईश्वरः ॥१॥ ) श्रीभगवानुवाच ॥ अवधारितमेतन्मे यदात्थ विबुधेश्वर ॥ कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥२८॥ तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ॥ लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥२९॥ यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ॥ गंतास्म्यनेन लोकोऽयमुद्वेलेन विनंक्ष्यति ॥३०॥ इदानीं नाश आरब्धः कुलस्य द्विजशापतः ॥ यास्यामि भवनं ब्रह्मन्नेतदंते तवानघ ॥३१॥ श्रीशुक उवाच ॥ इत्युक्तो लोकनाथेन स्वयंभूः प्रणिपत्य तम् ॥ सह देवगणैर्देवः स्वधाम समपद्यत ॥३२॥ अथ तस्यां महोत्पातान्द्वारवत्यां समुत्थितान् ॥ विलोक्य भगवानाह यदुवृद्धान्समागतान् ॥३३॥ श्रीभगवानुवाच ॥ एते वै सुमहोत्पाता व्युत्तिष्ठंतीह सर्वतः ॥ शापश्च नः कुलस्यासीद्ब्राह्मणेभ्यो दुरत्ययः ॥३४॥ न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ॥ प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव मा चिरम् ॥३५॥ यत्र स्नात्वा दक्षशापाद्गृहीतो यक्ष्मणोडुराट् ॥ विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयम् ॥३६॥ वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितृन्सुरान् ॥ भोजयित्वोशिजो विप्रान्नानागुणवतांऽधसा ॥३७॥ ॥ ॥

त्कुलस्य नाश आरब्धः। एतस्यांते वैकुंठं यास्यन्नहं तव भवनं यास्यामि ॥३१॥ श्रीशुक उवाच ॥ एवं श्रीकृष्णेनोक्तो ब्रह्मा देवैः सह तं प्रणम्य स्वधाम जगाम ॥३२॥ अथ द्वारकायामुत्पन्नान् महोत्पातान् दृष्ट्वा श्रीकृष्णो यदुवृद्धानाह ॥३३॥ श्रीभगवानुवाच ॥ हे यादवाः, एत उत्पाताः सर्वत उत्तिष्ठंति। अस्माकं कुलस्य च विप्रशाप आसीत् ॥३४॥ अतोऽत्र जिजीविषुभिरस्माभिर्न वस्तव्यम्। अद्यैव वयं पुण्यं प्रभासक्षेत्रं यास्यामः। मा चिरम् ॥३५॥ दक्षशापात् क्षयरोगव्याप्तोऽपि चंद्रो यत्र प्रभासक्षेत्रे स्नात्वा रोगान्मुक्तः सन् पुनः कलावृद्धिं भेजे ॥३६॥ अतो वयं तत्र गत्वा स्नात्वा देवपितॄन् तर्पयित्वा विप्रान् श्रेष्ठेनान्नेन भोजयित्वा ॥३७॥ ॥ ॥ ॥

तेभ्यो महादानानि दत्वा दुःखानि तरिष्यामः ॥३८॥ श्रीशुक उवाच ॥ एवं भगवता आज्ञप्ता यादवास्तत्तीर्थं गंतुं रथानयूयुजन् ॥३९॥ तदा भगवतोदितं सर्वं श्रुत्वाऽरिष्टानि च दृष्ट्वोद्धवः ॥४०॥ श्रीकृष्णमेकांते संगम्य पादौ प्रणम्य प्रांजलिराह ॥४१॥ उद्धव उवाच ॥ हे देवदेवेश, एतत्कुलं संहृत्य त्वं मनुष्यलोकं नूनं त्यक्तुमिच्छसि । यतो विप्रशापं दूरीकर्तुं समर्थोऽपि न प्रतिहतवानसि ॥४२॥ अहं तु तव चरणकमलं क्षणार्धमपि त्यक्तुं नोत्सहे । अतो हे नाथ, स्वधाम मामपि नय ॥४३॥ हे कृष्ण, जनस्तव लीलामृतं श्रुत्वा धनपुत्रादिस्पृहां त्यजति ॥४४॥ अतः शय्याऽऽसन-गमन-स्नान-भोजन-क्रीडादिषु त्वां नित्यं सेवितवंतो वयमधुना त्वां कथं त्यजेम ॥४५॥ त्वयोपभुक्तानि यानि माला-गंध-वस्त्रा-

तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महांति वै ॥ वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥३८॥ श्रीशुक उवाच ॥ एवं भगवताऽऽदिष्टा यादवाः कुलनंदन ॥ गंतुं कृतधियस्तीर्थं स्यंदनान्समयूयुजन् ॥३९॥ तन्निरीक्ष्योद्धवो राजन् श्रुत्वा भगवतोदितम् ॥ दृष्ट्वाऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥४०॥ विविक्त उपसंगम्य जगतामीश्वरेश्वरम् ॥ प्रणम्य शिरसा पादौ प्रांजलिस्तमभाषत ॥४१॥ उद्धव उवाच ॥ देवदेवेश योगेश पुण्यश्रवणकीर्तन ॥ संहृत्यैतत्कुलं नूनं लोकं संत्यक्ष्यते भवान् ॥ विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥४२॥ नाहं तवांघ्रिकमलं क्षणार्धमपि केशव ॥ त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥४३॥ तव विक्रीडितं कृष्ण नृणां परममंगलम् ॥ कर्णपीयूषमास्वाद्य त्यजत्यन्यस्पृहां जनः ॥४४॥ शय्यासनाटनस्थानस्नानक्रीडाशनादिषु ॥ कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥४५॥ त्वयोपभुक्तस्रग्गंधवासोऽलंकारचर्चिताः ॥ उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥४६॥ वाताशना य ऋषयः श्रमणा ऊर्ध्वमंथिनः ॥ ब्रह्माख्यं धाम ते यांति शांताः संन्यासिनोऽमलाः ॥४७॥ वयं त्विह महायोगिन्भ्रमंतः कर्मवर्त्मसु ॥ त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥४८॥ स्मरंतः कीर्तयंतस्ते कृतानि गदितानि च ॥ गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडंबनम् ॥४९॥ श्रीशुक उवाच ॥ एवं विज्ञापितो राजन्भगवान्देवकीसुतः ॥ एकांतिनं प्रियं भृत्यमुद्धवं समभाषत ॥५०॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे षष्ठोऽध्यायः ॥६॥ श्रीभगवानुवाच ॥ यदात्थ मां महाभाग तच्चिकीर्षितमेव मे॥ ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकांक्षिणः॥१॥ ॥ ॥ ॥

लंकारादीनि तैरलंकृतदेहा दासा वयं तव मायां जयेम ॥४६॥ संन्यासिनो हि ब्रह्मचर्यादिक्लेशैः कथंचित्तरंति ॥४७॥ वयं तु तव कर्माणि भाषणानि च स्मरंतः कीर्तयंतः संतस्त्वद्भक्तैः सह त्वद्वार्तया दुस्तरमपि संसारमनायासेन तरिष्यामः ॥४८॥४९॥ श्रीशुक उवाच ॥ हे राजन्, एवं प्रार्थितः स भगवानेकांतिनं प्रियं भक्तमुद्धवं समभाषत ॥५०॥ ॥ इति श्रीमद्भागवतचूर्णिकायां एकादशस्कंधे षष्ठोऽध्यायः ॥६॥ ॥ सप्तमे तूद्धवस्यात्मज्ञानसिद्ध्यै हरिः स्वयम् । अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, त्वं मां यद्वदसि तन्मे कर्तुमिष्टमेव । ब्रह्मशिवादयोऽपि मम वैकुंठवासमिच्छंति ॥१॥ ॥ ॥ ॥ ॥

हे उद्धव, ब्रह्मणा प्रार्थितोऽहं यदर्थमवतीर्णस्तत्सर्वं देवकार्यं संपादितम् ॥२॥ इदं च यदुकुलमन्योन्यद्वेषान्नंक्ष्यति । ततः सप्तमेऽहनि द्वारकां समुद्रः प्लावयिष्यति ॥३॥ यदेमं लोकमहं त्यजिष्ये तदैवायं लोको नष्टमंगलः कलिव्याप्तश्च भविष्यति ॥४॥ अतो हे सखे, मया त्यक्ते महीतले त्वया न वस्तव्यम् । यतोऽयं जनोऽधर्मरुचिर्भविष्यति ॥५॥ तस्मात्त्वं स्वजनबंधुषु स्नेहं हित्वा मयि मन आवेश्य समदृक् सन् महीं विचरस्व ॥६॥ किंच । मनो-वाक्-चक्षुः-श्रवणादिभिर्यद्गृह्यमाणं तत्सर्वं मनोमयत्वान्मायिकं क्षणभंगुरं च जानीहि ॥७॥ यतो विक्षिप्तचित्तस्य पुरुषस्य भेदविषयो यो भ्रमो भवति स एव गुण-दोष-बुद्ध्युत्पादको जायते ॥८॥ तस्मादिंद्रियाणि मनश्च जित्वेदं जगज्जीवात्मनि पश्य ।

मया निष्पादितं ह्यत्र देवकार्यमशेषतः ॥ यदर्थमवतीर्णोऽहमंशेन ब्रह्मणाऽर्थितः ॥२॥ कुलं वै शापनिर्दग्धं नंक्ष्यत्यन्योन्यविग्रहात् ॥ समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥३॥ यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमंगलः ॥ भविष्यत्यचिरात्साधो कलिनापि निराकृतः ॥४॥ न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ॥ जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥५॥ त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबंधुषु ॥ मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गाम् ॥६॥ यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ॥ नश्वरं गृह्यमाणं च विद्धि माया मनोमयम् ॥७॥ पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक् ॥ कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥८॥ तस्माद्युक्तेंद्रियग्रामो युक्तचित्त इदं जगत् ॥ आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥९॥ ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ॥ आत्मानुभवतुष्टात्मा नांतरायैर्विहन्यसे ॥१०॥ दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ॥ गुणबुद्ध्या च विहितं न करोति यथाऽर्भकः ॥११॥ सर्वभूतसुहृच्छांतो ज्ञानविज्ञाननिश्चयः ॥ पश्यन्मदात्मकं विश्वं न विपद्येत वै पुनः ॥१२॥ श्रीशुक उवाच ॥ इत्यादिष्टो भगवता महाभागवतो नृप ॥ उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥१३॥ उद्धव उवाच ॥ योगेश योगविन्यास योगात्मन्योगसंभव ॥ निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥१४॥ त्यागोऽयं दुष्करो भूमन्कामानां विषयात्मभिः ॥ सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥१५॥ ॥ ॥ ॥

तं च जीवात्मानं मयि ब्रह्मरूपे तद्रूपेण पश्य ॥९॥ ततो ज्ञान-विज्ञान-संयुक्तः स्वानुभवतुष्टः सन् विघ्नैर्न बाध्यसे ॥१०॥ गुणदोष-बुद्ध्यतीतोऽपि स ज्ञानी बालक इव प्राक्तनसंस्कारवशाद्विहितं कर्म करोति निषिद्धं च त्यजति ॥११॥ एवंभूतः पुरुषो मदात्मकं विश्वं पश्यन् पुनः संसारं न प्राप्नोति ॥१२॥ श्रीशुक उवाच । हे राजन्, एवं भगवताऽऽज्ञापित उद्धवस्तत्त्वजिज्ञासुः सन् पुनः कृष्णं नत्वा जगाद ॥१३॥ उद्धव उवाच ॥ हे योगेश, हे योगात्मन्, अयं संन्यासलक्षणस्त्यागो मम मोक्षार्थं त्वयोक्तः ॥१४॥ तथापि स विषयात्मभिर्दुष्करः अभक्तैश्चातिदुष्कर इति मे मतिरस्ति ॥१५॥ ॥ ॥ ॥ ॥ ॥

१ ज्ञानं वेदतात्पर्यनिश्चयः । विज्ञानं तदर्थानुभवः ताभ्यां सम्यग् युक्तः । २ यथा बालकः संकल्पविकल्परहितः किंचित्करोति कुतश्चिन्निवर्तते तद्वत् ।

सोऽहं त्वन्मायारचिते पुत्रादिसहिते देहे ममाहमिति मूढबुद्ध्या निमग्नोऽस्मि । अतस्त्वदुक्तं यथाऽनायासेन जानामि तथा मां शिक्षय ॥१६॥ त्वया विनाऽन्यमुपदेशकर्तारं देवे-ष्वप्यहं न पश्यामि । यतो ब्रह्मादयस्त्वन्मायया मोहितधियः संति ॥१७॥ अत आध्यात्मिकादिदुःखैस्तप्तो विरक्तबुद्धिश्चाहं जीवसखायं नारायणं त्वामेव शरणं प्रपद्ये ॥१८॥ श्रीभगवानुवाच ॥ हे उद्धव, इह लोके लोकतत्त्वपरीक्षका मनुष्याः प्रायेण स्वयमेवात्मानं विषयवासनात उद्धरिष्यंति ॥१९॥ यतः पुरुषस्यात्मैव हिताहितज्ञाने गुरुरस्ति । तेनासौ पुरुषः प्रत्यक्षानुमानाभ्यां श्रेयो विंदते ॥२०॥ तत्र प्रत्यक्षमाह । ये बुद्धिमंतः पुरुषास्ते पुरुषशरीर एव मां सुलभत्वेन पश्यंति ॥२१॥ यत एक-द्वि-त्रि-चतुष्पादाद्या बह्व्यस्तनवः

सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबंधे ॥ तत्त्वंजसा निगदितं भवता यथाऽहं संसाधयामि भगवन्ननुशाधि भृत्यम् ॥१६॥ सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेष्वपि नानुचक्षे ॥ सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥१७॥ तस्माद्भवंतमनवद्यमनंतपारं सर्वज्ञमीश्वरमकुंठविकुंठधिष्ण्यम् ॥ निर्विण्णधीरहमु ह वृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥१८॥ श्रीभगवानुवाच ॥ प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ॥ समुद्धरंति ह्यात्मानमात्मनैवाशुभाशयात् ॥१९॥ आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ॥ यत्प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविंदते ॥२०॥ पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ॥ आविस्तरां प्रपश्यंति सर्वशक्त्युपबृंहितम् ॥२१॥ एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः ॥ बह्व्यः संति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥२२॥ अत्र मां मार्गयंत्यद्धा युक्ता हेतुभिरीश्वरम् ॥ गृह्यमाणैर्गुणैर्लिंगैरग्राह्यमनुमानतः ॥२३॥ अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ अव-धूतस्य संवादं यदोरमिततेजसः ॥२४॥ अवधूतं द्विजं कंचिच्चरंतमकुतोभयम् ॥ कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥२५॥ यदुरु-वाच ॥ कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ॥ यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥२६॥ प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः॥हेतुनैव समीहंते आयुषो यशसः श्रियः॥२७॥त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः॥न कर्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् ॥२८॥

संति तासां मध्ये पौरुषी तनूर्मे प्रियाऽस्ति ॥२२॥ अनुमानमाह । अत्र पुरुषशरीरे ज्ञानिनो मामनुमानतः[1] शोधयंति ॥२३॥ अस्मिन्विषये दत्तात्रेयस्य यदुराज्ञश्च संवादरूपमिति-हासं कथयंति ॥२४॥ हे उद्धव, यदुः कंचिदवधूतं तरुणं निर्भयं चरंतं विप्रं दृष्ट्वा पप्रच्छ ॥२५॥ यदुरुवाच ॥ हे ब्रह्मन्, कर्म न कुर्वतस्तवातिनिपुणा सर्वलोकविलक्षणेयं बुद्धिः कुतः प्राप्ता । यां बुद्धिं प्राप्य त्वं विद्वानपि बालवल्लोके चरसि ॥२६॥ हे द्विज, बहुधा मनुष्या आयुःसंपत्त्यादिकामनया धर्मार्थकामेषु प्रवर्तंते ॥२७॥ त्वं तु समर्थश्चतुरो विद्वा-नपि जडोन्मत्तपिशाचवत्कर्म न करोषि न च किंचिदिच्छसि ॥२८॥ ॥ ॥ ॥ ॥ ॥ ॥

१ जडानामिंद्रियाणां प्रकाशः स्वप्रकाशमेकं विना न घटत इत्यनुमानम् ।

तथा कामलोभदवाग्निना जनेषु दह्यमानेषु सत्सु त्वं गंगाजलस्थो गज इव न तप्यसे ॥२९॥ एवं विषयभोगरहितस्य तवानंदकारणं किमस्ति तत्पृच्छतां नो ब्रूहि ॥३०॥ श्रीभगवानुवाच ॥ एवं यदुना पृष्टो द्विजो नम्रतायुक्तं तं नृपं जगाद ॥३१॥ ब्राह्मण उवाच ॥ मम बुद्ध्या स्वीकृता बहवो गुरवः संति । येभ्यस्तां तां बुद्धिं गृहीत्वाऽहं जीवन्मुक्तः सन्निह भ्रमामि तान् गुरून् शृणु ॥३२॥ पृथिवी । वायुः । आकाशं । जलं । अग्निः । चंद्रः । सूर्यः । कपोतः । अजगरः । समुद्रः । पतंगः । मधुमक्षिका । गजः ॥३३॥ भ्रमरः । हरिणः । मीनः । पिंगला । कुररः । बालकः । कुमारी । बाणकर्ता । सर्पः । ऊर्णनाभिः । सुपेशकृत्[1] ॥३४॥ हे राजन्, एते चतुर्विंशतिर्गुरवो मया स्वीकृताः । एतेषां वर्तनैस्त्याज्यस्वीकार्यान् गुणानहं शिक्षितवानस्मि ॥३५॥ हे यदो, तत्र यतो यन्मया शिक्षितं तद्वदामि त्वं शृणु ॥३६॥ तत्र पृथिव्याः शिक्षितमाह । दैवाधीनैः प्राणिभिः पीड्यमानोऽपि

जनेषु दह्यमानेषु कामलोभदवाग्निना ॥ न तप्यसेऽग्निना मुक्तो गंगांभःस्थ इव द्विपः ॥२९॥ त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानंदकारणम् ॥
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥३०॥ श्रीभगवानुवाच ॥ यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ॥ पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥३१॥ ब्राह्मण उवाच ॥ संति मे गुरवो राजन्बहवो बुद्ध्युपाश्रिताः ॥ यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ॥३२॥ पृथिवी वायुराकाशमापोऽग्निश्चंद्रमा रविः ॥ कपोतोऽजगरः सिंधुः पतंगो मधुकृद्गजः ॥३३॥ मधुहा हरिणो मीनः पिंगला कुररोऽर्भकः ॥ कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत् ॥३४॥ एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः ॥ शिक्षा वृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥३५॥ यतो यदनुशिक्षामि यथा वा नाहुषात्मज ॥ तत्तथा पुरुषव्याघ्र निबोध कथयामि ते ॥३६॥ भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ॥ तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥३७॥ शश्वत्परार्थसर्वेहः परार्थैकांतसंभवः ॥ साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥३८॥ प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेंद्रियप्रियैः ॥ ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥३९॥ विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः ॥ गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥४०॥ पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ॥ गुणैर्न युज्यते योगी गंधैर्वायुरिवात्मदृक् ॥४१॥ ॥

साधुस्तेषां दैवाधीनत्वं जानन् सन् स्वमार्गान्न चलेदिति भूमेः क्षमा शिक्षिता ॥३७॥ तथा पर्वत[2]रूपभूमेः परार्थसर्वव्यापारत्वं शिक्षितम् । तथा वृक्ष[3]रूपभूमेः पराधीनात्मता शिक्षिता ॥३८॥ वायोः शिक्षितमाह । वायुर्द्विविधः । प्राणो बाह्यश्च । तत्र प्राणो ह्याहारादिमात्रेण प्रवर्तते । रूपरसादीनिंद्रियविषयान् नापेक्षते तथा मुनिनापि आहारादिमात्रेण संतोषं प्राप्य देहनिर्वाहः कर्तव्य इति प्राणवायोः शिक्षितम् ॥३९॥ शीतोष्णादिधर्मान् विषयान् सेवमानोऽपि योगी वायुवत्तेष्वासक्तिं न कुर्यात् ॥४०॥ तथा बाल्यादीन् देहधर्मानाश्रित्य वर्तमानोऽपि योगी तैर्देहधर्मैर्न युज्यते । गंधधर्मैर्वायुरिवेति बाह्यवायोः शिक्षितम् ॥४१॥ ॥ ॥ ॥ ॥

---

१ शोभनं रूपं कीटस्य करोतीति सुपेशकृत् । २ पर्वतस्य हि वृक्ष-तृण-निर्झरादिकं सर्वं परार्थमेवास्ति । ३ वृक्षो यथा परैरवखंड्योत्पाट्य वा नयनमप्यनुमन्यते तद्वत् ।

आकाशाच्छिक्षितमाह । आकाशमप्यांतरं वाह्यं चेति द्विविधम् । तत्र मुनिः स्थावरजंगमेषु ब्रह्मात्मभावेन व्यापकस्यात्मनोंऽतराकाशवदसंगत्वं भावयेदित्यंतराकाशाच्छिक्षितम् ॥४२॥ पृथिव्यप्तेजोमयैर्देहादिगुणैः पुमान् वायुना प्रेरितैर्मेघाद्यैराकाशमिव न स्पृश्यत इति वाह्याकाशाच्छिक्षितम् ॥४३॥ जलाच्छिक्षितमाह । स्वच्छत्व-मधुरत्व-स्निग्धत्व-पवित्रत्वादिगुणैः अवलोकन-स्पर्श-कीर्तनैश्चोदकं यथा जगत्पुनाति तद्वन्मुनिरपि भवेत् ॥४४॥ अग्नेः शिक्षितमाह । यथाग्निस्तेजस्वी सर्वभक्षोऽपि मलं नादत्ते क्वचिच्छन्नः क्वचित्स्पष्टश्च सन् अन्येच्छया हविर्गृह्णाति दातृणां पापं च नाशयति तथा मुनिरपि भवेत् ॥४५॥४६॥ किंच । स्वमायया सृष्टमिदं विश्वंप्रति प्रविष्ट आत्मा देवतिर्यगादिषु काष्ठेष्वग्निरिव तत्तत्स्वरूपो भासते इत्यग्नेः शिक्षितम् ॥४७॥ चंद्राच्छिक्षितमाह । यथा चंद्रस्य कलानामेव क्षयवृद्ध्यादयो भवंति न चंद्रस्य तथा देहस्यैव जन्मादिविकारा भवंति नात्मन इति

अंतर्हितश्च स्थिरजंगमेषु ब्रह्मात्मभावेन समन्वयेन ॥ व्याप्त्याऽव्यवच्छेदमसंगमात्मनो मुनिर्नभस्त्वं विततस्य भावयेत् ॥४२॥ तेजोऽवन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ॥ न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः पुमान् ॥४३॥ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम् ॥ मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ॥४४॥ तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ॥ सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥४५॥ क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः श्रेय इच्छताम् ॥ भुंक्ते सर्वत्र दातृणां दहन्प्रागुत्तराशुभम् ॥४६॥ स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ॥ प्रविष्ट ईयते तत्तत्सरूपोऽग्निरिवैधसि ॥४७॥ विसर्गाद्याः श्मशानांता भावा देहस्य नात्मनः ॥ कलानामिव चंद्रस्य कालेनाव्यक्तवर्त्मना ॥४८॥ कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ ॥ नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ॥४९॥ गुणैर्गुणानुपादत्ते यथाकालं विमुंचति ॥ न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥५०॥ बुध्यते स्वेन भेदेन व्यक्तिस्थ इव तद्गतः ॥ लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोऽर्कवत् ॥५१॥ नातिस्नेहः प्रसंगो वा कर्तव्यः क्वापि केनचित् ॥ कुर्वन्विंदेत संतापं कपोत इव दीनधीः ॥५२॥ कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ॥ कपोत्या भार्यया सार्धमुवास कतिचित्समाः ॥५३॥ कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ॥ दृष्टिं दृष्ट्यांऽगमंगेन बुद्धिं बुद्ध्या बबंधतुः ॥५४॥

चंद्राच्छिक्षितम् ॥४८॥ हे यदो, कालेन देहानां प्रतिक्षणं जायमानौ जन्ममृत्यू अग्निज्वालावन्न दृश्येते इदं वैराग्यार्थमग्नेरेव शिक्षितम् ॥४९॥ सूर्याच्छिक्षितमाह । यथा सूर्यः किरणैर्जलान्याकर्षते मुंचति च तथा योगी इंद्रियैर्विषयान् गृह्णाति याचके प्राप्ते सति ददाति च । तथापि तेषु इदं लब्धमिदं दत्तमिति चाभिनिवेशं न करोति ॥५०॥ किंच । भेदहीनोऽप्यात्मा घटादिषु प्रतिविंवितः सूर्य इवोपाधिवशाद्भिन्नोऽवभासते इति सूर्याच्छिक्षितम् ॥५१॥ कपोताच्छिक्षितमाह । हे यदो, केनापि पुरुषेण क्वापि पुत्रादावतिप्रीतिरासक्तिश्च न कर्तव्या । कुर्वन् सन् कपोत इव संतापं विंदेत ॥५२॥ हे राजन्, कश्चित्कपोतोऽरण्ये वृक्षोपरि कृतनीडः सन् कपोत्या पत्न्या सह कतिचिद्वर्षाण्युवास ॥५३॥ ततस्तौ स्नेहवद्धहृदयौ दंपती शय्यासन-क्रीडाशनादिषु एकीभूय निःशंकौ वनपंक्तिषु चेरतुः ॥५४॥ ॥ ॥ ॥

॥५५॥ सा कपोती यं यं मनोरथं वांछति तं तं कपोतः संपादयामास ॥५६॥ ततः सा कपोतात् प्रथमं गर्भं धृत्वा काले प्राप्ते सति पतिसन्निधावंडानि सुषुवे ॥५७॥ तेषु जलभरितेष्वंडेषु कालेन हरेः शक्तिभिः कोमलावयव-रोमयुक्ताः पक्षिणो जाताः ॥५८॥ पुत्रवत्सलौ तौ दंपती तासां मधुरभाषणं शृण्वंतौ संतौ तासां पक्षस्पर्शैर्बालचेष्टितैः प्रत्यागमनैश्च हर्षं प्रापतुः ॥५९॥६०॥ विष्णुमायया मोहितौ परस्परस्नेहयुक्तौ तौ शिशून् पुपुषतुः ॥६१॥ एकदा तेषामन्नार्थं तौ दंपती समीपस्थे वने चेरतुः ॥६२॥ तस्मिन् समये कश्चिल्लुब्धको नीडसमीपे बालान् दृष्ट्वा जालं प्रसार्य तान् जगृहे ॥६३॥ ततस्तौ दंपती भक्ष्यं गृहीत्वा स्वनीडं प्राप्तौ ॥६४॥ तदा कपोती स्वात्मजान् जालवेष्टितान् दृष्ट्वा क्रोशंती

शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् ॥ मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥५५॥ यं यं वांछति सा राजंस्तर्पयंत्यनुकंपिता ॥ तं तं समनयत्कामं कृच्छ्रेणाप्यजितेंद्रियः ॥५६॥ कपोती प्रथमं गर्भं गृह्णती काल आगते ॥ अंडानि सुषुवे नीडे स्वपत्युः संनिधौ सती ॥५७॥ तेषु काले व्यजायंत रचितावयवा हरेः ॥ शक्तिभिर्दुर्विभाव्याभिः कोमलांगतनूरुहाः ॥५८॥ प्रजाः पुपुषतुः प्रीतौ दंपती पुत्रवत्सलौ ॥ शृण्वंतौ कूजितं तासां निर्वृतौ कलभाषितैः ॥५९॥ तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ॥ प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥६०॥ स्नेहानुबद्धहृदयावन्योऽन्यं विष्णुमायया ॥ विमोहितौ दीनधियौ शिशून्पुपुषतुः प्रजाः ॥६१॥ एकदा जग्मतुस्तासामन्नार्थं तौ कुटुंबिनौ ॥ परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥६२॥ दृष्ट्वा ताँल्लुब्धकः कश्चिद्यदृच्छातो वनेचरः ॥ जगृहे जालमातत्य चरतः स्वालयांतिके ॥६३॥ कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ॥ गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥६४॥ कपोती स्वात्मजान्वीक्ष्य बालकान्जालसंवृतान् ॥ तानभ्यधावत्क्रोशंती क्रोशतो भृशदुःखिता ॥६५॥ साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया ॥ स्वयं चाबध्यत शिचा बद्धान्पश्यंत्यपस्मृतिः ॥६६॥ कपोतश्चात्मजान्बद्धानात्मनोऽप्यधिकान्प्रियान् ॥ भार्यां चात्मसमां दीनो विललापातिदुःखितः ॥६७॥ अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ॥ अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥६८॥ अनुरूपाऽनुकूला च यस्य मे पतिदेवता ॥ शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ६९ ॥ सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः ॥ जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥७०॥ तांस्तथैवावृतान् शिग्भिर्मृत्युग्रस्तान्विचेष्टतः ॥ स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥७१॥ ॥ ॥ ॥

दुःखिता सती बालकसमीपं जगाम ॥६५॥ सा बद्धान् पश्यंत्यपि विष्णुमायया स्मृतिरहिता भूत्वा स्वयमपि जालेनाबद्ध्यत ॥६६॥ ततः कपोतो भार्यां बालांश्च जालेन बद्धान् वीक्ष्य दुःखितः सन् विललाप ॥६७॥ अहो अल्पपुण्यस्य दुर्मतेर्मे नाशं पश्यत । यतोऽतृप्तस्य मे धर्मार्थ-काम-संपादको गृहस्थाश्रमो नष्टः ॥६८॥ इयं ममानुकूला पतिव्रता मे स्त्री मां हित्वा पुत्रैः सह स्वर्गं याति ॥६९॥ अतो मृतदारपुत्रोऽहं शून्ये गृहे किमर्थं जिजीविषे ॥७०॥ एवं विलप्य तान् मृत्युग्रस्तान् विचेष्टतः पश्यन्नपि कपोतस्तेषां मोहेन

जालेषु स्वयमपि पपात ॥७१॥ ततो लुब्धकः पुत्रदारसहितं कपोतं लब्ध्वा कृतकार्यः सन् गृहं प्रययौ ॥७२॥ हे राजन्, एवं कुटुंबी पुमान् कुटुंबं पुष्णन् पुत्र-कलत्रादिसहितः कपोतवद्दुःखं प्राप्नोति ॥७३॥ यो मुक्तिद्वारं मनुष्यदेहं प्राप्य गृहेषु पक्षिवत्सक्तस्तमारूढपतितं विदुः ॥७४॥ इति श्रीमद्भागवतचूर्णिकायामेकादशस्कंधे सप्तमोऽध्यायः ॥७॥ अष्टमेऽजगरादिभ्यो नवभ्यः शिक्षितं हरिः। अवधूतगिरा प्राह विवेकायोद्धवंप्रति ॥१॥ ब्राह्मण उवाच ॥ अजगराच्छिक्षितमाह। हे यदो, इंद्रियजन्यं सुखं प्रारब्धानुसारेण स्वर्गे नरके च प्राप्यत एव। यथा अनिच्छितमपि दुःखं प्राप्यते तद्वत्। तस्माद्बुधस्तन्नेच्छेत् ॥१॥ किंच। मिष्टं विरसं महांतं अल्पं वा यदृच्छया प्राप्तं ग्रासं मुनिरजगरवद्ग्रसेत् ॥२॥ यदि ग्रासो न प्राप्तस्तर्हि निराहारः प्रारब्धभुक् निरुद्योगो योगी अजगर इव बहुदिनानि शयीत ॥३॥ किंच। बलयुक्तं देहं धारयन्नपि योगी कर्म त्यक्त्वा शयान एव भवेदित्य-

तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ॥ कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥७२॥ एवं कुटुंब्यशांतात्मा द्वंद्वारामः पतत्रिवत् ॥ पुष्णन्कुटुंबं कृपणः सानुबंधोऽवसीदति ॥७३॥ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् ॥ गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः ॥७४॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे सप्तमोऽध्यायः ॥७॥ ब्राह्मण उवाच ॥ सुखमैंद्रियकं राजन्स्वर्गे नरक एव च ॥ देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः ॥१॥ ग्रासं सुमृष्टं विरसं महांतं स्तोकमेव वा ॥ यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः ॥२॥ शयीताहानि भूरीणि निराहारोऽनुपक्रमः ॥ यदि नोपनमेद्ग्रासो महाहिरिव दिष्टभुक् ॥३॥ ओजःसहोबलयुतं बिभ्रद्देहमकर्मकम् ॥ शयानो नीतनिद्रश्च नेहेतेंद्रियवानपि ॥४॥ मुनिः प्रसन्नगंभीरो दुर्विगाह्यो दुरत्ययः ॥ अनंतपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥५॥ समृद्धकामो हीनो वा नारायणपरो मुनिः ॥ नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥६॥ दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेंद्रियः ॥ प्रलोभितः पतत्यंधे तमस्यग्नौ पतंगवत् ॥७॥ योषिद्धिरण्याभरणांबरादिद्रव्येषु मायारचितेषु मूढः ॥ प्रलोभितात्मा ह्युपभोगबुद्ध्या पतंगवन्नश्यति नष्टदृष्टिः ॥८॥ स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ॥ गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः ॥९॥ ॥ ॥ ॥

जगराच्छिक्षितम् ॥ ४ ॥ समुद्राच्छिक्षितमाह। मुनिर्गंभीर आकलयितुमशक्योऽनंतपारः स्थिरोदक-समुद्र इव भवेत् ॥५॥ किंच। यथा वर्षासु नदीभिः समृद्धोऽपि समुद्रो न हृष्येत्। ग्रीष्मे तद्विहीनोऽपि न शुष्येत्। तथा समृद्धकामस्तद्विहीनो वा नारायणपरो मुनिर्न हृष्येन्न शोचेदिति समुद्राच्छिक्षितम् ॥६॥ पतंगाच्छिक्षितमाह । अजितेंद्रियः पुमान् स्त्रियं दृष्ट्वा तद्भावैर्लोभितः सन्नरकेऽग्नौ पतंग इव पतति ॥७॥ किंच। मायारचितेषु स्त्रीसुवर्णादिषु भोगबुद्ध्या लोभितश्चेत्पतंग इव नश्यतीति पतंगाच्छिक्षितम् ॥८॥ मधुकराच्छिक्षितमाह। यथा भ्रमरो गंधलोभेनैकस्मिन्नेव कमले वसन् सूर्यास्तसमये संकुचिते कमले बद्ध्यते। तथा मुनिरपि गुणलोभेनैकमेव गृहमाश्रितो मोहेन बद्ध्यते ॥९॥

[1] मधुकरो द्विविधः। भ्रमरो मधुमक्षिका च।

पुमान् लघुभ्यो महद्भ्यश्च शास्त्रग्रंथेभ्यः सारं गृह्णीयात् । पुष्पेभ्यो भ्रमर इव ॥१०॥ किंच सायमिदं भोक्ष्यामि श्व इदं भोक्ष्यामीति भिक्षितमन्नादि न संगृह्णीत । किंतु उदर-पूर्तिमात्रं ग्राह्यम् । संग्रही तु मधुमक्षिकेव तेन सह नश्यति ॥११॥१२॥ गजाच्छिक्षितमाह । भिक्षुः पादेनापि काष्ठमयीमपि स्त्रियं न स्पृशेत् । स्पृशन् हस्तिन्या अंगसंगाद्धस्तीव[1] बद्ध्येत ॥१३॥ किंच । ज्ञानी नरः स्त्रियमात्मनो मृत्युरूपां ज्ञात्वा नोपगच्छेत् । गच्छन् गजैर्गज इव बलाधिकैर्हन्येतेति गजाच्छिक्षितम् ॥१४॥ मधुहंतुः शिक्षितमाह । न देयं नोपभोग्यं च यद्धनं लुब्धैः संचितं तदन्यो बलवानुपायं ज्ञात्वा भुंक्ते । तदप्यन्यः मधुहा मक्षिकाभिः संचितं मधु यथा भुंक्ते तद्वत् ॥१५॥ किंच । गृहाश्रमिणामन्नादीन् भोगान् तेषां पूर्वमेव यतिर्मधुहेव[2] भुंक्ते । अनेनोद्यमं विनापि भोगसंभवो भवतीत्युक्तम् ॥१६॥ हरिणाच्छिक्षितमाह । यतिर्ग्राम्यगीतं न शृणुयात् । इदं लुब्धकस्य गीतमोहिताद्धरिणा-

अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ॥ सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥१०॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ॥
पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही ॥११॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः ॥ मक्षिका इव संगृह्णन्सह तेन विनश्यति ॥१२॥
पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ॥ स्पृशन्करीव बद्ध्येत करिण्या अंगसंगतः ॥१३॥ नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ॥
बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥१४॥ न देयं नोपभोग्यं च लुब्धैर्यद्दुःखसंचितम् ॥ भुंक्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥१५॥
सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ॥ मधुहेवाग्रतो भुंक्ते यतिर्वै गृहमेधिनाम् ॥१६॥ ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित् ॥ शिक्षेत
हरिणाद्बद्धान्मृगयोर्गीतमोहितात् ॥१७॥ नृत्यवादित्रगीतानि जुषन्ग्राम्याणि योषिताम् ॥ आसां क्रीडनको वश्य ऋष्यशृंगो मृगीसुतः ॥१८॥
जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ॥ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥१९॥ इंद्रियाणि जयंत्याशु निराहारा मनीषिणः ॥
वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥२०॥ तावज्जितेंद्रियो न स्याद्विजितान्येंद्रियः पुमान् ॥ न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥२१॥

च्छिक्षेत् ॥१७॥ किंच । स्त्रीणां नृत्यवाद्यगीतानि जुषन् नरस्तासां वश्यो भवति । मृगीसुत[3] ऋष्यशृंगो यथा वश्यो बभूव तद्वत् ॥१८॥ मत्स्याच्छिक्षितमाह । जनो दुर्जयया जिह्वया रसमोहितो भूत्वा मृत्युं प्राप्नोति । यथा भक्षणेच्छया मांस-लिप्त-लोहकंटकैर्मत्स्यो मृत्युं प्राप्नोति तद्वत् ॥१९॥ बुद्धिमंतः पुरुषा आहारं हित्वा रसनेंद्रियं विना इंद्रियाणि जयंति । तथापि तद्रसनेंद्रियं वर्धते । अतो रसासक्तिं विहायौषधवत्क्षुधाशांत्यर्थं भुंजीत ॥२०॥ यावद्रसनेंद्रियं न जयेत्तावज्जितेंद्रियो न स्यात् । रसनेंद्रिये जिते सति सर्वं जितं

---

१ हस्ती हि मृन्मयीं करिणीं प्रदर्श्य तृणपिहिते निखातगर्ते निपात्य बध्यते । २ यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्वा तु भुक्त्वा चांद्रायणं चरेदिति गृहिणामावश्यकत्वेन दानविधानात् । ३ हरिणशब्दादेव हरिणीसुत ऋष्यशृंगोऽपि गृहीतव्यः ।

स्यात् ॥२१॥ पिंगलाया नैराश्यं शिक्षितमितिवक्तुं तदाख्यानमाह । पुरा विदेहनगरे पिंगला नाम वेश्याऽऽसीत् । तस्याः शिक्षितं शृणु ॥२२॥ एकदा सा वेश्या रतिस्थानंप्रति कांतं नेष्यती सती सुंदरं रूपं धृत्वा सायंकाले बाह्यद्वारे तस्थौ ॥२३॥ मार्गे आगच्छतः पुरुषान् वीक्ष्य तान् सधनान् मूल्यदानेन संभोगयोग्यान् मेने ॥२४॥ एवमागतेषु गतेषु सत्सु मामन्यो भूरिवित्तदः कश्चिदेष्यति किम् ॥२५॥ इति दुराशया गतनिद्रा सा द्वारि निर्गच्छंती पुनर्गृहं प्रविशंती सती निशीथं समपद्यत ॥२६॥ एवं धनाशया शुष्कमुखाया-स्तस्याः सुखदं वैराग्यं जज्ञे ॥२७॥ ततो विरक्तचित्तायास्तस्या गीतं मत्तः शृणु । पुरुषस्य वैराग्यमाशापाशानां खड्गवच्छेदकमस्ति ॥२८॥ यथा ज्ञानरहितः पुरुषो ममतां त्यक्तुं नेच्छति

पिंगला नाम वेश्याऽऽसीद्विदेहनगरे पुरा ॥ तस्या मे शिक्षितं किंचिन्निबोध नृपनंदन ॥२२॥ सा स्वैरिण्येकदा कांतं संकेत उपनेष्यती ॥ अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥२३॥ मार्ग आगच्छतो वीक्ष्य पुरुषान्पुरुषर्षभ ॥ तान् शुल्कदान्वित्तवतः कांतान्मेनेऽर्थकामुका ॥२४॥ आगतेष्वपयातेषु सा संकेतोपजीविनी ॥ अप्यन्यो वित्तवान्कोऽपि मामुपैष्यति भूरिदः ॥२५॥ एवं दुराशया ध्वस्तनिद्रा द्वार्यवलं-बती ॥ निर्गच्छंती प्रविशती निशीथं समपद्यत ॥२६॥ तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ॥ निर्वेदः परमो जज्ञे चिंताहेतुः सुखावहः ॥२७॥ तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम ॥ निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥२८॥ नह्यंगाजातनिर्वेदो देहबंधं जिहा-सति ॥ यथा विज्ञानरहितो मनुजो ममतां नृप ॥२९॥ पिंगलोवाच ॥ अहो मे मोहविततिं पश्यताविजितात्मनः ॥ या कांतादसतः कामं कामये येन बालिशा ॥३०॥ संतं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ॥ अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ॥३१॥ अहो मयाऽऽत्मा परितापितो वृथा सांकेत्यवृत्त्याऽतिविगर्ह्यवार्तया ॥ स्त्रैणान्नराद्याऽर्थतृषोऽनुशोच्यात्क्रीतेन वित्तं रतिमात्मनेच्छती ॥३२॥ यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचारोमनखैः पिनद्धम् ॥ क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति काऽन्या ॥३३॥ विदेहानां पुरे ह्यस्मिन्न-हमेकैव मूढधीः ॥ याऽन्यमिच्छंत्यसत्यस्मादात्मदात्काममच्युतात् ॥३४॥ सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ॥ तं विक्रीया-त्मनैवाहं रमेऽनेन यथा रमा ॥३५॥ ॥ ॥ ॥ ॥ ॥

तथा वैराग्यरहितः पुरुषो देहबंधं त्यक्तुं नेच्छति ॥२९॥ पिंगलोवाच ॥ अहो मे मोहविस्तारं पश्यत । याऽहं विवेकशून्या सती तुच्छान्नरात् कामं कामये ॥३०॥ किंच । स्वसमीपे संतं नित्यं सर्वार्थदमपीश्वरं विहाय दुःखादियुक्तं नरं भजे । अतोऽहमज्ञा ॥३१॥ अहो एतावत्पर्यंतं देहं विक्रीयानया निंद्यया जीविकया मया वृथा देहस्तापितः ॥३२॥ किंच । इदं शरीररूपं गृहमस्थिभिरेव निर्मितं त्वचा-रोम-नखैराच्छादितं क्षरन्नवद्वारं विष्ठामूत्रपूर्णं मदन्या का वा कांतबुद्ध्या सेवते न कापि । अतो मां धिक् ॥३३॥ विदेहनगरेऽहमे-कैवाज्ञा । यतोऽतर्यामिणं हरिं हित्वाऽन्यान्नराद्भोगमिच्छामि ॥३४॥ अतः परमेनं देहं मनसैव अतिप्रियायेश्वराय निवेद्य तं च विशेषेण क्रीत्वा तेन सह लक्ष्मीवद्रमे ॥३५॥

किंच । आद्यंतवंतो विषयाः कामदा नरा देवा वा भार्यायाः कियत् प्रियं कृतवंतो न किंचित् । अतो नेहामुत्र परमात्मव्यतिरिक्तः कोऽपि सेव्योऽस्ति ॥३६॥ किंच । अद्य केनापि भाग्योदयेन विष्णुर्मे प्रीतः । यत एवंभूतं मे सुखावहं वैराग्यं जातम् ॥३७॥ अतोऽहं वैराग्येण गृहादिकं हित्वा शांतिं प्राप्नोमि ॥३८॥ श्रीविष्णुना कृतमुपकारं शिरसा गृहीत्वा विषयाशां हित्वा तमेव शरणं व्रजामि । तथा यथालाभेन जीवंती तेनैव रमणेन सह क्रीडां करोमि ॥३९॥४०॥ किंच । संसारकूपे पतितं कालसर्पेण ग्रस्तं आत्मानं त्रातुमन्यः कः समर्थः ॥४१॥ यदा जीवात्मा जगत् कालग्रस्तं दृष्ट्वा सर्वतो विरक्तो भवेत्तदाऽऽत्मन आत्मैव रक्षको भवति ॥४२॥ ब्राह्मण उवाच ॥ हे यदो, एवं निश्चितमतिः सा पिंगला पत्युराशां छित्वा सुखेन शय्यायां सुष्वाप ॥४३॥ अत आशा हि परमं दुःखं नैराश्यं परमं सुखमिति पिंगलायाः शिक्षितम् ॥४४॥ इति श्रीमद्भागवतचू० एकादशस्कंधेऽष्टमो-

कियत्प्रियं ते व्यभजन्कामा ये कामदा नराः ॥ आद्यंतवंतो भार्याया देवा वा कालविद्रुताः ॥३६॥ नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा ॥ निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥३७॥ मैवं स्युर्मंदभाग्यायाः क्लेशा निर्वेदहेतवः ॥ येनानुबंधं निर्हृत्य पुरुषः शममृच्छति ॥३८॥ तेनोपकृतमादाय शिरसा ग्राम्यसंगताः ॥ त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥३९॥ संतुष्टा श्रद्दधत्येतद्यथालाभेन जीवती ॥ विहराम्यमुनैवाहमात्मना रमणेन वै ॥४०॥ संसारकूपे पतितं विषयैर्मुषितेक्षणम् ॥ ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्यस्त्रातुमधीश्वरः ॥४१॥ आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाऽखिलात् ॥ अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ॥४२॥ ब्राह्मण उवाच ॥ एवं व्यवसितमतिर्दुराशां कांततर्षजाम् ॥ छित्त्वोपशममास्थाय शय्यामुपविवेश सा ॥४३॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ यथा संछिद्य कांताशां सुखं सुष्वाप पिंगला ॥४४॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे पिंगलोपाख्यानेऽष्टमोऽध्यायः ॥८॥ ब्राह्मण उवाच ॥ परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम् ॥ अनंतं सुखमाप्नोति तद्विद्वान्यस्त्वकिंचनः ॥१॥ सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ॥ तदामिषं परित्यज्य स सुखं समविंदत ॥२॥ न मे मानावमानौ स्तो न चिंता गेहपुत्रिणाम् ॥ आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥३॥ द्वावेव चिंतया मुक्तौ परमानंद आप्लुतौ ॥ यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः ॥४॥ ॥ ॥

ऽध्यायः ॥८॥ नवमे कुररादिभ्यो देहतश्चोपशिक्षितम् । श्रुत्वा यदुः कृतार्थोऽभूदिति कृष्णेन वर्णितम् ॥१॥ ब्राह्मण उवाच ॥ कुरराच्छिक्षितमाह । हे यदो, यद्यन्मनुष्याणामतिप्रियं तस्य तस्य संग्रहो दुःखप्राप्तये भवतीति ज्ञात्वा मुनिस्त्यक्तसंग्रहः स्यात् ॥१॥ यदा मांससहितं कुररं दृष्ट्वा मांसहीना अन्ये कुररास्तं जघ्नुः । तदा स कुररो मांसं त्यक्त्वा सुखं प्राप ॥२॥ अर्भकाच्छिक्षितमाह । हे यदो, मम मानापमानौ न स्तः । तथा गेहवतां पुत्रवतां च या चिंता सा नास्ति । अहमात्मक्रीडो बालवद्विचरामि ॥३॥ किंच । अत्र लोके चिंताहीनौ आनंदव्याप्तौ च द्वावेव स्तः । योऽज्ञो बालो यश्च गुणेभ्यः परमीश्वरं प्राप्तस्तौ ॥४॥ ॥ ॥ ॥ ॥

अथ कुमार्याः शिक्षितं वक्तुमाख्यायिकामाह । कदाचित् कुमारी स्ववरणायागतान् पुरुषान् दृष्ट्वा पित्रादिष्वन्यत्र गतेषु सत्सु स्वयं तान् पूजयामास ॥५॥ ततस्तेषां भोजनार्थमेकांते शालीन् कंडयंत्यास्तस्याः कुमार्या हस्तयोः स्थितानि शंखवलयानि महांतं शब्दं चक्रुः ॥६॥ तदा बुद्धिमती सा तत्कंडनं दरिद्रताद्योतकं मत्वा लज्जिता सती क्रमेणैकैकं शंखं निःसार्य द्वौ द्वौ पाण्योरशेषयत् ॥७॥ पुनरवघ्नंत्यास्तस्यास्तयोरुभयोरपि शब्दोऽभूत् । ततः करयोरेकैकमवशेषयत् । ततः शब्दो नाभवत् ॥८॥ हे यदो, एकः संचरन्नहं तद्दृष्ट्वा तस्या इममुपदेशं गृहीतवान् ॥९॥ वहूनामेकत्र वासे कलहो भवति । द्वयोस्तु वार्ता स्यात् । अतस्तस्याः कंकणवदेक एव यतिश्चरेत् ॥१०॥ चित्तस्यैकाग्रता वाणकाराच्छिक्षितेत्याह ।

क्वचित्कुमारी त्वात्मानं वृणानान्गृहमागतान् ॥ स्वयं तानर्हयामास क्वापि यातेषु बंधुषु ॥५॥ तेषामभ्यवहारार्थं शालीन्रहसि पार्थिव ॥ अवघ्नंत्याः प्रकोष्ठस्थाश्चक्रुः शंखाः स्वनं महत् ॥६॥ सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ॥ बभंजैकैकशः शंखान्द्वौ द्वौ पाण्योरशेषयत् ॥७॥ उभयोरप्यभूद्घोषो ह्यवघ्नंत्याः स्म शंखयोः ॥ तत्राप्येकं निरभिददेकस्मान्नाभवद्ध्वनिः ॥८॥ अन्वशिक्षमिमं तस्या उपदेशमरिंदम ॥ लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ॥९॥ वासे वहूनां कलहो भवेद्वार्ता द्वयोरपि ॥ एक एव चरेत्तस्मात्कुमार्या इव कंकणः ॥१०॥ मन एकत्र संयुज्याज्जितश्वासो जितासनः ॥ वैराग्याभ्यासयोगेन ध्रियमाणमतंद्रितः ॥११॥ यस्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुंचति कर्मरेणून् ॥ सत्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिंधनम् ॥१२॥ तदैवमात्मन्यवरुद्धचित्तो न वेद किंचिद्बहिरंतरं वा ॥ यथेषुकारो नृपतिं व्रजंतमिषौ गतात्मा न ददर्श पार्श्वे ॥१३॥ एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः ॥ अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥१४॥ गृहारंभोऽतिदुःखाय विफलश्चाध्रुवात्मनः ॥ सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥१५॥ एको नारायणो देवः पूर्वसृष्टं स्वमायया ॥ संहृत्य कालकलया कल्पांत इदमीश्वरः ॥१६॥ एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ॥ कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ॥ सत्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥१७॥ परावराणां परम आस्ते कैवल्यसंज्ञितः ॥ केवलानुभवानंदसंदोहो निरुपाधिकः ॥१८॥ ॥

मुनिरासनप्राणौ जित्वा मनः परमात्मनि भगवति संयुज्यात् ॥११॥ तत्र स्थिरं तन्मनः कर्मवासनास्त्यक्त्वा ध्येयाकारेणावतिष्ठते ॥१२॥ तदा पुमान् बहिरंतरं[1] च न वेत्ति । यथा वाणकर्ता वाणस्य ऋजूकरणे दत्तचित्तः सन् भेरीघोषैरंतिके[2] व्रजंतं नृपतिमपि न ददर्श तद्वत् ॥१३॥ सर्पाच्छिक्षितमाह । यथा गृहरहितः सर्प एकाकी मितभाषी च चरति तथा मुनिरपि भवेत् ॥१४॥ किंच गृहारंभो दुःखाय भवति । यतः सर्पः परकृतं गृहं प्रविश्य सुखेन वर्धते ॥१५॥ अथोर्णनाभेः शिक्षितमाह । एक एव नारायणो देवः स्वमायया सृष्टमिदं जगत्कल्पांते संहृत्य ॥१६॥ एक एव स्वगतादिभेदशून्य आत्माधारोऽखिलाश्रयः प्रकृतिपुरुषेश्वरो निरुपाधिकः परमानंद आस्ते ॥१७॥१८॥ ॥

१ बहिर्दर्शनादिना । २ अतरं स्मृत्वा ।

स एव सृष्ट्यारंभे त्रिगुणात्मिकां मायां कालेन क्षोभयन् महत्तत्वं सृजति ॥१९॥ यस्मिन् समष्टिरूपे महत्तत्वे इदं विश्वं ग्रथितमस्ति येन च जीवः संसरते ॥२०॥ यथोर्णनाभिर्हृदयान्निर्गतामूर्णां मुखेन प्रसार्य क्रीडित्वा पुनर्ग्रसति एवमीश्वरः ॥२१॥ पेशस्कृतेः शिक्षितमाह । यथा पेशस्कृता कुड्यां रुद्धः कीटस्तं ध्यायन् पूर्वरूपमत्यक्त्वा तद्रूपं प्राप्नोति । तथा देही यत्र यत्र स्नेहादिना मनो धारयेत् तत्तत्स्वरूपतां प्राप्नोति ॥२२॥२३॥ एवमेतेभ्यो गुरुभ्यो मयैषा बुद्धिः शिक्षिता । अथ स्वदेहशिक्षितां बुद्धिं शृणु ॥२४॥ हे यदो, अयं देहो मे गुरुः । यतोऽयं वैराग्यज्ञानयोर्हेतुः । वैराग्यहेतुत्वमाह । अयं देहो जन्मनाशौ दुःखं च विभर्ति । ज्ञानहेतुत्वमाह । अनेन देहेनाहं यथावत्तत्वानि विचारयामि ।

केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ॥ संक्षोभयन्सृजत्यादौ तया सूत्रमरिंदम ॥१९॥ तामाहुस्त्रिगुणव्यक्तिं सृजंतीं विश्वतोमुखम् ॥ यस्मिन्प्रोतमिदं विश्वं येन संसरते पुमान् ॥२०॥ यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः ॥ तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥२१॥ यत्र यत्र मनो देही धारयेत्सकलं धिया ॥ स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ॥२२॥ कीटः पेशस्कृतं ध्यायन्कुड्यां तेन प्रवेशितः ॥ याति तत्सात्मतां राजन्पूर्वरूपमसंत्यजन् ॥२३॥ एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ॥ स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥२४॥ देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म सत्वनिधनं सततार्त्युदर्कम् ॥ तत्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसंगः ॥२५॥ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्पुष्णाति यत्प्रियचिकीर्षया वितन्वन् ॥ स्वांते सकृच्छ्रमवरुद्धधनः सदेहः सृष्ट्वाऽस्य बीजमवसीदति वृक्षधर्मः ॥२६॥ जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनंति ॥२७॥ सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या वृक्षान्सरीसृपपशून्खगदंशमत्स्यान् ॥ तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः ॥२८॥ लब्ध्वा सुदुर्लभमिदं बहुसंभवांते मानुष्यमर्थदमनित्यमपीह धीरः ॥ तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥२९॥ ॥ ॥ ॥ ॥

तथापीमं देहं श्वसृगालादिभक्ष्यमिति निश्चित्याहमसंगश्चरामि ॥२५॥ किंच । यस्य देहस्य प्रियं कर्तुं पुमान् स्त्री-पुत्रार्थ-पशु-भृत्यादीन् पुष्णाति स देह आयुषोंऽते तान् विसृज्य देहांतरबीजं च सृष्ट्वा नश्यति ॥२६॥ अपि च । अमुं देहं जिह्वाशिश्नादीनि सर्वेंद्रियाणि स्वस्वविषयंप्रत्याकर्षंति । यथा बह्व्यः सपत्न्यो गृहपतिं त्रोटयंति तद्वत् ॥२७॥ इदानीमीश्वरनिष्ठां विधत्ते । अहो ईश्वरो विविधानि वृक्ष-सर्प-पशु-पक्ष्यादिशरीराणि सृष्ट्वा तैस्तैरसंतुष्टचित्तः सन् ततो ब्रह्मसाक्षात्कार-संपादक-बुद्धियुक्तं मनुष्यशरीरं निर्माय हर्षं प्राप ॥२८॥ इदं पुरुषार्थप्रापकं मनुष्यशरीरं बहुजन्मनामंते लब्ध्वा धीरः पुमान् यावदिदं न पतेत्तावदेव मोक्षप्राप्तये यत्नं कुर्यात् । विषयसुखं तु सर्वत्र स्यादेव ॥२९॥ ॥

१ कारकसामग्रीनिरपेक्षात्केवलादीश्वराद्विश्वसृष्टिसंहारावूर्णनाभिदृष्टांतेन मया संभावितावित्यर्थः । २ पेशस्कृतो भ्रमरविशेषान्मया भगवद्ध्यानपराणां तत्सारूप्यं भवतीति शिक्षितम् ।

हे यदो, एवं संजातवैराग्यो निरहंकारश्चाहं संगं हित्वा महीं विचरामि ॥३०॥ किंच । एकस्माद्गुरोः स्थिरं पुष्कलं च ज्ञानं न स्यात् । यतोऽद्वितीयं ब्रह्म ऋषिभिर्बहुधा गीयते ॥३१॥ श्रीभगवानुवाच ॥ हे उद्धव, एवं दत्तात्रेयो यदुमुक्त्वा यदुना वंदितः प्रार्थितश्च सन् यथागतं ययौ ॥३२॥ हे उद्धव, अस्माकं पूर्वेषां पूर्वजः स यदुः अवधूतवचः श्रुत्वा सर्वसंगमुक्तः सन् समचित्तो बभूव ॥३३॥ इति श्रीमद्भागवतचू० एकादशस्कंधे नवमोऽध्यायः ॥९॥ दशमे देहसंबंधात्संसृतिर्नात्मनः स्वतः । इत्येतद्वर्णयामास मतांतरनिरासतः ॥१॥ श्रीभगवानुवाच । हे उद्धव, मयोक्तेषु भागवतधर्मेषु सावधानः सन् तदविरोधेन वर्णाश्रमकुलाचारं निष्कामतयाऽऽचरेत् ॥१॥ विषयासक्तानां देहिनां विषयेषु सत्यत्वबुद्ध्या ये कर्मारंभास्तेषां फलवैपरीत्यं च पश्येत् ॥२॥ किंच । यथा सुप्तस्य स्वप्ने जातं विषयदर्शनं मिथ्या तथा जाग्रदवस्थायामपि इंद्रियैर्यद्विषयसेवनं तदेकस्मि-

एवं संजातवैराग्यो विज्ञानालोक आत्मनि ॥ विचरामि महीमेतां मुक्तसंगोऽनहंकृतिः ॥३०॥ नह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् ॥ ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥३१॥ श्रीभगवानुवाच ॥ इत्युक्त्वा स यदुं विप्रस्तमामंत्र्य गभीरधीः ॥ वंदितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ॥३२॥ अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः ॥ सर्वसंगविनिर्मुक्तः समचित्तो बभूव ह ॥३३॥ इति श्री० महा० एका० भगवदुद्धवसंवादे नवमोऽध्यायः ॥९॥ श्रीभगवानुवाच ॥ मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ॥ वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥१॥ अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ॥ गुणेषु तत्त्वध्यानेन सर्वारंभविपर्ययम् ॥२॥ सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ॥ नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैः ॥३॥ निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ॥ जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम् ॥४॥ यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् ॥ मदभिज्ञं गुरुं शांतमुपासीत मदात्मकम् ॥५॥ अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ॥ असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥६॥ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥ उदासीनः समं पश्यन्सर्वेष्वर्थमिवात्मनः ॥७॥ विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् ॥ यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥८॥ ॥ ॥ ॥

न्नात्मनि नानात्वेन कल्पितत्वान्मिथ्या ज्ञातव्यम् ॥३॥ अतो मोक्षार्थी निवृत्तं कर्म सेवेत । प्रवृत्तं कर्म त्यजेत् । आत्मविचारे प्रवृत्तस्तु वेदस्य निवृत्तकर्मप्रेरणामपि नाद्रियेत ॥४॥ किंच अहिंसादिनियमानवश्यं सेवेत । शौचादीन्नियमांस्तु यथाशक्ति सेवेत । मद्रूपं शांतं गुरुं चोपासीत ॥५॥ गुरुसेवकस्य धर्मानाह । मानरहितोऽनलसो जायादिषु ममताशून्यो गुरौ सदृढस्नेहोऽव्यग्रो व्यर्थालापरहितश्च भवेत् ॥६॥ सर्वदेहेष्वात्मन एकत्वात् स्त्रीपुत्रादिदेहे स्वदेहे चात्मनोऽर्थं सुखादिं समानं पश्यन् गुरुं प्रपद्येत ॥७॥ स्थूलसूक्ष्मरूपाद्देहद्वयात्तद्द्रष्टा प्रकाशकश्चात्मा अन्योऽस्ति । यथा दाह्यात्प्रकाश्याच्च काष्ठाद्दाहकः प्रकाशकश्चाग्निरन्योऽस्ति तद्वत् ॥८॥ ॥ ॥ ॥

१ सप्रपंचनिष्प्रपंचभेदादिभिः । २ नित्यनैमित्तिकम् । ३ काम्यम् । ४ आत्मज्ञानाविरोधेन सेवेत ।

यथा काष्ठेषु प्रविष्टोऽग्निः काष्ठसंबंधेनोत्पत्तिनाशादिधर्मान् प्राप्नोति तथा देहे प्रविष्ट आत्मोत्पत्त्यादीन् देहधर्माननुभवति ॥९॥ यस्मादीश्वराधीनाया मायाया गुणै रचितस्य स्थूलसूक्ष्मात्मकस्य देहस्याध्यासेन जीवस्य संसारः आत्मज्ञानेन च तन्निवृत्तिस्तस्माद्विचारेण देहस्थितमात्मानं ज्ञात्वा देहादौ सत्यत्वबुद्धिं त्यजेत् ॥१०॥११॥ अथ गुरोर्विद्योत्पत्तिमग्न्युत्पत्तिरूपकेण निरूपयति । आचार्योऽधरारणिः स्यात् । शिष्य उत्तरारणिः । तयोर्मध्यमं मंथनकाष्ठमुपदेशः । विद्या तु संधौ भवन्नग्निरिव स्यात् ॥१२॥ गुरोः प्राप्ता सा विद्या मायां निवर्त्य संसृतिनिमितान् गुणांश्च दग्ध्वा निरिंधनोऽग्निरिव स्वयं शाम्यति । विद्याप्राप्त्या च शिष्यः परमानंदरूपो भवति ॥१३॥ अथ मतांतरं निराकर्तुमुद्भावयति । हे उद्धव, त्वं कर्मकर्तृणां सुखदुःखभोक्तृणां च जीवानां नानात्वं लोक-कालागमात्मनां च नित्यत्वं मन्यसे चेत् ॥१४॥ तथा स्रक्चंदनादीनां सर्वपदार्थानां स्थितिः प्रवाहरूपेण

निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान्गुणान् ॥ अंतः प्रविष्ट आधत्त एवं देहगुणान्परः॥९॥ योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ॥ संसारस्तन्निबंधोऽयं पुंसो विद्याऽऽच्छिदात्मनः ॥१०॥ तस्माज्जिज्ञासयाऽऽत्मानमात्मस्थं केवलं परम् ॥ संगम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम् ॥११॥ आचार्योऽरणिराद्यः स्यादंतेवास्युत्तरारणिः ॥ तत्संधानं प्रवचनं विद्या संधिः सुखावहः ॥१२॥ वैशारदी साऽतिविशुद्धबुद्धिर्धुनोति मायां गुणसंप्रसूताम् ॥ गुणांश्च संदह्य यदात्ममेतत्स्वयं च शाम्यत्यसमिद्यथाऽग्निः ॥१३॥ अथैषां कर्मकर्तृणां भोक्तृणां सुखदुःखयोः ॥ नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ॥१४॥ मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा ॥ तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥१५॥ एवमप्यंग सर्वेषां देहिनां देहयोगतः ॥ कालावयवतः संति भावा जन्मादयोऽसकृत् ॥१६॥ अत्रापि कर्मणां कर्तुरस्वातंत्र्यं च लक्ष्यते[1] ॥ भोक्तुश्च दुःखसुखयोः कोऽन्वर्थो विवशं भजेत् ॥१७॥ न देहिनां सुखं किंचिद्विद्यते विदुषामपि ॥ तथा च दुःखं मूढानां वृथाऽहंकरणं परम् ॥१८॥ यदि प्राप्तिं विघातं च जानंति सुखदुःखयोः ॥ तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा॥१९॥ को न्वर्थः सुखयत्येनं कामो वा मृत्युरंतिके ॥ आघातं नीयमानस्य वध्यस्येव न तुष्टिदः ॥२०॥

नित्येति मत्वा प्रवृत्तिरेव श्रेयसी न निवृत्तिरिति मन्यसे चेत् तर्हि एवं जैमिनीया मीमांसका मन्यंते ॥१५॥ तथासति हे उद्धव, सर्वदेहिनां देहयोगतः संवत्सरादिरूपेण कालावयवेन ये जन्मादिविकाराः संति ते कदापि न निवर्तेरन् ॥१६॥ यतोऽत्र लोके कर्मणां कर्तुः सुखदुःखयोर्भोक्तुश्च पारतंत्र्यं लक्ष्यते । परतंत्रंप्रति को विषयः सुखयेन्न कोऽपि ॥१७॥ कर्मकुशलानामपि देहिनां सुखं नास्ति तथा मूढानामपि दुःखं नास्ति । अतो वयं कर्मकुशलत्वात्सुखिन इति तेषां वृथैवाहंकारः ॥१८॥ यदि ते सुखप्राप्त्युपायं दुःखनिवृत्त्युपायं च जानंतीति स्वीकृतं तथापि ते येन मृत्युर्न स्यात्तमुपायं न विदुः ॥१९॥ यस्य मृत्युः समीपे वर्तते । तं पुरुषं को न्वर्थः सुखयति न कोऽपि । यथा वधस्थानं नीतस्य वध्यस्य कोऽपि स्रक्चंदनादिः पदार्थो न सुखयेत्तद्वत् ॥२०॥ ॥ ॥ ॥ ॥ ॥

१ काल-कर्म-गुणाधीनत्वम् ।

श्रुतं च स्वर्गादिकं स्पर्धाऽसूया-नाशापक्षयैर्दुष्टं निष्फलं च ॥२१॥ इह लोके विघ्नरहितो यदि धर्मोऽनुष्ठितस्तर्हि तेनापि साधितं स्थानं यथा गच्छति तच्छृणु ॥२२॥ याज्ञिक इह यज्ञैर्देवानिष्ट्वा स्वर्गं याति । तत्र दिव्यान् भोगान् भुंक्ते ॥२३॥ ततः स्वपुण्यलब्धे सर्वभोगसंपन्ने विमाने सुंदरवेषं धृत्वा देवीनां मध्ये गंधर्वैरुपगीयते ॥२४॥ तदा कामगेन विमानेन स्त्रीभिः सह नंदनवनादिषु क्रीडन् आत्मपातं न वेद ॥२५॥ एवंभूतः स पुमान् यावत्पुण्यं विद्यते तावत्स्वर्गे मोदते । क्षीणपुण्योऽधः पतति ॥२६॥ यदि चेहलोके पुरुषोऽधर्मरतः कामात्मा स्त्रीलंपटस्तदर्थं भूतविहिंसकश्च स्यात् ॥२७॥ तर्हि अविधिना पशून् हत्वा प्रेत-भूत-गणान् यजति । तेन च नरकान् गत्वा ततः स्थावरतां याति ॥२८॥ एवं

श्रुतं च दृष्टवद्दुष्टं स्पर्धाऽसूयात्ययव्ययैः ॥ बह्वंतरायकामत्वात्कृषिवच्चापि निष्फलम् ॥२१॥ अंतरायैरविहतो यदि धर्मः स्वनुष्ठितः ॥ तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥२२॥ इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ॥ भुंजीत देववत्तत्र भोगान्दिव्यान्निजार्जितान् ॥२३॥ स्वपुण्योपचिते शुभ्रे विमान उपगीयते ॥ गंधर्वैर्विहरन्मध्ये देवीनां हृद्यवेषधृक् ॥२४॥ स्त्रीभिः कामगयानेन किंकिणीजालमालिना ॥ क्रीडन्न वेदात्मपातं सुराक्रीडेषु निर्वृतः ॥२५॥ तावत्प्रमोदते स्वर्गे यावत्पुण्यं समाप्यते ॥ क्षीणपुण्यः पतत्यर्वागनिच्छन्कालचालितः ॥२६॥ यद्यधर्मरतः संगादसतां वाऽजितेंद्रियः ॥ कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥२७॥ पशूनविधिनाऽऽलभ्य प्रेतभूतगणान्यजन् ॥ नरकानवशो जंतुर्गत्वा यात्युल्बणं तमः ॥२८॥ कर्माणि दुःखोदर्काणि कुर्वन्देहेन तैः पुनः ॥ देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥२९॥ लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ॥ ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥३०॥ गुणाः सृजंति कर्माणि गुणोऽनुसृजते गुणान् ॥ जीवस्तु गुणसंयुक्तो भुंक्ते कर्मफलान्यसौ ॥३१॥ यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ॥ नानात्वमात्मनो यावत्पारतंत्र्यं तदैव हि ॥३२॥ यावदस्यास्वतंत्रत्वं तावदीश्वरतो भयम् ॥ य एतत्समुपासीरंस्ते मुह्यंति शुचाऽर्पिताः ॥३३॥ काल आत्माऽऽगमो लोकः स्वभावो धर्म एव च ॥ इति मां वहुधा प्राहुर्गुणव्यतिकरे सति ॥३४॥ ॥ ॥ ॥ ॥

देहेन दुःखोत्पादकानि कर्माणि यः करोति स पुनर्देहं प्राप्नोति । तत्र च मरणधर्मवतस्तस्य किं सुखं स्यान्न किमपि ॥२९॥ लोकानां लोकपालानां ब्रह्मणश्च मत्तो भयमस्ति किं पुनरन्येषाम् ॥३०॥ सत्वादिगुणा इंद्रियाणि सृजंति । इंद्रियाणि कर्माणि सृजंति । जीवस्तु इंद्रियादिष्वहंकारयुक्तः सन् कर्मफलानि भुंक्ते ॥३१॥ यावद्गुणवैषम्यं तावज्जीवानां नानात्वम् । यावन्नानात्वं तावत्पारतंत्र्यम् ॥३२॥ यावत्पारतंत्र्यं तावन्मत्तो भयम् । एतद्गुणवैषम्यं ये सेवेरन् ते शोकयुक्ताः संतो मुह्यंति ॥३३॥ मायाक्षोभे जाते सति मामेव कालः आत्मा आगमः स्वभावः धर्मः इत्यादिरूपं बहुधा प्राहुः । अतः प्रवृत्तिमार्गस्यानर्थहेतुत्वान्निवृत्तिरेव श्रेयसीति ॥३४॥ ॥ ॥ ॥

१ अहंकारादिकार्यरूपम् ।

उद्धव उवाच ॥ हे विभो, गुणेष्वसत्सु मुक्तिः सत्स्वेव वा । आद्ये ज्ञानसाधनाभावान्न मुक्तिः । द्वितीये गुणेषु वर्तमानो जीवस्तत्कार्यदेहजेषु कर्मसु सुखादिषु वा कथं न बद्ध्यते । अनावृतत्वादिति चेत्तर्हि आकाशवदनावृतः कथं बद्ध्यते ॥३५॥ यदि तु सत्स्वेव तदहंकारेण बद्ध्यते तन्निवृत्त्या च मुच्यत इति मतं तर्हि बद्धो मुक्तो वा कथं वर्तेत कैर्वा लक्षणैर्ज्ञायेत एतन्मे ब्रूहि । एक एवात्मा नित्यबद्धो[1] नित्यमुक्तश्च[2] कथमिति मे भ्रमो भवति ॥३६॥३७॥ इति श्रीम० चू० एका० दशमोऽध्यायः ॥१०॥ एकादशे तु बद्धानां मुक्तानां चाथ लक्षणम् । साधूनां च तथा भक्तेर्लक्षणं हरिणेरितम् ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, आत्मा बद्धो मुक्तश्च मदधीनसत्वादिगुणोपाधितो भवति न वस्तुतः । कुतः । गुणस्य मायामूलत्वाद्बंधनं नास्ति । अत एव मोक्षश्च नास्ति । इति मत्कृतो निर्णयः । अलमतिकुतर्कैः ॥१॥ किंच । शोकमोहौ सुखं दुःखं देहोत्पत्तिः संसृतिश्च मायया

उद्धव उवाच ॥ गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः॥ गुणैर्न बध्यते देही वध्यते वा कथं विभो ॥३५॥ कथं वर्तेत विहरेत्कैर्वा ज्ञायेत लक्षणैः ॥ किं भुंजीतोत विसृजेच्छयीतासीत याति वा ॥३६॥ एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर ॥ नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रमः ॥३७॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे दशमोऽध्यायः ॥१०॥ श्रीभगवानुवाच ॥ बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ॥ गुणस्य मायामूलत्वान्न मे मोक्षो न बंधनम् ॥१॥ शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया ॥ स्वप्नो यथाऽऽत्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥२॥ विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ॥ मोक्षबंधकरी आद्ये मायया मे विनिर्मिते ॥३॥ एकस्यैव ममांशस्य जीवस्यैव महामते ॥ बंधोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः ॥४॥ अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते ॥ विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ॥५॥ सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे ॥ एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥६॥

कृतेनाध्यासेनात्मन्यध्यस्यंते । यथा स्वप्नो मनःकल्पितोऽपि तदा सत्यवद्भासते तद्वत् ॥२॥ हे उद्धव, शरीरिणा मोक्षबंधकर्यौ ये विद्याविद्ये ते मम शक्ती मया मायया निर्मिते स्तः । अतो यावदविद्यां प्रवर्तयामि तावद्बंधः[3] । यदा विद्यां ददामि तदा मोक्षः ॥३॥ हे महामते, यथैकस्यापि चंद्रादेर्जलाद्युपाधिना बिंबप्रतिबिंबरूपो भेदः । यथा च तत्र जलकृताः कंपादयः प्रतिबिंबस्यैव । तथा च प्रतिबिंबानामपि उपाधिभेदेन भेदादेकस्मिन्नुदकुंभे भग्ने तद्गतप्रतिबिंबस्यैव बिंबैक्यं नान्यगतस्य तथाऽविद्यायां प्रतिबिंबितस्य मदंशस्य जीवस्यैवाविद्याकृतो बंधो विद्यया च मोक्षः ॥४॥ अथ बद्धमुक्तयोर्वैलक्षण्यं ते वदामि । तच्च वैलक्षण्यं द्विविधम् । जीवेश्वरयोरेकं जीवानां चैकम् ॥५॥ तत्र जीवेश्वरयोर्वैलक्षण्यमाह । जीवेश्वरौ देहरूपे वृक्षे कृतनीडौ सखायौ पक्षिणौ विद्धि । तयोर्मध्ये एको जीवः कर्मफलं खादति । अन्य ईश्वरोऽभोक्तापि ज्ञानादिशक्त्या बलिष्ठः ॥६॥ ॥

---

१ अनादिगुणसंबंधान्नित्यबद्धः । २ मुक्तेर्जन्यत्वेऽनित्यत्वप्रसंगान्नित्यमुक्तः । ३ बंधको भवपाशेन भवपाशाच्च मोचक इति स्कांदात् ।

स आत्मानं जीवं च वेद । जीवस्तु तथा न वेद । अतोऽविद्यया युक्तो जीवो नित्यबद्धः । विद्यायुक्त ईश्वरो नित्यमुक्तः ॥७॥ यो मुक्तः स देहस्थोऽपि न देहस्थः । स्वप्नादुत्थित इव । तथा यो बद्धः सः अदेहस्थोऽपि देहस्थः । स्वप्नद्रष्टेव ॥८॥ अथ बद्धमुक्तयोर्जीवयोर्वैलक्षण्यमाह । यो मुक्तो जीवः स इंद्रियैर्गृह्यमाणेषु विषयेष्वहं गृह्णामीत्यभिमानं न करोति ॥९॥ दैवाधीने शरीरे वर्तमानोऽज्ञो जीवोऽहं कर्ताऽस्मीति बद्ध्यते ॥१०॥ ज्ञानी विरक्तः सन् दर्शन-स्पर्शन-घ्राण-भोजन-श्रवणादिविषयेष्विंद्रियाणि भोजयंस्तत्साक्षित्वेन वर्तमानो विद्वान्, अविद्वानिव न बद्ध्यते । यथा वायुः सर्वत्र चरन्नपि न सज्जते तद्वत् ॥११॥१२॥ एवं ज्ञानेन छिन्नसंशयः पुरुषः स्वप्नात्प्रबुद्ध इव देहादिप्रपंचान्निवर्तते ॥१३॥ यस्य प्राणें-

आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः ॥ योऽविद्यया युक्‍ स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥७॥ देहस्थोऽपि न देहस्थो विद्वान्स्वप्नाद्यथोत्थितः ॥ अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा ॥८॥ इंद्रियैरिंद्रियार्थेषु गुणैरपि गुणेषु च ॥ गृह्यमाणेष्वहं कुर्यान्न विद्वान्यस्त्वविक्रियः ॥९॥ दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ॥ वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबद्ध्यते ॥१०॥ एवं विरक्तः शयन आसनाटनमज्जने ॥ दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥११॥ न तथा बद्ध्यते विद्वांस्तत्र तत्रादयन्गुणान् ॥ प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ॥१२॥ वैशारद्येक्षयाऽसंगशितया छिन्नसंशयः ॥ प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥१३॥ यस्य स्युर्वीतसंकल्पाः प्राणेंद्रियमनोधियाम् ॥ वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥१४॥ यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया ॥ अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥१५॥ न स्तुवीत न निंदेत कुर्वतः साध्वसाधु वा ॥ वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥१६॥ न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ॥ आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥१७॥ शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ॥ श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥१८॥ गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च ॥ वित्तं त्वतीर्थीकृतमंग वाचं हीनां मया रक्षति दुःखदुःखी ॥१९॥ यस्यां न मे पावनमंग कर्म स्थित्युद्भवप्राणनिरोधमस्य ॥ लीलावतारेप्सितजन्म वा स्याद्वंध्यां गिरं तां बिभृयान्न धीरः ॥२०॥

द्रियमनोबुद्धीनां वृत्तयः संकल्परहिताः स्युः स देहस्थोऽपि मुक्तो ज्ञातव्यः ॥१४॥ यस्य देहो दुर्जनैः पीड्यतेऽन्यैः पूज्यते वा तत्र यो विकारं न प्राप्नोति स बुधः ॥१५॥ यः साध्वसाधु वा कुर्वतो वदतश्च जनान् । न स्तुवीत न निंदेत स समद्रष्टा ज्ञातव्यः ॥१६॥ तथा यस्तेषां साध्वसाधु वा न कुर्यान्न च ध्यायेत् किंतु जडवच्चरेत् स जीवन्मुक्तो ज्ञातव्यः ॥१७॥ यो वेदब्रह्मणि निष्णातोऽपि सन् परे ब्रह्मणि अनुभवयुक्तो न भवेच्चेत्तर्हि तस्य श्रमश्चिरप्रसूतां गां रक्षत इव व्यर्थः स्यात् ॥१८॥ एतदेवाह । दुग्धदोहां गां, कामशून्यां स्त्रियं, पराधीनं देहं, दुष्टं पुत्रं, पात्रेऽदत्तं द्रव्यं, भगवद्वर्णनरहितां वाचं च यो रक्षति स दुःखानंतरं दुःख्येव भवति ॥१९॥ यस्यां मे पवित्रं कर्म जन्म वा नास्ति तां वाणीं धीरो न धारयेत् ॥२०॥

१ मायाया अनावरकत्वादाश्रयाऽव्यामोहकत्वाच्च ।

एवं विचारेणात्मनि नानात्वभ्रमं हित्वा पूर्णे मयि निर्मलं मनः संस्थाप्योपारमेत ॥२१॥ हे उद्धव, त्वं ब्रह्मणि स्थिरं मनो धारयितुमसमर्थश्चेत्तर्हि सर्वकर्माणि मदर्थं समाचर ॥२२॥ श्रद्धालुर्मे कथाः शृण्वन् मे कर्म गायन् जन्म च स्मरन् ॥२३॥ मदर्थे धर्म-कामार्थानाचरन् यो वर्तते स मयि स्थिरां भक्तिं लभते ॥२४॥ सत्संगप्राप्तया भक्त्या मम ध्यानकर्ता पुरुषो मत्पदं प्राप्नोति ॥२५॥ उद्धव उवाच । हे कृष्ण, तव साधुः कीदृशः संमतः । तथा त्वयि कीदृशी भक्तिः कर्तव्या ॥२६॥ हे जगत्प्रभो, एतन्मह्यं शरणागताय मे वद ॥२७॥ यतः प्रकृतेः परो ब्रह्मरूपस्त्वमवतीर्णोऽसि ॥२८॥ श्रीभगवानुवाच ॥ हे उद्धव, साधुलक्षणं शृणु । कृपालुः सुखदुःखसमः सर्वोपकारकः ॥२९॥ कामैरक्षुभितचित्तः ।

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ॥ उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥२१॥ यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ॥ मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥२२॥ श्रद्धालुर्मे कथाः शृण्वन्सुभद्रा लोकपावनीः ॥ गायन्ननुस्मरन्कर्म जन्म चाभिनयन्मुहुः ॥२३॥ मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः ॥ लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥२४॥ तत्संगलब्धया भक्त्या मयि मां स उपासिता ॥ स वै मे दर्शितं सद्भिरंजसा विंदते पदम् ॥२५॥ उद्धव उवाच ॥ साधुस्तवोत्तमश्लोक मतः कीदृग्विधः प्रभो ॥ भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता ॥२६॥ एतन्मे पुरुषाध्यक्ष लोकाध्यक्ष जगत्प्रभो ॥ प्रणतायानुरक्ताय प्रपन्नाय च कथ्यताम् ॥२७॥ त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ॥ अवतीर्णोऽसि भगवन्स्वेच्छोपात्तपृथग्वपुः ॥२८॥ श्रीभगवानुवाच ॥ कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ॥ सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥२९॥ कामैरहतधीर्दांतो मृदुः शुचिरकिंचनः ॥ अनीहो मितभुक् शांतः स्थिरो मच्छरणो मुनिः ॥३०॥ अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ॥ अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥३१॥ आज्ञायैवं गुणान्दोषान्मयाऽऽदिष्टानपि स्वकान् ॥ धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः ॥३२॥ ज्ञात्वाऽज्ञात्वाऽथ ये वै मां यावान्यश्चास्मि यादृशः ॥ भजंत्यनन्यभावेन ते मे भक्ततमा मताः ॥३३॥ मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनम् ॥ परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनम् ॥३४॥ मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ॥ सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥३५॥ मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ॥ गीततांडववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥३६॥

शुचिर्मितभुक् शांतो मदाश्रयः ॥३०॥ अप्रमत्तः जितषड्गुणः अमानी मैत्रः कविः ॥३१॥ वेदोक्तान् गुणान् विपक्षे नरकपातादिदोषांश्च ज्ञात्वा धर्मान् संत्यज्य यो मां भजेत् स सत्तमः ॥३२॥ किंच । यावान् यादृशश्चाहं तं मां ज्ञात्वा एकांतभावेन ये भजंति ते मे भक्ततमा मान्याः ॥३३॥ अथ भक्तिलक्षणमाह । मत्प्रतिमाः मद्भक्तदर्शन-स्पर्शनार्चनं मे गुणकर्मानुकीर्तनम् ॥३४॥ मत्कथाश्रवणे श्रद्धा, मम ध्यानं, सर्वस्य लब्धस्य मम समर्पणं, दास्येन देहसमर्पणम् ॥३५॥ मज्जन्म-कर्म-कथनं, मम जन्माष्टम्यादिपर्वणामनुमोदनं, गीतवा-

१ देश-काल-वस्तु-परिच्छेदरहितः । २ सच्चिदानंदादिरूपः ।

द्यादिभिर्मम मंदिरोत्सवः ॥३६॥ सर्ववार्षिकपर्वसु पूजा-नैवेद्यादिसमर्पणं, मदीयव्रतधारणम् ॥३७॥ मत्प्रतिमास्थापने श्रद्धा, मम पूजनार्थे- स्वतः अन्यैः संभूय च- उद्यानोपवनादिकरणे उद्योगकरणम् ॥३८॥ संमार्जनादिना दासवन्मम मंदिरसेवनम् ॥३९॥ अमानित्वं कृतस्य धर्मस्यापरिकीर्तनं मम निवेदितस्य दीपादेरुपयोगार्थमग्रहणम् । 'तीर्थप्रसादादिकं तु भक्त्या ग्राह्यमेव' ॥४०॥ यद्यल्लोके इष्टं यच्चात्मनः प्रियं तत्तन्मह्यं निवेदयेत् ॥४१॥ अथ पूजास्थानान्याह । सूर्यः अग्निः ब्राह्मणः गावः वैष्णवः आकाशं वायुः जलं भूमिः आत्मा सर्वभूतानि चेति मम पूजास्थानानि ॥४२॥ तत्र सूर्ये सूक्तैरुपस्थानादिना मां पूजयेत् । अग्नौ होमद्रव्येण । ब्राह्मणे आतिथ्येन । गोषु तृणदानादिना ॥४३॥ वैष्णवे बंधुवत्संमाननेन । हृदयाकाशे ध्यानेन । वायौ प्राणदृष्ट्या । जले जलादिभिस्तर्पणादिना ॥४४॥ भूमौ मंत्रन्यासैः । देहे भोगैः । सर्वभूतेषु समत्वेन मां पूजयेत् ॥४५॥ एषु स्थानेषु

यात्रा बलिविधानं च सर्ववार्षिकपर्वसु ॥ वैदिकी तांत्रिकी दीक्षा मदीयव्रतधारणम् ॥३७॥ ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः ॥ उद्यानोपवनाक्रीडपुरमंदिरकर्मणि ॥३८॥ संमार्जनोपलेपाभ्यां सेकमंडलवर्तनैः ॥ गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥३९॥ अमानित्वमदंभित्वं कृतस्यापरिकीर्तनम् ॥ अपि दीपावलोकं मे नोपयुंज्यान्निवेदितम् ॥४०॥ यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यं तदानंत्याय कल्पते ॥४१॥ सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ॥ भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥४२॥ सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ॥ आतिथ्येन तु विप्राग्र्ये गोष्वंग यवसादिना ॥४३॥ वैष्णवे बंधुसत्कृत्या हृदि खे ध्याननिष्ठया ॥ वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥४४॥ स्थंडिले मंत्रहृदयैर्भोगैरात्मानमात्मनि ॥ क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥४५॥ धिष्ण्येष्वेष्विति मद्रूपं शंखचक्रगदांबुजैः ॥ युक्तं चतुर्भुजं शांतं ध्यायन्नर्चेत्समाहितः ॥४६॥ इष्टापूर्तेन मामेवं यो यजेत समाहितः ॥ लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥४७॥ प्रायेण भक्तियोगेन सत्संगेन विनोद्धव ॥ नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥४८॥ अथैतत्परमं गुह्यं शृण्वतो यदुनंदन ॥ सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा ॥४९॥ इति श्रीमद्भा० महा० एकाद० भगवदुद्धवसंवादे एकादशोऽध्यायः ॥११॥ श्रीभगवानुवाच ॥ न रोधयति मां योगो न सांख्यं धर्म एव च ॥ न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥१॥

मद्रूपं शंख-चक्र-गदा-पद्म-युक्तं चतुर्भुजं ध्यात्वा पूजयेत् ॥४६॥ इष्टापूर्तकर्मणा च मां यः पूजयेत्स भक्तिं लभते ॥४७॥ हे उद्धव, बहुधा सत्संगेन यो भक्तियोगस्तेन विना संसारतरणेऽन्य उपायो नास्ति ॥४८॥ अथ शृण्वतस्तवान्यत्सुगोप्यमपि वक्ष्यामि । यतस्त्वं मे भृत्यः सुहृत् सखा चासि ॥४९॥ इति श्रीमद्भागवतचू० एकाद०एकादशोऽध्यायः ॥११॥ द्वादशे साधुसंगस्य महिमा वर्णितः पुरा । कर्मानुष्ठानतत्त्यागव्यवस्था च ततः परम् ॥१॥ श्रीभगवानुवाच । हे उद्धव, मां सत्संगो यथा वशीकरोति तथा अष्टांगयोग-सांख्य-धर्म-स्वाध्यायादयस्तथा व्रत-यज्ञ-मंत्र-जप-तीर्थयात्रा-यम-नियमादयश्च न वशीकुर्वंति ॥१॥ ॥ ॥ ॥ ॥

॥२॥ अहो सत्संगेन दैत्य-राक्षस-मृग-खग-गंधर्वाप्सरसो नाग-सिद्ध-चारण-गुह्यकविद्याधरास्तथा मनुष्येषु वैश्य-शूद्र-स्त्रियोंऽत्यजा एते रजस्तमःप्रकृतयोऽपि तत्तद्युगे वहवो मत्पदं प्राप्ताः संति ॥३॥४॥ किंच । वृत्रासुरः प्रह्लादः वृषपर्वा वलिः वाणः मयः विभीषणः ॥५॥ सुग्रीवः हनुमान् जांववान् जटायुः तुलाधारः व्याधः कुब्जा गोप्यः यज्ञपत्न्यः इत्यादयो वेदाध्ययनरहिता अपि केवलं सत्संगादेव मां प्राप्ताः ॥६॥७॥ तत्र गोप्यो गावो नगा[1] मृगा अन्ये केचिन्मूढधियोऽपि केवलेन भावेन कृतार्थाः संतो मां प्राप्ताः ॥८॥ यं मां योग-सांख्य-दान-व्रत-तप-आदिभिर्यत्नवानपि न प्राप्नुयात् ॥९॥ तत्र गोपीनां भावं प्रपंचयति । रामेण सह मयि अक्रूरेण मथुरां नीते सति गोप्यः सुखप्राप्तये मत्तोऽन्यं न ददृशुः ॥१०॥

व्रतानि यज्ञश्छंदांसि तीर्थानि नियमा यमाः ॥ यथाऽवरुंधे सत्संगः सर्वसंगापहो हि माम् ॥२॥ सत्संगेन हि दैतेया यातुधाना मृगाः खगाः ॥ गंधर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥३॥ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोंऽत्यजाः ॥ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ॥४॥ वहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वा वलिर्बाणो मयश्चाथ विभीषणः ॥५॥ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ॥ व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथाऽपरे ॥६॥ ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ॥ अव्रताऽतप्ततपसः सत्संगान्मामुपागताः ॥७॥ केवलेन हि भावेन गोप्यो गावो नगा मृगाः ॥ येऽन्ये मूढधियो नागाः सिद्धा मामीयुरंजसा ॥८॥ यं न योगेन सांख्येन दानव्रततपोऽध्वरैः ॥ व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥९॥ रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ॥ विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥१०॥ तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृंदावनगोचरेण ॥ क्षणार्धवत्ताः पुनरंग तासां हीना मया कल्पसमा वभूवुः ॥११॥ ता नाविदन्मय्यनुषंगवद्धधियः स्वमात्मानमदस्तथेदम् ॥ यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥१२॥ मत्कामा रमणं जारमस्वरूपविदोऽवलाः ॥ ब्रह्म मां परमं प्रापुः संगाच्छतसहस्रशः ॥१३॥ तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥ प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥१४॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥ याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥१५॥

मया सह गोपीभिर्वृंदावने या रात्रयः क्षणार्धवन्नीताः ता एव पुनर्मया हीनास्तासां कल्पसमा वभूवुः ॥११॥ अपि च । ता गोप्यो मय्यासक्तवुद्धयः सत्यः स्वदेहमिमं लोकं परलोकं च नाविदन् । यथा मुनयः समाधौ नामरूपे न विदुस्तद्वत् । किंतु समुद्रतोये नद्य इव मयि प्रविष्टाः ॥१२॥ एवं ताः शतसहस्रशो मत्स्वरूपज्ञानरहिता अपि मत्कामाः सत्यो मत्संगाज्जारवुद्धिवेद्यमपि ब्रह्मस्वरूपं मां प्रापुः॥१३॥तस्मात् हे उद्धव, त्वं श्रुतिं स्मृतिं विधिं निषेधं च हित्वा॥१४॥सर्वात्मभावेन मां शरणं याहि। ततो मयैव निर्भयो भव ॥१५॥

[1] यमलार्जुनादयः ।

उद्धव उवाच ॥ हे कृष्ण, त्वया पूर्वं कर्म कर्तव्यमित्युक्तम् । इदानीं तु सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते । अतस्तव वाचं शृण्वतो मे हृदिस्थः 'आत्मनः कर्तृत्वाद्यस्ति नास्ति वा तथा कर्म कार्यं वा त्याज्यं वेति' संशयो न निवर्तते । तेन मे मनो भ्राम्यति ॥१६॥ श्रीभगवानुवाच ॥ हे उद्धव, सोऽपरोक्षः परमेश्वरो देहे आधारादिचक्रेषु पराख्येन नादवता प्राणेन सह प्रविष्टः सन् मणिपूरचक्रे विशुद्धिचक्रे च पश्यंत्याख्यं मध्यमाख्यं च सूक्ष्मं रूपं प्राप्य ततो मुखे मात्रा[2] स्वरो[3] वर्ण[4] इत्येवं वैखर्याख्योऽतिस्थूलो नानावेदशाखात्मको भवति ॥१७॥ अत्र दृष्टांतः । यथाग्निराकाशेऽदृश्य ऊष्मरूपो वर्तते । स काष्ठे मथितश्चेद्वायुसाहाय्येन सूक्ष्मविस्फुलिंगादिरूपो भूत्वा ततो होमद्रव्येण वर्धते । तथैव परमेश्वरस्येयं प्रकटता सूक्ष्म-मध्यम-स्थूल-वाणीरूपेण भवति ॥१८॥ एवं वागादिकर्मेंद्रियाणां भाषणादिरूपा श्रोत्रादिज्ञानेंद्रियाणां शब्दादिरूपा मनोबुद्ध्यादीनां च संकल्पविज्ञा-

उद्धव उवाच ॥ संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ॥ न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥१६॥ श्रीभगवानुवाच ॥ स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ॥ मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥१७॥ यथा नलः खेऽनिलबंधुरूष्मा बलेन दारुण्यधिमथ्यमानः ॥ अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥१८॥ एवं गदिः कर्म गतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च ॥ संकल्पविज्ञानमथाभिमानः सूत्रं रजःसत्वतमोविकारः ॥१९॥ अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः ॥ विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥२०॥ यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तंतुवितानसंस्थः ॥ य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥२१॥ द्वे अस्य बीजे शतमूलस्त्रिनालः पंचस्कंधः पंचरसप्रसूतिः ॥ दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः ॥२२॥ अदंति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः ॥ हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम् ॥२३॥

नादिरूपेश्वरस्य प्रकटता भवति ॥१९॥ अयमीश्वर आदावव्यक्तरूप एक एव ततः कालेन वाण्यादिविभागरूपो बहुप्रकार इव भाति । यथा बीजानि क्षेत्रं प्राप्य बहुरूपाणि भवंति तद्वत् ॥२०॥ एवंभूत एष प्रवृत्तिस्वभावः प्रपंचवृक्षो जीवस्य कर्माणि तत्फलानि च जनयति । यस्मिन् प्रपंचवृक्षे इदं विश्वं पटवदोतप्रोतमस्ति ॥२१॥ वृक्षरूपकं प्रपंचयति । अस्य वृक्षस्य पुण्यपापे द्वे बीजे । अपरिमितवासना मूलानि । त्रयो गुणा अंकुराः । पंच भूतानि स्कंधाः । शब्दादिविषया रसाः । एकादशेंद्रियाणि शाखाः । वात-पित्त-श्लेष्माणस्त्वचश्च संति । अस्मिन् जीवेश्वरौ द्वौ पक्षिणौ स्तः । अस्य सुखदुःखे द्वे फले स्तः ॥२२॥ अस्य वृक्षस्यैकं दुःखं फलं कामिनः खादंति । एकं सुखं फलं संन्यासिनः सेवंते । एवं मायया बहुरूपमीश्वरं गुरुभिः कृत्वा यो वेत्ति स वेदार्थं वेत्ति ॥२३॥ ॥ ॥ ॥ ॥ ॥

१ ईश्वरो मायावशात्प्रपंचात्मना भाति । तत्प्रपंचाध्यासाच्च जीवानामविद्यया कर्तृत्वाद्यस्ति । ततो विधिनिषेधाधिकारश्चास्ति । तदानीं सत्वशुद्ध्यर्थं तैर्जीवैः कर्माणि कार्याणि । सत्वे च शुद्धे पुनः कर्मजाड्यपरिहाराय भक्तिविक्षेपककर्मादरं परित्यज्य दृढविश्वासेनेश्वरभजनं कार्यम् । जातायां तु विद्यायां न किंचित्कर्तव्यमस्तीत्यभिप्रायेण श्रीभगवान् प्रथममीश्वरात्प्रपंचोत्पत्तिं वक्ति । २ मात्रा ह्रस्वादिः । ३ स्वर उदात्तादिः । ४ वर्णः अकारादिः ।

हे उद्धव, एवंभूतं जीवोपाधिं त्रिगुणात्मक-लिंगशरीररूपं संसारवृक्षं गुरूपासनया एकांतभक्त्या च तीक्ष्णेन विद्याकुठारेण छित्वा परमात्मानं प्राप्य साधनं त्यज ॥२४॥ इति श्रीम० चूर्णि० एका० द्वादशोऽध्यायः ॥१२॥ त्रयोदशेऽथ सत्वस्य वृद्ध्या विद्योदयक्रमः । हंसेतिहासतश्चित्तगुणविश्लेषवर्णनम् ॥१॥ श्रीभगवानुवाच ॥ सत्वं रजस्तम इति गुणाः प्रकृतेः संति नात्मनः । सत्ववृद्ध्या रजस्तमोवृत्तीर्जयेत् । सत्यदयादिरूपं सत्वं तूपशमात्मकेन सत्वेनैव जयेत् ॥१॥ सात्विकपदार्थसेवया सत्वं वर्धते । वृद्धात्सत्वान्मद्भक्तिलक्षणो धर्मो भवेत् ॥२॥ स धर्मो रजस्तमसी नाशयति तन्नाशे अधर्मो नश्यति ॥३॥ शास्त्रं जलं प्रजा देशः कालः कर्म जन्म ध्यानं मंत्रः संस्कारः एते दश त्रिगुणहेतवः ॥४॥ एषु शास्त्रादिषु यद्यद्वृद्धाः प्रशंसंति तत्तत्सात्विकम् । यद्यन्निंदंति तत्तत्तामसम् । तैर्यदुपेक्षितं तद्राजसं ज्ञातव्यम् ॥५॥ सत्ववृद्धये सात्विकान्येव सेवेत । ततो धर्म-

एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः ॥ विवृश्च्य जीवाशयमप्रमत्तः संपद्य चात्मानमथ त्यजास्त्रम् ॥२४॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे द्वादशोऽध्यायः ॥१२॥ श्रीभगवानुवाच ॥ सत्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ॥ सत्वेनान्यतमौ हन्यात्सत्वं सत्वेन चैव हि ॥१॥ सत्वाद्धर्मो भवेद्वृद्धात्पुंसो मद्भक्तिलक्षणः ॥ सात्विकोपासया सत्वं ततो धर्मः प्रवर्तते ॥२॥ धर्मो रजस्तमो हन्यात्सत्ववृद्धिरनुत्तमः ॥ आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥३॥ आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ॥ ध्यानं मंत्रोऽथ संस्कारो दशैते गुणहेतवः ॥४॥ तत्तत्सात्विकमेवैषां यद्यद्वृद्धाः प्रचक्षते ॥ निंदंति तामसं तत्तद्राजसं तदुपेक्षितम् ॥५॥ सात्विकान्येव सेवेत पुमान्सत्वविवृद्धये ॥ ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम् ॥६॥ वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ॥ एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः ॥७॥ उद्धव उवाच ॥ विदंति मर्त्याः प्रायेण विषयान्पदमापदाम् ॥ तथापि भुंजते कृष्ण तत्कथं श्वखराजवत् ॥८॥ श्रीभगवानुवाच ॥ अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि ॥ उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥९॥ रजोयुक्तस्य मनसः संकल्पः सविकल्पकः ॥ ततः कामो गुणध्यानाद्दुःसहः स्याद्धि दुर्मतेः ॥१०॥ ॥ ॥ ॥

स्ततोऽपरोक्षं ज्ञानं च भवति ॥६॥ वेणूनां संघर्षाज्जातोऽग्निर्यथा स्वत एवोत्पन्नाभिर्ज्वालाभिस्तद्वनं सर्वं दग्ध्वा पश्चात्स्वयं शाम्यति । एवं देहोत्पन्ना विद्यापि स्वकारणभूतान् गुणान् तत्कार्याणि कर्माणि च दग्ध्वा स्वयमपि शाम्यति ॥७॥ उद्धव उवाच ॥ हे कृष्ण, मनुष्या विषयान् दुःखदान् ज्ञात्वापि श्व-खराजवत् पुनस्तान् सेवंते तत्कथम् ॥८॥ श्रीभगवानुवाच ॥ हे उद्धव, विवेकशून्यस्य पुरुषस्य देहादावहमिति मिथ्याबुद्धिरुत्पद्यते ततो दुःखात्मको रजोगुणो मनःप्रति व्याप्नोति ॥९॥ ततो रजोयुक्तस्य मनस इदं भोग्यमिति संकल्पः स्यात् । ततो दुर्धरः कामो भवति ॥१०॥ ॥ ॥ ॥ ॥ ॥ ॥

१ विद्याकुठारेणेत्युक्ते विद्योत्पत्तिप्रकारानुवाच । २ श्वानो यथा भर्त्स्यमाना अपि । खरीमनुधावंतः खरा यथा पद्भ्यां ताड्यमाना अपि । अजाश्च यथा निर्लज्जा हंतुमानीता अपि तद्वत् ।

ततो विषयान् भोक्तुं स कर्माणि करोति ॥११॥ विवेकी तु रजस्तमोभ्यां मोहितचित्तोऽपि पुनर्मनो रुंधन् विषयेषु न सज्जते ॥१२॥ मनोनिरोधे सुखोपायमाह । अनलसः पुमान् जितश्वासो जितासनश्च भूत्वा आनंदरूपे मयि मनोऽर्पयन् समादध्यात् ॥१३॥ सर्वतो मन आकृष्य यथा मय्याविश्यते एतादृशो योगो मच्छिष्यैः सनकादिभिः कथितोऽस्ति ॥१४॥ उद्धव उवाच ॥ हे कृष्ण, यदा त्वं येन रूपेण सनकादिभ्यो योगं कथितवान् तत्ते रूपमहं ज्ञातुमिच्छामि ॥१५॥ श्रीभगवानुवाच ॥ एकदा ब्रह्मणः पुत्राः सनकादयो योगस्य दुर्ज्ञेयां गतिं ब्रह्माणंप्रति पप्रच्छुः ॥१६॥ सनकादय ऊचुः ॥ हे ब्रह्मन्, विषयेषु स्वभावतश्चित्तं प्रविशति । ते च विषया वासनारूपेण चित्ते प्रविशंति । एवं सति मुमुक्षो-

करोति कामवशगः कर्माण्यविजितेंद्रियः ॥ दुःखोदर्काणि संपश्यन् रजोवेगविमोहितः ॥११॥ रजस्तमोभ्यां यदपि विद्वान्विक्षिप्तधीः पुनः ॥ अतंद्रितो मनो युंजन् दोषदृष्टिर्न सज्जते ॥१२॥ अप्रमत्तोऽनुयुंजीत मनो मय्यर्पयन् शनैः ॥ अनिर्विण्णो यथाकालं जितश्वासो जितासनः ॥१३॥ एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः ॥ सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा ॥१४॥ उद्धव उवाच ॥ यदा त्वं सनकादिभ्यो येन रूपेण केशव ॥ योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम् ॥१५॥ श्रीभगवानुवाच ॥ पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ॥ पप्रच्छुः पितरं सूक्ष्मां योगस्यैकांतिकीं गतिम् ॥१६॥ सनकादय ऊचुः ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ॥ कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः ॥१७॥ श्रीभगवानुवाच ॥ एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ॥ ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥१८॥ स मामचिंतयद्देवः प्रश्नपारतितीर्षया ॥ तस्याहं हंसरूपेण सकाशमगमं तदा ॥१९॥ दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवंदनम् ॥ ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥२०॥ इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा ॥ यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥२१॥ वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः ॥ कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः ॥२२॥ पंचात्मकेषु भूतेषु समानेषु च वस्तुतः ॥ को भवानिति वः प्रश्नो वाचारंभो ह्यनर्थकः ॥२३॥ ॥ ॥ ॥ ॥ ॥

श्चित्तविषययोः परस्परं त्यागः कथम् ॥१७॥ श्रीभगवानुवाच । एवं पृष्टो ब्रह्मा विचारयन्नपि प्रश्नबीजं[1] न ज्ञातवान् ॥१८॥ ततः स ब्रह्मा प्रश्नोत्तरज्ञानेच्छया मामचिंतयत् । तदाऽहं हंसरूपेण तत्समीपं प्राप्तः ॥१९॥ ततः सनकादयो मां दृष्ट्वा नमस्कृत्य ब्रह्माणमग्रतः कृत्वा को भवानिति पप्रच्छुः ॥२०॥ एवं तैः पृष्टोऽहं यत्तेभ्य उक्तवान् तत्त्वं मत्तः शृणु ॥२१॥ हे मुनयः, युष्माभिः कृतः प्रश्नः किमात्मनस्तदुपाधेर्भूतसंघस्य वा । यद्यात्मनस्तर्हि परमार्थरूपस्यात्मन एकत्वाद्बहुषु मध्ये एकस्य निर्धारणरूपोऽयं प्रश्नः कथं घटेत । अहं च अविशेषे आत्मनि कं जातिगुणादिविशेषमाश्रित्य प्रश्नोत्तरं वक्ष्यामि ॥२२॥ भूतसंघविषयः प्रश्नश्चेत्तर्हि देवमनुष्यादिदेहेषु पंचभूतात्मकेषु समानेषु सत्सु पुनश्च परमकारण-

१ अज्ञानादयं प्रश्न इति न ज्ञातवान् ।

तया अभिन्नेषु सत्सु वः प्रश्नः केवलया वाचोच्चारितो व्यर्थ एव स्यात् ॥२३॥ परमकारणस्याभेदमाह । मनो वाग्दृष्टिभिरन्यैरपींद्रियैर्यद्गृह्यते तदहं ब्रह्मैवेति यूयं जानीत । एतेन सर्वात्मकोऽहमित्युक्तम् ॥२४॥ हे सनकादयः, सत्यं गुणेषु चेत आविशते गुणाश्च चेतसि प्रविशंति ते गुणाश्चेतश्चोभयं संग्रंथितं मदात्मनो ब्रह्मरूपस्य जीवस्य केवलं अध्यस्त उपाधिरस्ति न तु स्वरूपम् ॥२५॥ अतः पुनः पुनः संस्कारेण गुणेष्वाविशच्चित्तं चित्ते वासनारूपेण प्रविशंतो गुणाश्चेत्येवं तदुभयं मद्रूपः ( ब्रह्मरूपः ) सन् संत्यजेत् ॥२६॥ ननु जाग्रदाद्यवस्थावतः कुतस्त्वद्रूपता तत्राह । जाग्रत्स्वप्नसुषुप्तयो गुणतो बुद्धेरेव वृत्तयः । जीवस्तु तद्रहितः साक्षित्वेन निश्चितः ॥२७॥ तर्हि कथं तस्य जागर्मीत्यादिप्रतीतिस्तत्राह यस्माद्बुद्ध्या कृतोऽयमध्यासरूपो बंधो जीवस्य गुणवृत्तीर्ददाति । अतो मयि तुर्ये स्थित्वेमं बंधं त्यजेत् । तदा गुणानां चेतसश्च परस्परं त्यागो भवति ॥२८॥ कथं बुद्ध्या

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपींद्रियैः ॥ अहमेव न मत्तोऽन्यदिति बुध्यध्वमंजसा ॥२४॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ॥ जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥२५॥ गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ॥ गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥२६॥ जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ॥ तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥२७॥ यर्हि संसृतिबंधोऽयमात्मनो गुणवृत्तिदः ॥ मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥२८॥ अहंकारकृतं बंधमात्मनोऽर्थविपर्ययम् ॥ विद्वान्निर्विद्य संसारचिंतां तुर्ये स्थितस्त्यजेत् ॥२९॥ यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ॥ जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥३०॥ असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ॥ गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥३१॥ यो जागरे बहिरनुक्षणधर्मिणोऽर्थान् भुंक्ते समस्तकरणैर्हृदि तत्सदृक्षान् ॥ स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिंद्रियेशः ॥३२॥ एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः ॥ संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥३३॥ ॥ ॥ ॥

बंधः कथं च तं त्यजेत्तत्राह । अहंकारेण कृतं आनंदाद्यावरणेन अनर्थहेतुं बंधं, दुःखमेतदिति ज्ञात्वा विरक्तो भूत्वा तुर्ये मयि स्थितः सन् अभिमानं भोगचिंतां च त्यजेत् ॥२९॥ पुंसो भेदबुद्धिर्यावन्न निवर्तेत तावज्जागर्त्यपि स्वप्नान् पश्यन्निवाज्ञो ज्ञातव्यः । यथा स्वप्ने जागृदवस्थां पश्यति साऽपि स्वप्नरूपैव तद्वत् ॥३०॥ भेदबुद्धिनिवृत्तावुपायमाह । देहादीनां वर्णाश्रमादिरूपं भेदं स्वर्गादिफलादिफलानि कर्माणि च स्वप्नवन्मिथ्याभूतानि ज्ञातव्यानि ॥३१॥ आत्मन एकत्वनिश्चये युक्तिमाह । यः जागरे विषयान् भुंक्ते यश्च स्वप्ने जागर-दृष्ट-सदृशान् वासनामयान् विषयान् भुंक्ते । यश्च सुषुप्ते तान् सर्वानुपसंहरति । सोऽवस्थात्रयसाक्षी आत्मा एवेति ॥३२॥ एवं विचार्य अनुमानैः सतामुपदेशैश्च तीक्ष्णेन ज्ञानखड्गेनाहंकारं छित्वा हृदि स्थितं मां भजत ॥३३॥ ॥ ॥ ॥ ॥ ॥ ॥

१ सांसारिके कर्मणि सावधानोऽपि ।

अनुमानानि दर्शयति । गुणपरिणामकृतमिदं सर्वं दृश्यं स्वप्नवन्मायेति ज्ञात्वा ॥३४॥ तस्माद्दृश्याद्दृष्टिं निवर्त्य मनोवाक्कायव्यापाररहितः सन् स्वसुखानुभवो भवेत् । यद्यपि क्वचिदाहारादिष्विदं शरीरादिकं दृश्यते तथापि पूर्वमसद्बुद्ध्या त्यक्तं तत्पुनर्मोहाय न भवेत् । किंतु देहपातपर्यंतं संस्कारमात्रेण तस्यावभासस्तिष्ठेत् ॥३५॥ एतदेवोपपादयति । सिद्धः पुमान् येन देहेन स्वरूपं ज्ञातवान् तं देहमपि स्थितमुत्थितं गतमागतं वा नानुसंधत्ते कुतोऽन्यत् । यथा मदिरामदांधः परिहितं वस्त्रं स्थितं गतं वा नानुसंधत्ते तद्वत् ॥३६॥ तस्य देहोऽपि दैवाधीनः सन् यावत्प्रारब्धं कर्म तावज्जीवत्येव । तथापि तस्मिन् ज्ञाततत्त्वो योगी आसक्तो न भवेत् ॥३७॥ हे सनकादयः, मयैतत् सांख्ययोगशास्त्रयो रहस्यं युष्मभ्यमुक्तम् । युष्मान्प्रति मोक्षधर्मान् वक्तुमागतं विष्णुं मां जानीत ॥३८॥ किंच । अहं योगस्य सांख्यस्य सत्य-प्रभाव-कीर्त्यादीनां चाश्रयोऽस्मि ॥३९॥ साम्यासंगादयः

ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ॥ विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥३४॥ दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः ॥ संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ॥३५॥ देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदांधः ॥३६॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारंभकं प्रतिसमीक्षत एव सासुः ॥ तं सप्रपंचमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥३७॥ मयैतदुक्तं वो विप्रा गुह्यं यत्सांख्ययोगयोः ॥ जानीतमागतं यज्ञं युष्मद्धर्मविवक्षया ॥३८॥ अहं योगस्य सांख्यस्य सत्यस्यर्तस्य तेजसः ॥ परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥३९॥ मां भजंति गुणाः सर्वे निर्गुणं निरपेक्षकम् ॥ सुहृदं प्रियमात्मानं साम्यासंगादयोऽगुणाः ॥४०॥ इति मे छिन्नसंदेहा मुनयः सनकादयः ॥ सभाजयित्वा परया भक्त्याऽगृणत संस्तवैः ॥४१॥ तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः ॥ प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥४२॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे त्रयोदशोऽध्यायः ॥१३॥ उद्धव उवाच ॥ वदंति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ॥ तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥१॥ भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः ॥ निरस्य सर्वतः संगं येन त्वय्याविशेन्मनः ॥२॥ ॥ ॥ ॥

सर्वे गुणा निर्गुणं निरपेक्षमपि मां बंधका न भूत्वा सेवंते ॥४०॥ हे उद्धव, एवं मत्तश्छिन्नसंदेहास्ते सनकादयो मां सत्कृत्य भक्त्या तुष्टुवुः ॥४१॥ ततोऽहं तैः पूजितः स्तुतश्च सन् ब्रह्मणः पश्यतः सतः स्वधाम प्रत्यागतोऽस्मि ॥४२॥ इति श्रीमद्भागवतचूर्णिकायां एका० त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशे परं श्रेयो भक्तिरेव न चेतरत् । इत्येतद्वर्ण्यते ध्यानयोगश्च सह साधनैः ॥१॥ उद्धव उवाच ॥ हे कृष्ण वादिनो बहूनि श्रेयःसाधनानि वदंति । तेषां सर्वेषां प्राधान्यमस्ति किंवा एकस्यैव मुख्यताऽस्ति ॥१॥ हे स्वामिन्, भवता फलानुसंधानरहितो भक्तियोग उक्तः । येन त्वयि मनः प्रविशेत् ॥२॥ ॥ ॥ ॥ ॥ ॥

श्रीभगवानुवाच ॥ हे उद्धव, मत्प्राप्तिलक्षणधर्मयुक्ता वेदलक्षणा वाणी प्रलयकाले नष्टा । सा मया सृष्ट्यारंभे ब्रह्मणे प्रोक्ता ॥३॥ तेन स्वपुत्राय मनवे उक्ता । तस्माद्भृग्वादयः सप्तर्षयो जगृहुः ॥४॥ तेभ्यस्तत्पुत्रा देव-दानव-मनुष्य-सिद्ध-गंधर्वादयो जगृहुः । तेषां रजः-सत्व-तमोगुणोद्भूता बह्व्यो वासनाः ॥५॥६॥ अतस्तदनुसारेण तेषां वेदार्थव्याख्यानरूपा वाचः प्रवर्तंते ताभिर्भूतानां मतयो भिद्यंते ॥७॥ केषांचिदुपदेशपरंपरासंबंधेन मतिभेदः । केचित्तु पाखंडमतयो जाताः ॥८॥ ते सर्वे मन्मायामोहितधियः संतः स्वस्वरुच्यनुसारेण नानाविधानि श्रेयःसाधनानि वदंति ॥९॥ तत्र मीमांसका धर्मं, काव्यालंकारकृतो यशः, वात्स्यायनादयः कामं, योगशास्त्रकृतः सत्यशौचदमादि, दंडनीतिकृत ऐश्वर्यं

श्रीभगवानुवाच ॥ कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ॥ मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥३॥ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ॥ ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्म महर्षयः ॥४॥ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ॥ मनुष्याः सिद्धगंधर्वाः सविद्याधरचारणाः ॥५॥ किंदेवाः किन्नरा नागा रक्षःकिंपुरुषादयः ॥ बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः ॥६॥ याभिर्भूतानि भिद्यंते भूतानां मतयस्तथा ॥ यथाप्रकृति सर्वेषां चित्रा वाचः स्रवंति हि ॥७॥ एवं प्रकृतिवैचित्र्याद्भिद्यंते मतयो नृणाम् ॥ पारंपर्येण केषांचित्पाखंडमतयोऽपरे ॥८॥ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ॥ श्रेयो वदंत्यनेकांतं यथाकर्म यथारुचि ॥९॥ धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ॥ अन्ये वदंति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ॥ केचिद्यज्ञतपोदानं व्रतानि नियमान्यमान् ॥१०॥ आद्यंतवंत एवैषां लोकाः कर्मविनिर्मिताः ॥ दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानंदाः शुचार्पिताः ॥११॥ मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः ॥ मयाऽऽत्मना सुखं यत्तत्कुतः स्याद्विषयात्मनाम् ॥१२॥ अकिंचनस्य दांतस्य शांतस्य समचेतसः ॥ मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥१३॥ न पारमेष्ठ्यं न महेंद्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनाऽन्यत् ॥१४॥ न तथा मे प्रियतम आत्मयोनिर्न शंकरः ॥ न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥१५॥ ॥ ॥ ॥ ॥

नास्तिकाश्च दानं भोगं च पुरुषार्थं वदंति लोकायतिका यज्ञ-दान-तपो-व्रतादीनि वदंति ॥१०॥ एषां कर्मनिर्मिताः स्वर्गादिलोकाः दुःखोत्तरफलाः स्वल्पानंदाः शोकयुक्ताश्च संति ॥११॥ अथ भक्तेर्मुख्यत्वमाह । हे उद्धव, मय्यर्पितचित्तस्य निरपेक्षस्य स्वरूपत्वेन स्फुरता परमानंदरूपेण मया यत्सुखमस्ति तद्विषयात्मनां कुतः स्यात् ॥१२॥ मया संतुष्टमनसः शांतस्य पुरुषस्य सर्वा दिशः सुखमया भवंति ॥१३॥ एवं मय्यर्पितचित्तः पुमान् ब्रह्मलोकं सार्वभौमं पातालाधिपत्यं योगसिद्धिं मोक्षमपि नेच्छति । अहमेव तस्यातिप्रियः ॥१४॥ ममापि स एव प्रेष्ठ इत्याह । हे उद्धव, यथा भवान् भक्तो मे प्रियतमस्तथा ब्रह्मा शिवो बलरामः श्रीः स्वदेहोऽपि वा न प्रियः ॥१५॥ ॥ ॥

---

१ भक्तिरेव मुख्येति वक्तुं स्वभावानुसारेण बहुधा वेदार्थज्ञानप्रकारं श्रीभगवानुवाच ।

एवंभूतं निरपेक्षं भक्तं, अस्य भक्तस्य पादरेणुभिर्मदंतर्वर्तीनि ब्रह्मांडानि पवित्रीकुर्यामिति भावेनाहमनुव्रजामि ॥१६॥ एवंभूता निष्कामा मे भक्ता यत्सुखं लभंते तदन्ये न लभंते ॥१७॥ आस्तां तावदुत्तमभक्तस्य कथा । यतः प्राकृतोऽपि मद्भक्तो विषयैराकृष्यमाणोऽपि समर्थया भक्त्या विषयैर्न पराभूयते ॥१८॥ हे उद्धव, यथा प्रदीप्तोऽग्निः काष्ठानि भस्मसात्करोति तथा मद्विषया भक्तिः पापानि भस्मसात् करोति ॥१९॥ अपि च । यथा भक्तिर्मां वशीकरोति तथा सांख्य-योग-तपो-धर्मादयो न वशीकुर्वंति ॥२०॥ अहं श्रद्धायुक्तया भक्त्यैव ग्राह्यः । मन्निष्ठा भक्तिः श्वपाकानपि जातिदोषादपि पवित्रीकरोति ॥२१॥ सत्य-दयायुक्तो धर्मोऽपि भक्तिहीनं नरं न पुनाति ॥२२॥ रोमहर्षेण द्रवता चेतसा आनंदाश्रुक-

निरपेक्षं मुनिं शांतं निर्वैरं समदर्शनम् ॥ अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः ॥१६॥ निष्किंचना मय्यनुरक्तचेतसः शांता महांतोऽखिलजीववत्सलाः ॥ कामैरनालब्धधियो जुषंति यत्तन्नैरपेक्ष्यं न विदुः सुखं मम ॥१७॥ बाध्यमानोऽपि मद्भक्तो विषयैरजितेंद्रियः ॥ प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥१८॥ यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ॥ तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥१९॥ न साधयति मां योगो न सांख्यं धर्म उद्धव ॥ न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥२०॥ भक्त्याऽहमेकया ग्राह्यः श्रद्धयाऽऽत्मा प्रियः सताम् ॥ भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् ॥२१॥ धर्मः सत्यदयोपेतो विद्या वा तपसाऽन्विता ॥ मद्भक्त्याऽपेतमात्मानं न सम्यक्प्रपुनाति हि ॥२२॥ कथं विना रोमहर्षं द्रवता चेतसा विना ॥ विनाऽऽनंदाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः ॥२३॥ वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ॥ विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥२४॥ यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम् ॥ आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥२५॥ यथायथाऽऽत्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ॥ तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवांजनसंप्रयुक्तम् ॥२६॥ विषयान्ध्यायतश्चित्तं विषयेषु विषज्जते ॥ मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥२७॥ तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् ॥ हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥२८॥ ॥

लया च विना कथं भक्तिर्गम्यते । तया च विना कथं मनः शुध्येत् ॥२३॥ यस्य वाक् गद्गदा भवति । यस्य चित्तं द्रवते । यश्च क्वचिद्रुदति हसति नृत्यते च । एवंभूतो मद्भक्तो भुवनं पुनाति ॥२४॥ यथाग्निना तापितं सुवर्णं अंतर्गतं मलं हित्वा निजं रूपं प्राप्नोति । एवं जीवात्मा भक्तियोगेन कर्मवासनां हित्वा मद्रूपतां प्राप्नोति ॥२५॥ पुरुषस्य चित्तं मत्कथाश्रवणादिभिर्[1]यथा यथा शुध्यति तथा तथा तस्य मत्स्वरूपज्ञानं जायते ॥२६॥ यथा विषयान् ध्यायतश्चित्तं विषयेषु सज्जते तथा मां स्मरतश्चित्तं मय्येव लीयते ॥२७॥ यस्मादन्यसाधनं तत्फलं च स्वप्नमनोरथवन्मिथ्यास्ति तस्मात्तद्धित्वा त्वं मद्भजनेन शोधितं मनो मयि समाधत्स्व ॥२८॥ ॥ ॥ ॥

१ श्रवणादिभक्तेः कृतप्रारंभोऽपि ।

स्त्रीणां स्त्रीसंगिनां च संगं हित्वा एकांते निर्भये देशे स्थित्वा मां चिंतयेत् ॥२९॥ यथा स्त्रीसंगात्स्त्रीसंगिसंगाच्च क्लेशो बंधश्च भवेत्तथाऽन्यसंगतो न भवेत् ॥३०॥ उद्धव उवाच ॥ मुमुक्षुर्येन प्रकारेण यादृशं त्वां ध्यायेत्तद्ध्यानं मे वक्तुमर्हसि ॥३१॥ श्रीभगवानुवाच ॥ समे आसने आसीनः पुरुषो हस्तावुत्संगे आधाय नासाग्रदृष्टिः सन् ॥३२॥ पूरकुंभकरेचकैः प्राणस्य मार्गं शोधयेत् ॥३३॥ तं सगर्भं प्राणायाममाह । मूलाधारचक्रादारभ्याविच्छिन्नं हृदि स्थितं घंटानादतुल्यमोंकारं कंठाधोभागपर्यंतं नीत्वा तत्रानुस्वारं संयोज्य स्थिरं कुर्यात् ॥३४॥ एवं प्रणवयुक्तं प्राणायामं दिने दिने त्रिकालं दशकृत्वोऽभ्यस्य मासादर्वाग्जितानिलो भवति ॥३५॥ तत ऊर्ध्वनालमधोमुखं मुकुलितं कदलीपुष्पसंकाशं देहांतवर्ति

स्त्रीणां स्त्रीसंगिनां संगं त्यक्त्वा दूरत आत्मवान् ॥ क्षेमे विविक्त आसीनश्चिंतयेन्मामतंद्रितः ॥२९॥ न तथाऽस्य भवेत्क्लेशो बंधश्चान्यप्रसंगतः॥ योषित्संगाद्यथा पुंसो यथा तत्संगिसंगतः ॥३०॥ उद्धव उवाच ॥ यथा त्वामरविंदाक्ष यादृशं वा यदात्मकम् ॥ ध्यायेन्मुमुक्षुरेतन्मे ध्यानं मे वक्तुमर्हसि ॥३१॥ श्रीभगवानुवाच ॥ सम आसन आसीनः समकायो यथासुखम् ॥ हस्तावुत्संग आधाय स्वनासाग्रकृतेक्षणः ॥३२॥ प्राणस्य शोधयेन्मार्गं पूरकुंभकरेचकैः ॥ विपर्ययेणापि शनैरभ्यसेन्निर्जितेंद्रियः ॥३३॥ हृद्यविच्छिन्नमोंकारं घंटानादं बिसोर्णवत् ॥ प्राणेनोदीर्य तत्राथ पुनः संवेशयेत्स्वरम् ॥३४॥ एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् ॥ दशकृत्वस्त्रिषवणं मासादर्वाग्जितानिलः ॥३५॥ हृत्पुंडरीकमंतस्थमूर्ध्वनालमधोमुखम् ॥ ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ॥३६॥ कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ॥ वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमंगलम् ॥३७॥ समं प्रशांतं सुमुखं दीर्घचारुचतुर्भुजम् ॥ सुचारुसुंदरग्रीवं सुकपोलं शुचिस्मितम् ॥३८॥ समानकर्णविन्यस्तस्फुरन्मकरकुंडलम् ॥ हेमांबरं घनश्यामं श्रीवत्सश्रीनिकेतनम् ॥३९॥ शंखचक्रगदापद्मवनमालाविभूषितम् ॥ नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ॥४०॥ द्युमत्किरीटकटककटिसूत्रांगदायुतम् ॥ सर्वांगसुंदरं हृद्यं प्रसादसुमुखेक्षणम् ॥४१॥ सुकुमारमभिध्यायेत्सर्वांगेषु मनो दधत् ॥ इंद्रियाणींद्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः ॥ बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ॥४२॥ तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ॥ नान्यानि चिंतयेद्भूयः सुस्मितं भावयेन्मुखम् ॥४३॥

हृदयकमलं ऊर्ध्वमुखं प्रफुल्लितमष्टदलं कर्णिकायुक्तं च ध्यात्वा ॥३६॥ कर्णिकायामुत्तरोत्तरं सूर्य-चंद्राग्नि-मंडलानि ध्यात्वाऽग्निमंडलमध्ये मम स्वरूपं ध्यायेत् ॥३७॥ कथंभूतं । चतुर्भुजं सुमुखं शांतं सुकपोलम् ॥३८॥ कुंडलाभ्यां देदीप्यमानं पीतांबरं घनश्यामं श्रीवत्सलांछनम् ॥३९॥ शंख-चक्र-गदा-पद्म-धरं वनमालया शोभितं नूपुरैर्भूषितचरणम् ॥४०॥ किरीट-कटिसूत्रांगदैर्युक्तं सर्वांगसुंदरं प्रसन्नेक्षणम् ॥४१॥ सुकुमारं च मे रूपं मम सर्वांगेषु मनो दधत् पुरुषो ध्यायेत् । किंच । विषयेभ्य इंद्रियाणि मनसाऽऽकृष्य तन्मनः सर्वांगयुक्ते मयि नयेत् ॥४२॥ तत्सर्वांगव्यापकं मनः पुनराकृष्य तेन मनसा मम केवलं सुस्मितं मुखं चिंतयेत् ॥४३॥ ॥ ॥ ॥

१ नात्युच्छ्रिते नातिनीचे ।

तत्र स्थिरता प्राप्तं तच्चित्तं पुनराकृष्य सर्वकारणरूपे मयि धारयेत् । ततस्तत्कारणत्वमपि हित्वा मयि शुद्धे ब्रह्मण्यारूढः सन् ध्यातृ-ध्येय-विभागमपि न चिंतयेत् ॥४४॥ एवं समाहितमतिर्मामात्मनि पश्यति । आत्मानं च सर्वात्मनि मयि ज्योतिर्ज्योतिषि युक्तमिव पश्यति ॥४५॥ एवं तीव्रेण ध्यानेन मनः समादधतो योगिनो दृश्य-द्रष्टृ-दर्शनरूपो भ्रमः शांतिं प्राप्नोति ॥४६॥ इति श्रीमद्भागवतचू० एकादशस्कंधे चतुर्दशोऽध्यायः ॥१४॥ ततः पंचदशे प्रोक्ताः सिद्धयो धारणानुगाः । श्रीविष्णुपदसंप्राप्तावंतरायतया मताः ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, जितेंद्रियस्य स्थिरचित्तस्य मयि चित्तं धारयतश्च योगिनः सिद्धयः स्वयमेव प्राप्ता भविष्यंति ॥१॥ उद्धव उवाच ॥ हे अच्युत, कया धारणया का कीदृशी

तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ॥ तच्च त्यक्त्वा मदारोहो न किंचिदपि चिंतयेत् ॥४४॥ एवं समाहितमतिर्मामेवात्मानमात्मनि ॥ विचष्टे मयि सर्वात्मन्ज्योतिर्ज्योतिषि संयुतम् ॥४५॥ ध्यानेनेत्थं सुतीव्रेण युंजतो योगिनो मनः ॥ संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥४६॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे चतुर्दशोऽध्यायः॥१४॥ श्रीभगवानुवाच ॥ जितेंद्रियस्य युक्तस्य जितश्वासस्य योगिनः ॥ मयि धारयतश्चेत उपतिष्ठंति सिद्धयः ॥१॥ उद्धव उवाच ॥ कया धारणया कास्वित्कथंस्वित्सिद्धिरच्युत ॥ कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥२॥ श्रीभगवानुवाच ॥ सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः ॥ तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥३॥ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिंद्रियैः ॥ प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥४॥ गुणेष्वसंगो वशिता यत्कामस्तदवस्यति ॥ एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥५॥ अनूर्मिमत्त्वं देहेऽस्मिन्दूरश्रवणदर्शनम् ॥ मनोजवः कामरूपं परकायप्रवेशनम् ॥६॥ स्वच्छंदमृत्युर्देवानां सह क्रीडानुदर्शनम् ॥ यथा संकल्पसंसिद्धिराज्ञाऽप्रतिहता गतिः ॥७॥ त्रिकालज्ञत्वमद्वंद्वं परचित्ताद्यभिज्ञता ॥ अग्न्यर्कांबुविषादीनां प्रतिष्टंभोऽपराजयः ॥८॥ ॥ ॥ ॥ ॥ ॥

च सिद्धिः प्राप्यते । सिद्धयो धारणाश्च कति संति तत्सर्वं ब्रूहि ॥२॥ श्रीभगवानुवाच । हे उद्धव, योगपारगैः सिद्धयोऽष्टादश धारणाश्चाष्टादश प्रोक्ताः । तासां मध्येऽष्टौ सिद्धयो ममाश्रयं कृत्वा तिष्ठंति । दश सिद्धयः सत्वगुणोत्कर्षहेतुकाः संति ॥३॥ ताश्च–अणिमा[1] महिमा[2] लघिमा[3] चेति तिस्रः सिद्धयो देहस्य स्युः । प्राप्तिः[4] प्राकाश्यं[5] ईशिता[6] ॥४॥ वशिता[7] प्राकाम्यं[8] एता अष्ट ८ सिद्धयो मे स्वाभाविक्यः ॥५॥ गुणहेतुका दश सिद्धीराह । देहे क्षुत्पिपासादिराहित्यं । दूरश्रवणं । दूरदर्शनं । मनोवेगेन देहस्य गतिः । कामितरूपप्राप्तिः । परकायप्रवेशः ॥६॥ स्वेच्छामृत्युः । अप्सरोभिः सह देवानां याः क्रीडास्तासां प्राप्तिः । संकल्पानुरूपप्राप्तिः । अकुंठिताज्ञा चेति ॥७॥ क्षुद्रसिद्धीः पंचाह । त्रिकालज्ञत्वं शीतोष्णा-

१ स्थूलस्य सतः सद्योऽतिसूक्ष्मत्वमणिमा । २ सूक्ष्मस्य सतः सद्योऽतिस्थूलत्वं महिमा । ३ जडस्य सतः सद्यस्तूलवल्लघुत्वं लघिमा । ४ सर्वप्राणिनामिंद्रियैः सह तत्तद्विषयभोगः प्राप्तिः । ५ श्रुतेषु दृष्टेषु च पदार्थेषु दर्शनसामर्थ्यं प्राकाश्यम् । ६ मायाशक्त्याः तदंशानां च प्रेरणमीशिता । ७ विषयभोगेष्वसंगो वशिता । ८ यद्यत्सुखं कामयते तस्य तस्य सीमानं प्राप्नोति तत्प्राकाम्यम् ।

दिद्वंद्वराहित्यं परचित्तज्ञानं अग्न्यर्काम्बुविषादीनां स्तंभनं अपराजयश्चेति ॥८॥ अथ यया धारणया या सिद्धिः स्यात्तां धारणां शृणु ॥९॥ शब्द-स्पर्श-रूप-रस-गंध-रूप-भूतसूक्ष्मोपाधौ मयि तदाकारं मनो धारयन् अणिमानं प्राप्नोति ॥१०॥ ज्ञानशक्तिमहत्तत्वोपाधौ मयि तदाकारं मनो धारयन्महिमानं प्राप्नोति । तथा आकाशादिभूतोपाधौ च मयि मनो धारयन् तत्तद्भूतमहिमानं प्राप्नोति ॥११॥ तथा वाय्वादिभूतपरमाणुमये मयि चित्तं धारयन् लघिमानं प्राप्नोति ॥१२॥ सात्विकाहंकारोपाधौ मयि चित्तमेकाग्रं धारयन्निंद्रियाधिष्ठातृरूपां प्राप्तिं प्राप्नोति ॥१३॥ क्रियाशक्तिप्रधानं महत्तत्वमेव सूत्रं तदुपाधौ मयि यश्चित्तं धारयेत्स मे सर्वोत्कृष्टं प्राकाश्यं विंदते ॥१४॥ यस्त्रिगुणमायानियंतरि विष्णौ चित्तं

एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ॥ यया धारणया या स्याद्यथा वा स्यान्निबोध मे ॥९॥ भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः॥ अणिमानमवाप्नोति तन्मात्रोपासको मम ॥१०॥ महत्यात्मन्मयि परे यथासंस्थं मनो दधत् ॥ महिमानमवाप्नोति भूतानां च पृथक् पृथक् ॥११॥ परमाणुमये चित्तं भूतानां मयि रंजयन् ॥ कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् ॥१२॥ धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम् ॥ सर्वेंद्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥१३॥ महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम् ॥ प्राकाश्यं पारमेष्ठ्यं मे विंदतेऽव्यक्तजन्मनः ॥१४॥ विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे ॥ स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम् ॥१५॥ नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते ॥ मनो मय्यादधद्योगी मद्धर्मा वशितामियात् ॥१६॥ निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः ॥ परमानंदमाप्नोति यत्र कामोऽवसीयते ॥१७॥ श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ॥ धारयन् श्वेततां याति षडूर्मिरहितो नरः ॥१८॥ मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ॥ तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥१९॥ चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ॥ मां तत्र मनसा ध्यायन्विश्वं पश्यति सूक्ष्मदृक् ॥२०॥ मनो मयि सुसंयोज्य देहं तदनु वायुना ॥ मद्धारणानुभावेन तत्रात्मा यत्र वै मनः ॥२१॥ यदा मन उपादाय यद्यद्रूपं बुभूषति ॥ तत्तद्भवेन्मनोरूपं मद्योगबलमाश्रयः ॥२२॥ ॥ ॥ ॥

धारयेत्स ईशित्वं प्राप्नोति ॥१५॥ यो योगी तुरीयाख्ये नारायणे मयि मनो धारयेत्स वशितां प्राप्नोति ॥१६॥ निर्गुणे ब्रह्मणि मयि यो मनो धारयेत्स परमानंदं प्राकाम्यं प्राप्नोति ॥१७॥ श्वेतद्वीपपतौ मयि चित्तं धारयन् क्षुत्पिपासादिराहित्यं प्राप्नोति ॥१८॥ आकाशात्मनि समष्टिप्राणरूपे मयि यो मनसा नादं चिंतयेत्स जीव आकाशे उपलब्धा भूतानां वाचः शृणोति ॥१९॥ आदित्ये चक्षुः संयोज्य तं चादित्यं चक्षुषि संयोज्य तत्रोभयसंयोगे मां ध्यायन् विश्वं दूरतः पश्यति ॥२०॥ मनो देहं च तदनुवर्तिना वायुना सह मयि संयोज्य या मद्धारणा क्रियते तस्याः प्रभावेन यत्र मनो याति तत्र देहो याति ॥२१॥ यो योगी मन उपादानकारणं कृत्वा यद्यद्देवादिरूपं भवितुमिच्छति तत्तन्मनसोऽभीष्टं रूपं प्राप्नोति ॥२२॥

परकाये प्रवेष्टुमिच्छन् सिद्धस्तत्रात्मानं चिंतयेत्। ततः स्वदेहं हित्वा बाह्यवायौ प्रविष्टः सन् तेन मार्गेण यथा भ्रमरः पुष्पात्पुष्पांतरमनायासेन प्रविशति तद्वत्परकाये प्रविशेत् ॥२३॥ स्वच्छंदमृत्युमाह । पार्ष्णिना गुदं निरुद्ध्य प्राणोपाधिमात्मानं हृदुरःकंठमूर्धसु समारोप्य ब्रह्मरंध्रेणापेक्षितं स्थानं मनसा नीत्वा तनुं विसृजेत् ॥२४॥ देवा यत्र क्रीडंति तत्र स्वयं क्रीडितुमिच्छन् योगी मन्मूर्तिस्थं शुद्धं सत्वं चिंतयेत् । तेन सत्वांशभूता अप्सरसो विमानेन तत्समीपमुपतिष्ठंति ॥२५॥ सत्यसंकल्पे मयि मनो युंजन् योगी यथा बुद्ध्या संकल्पयेत्तथा तत्प्राप्नोति ॥२६॥ यः पुमान् सर्वनियंतुः स्वतंत्रस्य मम स्वभावं प्राप्तस्तस्याज्ञा मदाज्ञेव कुतश्चिदपि कुंठिता न भवेत् ॥२७॥ अथ क्षुद्रसिद्धीराह । त्रिकालज्ञस्य ममेश्वरस्य धारणया योगिनस्त्रिकालवस्तुविषयं ज्ञानं जायते ॥२८॥ अग्न्यादिसर्वोपद्रवशून्यस्य मम धारणया मुनेर्योगमयं शरीरं अग्नि-सूर्य-जल-विषादिभिर्न हन्येत । यथा मत्स्यानां

परकायं विशन्सिद्ध आत्मानं तत्र भावयेत् ॥ पिंडं हित्वा विशेत्प्राणो वायुभूतः षडंघ्रिवत् ॥२३॥ पार्ष्ण्यापीड्य गुदं प्राणं हृदुरःकंठमूर्धसु ॥ आरोप्य ब्रह्मरंध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् ॥२४॥ विहरिष्यन्सुराक्रीडे मत्स्थं सत्वं विभावयेत् ॥ विमानेनोपतिष्ठंति सत्ववृत्तीः सुरस्त्रियः ॥२५॥ यथा संकल्पयेद्बुद्ध्या यदा वा मत्परः पुमान् ॥ मयि सत्ये मनो युंजंस्तथा तत्समुपाश्नुते ॥२६॥ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ॥ कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ॥२७॥ मद्भक्त्या शुद्धसत्वस्य योगिनो धारणाविदः ॥ तस्य त्रैकालिकी सिद्धिर्जन्ममृत्यूपबृंहिता ॥२८॥ अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ॥ मद्योगश्रांतचित्तस्य यादसामुदकं यथा ॥२९॥ मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः ॥ ध्वजातपत्रव्यजनैः स भवेदपराजितः ॥३०॥ उपासकस्य मामेवं योगधारणया मुनेः ॥ सिद्धयः पूर्वकथिता उपतिष्ठंत्यशेषतः ॥३१॥ जितेंद्रियस्य दांतस्य जितश्वासात्मनो मुनेः ॥ मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ॥३२॥ अंतरायान्वदंत्येता युंजतो योगमुत्तमम् ॥ मया संपद्यमानस्य कालक्षपणहेतवः ॥३३॥ जन्मौषधितपोमंत्रैर्यावतीरिह सिद्धयः ॥ योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥३४॥ सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ॥ अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥३५॥ ॥ ॥

जलं घातकं न भवति तद्वत् ॥२९॥ श्रीवत्सादिचिह्नैः चक्राद्यायुधैर्ध्वज-च्छत्रादिराजलक्षणैश्च भूषितान् ममावतारान् ध्यायन् अपराजितो भवति ॥३०॥ एवं योगधारणया ममोपासकस्य योगिनः पूर्वोक्ताः सर्वाः सिद्धय उपतिष्ठंति ॥३१॥ जितेंद्रियस्य जितश्वासस्य 'नारायणे तुरीयाख्ये' इत्यत्रोक्तां मद्धारणां धारयतो मुनेः का सिद्धिर्दुर्लभा स्यान्न काऽपि ॥३२॥ यद्यप्येवं तथापि ता न प्रार्थ्याः । यतो मदुपासनया मां प्राप्स्यतो भक्तस्यैताः सिद्धयो मत्प्राप्तिविषये विलंबहेतवो भवंति ॥३३॥ इह लोके जन्मौषधि-तपो-मंत्रैर्यावत्यः सिद्धयस्ताः सर्वा 'नारायणे तुरीयाख्ये' इत्यत्रोक्तेन धारणायोगेन प्राप्नोति । परंतु तैर्जन्मौषध्यादिसाधनैर्मत्सालोक्यादिरूपां गतिं न प्राप्नोति ॥३४॥ यतः सर्वासां सिद्धीनां हेतुः पालकश्चाहमस्मि । किंच । योगसांख्यधर्मादीनां प्रभुश्चाहमस्मि ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥

अहं सर्वजीवानामंतर्यामी आत्मा बहिर्व्यापकश्चास्मि । यथा पंचभूतानि भूतेष्वंतर्बहिश्च संति तद्वत् ॥३६॥ इति श्रीमद्भागवतचू० एकादशस्कंधे पंचदशोऽध्यायः ॥१५॥ षोडशे तु हरेराविर्भावयुक्ता विभूतयः । ज्ञानवीर्यप्रभावादिविशेषेणोपवर्णिताः ॥१॥ अंतश्चित्तेन यद्ध्यानमशक्यमकृतात्मनाम् । अतस्तद्योग्यतापत्त्यै विभूत्यादिनिरूपणम् ॥२॥ उद्धव उवाच ॥ हे कृष्ण, सर्वेषामुत्पत्ति-स्थिति-लय-कर्ता त्वमेव निरावरणं साक्षात्परं ब्रह्मासि ॥१॥ एवंभूतं त्वां यथार्थतत्त्वेन वेदतात्पर्यविदो ज्ञानिन उपासते ॥२॥ ते येषु येषु भावेषु त्वां सेवमानाः संतः सिद्धिं प्रपद्यंते तद्वद ॥३॥ हे पालक, त्वं भूतानां मध्ये गूढश्चरसि । अतः पश्यंतं त्वां त्वया मोहितानि भूतानि न पश्यंति ॥४॥ तस्मात् हे महाविभूते, भूमौ स्वर्गे पाताले च याः काश्चित्ते विभूतयः संति ता मे कथय । अहं तव चरणकमलं नमामि ॥५॥ श्रीभगवानुवाच ॥ हे उद्धव, एवमर्जुनेन कुरुक्षेत्रे पुराऽहं पृष्टः ॥६॥ तत्प्रसंगमाह ।

अहमात्मांतरो बाह्योऽनावृतः सर्वदेहिनाम् ॥ यथा भूतानि भूतेषु बहिरंतः स्वयं तथा ॥३६॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे पंचदशोऽध्यायः ॥१५॥ उद्धव उवाच ॥ त्वं ब्रह्म परमं साक्षादनाद्यंतमपावृतम् ॥ सर्वेषामपि भावानां त्राणस्थित्यप्ययोद्भवः ॥१॥ उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ॥ उपासते त्वां भगवन्याथातथ्येन ब्राह्मणाः ॥२॥ येषु येषु च भावेषु भक्त्या त्वां परमर्षयः ॥ उपासीनाः प्रपद्यंते संसिद्धिं तद्वदस्व मे ॥ ३ ॥ गूढश्चरसि भूतात्मा भूतानां भूतभावन ॥ न त्वां पश्यंति भूतानि पश्यंतं मोहितानि ते ॥४॥ याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ॥ ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदांघ्रिपद्मम् ॥५॥ श्रीभगवानुवाच ॥ एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर ॥ युयुत्सुना विनशने सपत्नैरर्जुनेन वै ॥६॥ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् ॥ ततो निवृत्तो हंताऽहं हतोऽयमिति लौकिकः ॥७॥ स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः॥ अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि॥८॥ अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ॥ अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥९॥ अहं गतिर्गतिमतां कालः कलयतामहम् ॥ गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः ॥१०॥ गुणिनामप्यहं सूत्रं महतां च महानहम् ॥ सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥११॥ हिरण्यगर्भो वेदानां मंत्राणां प्रणवस्त्रिवृत् ॥ अक्षराणामकारोऽस्मि पदानि छंदसामहम् ॥१२॥ ॥ ॥

राज्यहेतुकं ज्ञातिवधं निंद्यं ज्ञात्वा हंताहं हतोऽयमिति बुद्ध्या स तस्माज्ज्ञातिवधान्निवृत्तः ॥७॥ तदा सोऽर्जुनो मया युक्त्या बोधितः सन् यथा त्वमभिभाषसे एवं मां विभूतीः कथयेति पप्रच्छ । तद्वदेव तवापि कथयामि ॥८॥ हे उद्धव, एषां भूतानां आत्मा सुहृदीश्वरश्चेत्युपास्योऽहमस्मि । तथा सर्वभूतानि तेषां पालनादिहेतुश्चाहमस्मि ॥९॥ गतिमतां गतिरहम् । वशीकुर्वतां कालोऽहम् । गुणानां मध्ये सर्वत्र समत्वमहमस्मि ॥१०॥ गुणवतां मध्ये प्रथमं कार्यं सूत्रमहम् । महतां महत्तत्वमहम् । सूक्ष्माणां जीवोऽहम् । दुर्जयानां मनोऽहमस्मि ॥११॥ वेदानामध्यापको ब्रह्माऽहं मंत्राणां प्रणवोऽहं अक्षरामकारोऽहं छंदसां गायत्र्यहमस्मि॥१२॥ ॥ ॥ ॥

देवानामिंद्रोऽहं वसूनामग्निरहं आदित्यानां विष्णुरहं रुद्राणां नीललोहितोऽहमस्मि ॥१३॥ महर्षीणां भृगुरहं राजर्षीणां मनुरहं देवर्षीणा नारदोऽहं धेनुषु कामधेनुरस्मि ॥१४॥ सिद्धेश्वराणां कपिलोऽहं पक्षिणां गरुडोऽहं प्रजापतीनां दक्षोऽहं पितॄणामर्यमाहमस्मि ॥१५॥ दैत्यानां प्रह्लादोऽहं नक्षत्रौषधीनां सोमोऽहं यक्षरक्षसां कुबेरोऽहमस्मि ॥१६॥ गजानामैरावतोऽहं जलचराणां वरुणोऽहं प्रकाशमानानां सूर्योऽहं मनुष्याणां नृपोऽहमस्मि ॥१७॥ अश्वानामुच्चैःश्रवा अहं धातूनां सुवर्णमहं दंडं कुर्वतां यमोऽहं सर्पाणां वासुकिरहमस्मि ॥१८॥ नागेंद्राणां शेषोऽहं श्रृंगिदंष्ट्रिणां सिंहोऽहं आश्रमाणां संन्यासोऽहं वर्णानां ब्राह्मणोऽहमस्मि ॥१९॥ तीर्थानां गंगाऽहं सरसां समुद्रोऽहं आयुधानां धनुरहं धनु-

इंद्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् ॥ आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥१३॥ ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः ॥ देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु ॥१४॥ सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम् ॥ प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥१५॥ मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरम् ॥ सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥१६॥ ऐरावतं गजेंद्राणां यादसां वरुणं प्रभुम् ॥ तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥१७॥ उच्चैःश्रवास्तुरंगाणां धातूनामस्मि कांचनम् ॥ यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥१८॥ नागेंद्राणामनंतोऽहं मृगेंद्रः श्रृंगिदंष्ट्रिणाम् ॥ आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥१९॥ तीर्थानां स्रोतसां गंगा समुद्रः सरसामहम् ॥ आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥२०॥ धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः ॥ वनस्पतीनामश्वत्थ ओषधीनामहं यवः ॥२१॥ पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ॥ स्कंदोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥२२॥ यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ॥ वाय्वग्न्यर्कांबुवागात्मा शुचीनामप्यहं शुचिः ॥२३॥ योगानामात्मसंरोधो मंत्रोऽस्मि विजिगीषताम् ॥ आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥२४॥ स्त्रीणां तु शतरूपाहं पुंसां स्वायंभुवो मनुः ॥ नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥२५॥ धर्माणामस्मि संन्यासः क्षेमाणामवहिर्मतिः ॥ गुह्यानां सूनृतं मौनं मिथुनानामजस्त्वहम् ॥२६॥ ॥ ॥ ॥

र्धारिणां शिवोऽहमस्मि ॥२०॥ वासस्थानानां मेरुरहं दुर्गमानां हिमालयोऽहं वृक्षाणामश्वत्थोऽहं धान्यानां यवोऽहमस्मि ॥२१॥ पुरोहितानां वसिष्ठोऽहं वेदार्थनिष्ठानां बृहस्पतिरहं चमूपतीनां स्कंदोऽहं सन्मार्गप्रवर्तकानां ब्रह्माहमस्मि ॥२२॥ यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामहिंसाऽहं मार्जनतक्षणादीनां शोधकानां मध्ये वाय्वग्नि-सूर्य-जल-वाणी-रूपोऽहमस्मि ॥२३॥ अष्टांगयोगानां समाधिरहं जेतुमिच्छतां नीतिरहं विवेकादिनैपुणानां मध्ये आत्मानात्मविवेकविद्याऽहं ख्यातिवादिनां विकल्पोऽहमस्मि ॥२४॥ स्त्रीणां शतरूपाऽहं पुरुषाणां स्वायंभुवो मनुरहं मुनीनां नारायणोऽहं ब्रह्मचारिणां सनत्कुमारोऽहमस्मि ॥२५॥ धर्माणां संन्यासोऽहं निर्भयस्थानानामंतर्निष्ठाऽहं गुह्यानां प्रियवचनं मौनं चाहं मिथुनानां

१ अख्यात्यन्यथाख्याति-शून्यख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिवादिनाम् ।

प्रजापतिरहमस्मि ॥२६॥ सावधानां संवत्सरोऽहं ऋतूनां वसंतोऽहं मासानां मार्गशीर्षोऽहं नक्षत्राणामभिजिदहमस्मि ॥२७॥ युगानां कृतमहं धीराणां देवलोऽसितश्चाहं वेदविभागकर्तॄणां व्यासोऽहं कवीनां शुक्रोऽहमस्मि ॥२८॥ भगवतां वासुदेवोऽहं भगवद्भक्तेषु त्वमहं किंपुरुषाणां हनुमानहं विद्याधराणां सुदर्शनोऽहमस्मि ॥२९॥ रत्नानां पद्मरागोऽहं सुंदराणां कमलकोशोऽहं दर्भजातीनां कुशोऽहं हवनीयद्रव्येषु गोघृतमहमस्मि ॥३०॥ उद्योगिनां धनादिसंपदहं कपटानां छलोऽहं तितिक्षूणां तितिक्षाऽहं सत्ववतां सत्वमहमस्मि ॥३१॥ बलवतां तेजो बलं चाहं भागवतानां भक्तिकृतं कर्माऽहं भक्तपूज्यानां नवव्यूहमूर्तीनां मध्ये वासुदेवोऽहमस्मि ॥३२॥ गंधर्वाणां विभावसुरहं अप्सरसां पूर्वचित्तिरहं

संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ ॥ मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् ॥२७॥ अहं युगानां च कृतं धीराणां देवलोऽसितः ॥ द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥२८॥ वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ॥ किंपुरुषाणां हनुमान्विद्याध्राणां सुदर्शनः ॥२९॥ रत्नानां पद्मरागोऽस्मि पद्मकोशः सुपेशसम् ॥ कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविष्ष्वहम् ॥३०॥ व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ॥ तितिक्षाऽस्मि तितिक्षूणां सत्वं सत्ववतामहम् ॥३१॥ ओजः सहोबलवतां कर्माहं विद्धि सात्वताम् ॥ सात्वतां नवमूर्तीनामादिमूर्तिरहं परा ॥३२॥ विश्वावसुः पूर्वचित्तिर्गंधर्वाप्सरसामहम् ॥ भूधराणामहं स्थैर्यं गंधमात्रमहं भुवः ॥३३॥ अपां रसश्च परमस्तेजिष्ठानां विभावसुः ॥ प्रभा सूर्येंदुताराणां शब्दोऽहं नभसः परः ॥३४॥ ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः ॥ भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसंक्रमः ॥३५॥ गत्युक्त्युत्सर्गोपादानमानंदस्पर्शलक्षणम् ॥ आस्वादश्रुत्यवघ्राणमहं सर्वेंद्रियेंद्रियम् ॥३६॥ पृथिवी वायुराकाश आपो ज्योतिरहं महान् ॥ विकारः पुरुषोऽव्यक्तं रजः सत्वं तमः परम् ॥ अहमेतत्प्रसंख्यानं ज्ञानं तत्वविनिश्चयः ॥३७॥ मयेश्वरेण जीवेन गुणेन गुणिना विना ॥ सर्वात्मनापि सर्वेण न भावो विद्यते क्वचित् ॥३८॥ संख्यानं परमाणूनां कालेन क्रियते मया ॥ न तथा मे विभूतीनां सृजतोंऽडानि कोटिशः ॥३९॥ तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ॥ वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ॥४०॥

पर्वतानां स्थैर्यमहं भूमेर्गंधोऽहमस्मि ॥३३॥ अपां रसोऽहं तेजिष्ठानां वह्निरहं सूर्येंदुताराणां प्रभाऽहं नभसः शब्दोऽहमस्मि ॥३४॥ ब्राह्मणभक्तानां बलिरहं वीराणामर्जुनोऽहं भूतानामुत्पत्तिस्थितिलया अहमस्मि ॥३५॥ सर्वेंद्रियाणां तत्तदर्थग्रहणशक्तिरहमस्मि ॥३६॥ शब्दादयः पंच अहंकारो महत्तत्वं पंचभूतान्येकादशेंद्रियाणि जीवः प्रकृतिश्चेति पंचविंशति तत्वानि त्रयो गुणा ब्रह्म चैतत्सर्वमहमेव । एतेषां परिगणनं ज्ञानं तत्त्वनिश्चयश्चाहमेव ॥३७॥ जीवेश्वररूपः गुणगुणिरूपः क्षेत्रक्षेत्रज्ञरूपश्च यो भावः स मद्विना किंचिदपि नास्ति ॥३८॥ हे उद्धव, परमाणूनां संख्यानं मया कालेन क्रियते । परंतु मे विभूतीनां संख्यानं न क्रियते ॥३९॥ यत्र यत्र तेजः श्रीः कीर्तिः ऐश्वर्यं त्यागः सौंदर्यं भाग्यं

१ उत्पत्तिं प्रलयं चैवं भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानित्येवंलक्षणानाम् । २ वासुदेव-संकर्ष-प्रद्युम्नानिरुद्ध-नारायण-हयग्रीव-वराह-नृसिंह-ब्रह्माण इति या नव व्यूहमूर्तयस्तासां मध्ये ।

वीर्यं क्षमा विज्ञानं च वर्तते स मे विभूतिः ॥४०॥ एता विभूतयः संक्षेपेण ते कथिताः । एताः सर्वाः परमार्था न । किंतु मनोविकाराः । यथा किंचित्खपुष्पादि वाङ्मात्रेणाभिधीयते तत्तुल्याः ॥४१॥ हे उद्धव, तस्मात्त्वमात्मना वाङ्-मनः-प्राणेंद्रियाणि बुद्धिं च नियच्छ । एवं कृते भूयः संसाराय न कल्पसे ॥४२॥ यो वाङ्मनसी न यच्छति तस्य व्रत-तपो-ज्ञानानि अपक्वघटादुदकवत्स्रवंति ॥४३॥ तस्मान्मत्परायणो मद्भक्तियुक्तया बुद्ध्या मनोवचःप्राणान्नियच्छेत् । ततः कृतकृत्यो भवति ॥४४॥ इति श्रीमद्भागवतचूर्णिकायामेकादशस्कंधे षोडशोऽध्यायः ॥१६॥ ततः सप्तदशे पृष्टे स्वधर्मे भक्तिलक्षणे । हंसोक्तं धर्ममन्वाह ब्रह्मचारिगृहस्थयोः ॥१॥ उद्धव उवाच ॥ हे कृष्ण, त्वया कल्पादौ वर्णाश्रमादीनां त्वद्भक्तिसाधनरूपो धर्मः कथितः ॥१॥ येनाचरितेन नृणां त्वयि भक्तिर्भवेत् । तत्प्रकारं मे कथय ॥२॥ किंच । पुरा हंसरूपेण त्वं ब्रह्मणे परमं धर्ममुक्तवान् ॥३॥ स इदानीं

एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः ॥ मनोविकारा एवैते यथा वाचाऽभिधीयते ॥४१॥ वाचं यच्छ मनो यच्छ प्राणान्यच्छेंद्रियाणि च ॥ आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥४२॥ यो वै वाङ्मनसी सम्यगसंयच्छन्धिया यतिः ॥ तस्य व्रतं तपो दानं स्रवत्यामघटांबुवत् ॥४३॥ तस्मान्मनोवचःप्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥४४॥ इति श्रीम० महा० एकादशस्कंधे षोडशोऽध्यायः ॥१६॥ उद्धव उवाच ॥ यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ॥ वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ॥१॥ यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ॥ स्वधर्मेणारविंदाक्ष तत्समाख्यातुमर्हसि ॥२॥ पुरा किल महाबाहो धर्मं परमकं प्रभो ॥ यत्तेन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव ॥३॥ स इदानीं सुमहता कालेनामित्रकर्शन ॥ न प्रायो भविता मर्त्यलोके प्रागनुशासितः ॥४॥ वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि ॥ सभायामपि वैरिंच्यां यत्र मूर्तिधराः कलाः ॥५॥ कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन ॥ त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ॥६॥ तत्त्वं नः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः ॥ यथा यस्य विधीयेत तथा वर्णय मे प्रभो ॥७॥ श्रीशुक उवाच ॥ इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान्हरिः ॥ प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान् ॥८॥ श्रीभगवानुवाच ॥ धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणाम् ॥ वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥९॥ आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ॥ कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः ॥१०॥

महता कालेन नष्टः सन् मनुष्यलोके प्रायो न भविष्यति ॥४॥ भुवि च त्वत्तोऽन्यो धर्मवक्ता कर्ता रक्षकश्च नास्ति ॥५॥ त्वया महीतले त्यक्ते सति विनष्टं धर्मं कः प्रवक्ष्यति ॥६॥ तस्मात् हे प्रभो, स धर्मो यथा यस्य विधीयते तथा वर्णय ॥७॥ श्रीशुक उवाच ॥ एवमुद्धवेन पृष्टो भगवान् प्रीतः सन् तंप्रति मनुष्याणां धर्मानाह ॥८॥ श्रीभगवानुवाच ॥ हे उद्धव, एष तव प्रश्नो धर्मयुक्तोऽस्ति । अतो वर्णाश्रमाचारवतां धर्मं त्वं मत्तः शृणु ॥९॥ आदौ कृतयुगे नृणां वर्णो हंसो नामास्ति । तत्र प्रजा जन्मनैव कृतकृत्या अतस्तत्कृतयुगं विदुः ॥१०॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तदा वेदः प्रणव एवास्ति अहं वृषरूपो धर्मस्तिष्ठामि । तत्र तपोनिष्ठाः प्रजा हंसं मां ध्यायंति ॥११॥ ततस्त्रेतायुगप्रवेशे मे हृदयात्त्रयी विद्या प्रादुरभूत् । तस्याः सकाशादहं यज्ञरूपो विष्णुरासम् ॥१२॥ तदा विराड्रूपस्य मम मुख-बाहूरु-पादेभ्यो ब्राह्मणादिवर्णाः स्वस्वधर्मज्ञापका आसन् ॥१३॥ तथा मे जघनतो गृहाश्रमो हृदयाद्ब्रह्मचर्यं वक्षःस्थलाद्वानप्रस्थाश्रमः शीर्ष्णः संन्यासश्च जाताः ॥१४॥ एषां वर्णादीनां जन्मस्थानानुसारिण्यः प्रकृतयश्चासन् ॥१५॥ तत्र शम-तपः-शौच-संतोष-क्षमाऽऽर्जव-मद्भक्ति-दया-सत्यानि ब्राह्मणस्वभावाः ॥१६॥ तेजो बलधैर्य-शौर्यादयः क्षत्रियस्वभावाः ॥१७॥ आस्तिक्य-दाननिष्ठा-ब्राह्मणसेवादयो वैश्यस्वभावाः ॥१८॥ ब्राह्मण-गो-देवानां सेवा यथालाभसंतोषश्च शूद्रस्वभावाः

वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ॥ उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः ॥११॥ त्रेतामुखे महाभाग प्राणान्मे हृदयात्त्रयी ॥ विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः ॥१२॥ विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः ॥ वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः ॥१३॥ गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ॥ वक्षःस्थानाद्वने वासो न्यासः शीर्षणि संस्थितः ॥१४॥ वर्णानामाश्रमाणां च जन्मभूम्यनुसारिणीः ॥ आसन्प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमैः ॥१५॥ शमो दमस्तपः शौचं संतोषः क्षांतिरार्जवम् ॥ मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥१६॥ तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः ॥ स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥१७॥ आस्तिक्यं दाननिष्ठा च अदंभो ब्रह्मसेवनम् ॥ अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥१८॥ शुश्रूषणं द्विजगवां देवानां चाप्यमायया ॥ तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः ॥१९॥ अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः ॥ कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम् ॥२०॥ अहिंसा सत्यमस्तेयमकामक्रोधलोभता ॥ भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥२१॥ द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः ॥ वसन्गुरुकुले दांतो ब्रह्माधीयीत चाहुतः ॥२२॥ मेखलाजिनदंडाक्षब्रह्मसूत्रकमंडलून् ॥ जटिलोऽधौतदद्वासो रक्तपीठः कुशान्दधत् ॥२३॥ स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ॥ न च्छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि ॥२४॥ रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् ॥ अवकीर्णेऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥२५॥ ॥

॥१९॥ अशौचमनृतं चौर्यं नास्तिक्यं कामक्रोधादयश्च चांडालस्वभावाः ॥२०॥ अहिंसा सत्यं अचौर्यं काम-क्रोध-लोभ-राहित्यं चेत्ययं सर्ववर्णानां धर्मः ॥२१॥ अथ ब्रह्मचारिणो धर्माः । स च द्विविधः । उपकुर्वाणको[1] नैष्ठिकश्च[2] । तत्रोपकुर्वाणकधर्मानाह । द्विज उपनयनाख्यं द्वितीयं जन्म प्राप्य गुरुकुले स्थित्वा गुरुणाऽऽहूतो वेदमधीयीत ॥२२॥ तथा मेखलाजिन-दंड-यज्ञोपवीत-कमंडलु-कुशान् जटाश्च धारयेत् ॥२३॥ स्नान-जप-होम-भोजनेषु मूत्रपुरीषोत्सर्गयोश्च मौनं धारयेत् । नखरोमाणि न छिंद्यात् ॥२४॥ बुद्धिपूर्वं रेतो नोत्सृजेत् । कथंचिदवकीर्णे सति स्नात्वा गायत्रीं जपेत् ॥२५॥ ॥ ॥ ॥ ॥ ॥

१ वेदाध्ययनार्थं ब्रह्मचर्यादिव्रतधारकः । २ आमरणांतं ब्रह्मचर्यादिव्रतधारकः ।

शुचिरग्न्यर्काचार्य-गो-विप्र-गुरु-वृद्धादीनुपासीत । मौनेन द्वे संध्ये उपासीत ॥२६॥ आचार्यमीश्वरं ज्ञात्वा मनुष्यबुद्ध्या तं नावमन्येत । यतो गुरुः सर्वदेवमयः ॥२७॥ तथा सायंप्रातर्भिक्षान्नमानीय गुरवे निवेद्य तदनुज्ञया भुंजीत ॥२८॥ नित्यं गमन-शय्यासनादिषु समीपे कृतांजलिः सन् नीचवद्गुरुमुपासीत ॥२९॥ एवं गुरुकुले विद्यासमाप्तिपर्यंतं भोगवर्जितो वसेत् ॥३०॥ अथ नैष्ठिकब्रह्मचारी यदि महर्लोकं ततो ब्रह्मलोकं चारोढुमिच्छति तर्हि गुरवे दक्षिणार्थं देहं समर्पयेत् ॥३१॥ अग्नौ गुरावात्मनि सर्वभूतेषु च अपृथग्बुद्ध्या मामुपासीत ॥३२॥ तथा स्त्रीणां निरीक्षण-स्पर्श-भाषण-परिहासादिकं त्यजेत् । मिथुनीभूतान् प्राणिनश्च नावलोकयेत् ॥३३॥ तथा शौचमाचमनं स्नानं संध्योपासनं

अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरान् शुचिः ॥ समाहित उपासीत संध्ये च यतवाग्जपन् ॥२६॥ आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ॥ न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥२७॥ सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् ॥ यच्चान्यदप्यनुज्ञातमुपयुंजीत संयतः ॥२८॥ शुश्रूषमाण आचार्यं सदोपासीत नीचवत् ॥ यानशय्यासनस्थानैर्नातिदूरे कृतांजलिः ॥२९॥ एवंवृत्तो गुरुकुले वसेद्भोगविवर्जितः ॥ विद्या समाप्यते यावद्बिभ्रद्व्रतमखंडितम् ॥३०॥ यद्यसौ छंदसां लोकमारोक्ष्यन्ब्रह्मविष्टपम् ॥ गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः ॥३१॥ अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ॥ अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥३२॥ स्त्रीणां निरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् ॥ प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥३३॥ शौचमाचमनं स्नानं संध्योपासनमार्जवम् ॥ तीर्थसेवा जपोऽस्पृश्याभक्ष्यासंभाष्यवर्जनम् ॥३४॥ सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनंदन ॥ मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥३५॥ एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ॥ मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥३६॥ अथानंतरमावेक्ष्यन्यथाजिज्ञासितागमः ॥ गुरवे दक्षिणां दत्वा स्नायाद्गुर्वनुमोदितः ॥३७॥ गृहं वनं वोपविशेत्प्रव्रजेद्वा द्विजोत्तमः ॥ आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥३८॥ गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् ॥ यवीयसीं तु वयसा यां सवर्णामनुक्रमात् ॥३९॥ इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् ॥ प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥४०॥ प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् ॥ अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक् तयोः ॥४१॥ ॥ ॥ ॥

तीर्थसेवनं च कुर्यात् ॥३४॥ सर्वभूतेषु मद्भावश्च कार्यः । अयं सर्वाश्रमविहितो नियमोऽस्ति ॥३५॥ एवंविधो नैष्ठिकब्रह्मचारी तीव्रतपसा दग्धपापो भूत्वाऽग्निरिव ज्वलन् मद्भक्तो भवति ॥३६॥ अथोपकुर्वाणस्य समावर्तनप्रकारमाह । ब्रह्मचारी गुरोर्वेदार्थं विचार्य गृहस्थाश्रमं प्रवेष्टुमिच्छुश्चेद्गुरवे दक्षिणां दत्वा गुर्वाज्ञयाऽभ्यंगादिना समावर्तननामकं स्नानं कुर्यात् ॥३७॥ ततो गृहं वनं वा प्रविशेत् प्रव्रजेद्वा । अथवा आश्रमादाश्रमं गच्छेत् ॥३८॥ गृहार्थी चेद्योग्यां सवर्णां यवीयसीं भार्यामुद्वहेत् ॥३९॥ अथ द्विजधर्मानाह । ब्राह्मण-क्षत्रियवैश्यानां यजनाध्ययनदानानि विहितानि । प्रतिग्रहाध्यापनयाजनानि तु ब्राह्मणस्यैव वृत्तिः ॥४०॥ तत्र प्रतिग्रहे दोषं मन्यमानश्चेदध्यापनयाजनाभ्यामेव जीवेत ॥ तयोरपि

दोषं मन्यमानश्चेत्स्वामित्यक्तैः क्षेत्रपतितैः कणिशैर्जीवेत ॥४१॥ हे उद्धव, अयं ब्राह्मणदेहः तुच्छ-विषयभोगाय योग्यो न। किंतु इह दुःखं सोढ्वा तपः कृत्वा प्रेत्य मोक्षसुखार्थं योग्योऽस्ति ॥४२॥ शिलोंछवृत्त्या तुष्टचित्त आतिथ्यादिलक्षणं धर्मं सेवमानो मयि समर्पितमना गृहे तिष्ठन्नपि मोक्षमुपैति ॥४३॥ किंच। मत्परायणं सीदंतं विप्रं ये आपद उद्धरंति तानापद्भ्योऽहमुद्धरिष्ये ॥४४॥ राजा सर्वप्रजा दुःखात्समुद्धृत्यात्मनाऽऽत्मानमुद्धरेत् ॥४५॥ एवंविधो राजाऽत्र सर्वं पापं विधूय सूर्यप्रभं विमानमारुह्येंद्रेण सह मोदते ॥४६॥ अथ सर्वेषामापद्वृत्तीराह। विप्र आपत्प्राप्तश्चेद्वैश्यवृत्त्या खड्गेन वाऽऽपदं तरेत्। परं तु नीचसेवया न तरेत् ॥४७॥ राजा तु वैश्यवृत्त्याऽऽध्यापनादिना वा विपत्तिं तरेत्। नीचसेवया न तरेत् ॥४८॥ तथा वैश्यः शूद्रवृत्तिं सेवेत। शूद्रस्तु बुरुडादिवृत्तिं सेवेत। एवं दुःखान्मुक्तः सन् निंद्यकर्मणा न जीवेत ॥४९॥ गृहस्थो वेदपाठेन ऋषीन् स्वधाकारेण

ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ॥ कृच्छ्राय तपसे चेह प्रेत्यानंतसुखाय च ॥४२॥ शिलोंछवृत्त्या परितुष्टचित्तो धर्मं महांतं विरजं जुषाणः ॥ मय्यर्पितात्मा गृह एव तिष्ठन्नातिप्रसक्तः समुपैति शांतिम् ॥४३॥ समुद्धरंति ये विप्रं सीदंतं मत्परायणम् ॥ तानुद्धरिष्ये न चिरादापद्भ्यो नौरिवार्णवात् ॥४४॥ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः ॥ आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥४५॥ एवंविधो नरपतिर्विमानेनार्कवर्चसा ॥ विधूयेहाशुभं कृत्स्नमिंद्रेण सह मोदते ॥४६॥ सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् ॥ खड्गेन वाऽऽपदाक्रांतो न श्ववृत्त्या कथंचन ॥४७॥ वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि ॥ चरेद्वा विप्ररूपेण न श्ववृत्त्या कथंचन ॥४८॥ शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुकटक्रियाम् ॥ कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥४९॥ वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ॥ देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत ॥५०॥ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ॥ धनेनापीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ॥५१॥ कुटुंबेषु न सज्जेत न प्रमाद्येत्कुटुंब्यपि ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥५२॥ पुत्रदाराप्तबंधूनां संगमः पांथसंगमः ॥ अनुदेहं वियंत्येते स्वप्नो निद्रानुगो यथा ॥५३॥ इत्थं परिमृशन्मुक्तो गृहेष्वतिथिवद्वसन् ॥ न गृहैरनुबध्येत निर्ममो निरहंकृतः ॥५४॥ कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान् ॥ तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेत् ॥५५॥ यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः ॥ स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥५६॥

पितॄन् स्वाहाकारेण देवान् बलिदानेन भूतानि अन्नोदकैर्मनुष्याणि च मद्रूपाणि पश्यन् प्रतिदिनं यजेत ॥५०॥ तथा यदृच्छया प्राप्तधनेन पोष्यान् स्त्रीबालादीनपीडयन् न्यायेनैव पूर्वोक्तान् पंचमहायज्ञान् कुर्यात् ॥५१॥ कुटुंब्यपि गृहस्थः कुटुंबेषु नासक्तो भवेत्। मनुष्यलोके स्थितं दृश्यसुखमिवादृश्यमपि स्वर्गादिसुखं नश्वरं पश्येत् ॥५२॥ पुत्रदारादिबंधूनामेकत्र संगमं पांथसंगममिव क्षणिकं जानीयात् ॥५३॥ एवं विचार्य अहंकाररहितो ममतारहितश्च भूत्वा गृहेष्वतिथिवद्वसन् गृहकर्मभिर्न बध्येत ॥५४॥ एवं गृहमेधीयकर्मभिर्मामिष्ट्वा गृहाश्रम एव तिष्ठेद्वनं वा प्रविशेत् प्रजावांश्चेत्तर्हि परिव्रजेद्वा ॥५५॥ यस्तु गृहे स्त्रीपुत्रादिषु च आसक्तबुद्धिर्भवेत्स ममाहमिति बध्यते ॥५६॥ ॥

वंधमेव दर्शयति । अहो मे पितरौ वृद्धौ वालप्रजा भार्या पुत्राश्च मां विना अनाथाः संतः कथं जीविष्यंति ॥५७॥ एवं मूढवुद्धिरयं पुरुषो गृहादिष्वासक्तो भूत्वा मृत्युसमये तान् ध्यायन् मृतो नरकं विशते ॥५८॥ इति श्रीमद्भागवतचूर्णिकायां एकादशस्कंधे सप्तदशोऽध्यायः ॥१७॥ अष्टादशेऽवदद्धर्मं वनस्थयतिगोचरम् । अधिकारविशेषेण विशेषं चापि तद्गतम् ॥१॥ श्रीभगवानुवाच ॥ वानप्रस्थाश्रमं कर्तुमिच्छुर्नरः पुत्रेषु भार्यां स्थापयित्वा सह वा गृहीत्वा आयुषः तृतीयं भागं वने वसेत् ॥१॥ तत्र वल्कलतृणाजिनानि परिधाय कंद-मूल-फलादिभिर्वृत्तिं कल्पयेत् ॥२॥ केश-रोम-नखादीनि धृत्वा त्रिकालं जले स्नात्वा भूमौ शयीत ॥३॥ ग्रीष्मे पंचाग्नितापान् सहेत । वर्षासु वृष्टिधारापतनं सहित्वा शिशिरतौ

अहो मे पितरौ वृद्धौ भार्या वालात्मजाऽऽत्मजाः ॥ अनाथा मामृते दीनाः कथं जीवंति दुःखिताः ॥५७॥ एवं गृहाशयाऽऽक्षिप्तहृदयो मूढधीरयम् ॥ अतृप्तस्ताननुध्यायन्मृतोंऽधं विशते तमः ॥५८॥ इति श्रीमभा० महा० एकाद० सप्तदशोऽध्यायः ॥१७॥ श्रीभगवानुवाच॥ वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा ॥ वन एव वसेच्छांतस्तृतीयं भागमायुषः ॥१॥ कंदमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत् ॥ वसीत वल्कलं वासस्तृणपर्णाजिनानि च ॥२॥ केशरोमनखश्मश्रुमलानि विभृयाद्दतः ॥ न धावेदप्सु मज्जेत त्रिकालं स्थंडिलेशयः ॥३॥ ग्रीष्मे तप्येत पंचाग्नीन्वर्षास्वासारषाड् जले ॥ आकंठमग्नः शिशिर एवंवृत्तस्तपश्चरेत् ॥४॥ अग्निपक्वं समश्नीयात्कालपक्वमथापि वा ॥ उलूखलाश्मकुट्टो वा दंतोलूखल एव वा ॥५॥ स्वयं संचिनुयात्सर्वमात्मनो वृत्तिकारणम् ॥ देशकालबलाभिज्ञो नाददीतान्यदाहृतम् ॥६॥ वन्यैश्चरुपुरोडाशैर्निर्वपेत्कालचोदितान् ॥ न तु श्रौतेन पशुना मां यजेत वनाश्रमी ॥७॥ अग्निहोत्रं च दर्शश्च पूर्णमासश्च पूर्ववत् ॥ चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः ॥८॥ एवं चीर्णेन तपसा मुनिर्धमनिसंततः ॥ मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥९॥ यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् ॥ कामायाल्पीयसे युंज्याद्बालिशः कोऽपरस्ततः ॥१०॥ यदासौ नियमेऽकल्पो जरया जातवेपथुः ॥ आत्मन्यग्नीन्समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥११॥ यदा कर्मविपाकेषु लोकेषु निरयात्मसु ॥ विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत्ततः ॥१२॥ ॥

जले आकंठमग्नो भूत्वा तपश्चरेत् ॥४॥ किंच अग्निपक्वं कालपक्वं वा उलूखलेन पाषाणेन वा कुट्टितमश्नीयात् ॥५॥ सर्वं देहवृत्तिकारणं स्वयमाहरेत् । आहृतं कालांतरे न गृह्णीयात् ॥६॥ वनोद्भवैर्नीवारादिभिश्चरु-पुरोडाशान् कृत्वाऽऽग्रयणादीनि कुर्यात् । श्रौतेन पशुना न यजेत ॥७॥ अग्निहोत्र-दर्श-पूर्णमास-चातुर्मास्यानि कुर्यात् ॥८॥ एवं तपसा शुष्कमांसो मुनिर्मामाराध्य महर्लोकादिक्रमेण मां प्राप्नोति ॥९॥ एवं कृतं मोक्षफलं तपस्तुच्छकामाय यो युंज्यात् तस्मादज्ञः कोऽस्ति न कोऽपि ॥१०॥ यदासौ वानप्रस्थः आयुषस्तृतीयभागसमाप्तेः प्राक् स्वनियमेऽसमर्थोऽविरक्तो जरया जातकंपश्च भवेत्तदाऽऽत्मन्यग्नीन् समारोप्य मच्चित्तः सन्नग्निं प्रविशेत् ॥११॥ यदा कर्मसु लोकेषु च वैराग्यवान् भवेत्तदा

१ पंचसप्ततिवर्षपर्यंतम् । २ सूर्येण सह चतुर्दिक्ष्वग्नीन्निधायात्मानं तापयेत् ।

श्राद्धाष्टककरणपूर्वकं प्राजापत्येष्ट्या मामिष्ट्वा ऋत्विग्भ्यो दक्षिणात्वेन सर्वस्वं दत्वाऽऽत्मन्यग्नीन् समारोप्य संन्यसेत् ॥१२॥१३॥ संन्यसतो विप्रस्य दारादिरूपिणो देवाः, असाव-स्मानतिक्रम्य परं ब्रह्म यातीत्यभिप्रायेण विघ्नान् कुर्वंति ॥१४॥ अथ यतिधर्मानाह। यतिर्वस्त्रं यदि विभृयात्तर्हि लिंगाच्छादनमात्रं धारयेत्। अनापदि दंडकमंडलुभ्यां विना किमपि न धारयेत् ॥१५॥ तथा दृष्टिपूतं पादं न्यसेत्। वस्त्रगलितं जलं पिबेत्। सत्यां वाचं वदेत्। मनसा विचार्य यच्छुद्धं तदाचरेत् ॥१६॥ वाचो दंडो मौनं। देहस्य दंडः काम्यकर्मत्यागः मनसो दंडः प्राणायामः। एते यस्य न संति स धृतैर्वेणुभिर्यतिर्न भवेत् ॥१७॥ यतिर्ब्राह्मणानामेव सप्तसु गृहेषु भिक्षां चरेत् ॥१८॥ ततो जलाशयं गत्वा मौनं

इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे ॥ अग्नीन्स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ॥१३॥ विप्रस्य वै संन्यसतो देवा दारादिरूपिणः ॥
विघ्नान्कुर्वंत्ययं ह्यस्मानाक्रम्य समियात्परम् ॥१४॥ बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम् ॥ त्यक्तं न दंडपात्राभ्यामन्यत्किंचिदनापदि
॥१५॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ॥ सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥१६॥ मौनानीहानिलायामा दंडा वाग्देहचेतसाम् ॥
न ह्येते यस्य संत्यंग वेणुभिर्न भवेद्यतिः ॥१७॥ भिक्षां चतुर्षु वर्णेषु विगर्ह्यान्वर्जयंश्चरेत् ॥ सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ॥१८॥
बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ॥ विभज्य पावितं शेषं भुंजीताशेषमाहृतम् ॥१९॥ एकश्चरेन्महीमेतां निःसंगः संयतेंद्रियः ॥
आत्मक्रीड आत्मरत आत्मवान्समदर्शनः ॥२०॥ विविक्तक्षेमशरणो मद्भावविमलाशयः ॥ आत्मानं चिंतयेदेकमभेदेन मया मुनिः ॥२१॥
अन्वीक्षेतात्मनो बंधं मोक्षं च ज्ञाननिष्ठया ॥ बंध इंद्रियविक्षेपो मोक्ष एषां च संयमः ॥२२॥ तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ॥
विरक्तः क्षुल्लकामेभ्यो लब्ध्वात्मनि सुखं महत् ॥२३॥ पुरग्रामव्रजान्सार्थान्भिक्षार्थं प्रविशंश्चरेत्॥ पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥२४॥
वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ॥ संसिध्यत्याश्वसंमोहः शुद्धसत्वः शिलांधसा ॥२५॥ नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति ॥
असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥२६॥ यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ॥ सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत्
॥२७॥ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ॥ सलिंगानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥२८॥ ॥ ॥

धृत्वाऽन्नं विष्णु-ब्रह्मार्क-भूतेभ्यो विभज्य शेषं भुंजीत ॥१९॥ एतां महीं निःसंग एक एव आत्मरतः सन् चरेत् ॥२०॥ तथा एकांते स्थित्वा मया अभेदेनात्मानं चिंतयेत् ॥२१॥ इंद्रियाणां विषयासक्त्या आत्मनो बंधं विषयेभ्य इंद्रियसंयमनेन च मोक्षं चिंतयेत् ॥२२॥ मनःषष्ठानि पंच ज्ञानेंद्रियाणि जित्वा विरक्तः सन् ॥२३॥ पुरग्रामव्रजान् भिक्षार्थं प्रविशन् पुण्यदेशादियुतां महीं चरेत् ॥२४॥ वानप्रस्थाश्रमस्थानेषु विशेषतो भैक्ष्यं चरेत् ॥२५॥ एतद्दृश्यमानं मिष्टान्नादिकं वस्तुतया न पश्येत्। यतस्तन्नश्यति। किंतु अनासक्तः सन् इहपरलोकार्थं कृत्याद्विरमेत् ॥२६॥ तथेदं विश्वं स्वशरीरं चात्मनि मायामात्रमिति ज्ञात्वा तन्न स्मरेत् ॥२७॥ अथ परमहंसधर्मानाह। बहिर्विरक्तोऽतज्ज्ञाननिष्ठो यतिस्त्रिदंडा-

दिसहितान् आश्रमधर्मान् त्यक्त्वा यथोचितं धर्मं चरेत् ॥२८॥ विवेकवानपि बालकवत् क्रीडेत् । निपुणोऽपि जडवच्चरेत् । पंडितोऽपि उन्मत्तवद्वदेत् ॥२९॥ वेदवादरतः पाखंडी केवलतर्कनिष्ठो वा न स्यात् । शुष्कवादे कंचन पक्षं नाश्रयेत ॥३०॥ जनान्नोद्वेगं प्राप्नुयात् । जनं च कमपि नोद्वेजयेत् । देहमुद्दिश्य केनापि सह वैरं न कुर्यात् ॥३१॥ यथेंदुरुदकपात्रेषु तथा सर्वभूतेष्वेक एवात्मा स्थित इति चिंतयेत् ॥३२॥ क्वचिदशनमलब्ध्वा न खिद्येत् लब्ध्वा च न हृष्येत् । यत उभयमपि दैवाधीनम् ॥३३॥ आहारार्थं भिक्षां समीहेतैव । यतः प्राणधारणं भवति । तेन च तत्त्वं विचार्यते । तद्विज्ञाय मुच्यते ॥३४॥ यदृच्छया प्राप्तमन्नं वस्त्रं शय्यां च सेवेत ॥३५॥ यथाऽहमीश्वरो लीलया कर्मा-

बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ॥ वदेदुन्मत्तवद्विद्वान्गोचर्यां नैगमश्चरेत् ॥२९॥ वेदवादरतो न स्यान्न पाखंडी न हैतुकः ॥ शुष्कवादविवादे न कंचित्पक्षं समाश्रयेत् ॥३०॥ नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु ॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केनचित् ॥३१॥ एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ॥ यथेंदुरुदपात्रेषु भूतान्येकात्मकानि च ॥३२॥ अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ॥ लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतंत्रितम् ॥३३॥ आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ॥ तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ॥३४॥ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ॥ तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥३५॥ शौचमाचमनं स्नानं न तु चोदनया चरेत् ॥ अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ॥३६॥ नहि तस्य विकल्पाख्या या च मद्वीक्षया हता ॥ आदेहांतात्क्वचित्ख्यातिस्ततः संपद्यते मया ॥३७॥ दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ॥ अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥३८॥ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ॥ यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥३९॥ यस्त्वसंयतषड्वर्गः प्रचंडेंद्रियसारथिः ॥ ज्ञानवैराग्यरहितस्त्रिदंडमुपजीवति ॥४०॥ सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ॥ अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥४१॥ भिक्षोर्धर्मः शमोऽहिंसा तप इज्या वनौकसः ॥ गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥४२॥ ब्रह्मचर्यं तपः शौचं संतोषो भूतसौहृदम् ॥ गृहस्थस्याप्यृतौ गंतुः सर्वेषां मदुपासनम् ॥४३॥ ॥ ॥ ॥ ॥

चरामि तथा अनासक्तः सन् शौचाचमन-स्नानादिविधीन् कुर्यात् ॥३६॥ एवंभूतस्यापि भेदप्रतीतिर्देहांतपर्यंतं दग्धपटवद्भाति । ततो मया संपद्यते॥३७॥अथ वैराग्यवंतं विज्ञानेच्छुं यतिं प्रत्याह । दुःखरूपेषु विषयेषु जातवैराग्योऽपि अज्ञातमत्प्राप्तिसाधनो यतिर्मद्धर्मं ज्ञातुं गुरुं व्रजेत् ॥३८॥ ततो यावद्ब्रह्म जानीयात् तावद्गुरुं सेवेत ॥३९॥ यस्तु षड्वर्गमजित्वा ज्ञानादिरहितः सन् त्रिदंडमुपजीवति ॥४०॥ स देवान् आत्मस्थं मां च प्रतारयति । तेनहेलोकात्परलोकाच्च भ्रश्यति ॥४१॥ चतुर्णामपि मुख्यान् धर्मानाह । शमोऽहिंसा च भिक्षोर्धर्मः । तपो यजनं वानप्रस्थस्य धर्मः । भूतरक्षणं पंचयज्ञाश्च गृहस्थस्य धर्मः । आचार्यसेवनं ब्रह्मचारिणो धर्मः ॥४२॥ ब्रह्मचर्यं तपः शौचं संतोषो भूतसौहृदं मदुपासनं च सर्वेषां धर्मः ॥४३॥

एवं यो मां भजति स शीघ्रं मद्भक्तिं लभते ॥४४॥ एवंभूतो भक्तो भक्त्या सर्वेश्वरं मां प्राप्नोति ॥४५॥ स्वधर्मेण शुद्धसत्वोऽपि पुमान् ज्ञातमत्स्वरूपः सन् शीघ्रं मामुपैति ॥४६॥ हे उद्धव, अयं वर्णाश्रमवतां धर्मो मद्भक्तियुतश्चेन्मोक्षकरो भवति ॥४७॥ हे साधो, भवान् यन्मां पृच्छति तत्ते कथितम् । यथा स्वधर्मसंयुक्तो भक्तो भूत्वा मां प्राप्नुयात् ॥४८॥ इति श्रीम० चू० एका० अष्टादशोऽध्यायः ॥१८॥ ज्ञानादेर्निर्णयः पूर्वं कृतो ह्याश्रमधर्मतः । अत्रोनविंशतितमे ज्ञानादेस्त्याग उच्यते ॥१॥ श्रीभगवानुवाच ॥ योऽनुभवपर्यंतं प्राप्तज्ञानः स इदं द्वैतमात्मनि मायामात्रं ज्ञात्वा ज्ञानं च तत्साधनं च संन्यसेत् । अयमेव विद्वत्संन्यासः ॥१॥ ज्ञानिनस्त्वहमेवापेक्षितः स्वार्थः साधनं स्वर्गो मोक्षश्च संमतोऽस्ति । अतस्तस्य न प्राप्यं कृत्यं वा किंचिदस्ति ॥२॥ ये तु ज्ञानविज्ञानसहितास्ते मम श्रेष्ठं पदं विदुः । अतः स ज्ञानी मे प्रियतमः ॥३॥ तस्य ज्ञानं स्तौति । हे उद्धव, ज्ञानलेशेनापि

इति मां यः स्वधर्मेण भजन्नित्यमनन्यभाक् ॥ सर्वभूतेषु मद्भावो मद्भक्तिं विंदतेऽचिरात् ॥४४॥ भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ॥ सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥४५॥ इति स्वधर्मनिर्णिक्तसत्वो निर्ज्ञातमद्गतिः ॥ ज्ञानविज्ञानसंपन्नो न चिरात्समुपैति माम् ॥४६॥ वर्णाश्रमवतां धर्म एष आचारलक्षणः ॥ स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥४७॥ एतत्तेऽभिहितं साधो भवान्पृच्छति यच्च माम् ॥ यथा स्वधर्मसंयुक्तो भक्तो मां समियात्परम् ॥४८॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे अष्टादशोऽध्यायः ॥१८॥ श्रीभगवानुवाच ॥ यो विद्याश्रुतसंपन्न आत्मवान्नानुमानिकः ॥ मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥१॥ ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ॥ स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥२॥ ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम ॥ ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥३॥ तपस्तीर्थं जपो दानं पवित्राणीतराणि च ॥ नालं कुर्वंति तां सिद्धिं या ज्ञानकलया कृता ॥४॥ तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ॥ ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावतः ॥५॥ ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि ॥ सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥६॥ त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायांऽतराऽऽपतति नाद्यपवर्गयोर्यत् ॥ जन्मादयोऽस्य यदमी तव तस्य किं स्युराद्यंतयोर्यदसतोऽस्ति तदेव मध्ये ॥७॥ ॥ ॥ ॥ ॥ ॥

या सिद्धिः स्यात् सा तपस्तीर्थ-जप-दानादिभिर्न स्यात् ॥४॥ तस्मात्त्वं ज्ञानप्राप्तिपर्यंतं स्वात्मानं ज्ञात्वा ज्ञानविज्ञानसंपन्नः सन् मामेव भज ॥५॥ पूर्वे मुनयो ज्ञानविज्ञानयज्ञेन मामिष्ट्वा सर्वयज्ञपतिं मां प्राप्ताः ॥६॥ तदेव ज्ञानं संक्षेपत उपदिशति । हे उद्धव, त्वयि अयं आध्यात्मिकादित्रिविधो यो विकारः प्रतीयते स माया न तु परमार्थः । यस्मात्स मध्य एवापतति । न त्वादावंते चास्ति । यदा अस्य विकारस्यामी जन्मादयः स्युस्तदा तस्याधिष्ठानभूतस्य तव किं न किंचित् । असतः सर्पादेराद्यंतयोर्यद्रज्ज्वाद्यस्ति तदेव मध्येऽपि । अतस्त्वं निर्विकारं ब्रह्मासीति ॥७॥ ॥ ॥ ॥ ॥ ॥ ॥

उद्धव उवाच ॥ हे कृष्ण, त्वमेतद्वैराग्ययुक्तं शुद्धं ज्ञानं विपुलं यथा भवति तथा कथय । त्वद्भक्तियोगं च कथय ॥८॥ अत्र संसारे त्रिविधतापेन तप्तस्य जनस्य तव चरणकमल-द्वयादन्यच्छरणमहं न पश्यामि ॥९॥ अतः संसारकूपे पतितं कालसर्पेण दष्टं तुच्छानि विषयसुखान्यभिलषंतं जनं कृपया वागमृतैः सेचनं कृत्वा समुद्धर ॥१०॥ श्रीभगवानुवाच ॥ एवं पुरा युधिष्ठिरः सर्वेषां नः शृण्वतां सतां भीष्मं पप्रच्छ ॥११॥ भारते युद्धे समाप्ते सति संबंधिवधविह्वलो धर्मो भीष्माद्बहून् धर्मान् श्रुत्वा पश्चान्मोक्षधर्मान् पप्रच्छ ॥१२॥ तान् भीष्ममुखाच्छ्रुतान् ज्ञानवैराग्यादियुक्तान् धर्मानहं ते कथयिष्यामि ॥१३॥ प्रकृति-पुरुष-महद्-दहंकार-पंचतन्मात्राण्येकादशेंद्रियाणि पंच महाभूतानि त्रयो गुणा एतान्यष्टाविंशति तत्वानि ब्रह्मादिस्थावरांतेषु कार्येष्वनुगतानि येन ज्ञानेनेक्षेत[१] । एषु तत्वेषु च परमात्मतत्त्वमनुगतं येनेक्षेत तज्ज्ञानम् ॥१४॥ विज्ञानमाह । यदा येनैकेनानुगतान्येकात्म-

उद्धव उवाच ॥ ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम् ॥ आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यम् ॥८॥ तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश ॥ पश्यामि नान्यच्छरणं तवांघ्रिद्वंद्वातपत्रादमृताभिवर्षात् ॥९॥ दष्टं जनं संपतितं बिलेऽस्मिन्कालाहिना क्षुद्रसुखोरुतर्षम् ॥ समुद्धरैनं कृपयाऽऽपवर्ग्यैर्वचोभिरासिंच महानुभाव ॥१०॥ श्रीभगवानुवाच ॥ इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरम् ॥ अजातशत्रुः प्रपच्छ सर्वेषां नोऽनुशृण्वताम् ॥११॥ निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ॥ श्रुत्वा धर्मान्बहून्पश्चान्मोक्ष-धर्मानपृच्छत ॥१२॥ तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ॥ ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥१३॥ नवैकादश पंच त्रीन्भावान्भूतेषु येन वै ॥ ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥१४॥ एतदेव हि विज्ञानं न तथैकेन येन यत् ॥ स्थित्युत्पत्त्यप्ययान्पश्येद्भावानां त्रिगुणात्मनाम् ॥१५॥ आदावंते च मध्ये च सृज्यात्सृज्यं यदन्वियात् ॥ पुनस्तत्प्रतिसंक्रामे यच्छिष्येत तदेव सत् ॥१६॥ श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ॥ प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्यते ॥१७॥ कर्मणां परिणामित्वादाविरिंचादमंगलम् ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥१८॥

कानि तत्वानि पूर्वमैक्षत तानि तथा पूर्ववन्नेक्षेत । किंतु तदेकं परमकारणं ब्रह्मैवेक्षेत तदा एतदेव विज्ञानम्[२] । तत्र सावयवानां तत्वानामुत्पत्तिस्थितिलयान् पश्येत् । उत्पत्तौ परिणामांतरापत्तौ च कारणत्वेन मध्ये चाश्रयत्वेन कार्यात्कार्यांतरंप्रति यदनुगच्छेत्तत्प्रलये च यदवशिष्येत तत्सदिति पश्येत्[३] ॥१५॥१६॥ वैराग्यमाह । श्रुतिः प्रत्यक्षं[४] ऐतिह्यं[५] अनुमानं[६] चैतेन प्रमाणचतुष्टयेन प्रपंचस्य नश्वरत्वं निश्चित्य विवेकी पुमान् सर्वानुगतं सत्यमात्मतत्त्वं पश्यन् मिथ्यात्वेन ज्ञातात्प्रपंचाद्विरक्तो भवति ॥१७॥ ज्ञानी ब्रह्मलोकपर्यंतगदृष्टमपि सुखं दृष्टसुखवद्दुःखरूपं नश्वरं च पश्येत् ॥१८॥ ॥ ॥ ॥ ॥ ॥ ॥

१ कार्यकारणात्मकं जगत्पश्यन् परमकारणात्मकमेवैतन्न तु ततः पृथगिति येन पश्येत्तज्ज्ञानमित्यर्थः । २ परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यामुच्येते इत्यर्थः । ३ नेह नानास्ति किंचनेत्यादिश्रुतिः । ४ पटादिकार्यं तंत्वादिव्यतिरेकेण न दृश्यते इति प्रत्यक्षम् । ५ महाजनप्रसिद्धिरैतिह्यम् । ६ विमतं जगत् मिथ्या दृश्यत्वाच्छुक्तिरजतादिवदित्याद्यनुमानम् ।

हे उद्धव, भक्तियोगस्तु पुरैवोक्तः। पुनश्च मद्भक्तेः कारणं वक्ष्यामि ॥१९॥ मम कथायां श्रवणादरः। मत्कीर्तनम्। मत्पूजायां निष्ठा। मत्स्तवनम् ॥२०॥ मम नमनम्। मद्भक्तपूजा। सर्वत्र मन्मतिः ॥२१॥ मदर्थे लौकिकी क्रिया। वचसा मद्गुणकथनम् मनसो मय्यर्पणम्॥२२॥ मदर्थे द्रव्यविनियोगः। मदर्थं दान-होम-जपादिकरणम् ॥२३॥ एवं धर्मैरात्मनिवेदनं कुर्वतां मनुष्याणां मयि प्रेमलक्षणा भक्तिर्जायते ॥२४॥ किंच। यदा चित्तं मयि ईश्वरे समर्पितं सच्छांतं निर्मलं च भवति। तदा पुमान् धर्म-ज्ञान-वैराग्यैश्वर्याणि प्राप्नोति ॥२५॥ यदा चित्तं गृहादावर्पितं सद्विषयासक्तं मलिनं च भवति तदा पुमान् अधर्मादिभिर्युक्तो भवति॥२६॥ मद्भक्तिकरो यः स धर्मः। ऐकात्म्यदर्शनं यत्तज्ज्ञानम्। विषयेष्वसंगो

भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ॥ पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥१९॥ श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् ॥ परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥२०॥ आदरः परिचर्यायां सर्वांगैरभिवंदनम् ॥ मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥२१॥ मदर्थेष्वंगचेष्टा च वचसा मद्गुणेरणम् ॥ मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥२२॥ मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ॥ इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ॥२३॥ एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ॥ मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥२४॥ यदात्मन्यर्पितं चित्तं शांतं सत्त्वोपबृंहितम् ॥ धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥२५॥ यदर्पितं तद्विकल्पे इंद्रियैः परिधावति ॥ रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् ॥२६॥ धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ॥ गुणेष्वसंगो वैराग्यमैश्वर्यं चाणिमादयः ॥२७॥ उद्धव उवाच ॥ यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ॥ कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥२८॥ किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते ॥ कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा ॥२९॥ पुंसः किंस्विद्बलं श्रीमन्भगो लाभश्च केशव ॥ का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ॥३०॥ कः पंडितः कश्च मूर्खः कः पंथा उत्पथश्च कः ॥ कः स्वर्गो नरकः कः स्वित्को बंधुरुत किं गृहम् ॥३१॥ क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ॥ एतान्प्रश्नान्मम ब्रूहि विपरीतांश्च सत्पते ॥३२॥ श्रीभगवानुवाच ॥ अहिंसा सत्यमस्तेयमसंगो ह्रीरसंचयः ॥ आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥३३॥ ॥ ॥

वैराग्यम्। अणिमादिसिद्धयश्चैश्वर्यं विद्धि ॥२७॥ उद्धव उवाच ॥ हे कृष्ण, यमनियमौ कतिविधौ प्रोक्तौ। शमो दमश्च कः। तितिक्षा धृतिश्च का ॥२८॥ दानं तपः शौर्यं सत्यं ऋतं त्यागः इष्टं धनं यज्ञो दक्षिणा च का ॥२९॥ पुरुषस्य बलं ऐश्वर्यं लाभो विद्या लज्जा श्रीः सुखं दुःखं च किम् ॥३०॥ पंडितो मूर्खः पंथाः उत्पथः स्वर्गो नरको बंधुः गृहं च किम् ॥३१॥ संपन्नः दरिद्रः कृपणः ईश्वरश्च कः। हे भगवन्, एतेषां प्रश्नानामुत्तरं मे ब्रूहि ॥३२॥ श्रीभगवानुवाच ॥ अहिंसा सत्यं अचौर्यं असंगः लज्जा असंचयः धर्मे विश्वासः ब्रह्मचर्यं मौनं स्थैर्यं क्षमा अभयं च एते द्वादश यमाः ॥३३॥ ॥ ॥ ॥ ॥ ॥ ॥

शौचं बाह्यं आंतरं च जपः तपः होमः श्रद्धा आतिथ्यं मदर्चनं तीर्थाटनं परार्था-इच्छा तुष्टिः गुरुसेवा च एते द्वादश नियमाः ॥३४॥ एते उपासिताः संतः पुंसां अभ्युदयं मोक्षं च दिशंति ॥३५॥ बुद्धेर्मन्निष्ठता शमः । इंद्रियसंयमो दमः । दुःखसहनं तितिक्षा । जिह्वोपस्थ-वेग-धारणं धैर्यम् ॥३६॥ भूतद्रोहत्यागो दानम् । कामत्यागस्तपः । वासनाजयः शौर्यं । सर्वत्र समदर्शनं सत्यम् ॥३७॥ प्रियभाषणं ऋतम् । कर्मस्वनासक्तिः शौचम् । संन्यासस्त्यागः ॥३८॥ इष्टं धनं धर्मः । अहमेव परमेश्वरो यज्ञः । ज्ञानोपदेशो दक्षिणा । प्राणायामो वलम् ॥३९॥ मदीयमैश्वर्यादि पाड्गुणं भगः । मद्भक्तिर्लाभः । आत्मनि भेदवाधो विद्या । अकर्मसु त्याज्यत्वदर्शनं लज्जा ॥४०॥ निरपेक्षत्वादिगुणाः श्रीः । सुखदुः-

शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् ॥ तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥३४॥ एते यमाः सनियमा उभयोर्द्वादश स्मृताः ॥ पुंसामुपासितास्तात यथाकामं दुहंति हि ॥३५॥ शमो मन्निष्ठता बुद्धेर्दम इंद्रियसंयमः ॥ तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥३६॥ दंडन्यासः परं दानं कामत्यागस्तपः स्मृतम् ॥ स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥३७॥ ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ॥ कर्मस्वसंगमः शौचं त्यागः संन्यास उच्यते ॥३८॥ धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ॥ दक्षिणा ज्ञानसंदेशः प्राणायामः परं वलम् ॥३९॥ भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः ॥ विद्याऽत्मनि भिदा वाधो जुगुप्सा हीरकर्मसु ॥४०॥ श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः ॥ दुःखं कामसुखापेक्षा पंडितो वंधमोक्षवित् ॥४१॥ मूर्खो देहाद्यहंबुद्धिः पंथा मन्निगमः स्मृतः ॥ उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥४२॥ नरकस्तम उन्नाहो वंधुर्गुरुरहं सखे ॥ गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥४३॥ दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेंद्रियः ॥ गुणेष्वसक्तधीरीशो गुणसंगो विपर्ययः ॥४४॥ एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः ॥ किं वर्णितेन वहुना लक्षणं गुणदोषयोः ॥ गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥४५॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे एकोनविंशोऽध्यायः ॥१९॥ उद्धव उवाच ॥ विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ॥ अवेक्षतेऽरविंदाक्ष गुणं दोषं च कर्मणाम् ॥१॥ ॥

खत्यागः सुखम् । कामसुखेच्छा दुःखम् । वंधमोक्षवित् पंडितः ॥४१॥ देहादिष्वहंबुद्धिर्मूर्खः । मत्प्रापको मार्गः पंथाः । प्रवृत्तिमार्ग उत्पथः । सत्वगुणोदयः स्वर्गः ॥४२॥ तमोगुणाधिक्यं नरकः । गुरुरेव वंधुः । गुणसंपन्न आढ्यः ॥४३॥ असंतुष्टो दरिद्रः । अजितेंद्रियः कृपणः । विषयेष्वनासक्त ईश्वरः । विषयेषु सक्तः अनीश्वरः ॥४४॥ हे उद्धव, एवं ते सर्वेषां प्रश्नानामुत्तराणि मया मोक्षोपयोगितया दत्तानि । गुणदोषयोर्लक्षणेन बहुधा वर्णितेन किम् । गुणदोषयोर्यद्दर्शनं स दोषः । गुणस्तु गुणदोषरहितः स्वभावः ॥४५॥ इति श्रीम० ए० एकोनविंशोऽध्यायः ॥१९॥ विंशे योगत्रयं प्रोक्तं भक्तिज्ञानक्रियात्मकम् । गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥१॥ उद्धव उवाच ॥ हे कृष्ण, विधिर्निषेधश्चेश्वरस्य तवा-

[1] ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ।

ज्ञारूपो वेदोऽस्ति । स शुभाशुभकर्मणां पुण्यपापरूपं गुणदोषमवेक्षते ॥१॥ तथा उत्तमाधमभावेन वर्णानामाश्रमाणां च भेदं तथा कर्मणो योग्यानयोग्यांश्च द्रव्य-देश-वयः-काल-स्वर्ग-नरकान् अवेक्षते ॥२॥ एवं सति गुणदोषभेददृष्टिं विना कर्मकांडगतं निषेधविधिलक्षणं ते वचः कथं घटते । तेन च विना मनुष्याणां मोक्षः कथं स्यात् ॥३॥ पितरो देवाश्च मनुष्येभ्यः कथयिष्यंतीति चेत्तर्हि पितृ-देव-मनुष्याणां स्वर्गमोक्षयोश्च साधनं त्वदाज्ञारूपो वेद एव ॥४॥ किंच । शास्त्रेणैव विहितां भेददृष्टिं तदेव शास्त्रं कथं निवर्तयेदिति मे भ्रमो भवति तं निवर्तय ॥५॥ श्रीभगवानुवाच ॥ हे उद्धव, अधिकारिभेदेन ज्ञानं कर्म च भक्तिश्चेति त्रिविधा योगा मनुष्याणां मोक्षसाधनेच्छया मया प्रोक्ताः संति ॥६॥

वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ॥ द्रव्यदेशवयःकालान्स्वर्गं नरकमेव च ॥ २ ॥ गुणदोषभिदा दृष्टिमंतरेण वचस्तव ॥ निःश्रेयसं कथं नृणां निषेधविधिलक्षणम् ॥३॥ पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ॥ श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥४॥ गुणदोषभिदादृष्टि-र्निगमात्ते नहि स्वतः ॥ निगमेनापवादश्च भिदाया इति ह भ्रमः ॥५॥ श्रीभगवानुवाच ॥ योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ॥ ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥६॥ निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ॥ तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥७॥ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ॥ न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥८॥ तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ॥ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥९॥ स्वधर्मस्थो यजन्यज्ञैरनाशीःकाम उद्धव ॥ न याति स्वर्ग-नरकौ यद्यन्यन्न समाचरेत् ॥१०॥ अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ॥ ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥११॥ स्वर्गि-णोऽप्येतमिच्छंति लोकं निरयिणस्तथा ॥ साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥१२॥ न नरः स्वर्गतिं कांक्षेन्नारकीं वा विचक्षणः ॥ नेमं लोकं च कांक्षेत देहावेशात्प्रमाद्यति ॥१३॥ एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः ॥ अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥१४॥

तत्र विरक्तानां ज्ञानयोगः । कामिनां कर्मयोगः । यस्तु न विरक्तो नातिसक्तस्तस्य भक्तियोगश्च कथितः ॥७॥८॥ हे उद्धव, यावद्वैराग्यमथवा मत्कथाश्रवणादौ श्रद्धा न जायते तावन्नित्यनैमित्तिकानि कर्माणि कुर्यात् ॥९॥ स्वधर्मस्थः स्वर्गादिषु निष्कामश्च पुमान् स्वर्गनरकौ न याति ॥१०॥ किंतु अस्मिन्नेव देहे ज्ञानं भक्तिं वा प्राप्नोति ॥११॥ अस्मिन् लोके मनुष्यशरीरप्राप्तिं स्वर्गिणो नारकिणश्चेच्छंति । यतस्तच्छरीरं ज्ञानभक्तिभ्यां मोक्षसाधकमस्ति ॥१२॥ तथापि नरः स्वर्गलोकं नरकलोकमिमं मनुष्यलोकं च नेच्छेत् । यतो-ऽस्मिन् देहासक्त्या स्वार्थेऽवधानशून्यो भवति ॥१३॥ अतो विवेकी इदं शरीरमर्थसाधकमपि मरणधर्मयुक्तं ज्ञात्वा मृत्योः पूर्वं मोक्षार्थं यत्नं कुर्यात् ॥१४॥

१ अफलकामत्वान्न स्वर्गं याति स्वधर्मस्थत्वान्निषिद्धवर्जनाच्च नरकं च न याति ।

अत्र दृष्टांतः। यथा पक्षी स्वगृहाश्रयं वृक्षं दुष्टैश्छिद्यमानं दृष्ट्वा तं त्यक्त्वाऽन्यत्र गतः सन् सुखं प्राप्नोति ॥१५॥ तथाऽहोरात्रैश्छिद्यमानं स्वमायुर्ज्ञात्वा मुक्तसंगो भूत्वा परमात्मानं ज्ञात्वा देहे निस्पृहः सन् परमानंदं प्राप्नोति ॥१६॥ अतः सर्वफलानां मूलं उद्यमकोटिभिरपि सुदुर्लभं तथापि सुलभं पटुतरं नौकारूपं गुरुकर्णधारं नृदेहं प्राप्य यो भवाब्धिं न तरेत्स आत्महा ज्ञेयः ॥१७॥ अथ विरक्तं प्रत्याह। यदा पुरुषः कर्मसु विरक्तो भवति तदा आत्मनो मनो निश्चलं यथा भवति तथा मयि धारयेत् ॥१८॥ धार्यमाणमपि मनो यदि परिभ्रमत् सत् चंचलं भवेत्तर्हि किंचिदपेक्षापूरणद्वारेण स्वाधीनं कुर्यात् ॥१९॥ जितप्राणो योगी मनोगतिं नोपेक्षेत। किंतु सत्वसंपन्नया बुद्ध्या आत्मवशं कुर्यात् ॥२०॥ अयं मनसो निग्रहः परो योगः स्मृतः। यथाऽश्वशिक्षकः पुरुषः शिक्षणीयस्याश्वस्य स्वाभिप्रायेण गतिमपेक्षमाणः सन् प्रथमं किंचित्तद्गतिमनुवर्तते । तदा च

छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् ॥ खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलंपटः ॥१५॥ अहोरात्रैश्छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः ॥ मुक्तसंगः परं बुद्ध्वा निरीह उपशाम्यति ॥१६॥ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ॥ मयाऽनुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा ॥१७॥ यदारंभेषु निर्विण्णो विरक्तः संयतेंद्रियः ॥ अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥१८॥ धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ॥ अतंद्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥१९॥ मनोगतिं न विसृजेज्जितप्राणो जितेंद्रियः ॥ सत्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥२०॥ एष वै परमो योगो मनसः संग्रहः स्मृतः ॥ हृदयज्ञत्वमन्विच्छन्दम्यस्येवार्वतो मुहुः ॥२१॥ सांख्येन सर्वभावानां प्रतिलोमानुलोमतः ॥ भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥२२॥ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ॥ मनस्त्यजति दौरात्म्यं चिंतितस्यानुचिंतया ॥२३॥ यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ॥ ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥२४॥ यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ॥ योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥२५॥ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ॥ कर्मणां जात्यशुद्धानामनेन नियमः कृतः ॥ गुणदोषविधानेन संगानां त्याजनेच्छया ॥२६॥ जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ॥ वेद दुःखात्मकान्कामान्परित्यागेऽप्यनीश्वरः ॥२७॥ ॥ ॥ ॥ ॥

रश्मिना तं धृत्वैव गच्छति न तूपेक्षते तद्वत् ॥२१॥ किंच। महदादिदेहांतानां तत्वानां विवेकेन जन्मनाशौ यावन्मनः प्रसीदति तावदनुध्यायेत् ॥२२॥ एवं विरक्तस्य पुंसो मनो देहाद्यभिमानं त्यजति ॥२३॥ किंच। यमादिभिर्योगमार्गैः तत्त्वंपदार्थशोधनेन मम पूजाध्यानादिभिर्वा शुद्धं जातं मनः परमात्मानं स्मरेत् ॥२४॥ यदि योगी प्रमादेन निषिद्धं कर्म कुर्यात्तर्हि ज्ञानाभ्यासेनैव तत्पापं दहेत् ॥२५॥ ननु प्रायश्चित्तं विना ज्ञानाभ्यासेनैव कथं पापं दहेत्तत्राह। स्वे स्वेऽधिकारे या स्थितिः स एव गुणो नेतरः। अनेनोत्पत्त्यैवाशुभानां कर्मणां संकोचः कृतः। योगिनां कर्मसु स्वाभाविकप्रवृत्त्यभावात् प्रायश्चित्तादिविधिगोचरता नास्तीति भावः ॥२६॥ अथ भक्त्यधिकारिणो भक्तियोगमाह।

मत्कथासु श्रद्धावान् भक्तो दुःखात्मकान् कामान् यद्यपि वेद तथापि तत्त्यागे असमर्थः ॥२७॥ एवंभूतो यः श्रद्धालुः स भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयः सन् प्रीत्या मां भजेत । विषयान् सेवमानोऽपि तेषु प्रीतिं न कुर्यात् ॥२८॥ एवं भक्तियोगेन मां नित्यं भजतो नरस्य हृदि मयि स्थिते सति हृद्गताः सर्वा विषयवासना नश्यंति ॥२९॥ मयि दृष्टे सति हृदयग्रंथिर्भिद्यते । सर्वसंशयाश्छिद्यंते । कर्माणि च क्षीयंते ॥३०॥ तस्मान्मद्भक्तियुक्तस्य पुंसो ज्ञानं वैराग्यं च प्रायः श्रेयःसाधनं न भवेत् ॥३१॥ किंच । कर्म-तपो-ज्ञान-वैराग्य-योग-दानादिभिर्यच्चित्तशुद्ध्यादि जायते तत्सर्वं भक्तियोगेन मद्भक्तो लभते । यदीच्छति तर्हि स्वर्गं मोक्षं च लभत एव ॥३२॥३३॥ ये तु मद्भक्ताः साधवस्ते मया दत्तमपि मोक्षं न गृह्णंति । किमु वक्तव्यं न वांछंतीति ॥३४॥ यतो नैरपेक्ष्यमेव उत्कृष्टं साधनं प्राहुः । तस्मान्निराशिषो भक्तस्य मे भक्तिर्भवेत् ॥३५॥ हे उद्धव, अनेन प्रकारेण सिद्धानां

ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ॥ जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन् ॥२८॥ प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ॥ कामा हृदय्या नश्यंति सर्वे मयि हृदि स्थिते ॥२९॥ भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥३०॥ तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ॥ न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥३१॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ॥ योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥३२॥ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽजसा ॥ स्वर्गापवर्गं मद्धाम कथंचिद्यदि वांछति ॥३३॥ न किंचित्साधवो धीरा भक्ता ह्येकांतिनो मम ॥ वांछंत्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३४॥ नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ॥ तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥३५॥ न मय्येकांतभक्तानां गुणदोषोद्भवा गुणाः ॥ साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥३६॥ एवमेतन्मयाऽऽदिष्टाननुतिष्ठंति मे पथः ॥ क्षेमं विंदंति मत्स्थानं यद्ब्रह्म परमं विदुः ॥३७॥ इति श्री० महा० एका० विंशतितमोऽध्यायः ॥२०॥ श्रीभगवानुवाच ॥ य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ॥ क्षुद्रान्कामांश्चलैः प्राणैर्जुषंतः संसरंति ते ॥१॥ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ॥ विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥२॥ ॥ ॥

मय्येकांतभक्तानां गुणदोषोद्भवाः पुण्यपापादयो गुणा न संति ॥३६॥ हे उद्धव, मयोदितानेतान् मार्गान्प्रति येऽनुतिष्ठंति ते काल-मायादिरहितं परमं ब्रह्म प्राप्नुवंति ॥३७॥ इति श्रीमद्भागवतचू० एका० विंशोऽध्यायः ॥२०॥ एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् । कामिनां द्रव्यदेशादिगुणदोषाः प्रपंचिताः ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, ये एतान् भक्ति-ज्ञान-क्रियात्मकान् त्रीन् मदुक्तान् मार्गान् हित्वेंद्रियैस्तुच्छान् विषयान् सेवंते ते गुणदोषभाजो भूत्वा संसारं प्राप्नुवंति ॥१॥ एतावता स्वेस्वेऽधिकारे या स्थितिः स एव गुणः । तद्विपरीतो दोषः । एष एव गुणदोषयोर्निश्चयः ॥२॥ ॥ ॥ ॥ ॥ ॥

१ अधिकारिभेदेन कल्पितौ गुणदोषौ न वस्तुनिष्ठाविति भावः ।

तदाह । वस्तुषु समानेष्वपि सत्सु वस्तुनः योग्यमयोग्यं वेति संदेहद्वारा स्वाभाविक-प्रवृत्ति-प्रतिबंधार्थं धर्मार्थं-शुद्ध्यशुद्धी व्यवहारार्थ-गुणदोषौ यात्रार्थ-शुभाशुभौ च विधीयेते । अयमाचारः कर्मजडानां मन्वादिरूपेण मया दर्शितः ॥३॥४॥ समानेष्वपि वस्तुष्विति यदुक्तं तत्प्रपंचयति । भूम्यादिपंचमहाभूतानि कारणानि ब्रह्मादिस्थावरांतानां प्राणिनां देहारंभकत्वेन जीवत्वेन च समानि संति ॥५॥ तथापि तेषां प्रवृत्ति-नियमन-द्वारा धर्मादिपुरुषार्थसिद्धये वेदेन विषमाणि वर्णाश्रमादीनि नामरूपाणि कल्प्यंते ॥६॥ तथा कर्मणां संकोचार्थं देश-काल-फलादीनां तंदुलादीनां वस्तूनां च गुणदोषौ विधीयेते ॥७॥ तदेवाह । देशानां मध्ये कृष्णसार-मृग-रहितो देशोऽशुचिः । कृष्णसारमृगयुतोऽपि असौवीरः कीकटादिरशुचिः ॥८॥ कालस्तु द्रव्यसंपत्त्या युतः स्वतः कर्मार्हश्च पूर्वाह्णादिः शुद्धः । द्रव्यसंपत्त्या रहितः सूतकादिश्चाशुद्धः ॥९॥ वस्त्रादेः शुद्ध्यशुद्धी तु-१ द्रव्येण तोयादिना-

शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ॥ द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥३॥ धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ॥ दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥४॥ भूम्यंब्वग्न्यनिलाकाशा भूतानां पंच धातवः ॥ आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥५॥ वेदेन नामरूपाणि विषमाणि समेष्वपि ॥ धातुषूद्धव कल्प्यंत एतेषां स्वार्थसिद्धये ॥६॥ देशकालादिभावानां वस्तूनां मम सत्तम ॥ गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥७॥ अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ॥ कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणम् ॥८॥ कर्मण्यो गुणवान्कालो द्रव्यतः स्वत एव वा ॥ यतो निवर्तते कर्म स दोषोऽकर्मकः स्मृतः ॥९॥ द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च ॥ संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथवा ॥१०॥ शक्त्याऽशक्त्याऽथवा बुद्ध्या समृद्ध्या च यदात्मने ॥ अघं कुर्वंति हि यथा देशावस्थानुसारतः ॥११॥ धान्यदार्वस्थितंतूनां रसतैजसचर्मणाम् ॥ कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥१२॥ अमेध्यलिप्तं यद्येन गंधं लेपं व्यपोहति ॥ भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते ॥१३॥ ॥ ॥ ॥ ॥

शुद्धिर्मूत्रादिना त्वशुद्धिः । २ शुद्धमशुद्धं वेति संदेहे ब्राह्मणवचनेन शुद्धिर्विपरीतेनाशुद्धिः । प्रोक्षणादिसंस्कारेण पुष्पादेः शुद्धिरवघ्राणादिनाऽशुद्धिः । ४ दशाहादिकालेन नवोदकादेः शुद्धिर्विपरीतेन पर्युषितान्नादेरशुद्धिः । ५ चांडालादिस्पृष्टानां तडागादिजलानां महत्वाल्पत्वाभ्यां शुद्ध्यशुद्धी ॥१०॥ सूतकान्नादेः शक्तान् प्रत्यशुद्धिः अशक्तान्प्रति शुद्धिः । ७ पुत्रजननादौ दशाहाद्बहिर्ज्ञानेन शुद्धिः अंतर्ज्ञानेनाशुद्धिः । ८ जीर्ण-मलव-द्वस्त्रादेः समृद्धंप्रत्यशुद्धिर्दरिद्रंप्रति शुद्धिः । एते द्रव्यवचनादयोऽष्टौ यदात्मने पापं कुर्वंति तद्देशावस्थानुसारेणैव कुर्वंति न सर्वतः ॥११॥ किंच । धान्य-काष्ठ-गजदंत-तैल-घृत-सुवर्णादीनां शुद्धिस्तु काल-वाय्वग्नि-मृत्तोयैर्ज्ञेया ॥१२॥ अमेध्यलिप्तं यत् पीठ-पात्र-वस्त्रादिकं

१ शुद्धेन धर्मः अशुद्धेनाधर्म इति । २ अशुद्धावपि राजादीनां व्यवहारदर्शनाशुपादेयं नान्यदिति । ३ दोषत्वेऽप्यापत्सु शरीरनिर्वाहमात्रग्रहणे न पापमधिकग्रहणे तु पापमिति । ४ सुवीराः सत्पुरुषास्तद्वान् सौवीरः । सत्पुरुषयुतः कीकटोऽपि शुचिः । तदन्यः कीकटोऽङ्ग-वंग-कलिंगादिश्चाशुचिः । ५ निर्भय एव देशे कुर्वंति न तु चौराद्याकुले । तथा रोगादिव्यतिरिक्तयुवाद्यवस्थायामेव कुर्वंति न बाल्यरोगाद्यवस्थायामिति ।

येन तक्षण-क्षाराम्लोदकादिना गंधं लेपं च त्यजति तत्तस्य शोधकम् ॥१३॥ कर्ता तु स्नानदानतपआदिना शुद्धदेहः सन् कर्माचरेत् ॥१४॥ सद्गुरुमुखाद्यथावत्परिज्ञानं मंत्रस्य शुद्धिः । ईश्वरायार्पणं कर्मणः शुद्धिः । देशकाल-द्रव्य-कर्तृ-मंत्र-कर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते ॥१५॥ आपदि प्रतिग्रहो गुणोऽप्यनापदि निषिद्धत्वाद्दोषः । परधर्मश्च परस्य गुणोऽपि स्वस्य दोषः । दोषोऽपि कुटुंबत्यागादिर्विरक्तस्य विधिबलेन गुणः । एवं यद्गुणदोषयोरेकस्मिन्नर्थे नियामकं शास्त्रं तत्तयोर्भेदमेव बाधते ॥१६॥ पतितानां सुरापानाद्याचरणं न दोषः । पूर्वमेव पतितत्वात् । पूर्वमेवाधः शयानो यथा न पतति तद्वत् ॥१७॥ किंच । यतो यतो विषयात्पुरुषो निवर्तेत ततस्ततो विमुच्यते । अयमेव धर्मो मनुष्याणां कल्याणकरः ॥१८॥ अथ प्रवृत्तिमार्गस्यानर्थतामाह । पुंसो विषयेषु एते समीचीना इति बुद्ध्या तत्रासक्तिः स्यात् । ततस्तेषु भोग्यताबुद्धिः । ततस्तद्विप्रियकर्तृभिः सह कलहः

स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः ॥ मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद्द्विजः ॥१४॥ मंत्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ॥ धर्मः संपद्यते षड्भिरधर्मस्तु विपर्ययः ॥१५॥ क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः ॥ गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥१६॥ समानकर्माचरणं पतितानां न पातकम् ॥ औत्पत्तिको गुणः संगो न शयानः पतत्यधः ॥१७॥ यतो यतो निवर्तेत विमुच्येत ततस्ततः ॥ एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥१८॥ विषयेषु गुणाध्यासात्पुंसः संगस्ततो भवेत् ॥ संगात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥१९॥ कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते ॥ तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥२०॥ तया विरहितः साधो जंतुः शून्याय कल्पते ॥ ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च ॥२१॥ विषयाभिनिवेशेन नात्मानं वेद नापरम् ॥ वृक्षजीविकया जीवन्व्यर्थं भस्त्रेव यः श्वसन् ॥२२॥ फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ॥ श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥ उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ॥ आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥२४॥ न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ॥ कथं युंज्यात्पुनस्तेषु तांस्तमो विशतो बुधः ॥२५॥ एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ॥ फलश्रुतिं कुसुमितां न वेदज्ञा वदंति हि ॥२६॥ कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ॥ अग्निमुग्धा धूमतांताः स्वं लोकं न विदंति ते ॥२७॥ ॥ ॥ ॥ ॥

॥१९॥ ततः क्रोधः । ततो मोहः । तेन पुरुषस्य कार्याकार्य-स्मृतिर्ग्रस्यते ॥२०॥ जंतुस्तया रहितोऽसत्तुल्यो भवति । एवं सति पुरुषार्थहानिः स्यात् ॥२१॥ तदाऽयं पुमान् भस्त्रेव श्वसन्नात्मानं परं च न वेद ॥२२॥ हे उद्धव, इयं फलश्रुतिर्नृणां परमपुरुषार्थपरा न भवति । किंतु औषधसेवने खंडलड्डुकादिवद्रुच्युत्पादनमात्रम् ॥२३॥ एवं न चेत्तर्हि स्वभावत एवानर्थहेतुषु कामस्त्रीपुत्रादिषु आसक्तमनसो नानायोनिषु च भ्रमतो मर्त्यान् पुनः काम्यकर्मसु कथं बुद्धो वेदः प्रवर्तयेत् । तथा सत्यनाप्त एव स्यात् ॥२४॥२५॥ एवं वेदाभिप्रायमज्ञात्वा केचित् कुबुद्धयः फलश्रुतिं सत्यां वदंति ॥२६॥ ते कामिनो लुब्धाः पुष्पेषु फलबुद्धयो विवेकशून्याः संत आत्मतत्त्वं न विदंति ॥२७॥ ॥ ॥

तदेवाह । हे उद्धव, ते प्राणतर्पणपराः पुरुषा हृदिस्थमपि मां न जानंति । यथा तमोव्याप्तचक्षुषः सन्निहितमपि न पश्यंति तद्वत् ॥२८॥ एवंभूता ये ते ममास्फुटं मतमज्ञात्वा ( वृथा यान् पशून् हिंसंति ते पशवः प्रेत्य तान् हिंसंति ) मांसभक्षणार्थं हिंसायां यदि प्रीतिः स्यात्तर्हि यज्ञ एवेत्यभ्यनुज्ञाद्वारा परिसंख्येयं न त्वावश्यकत्वेन प्रेरणा ॥२९॥ ( एवं वेदवाक्यं श्रुत्वाऽपि संशयरहितास्ते ) पशुभिः स्वर्गसुखेच्छया यज्ञैः पितृभूतपतीन् यजंते ॥३०॥ ते स्वप्नोपमं परलोकं आशिषश्चास्मिँल्लोके हृदि संकल्प्य वणिगिवार्थान् कर्मसु योजयंति ॥३१॥ अतस्ते रजःसत्वतमोनिष्ठा इंद्रादीनुपासते न तु माम् ॥३२॥ ते एवं विचारं कुर्वंति । अस्मिन् लोके यज्ञैर्देवता इष्ट्वा स्वर्गं गत्वा क्रीडामहे । तदंतेऽत्र

न ते मामंग जानंति हृदिस्थं य इदं यतः ॥ उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥२८॥ ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ॥ ( वृथा पशून् विहिंसंति हिंसंते प्रेत्य तांस्तु ते ॥ ) हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ॥२९॥ ( इति वेदध्वनिं श्रुत्वा न ते मुह्यंति कर्मसु ॥ ) हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ॥ यजंते देवता यज्ञैः पितृभूतपतीन् खलाः ॥३०॥ स्वप्नोपमममुं लोकमसंतं श्रवणप्रियम् ॥ आशिषो हृदि संकल्प्य त्यजंत्यर्थान्यथा वणिक् ॥३१॥ रजःसत्वतमोनिष्ठा रजःसत्वतमोजुषः ॥ उपासते इंद्रमुख्यान्देवादीन्न तथैव माम् ॥३२॥ इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ॥ तस्यांत इह भूयास्म महाशाला महाकुलाः ॥३३॥ एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ॥ मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ॥३४॥ वेदा ब्रह्मात्मविषयास्त्रिकांडविषया इमे ॥ परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥३५॥ शब्दब्रह्म सुदुर्बोधं प्राणेंद्रियमनोमयम् ॥ अनंतपारं गंभीरं दुर्विगाह्यं समुद्रवत् ॥३६॥ मयोपबृंहितं भूम्ना ब्रह्मणाऽनंतशक्तिना ॥ भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥३७॥ यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ॥ आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा ॥३८॥ छंदोमयोऽमृतमयः सहस्रपदवीं प्रभुः ॥ ओंकाराद्व्यंजितस्पर्शस्वरोष्मांतस्थभूषिताम् ॥३९॥ ॥ ॥

महागृहस्था भूयास्म ॥३३॥ एवं पुष्पितया वाचा चंचलमनसां नृणां मद्वार्तापि न रोचते ॥३४॥ हे उद्धव, कर्म-ब्रह्म-देवता-कांडविषया इमे वेदा ब्रह्मात्मंत्रिविषयाः संति । ऋषयश्च परोक्षवादाः । परोक्षं च मम प्रियम् ॥३५॥ ननु जैमिन्यादयस्तथा किमिति न वर्णयंति तत्राह । वेदब्रह्म स्वरूपतोऽनंतपारं अर्थतश्च समुद्रवद्गंभीरं सुदुर्बोधं चास्ति ॥३६॥ तदनंतशक्तिना मयाऽधिष्ठितमस्ति । तद्भूतेषु नादरूपेण वर्तत इति मनीषिभिर्लक्ष्यते ॥३७॥ अथ वैखर्या उत्पत्तिं सदृष्टांतामाह । यथोर्णनाभिर्हृदयादूर्णां मुखद्वारा वहिः प्रकटयति तथा प्राणोपाधिर्हिरण्यगर्भरूपो भगवान् वेदमूर्तिः सन् हृद्गतात्सूक्ष्मादाकाशादोंकारद्वारा उरःकंठादिसंगेन प्रकटैः स्वरस्पर्शादिभिर्भूषिताम् ॥३८॥३९॥ ॥ ॥

१ यथा कश्चिद्वणिक् दुस्तरसमुद्रादिलंघनेन बहुधनार्जनेच्छया सिद्धं धनं त्यजन्नुभयभ्रष्टो भवति तद्वत् । २ ब्रह्मैवात्मा न संसारीत्येतत्पराः । ३ मंत्रास्तद्द्रष्टारो वा । ४ अस्पष्टवक्तारः । ५ शुद्धांतःकरणैरेव तद्बोद्धव्यं नान्यैरनधिकारिभिः । वृथा कर्मत्यागेन भ्रंशप्रसंगादिति ।

गायत्र्यादिभिश्छंदोभिरुपलक्षितां अनंतपारां वैखरीं वाचं सृजति संहरति च ॥४०॥ तत्र कतिचिच्छंदांसि दर्शयति । २४–चतुर्विंशत्यक्षरा गायत्री । २८–त्य० उष्णिक् । ३२–द० अनुष्टुप् । ३६–द० बृहती । ४०–पंक्तिः । ४४–त्रिष्टुप् । ४८–जगती । ५२–अतिजगती । ५६–अष्टी । ६०–अत्यष्टी । ६४–विराट् । ६८–अतिविराट् इत्यादीनि छंदांसि संति ॥४१॥ अर्थतोऽपि दुर्ज्ञेयत्वमाह । वेदवाणी कर्मकांडे विधिवाक्यैः किं विधत्ते । देवताकांडे मंत्रवाक्यैः किं प्रकाशयति ज्ञानकांडे किमुच्चार्य[1] निषेधयेत्[2] । इत्येवमस्यास्तात्पर्यं मत्तोऽन्यः कश्चिदपि न वेद ॥४२॥ तदहं ते कथयामि शृणु । हे उद्धव, वेदो मामेव यज्ञरूपं विधत्ते । मामेव तत्तद्देवतारूपमभिधत्ते । मामेव परमार्थरूपमाश्रित्य भेदं मायामात्रं कथयित्वा तं प्रतिषिद्ध्य निवृत्तव्यापारो भवति । एतावान् सर्ववेदार्थः ॥४३॥ इति श्रीमद्भागवतचू० एकादशस्कंधे एकविंशोऽध्यायः ॥२१॥ द्वाविंशे तत्वसं-

विचित्रभाषाविततां छंदोभिश्चतुरुत्तरैः ॥ अनंतपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥४०॥ गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च ॥ त्रिष्टुब्जगत्यतिच्छंदो ह्यत्यष्ट्यतिजगद्विराट् ॥४१॥ किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ॥ इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥४२॥ मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ॥ एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ॥ मायामात्रमनूद्यांते प्रतिषिद्ध्य प्रसीदति ॥४३॥ इति श्रीमद्भा० महा० एकाद० एकविंशोऽध्यायः ॥२१॥ उद्धव उवाच ॥ कति तत्वानि विश्वेश संख्यातान्यृषिभिः प्रभो ॥ नवैकादश पंच त्रीण्यात्थ त्वमिह शुश्रुम ॥१॥ केचित्षड्विंशतिं प्राहुरपरे पंचविंशतिम् ॥ सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ॥२॥ केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ॥ एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ॥ गायंति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥३॥ श्रीभगवानुवाच ॥ युक्तं च संति सर्वत्र भाषंते ब्राह्मणा यथा ॥ मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥४॥ नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा ॥ एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ॥५॥ यासां व्यतिकरादासीद्विकल्पो वदतां पदम् ॥ प्राप्ते शमदमेऽप्येति वादस्तमनु शाम्यति ॥६॥ ॥

ख्यानामविरोधविधोच्यते । पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च ॥१॥ उद्धव उवाच ॥ हे विश्वेश्वर, ऋषिभिरागमेषु तत्वानि बहुधा संख्यातानि संति । तेषु मध्ये कति युक्तानि । त्वं तु अष्टाविंशति तत्वानि कथितवान् तन्मया श्रुतम् ॥१॥ केचित्, षड्विंशतिं प्राहुः । अपरे पंचविंशतिं सप्त षट् नव चत्वार्येकादश च प्राहुः ॥२॥ अन्ये सप्तदश षोडश त्रयोदश च प्राहुः । तत्तत्वानां नानात्वं यद्विवक्षया वदंति तद्वद ॥३॥ श्रीभगवानुवाच ॥ हे उद्धव, यथा ब्राह्मणा भाषंते तद्विवक्षाभेदेन सर्वं युक्तमेव । मदीयां मायां स्वीकृत्य वदतां दुर्घटं किमस्ति न किमपि ॥४॥ यथा त्वं वदसि तथा नहि । यथाऽहं वच्मि तत्तथैव । एवं वादं कुर्वतामंतःकरणवृत्तिरूपेण परिणता मे दुस्तराः शक्तयो हेतवः संति ॥५॥ यासां शक्तीनां क्षोभाद्वादं कुर्वतां भेद आसीत् । स भेदः शमे दमे च प्राप्ते सति नश्यति । ततो वादः शाम्यति ॥६॥ ॥ ॥

१ 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिनोच्चार्य । २ 'नेह नानास्ति किंचन' इत्यादिना निषेधयेत् ।

हे उद्धव, तत्वानां परस्परानुप्रवेशाद्वक्तुर्विवक्षया संख्यानं भवति ॥७॥ एकस्मिन्नपि कारणभूते तत्वेऽन्यानि सर्वाणि कार्यतत्वानि कार्यतत्वे वा कारणतत्वानि प्रविष्टानि दृश्यंते ॥८॥ अत एषां तत्वानां न्यूनाधिकं संख्यानमिच्छतां वादिनां मध्ये यथा यो वदति तथा तत्सर्वं वयं गृह्णीमः ॥९॥ जीवेश्वरयोर्भेदाभेदविवक्षया पंचविंशतिषड्विंशतितत्वपक्षौ प्रवृत्तौ । तत्राविद्यायुक्तस्य जीवस्य ज्ञानं स्वतो न भवति । अतो ज्ञानदाता सर्वज्ञः परमेश्वरोऽन्यो ग्राह्य इति षड्विंशः पक्षः प्रवृत्तः ॥१०॥ जीवेश्वरयोरभेदविवक्षया ज्ञानं प्रकृतिगुणं गृहीत्वा पंचविंशः पक्षः प्रवृत्तः ॥११॥ गुणसमतारूपा प्रकृतिः । तस्या एव सत्वं रजस्तम इति गुणा नात्मनः॥१२॥ तत्र सत्वं ज्ञानं रजः कर्म तमोऽज्ञानम् । एतेषां स्वस्व-

परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ ॥ पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥७॥ एकस्मिन्नपि दृश्यंते प्रविष्टानीतराणि च ॥ पूर्वस्मिन्वा परस्मिन्वा तत्वे तत्वानि सर्वशः॥८॥ पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सताम् ॥ यथा विविक्तं यद्वक्रं गृह्णीमो युक्तिसंभवात् ॥९॥ अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ॥ स्वतो न संभवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् ॥१०॥ पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ॥ तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥११॥ प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः ॥ सत्वं रजस्तम इति स्थित्युत्पत्त्यंतहेतवः ॥१२॥ सत्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ॥ गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥१३॥ पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः ॥ ज्योतिरापः क्षितिरिति तत्वान्युक्तानि मे नव ॥१४॥ श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ॥ वाक्पाण्युपस्थपाय्वंघ्रिः कर्माण्यंगोभयं मनः ॥१५॥ शब्दः स्पर्शो रसो गंधो रूपं चेत्यर्थजातयः ॥ गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥१६॥ सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ॥ सत्वादिभिर्गुणैर्धत्ते पुरुषो व्यक्त ईक्षते ॥१७॥ व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ॥ लब्धवीर्याः सृजंत्यंडं संहताः प्रकृतेर्बलात् ॥१८॥ सप्तैव धातव इति तत्रार्थाः पंच खादयः ॥ ज्ञानमात्मोभयाधारस्ततो देहेंद्रियासवः ॥१९॥ षडित्यत्रापि भूतानि पंच षष्ठः परः पुमान् ॥ तैर्युक्त आत्मसंभूतैः सृष्ट्वेदं समुपाविशत् ॥२०॥ चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ॥ जातानि तैरिदं जातं जन्मावयविनः खलु ॥२१॥ ॥

कारणेऽतर्भावात्तत्वाधिक्यं नास्ति ॥१३॥ स्वमतेऽष्टाविंशति तत्वानि दर्शयति ॥ पुरुष-प्रकृति-महदहंकाराश्चत्वारः । पृथिव्यप्तेजो-वाय्वाकाशानि पंच ॥१४॥ श्रोत्र-त्वक्चक्षुर्घ्राण-जिह्वा-वाक्-पाणि-पाद-पायूपस्थानि दश। एकं मनः। शब्द-स्पर्श-रूप-रस-गंधाः पंच। गुणास्त्रय एवमष्टाविंशति तत्वानि ॥१५॥१६॥१७॥ एतानि तत्वानि पुरुषावलोकनेन वीर्यं लब्ध्वा प्रकृतिमाश्रित्य ब्रह्मांडं सृजंति ॥१८॥ एवं मतत्रये तत्वसंख्याभेदं निरूप्य मतांतरेऽपि दर्शयति । सप्तपक्षे— भूतानि पंच । जीवेश्वरौ द्वौ । एवं सप्त । तत्र प्रकृत्यादीनां कारणत्वेनाकाशादिष्वंतर्भावः। एवंसर्वत्र ज्ञातव्यम् ॥१९॥ षट्पक्षे— भूतानि पंचेश्वरश्चेत्येवं षट् । अन्येषामंतर्भावः ॥२०॥ चतुःपक्षे— पृथिव्यप्तेजांस्यात्मा चेति चत्वारि। अन्येषामंतर्भावः ॥२१॥

सप्तदशपक्षे— भूतानि ५ विषयाः ५ ज्ञानेंद्रियाणि पंच मन आत्मा चेत्येवं सप्तदश ॥२२॥ षोडशपक्षे— भूतानि ५ विषयाः ५ इंद्रियाणि ५ आत्मा चेत्येवं षोडश । त्रयोदशपक्षे— भूतानि ५ इंद्रियाणि ५ मनः जीवेश्वरौ चेत्येवं त्रयोदश ॥२३॥ एकादशपक्षे— भूतानि ५ इंद्रियाणि ५ आत्मा चेत्येवमेकादश । नवपक्षे— भूतानि ५ प्रकृति-पुरुष-महदहंकाराश्चेत्येवं नव ॥२४॥ एवमृषिभिः कृतं तत्वसंख्यानं युक्त्या सर्वं योज्यम् ॥२५॥ उद्धव उवाच ॥ हे कृष्ण, प्रकृतिः पुरुषश्च जडाजडस्वभावेन यद्यपि विलक्षणौ स्तः । तथापि तयोर्भेदो न दृश्यते । यतः प्रकृतिकार्ये देहे आत्मा लक्ष्यते । आत्मनि च प्रकृतिकार्यो देहो लक्ष्यते ॥२६॥ अतस्तयोर्भेदः कथं ज्ञातव्यः एवं मे संशयं त्वं युक्तिनिपुणैर्वचोभिश्छेत्तुमर्हसि ॥२७॥ यतस्त्वत्प्रसादादेव जीवानां ज्ञानं भवति । ते शक्तिभिश्च ज्ञानभ्रंशो भवति । त्वमेव स्वमायाया गतिं जानासि ॥२८॥ श्रीभगवानुवाच ॥ प्रकृतेः पुरुषस्य च भेदः

संख्याने सप्तदशके भूतमात्रेंद्रियाणि च ॥ पंच पंचैकमनसा आत्मा सप्तदशः स्मृतः ॥२२॥ तद्वत्षोडशसंख्याने आत्मैव मन उच्यते ॥ भूतेंद्रियाणि पंचैव मन आत्मा त्रयोदश ॥२३॥ एकादशत्व आत्मासौ महाभूतेंद्रियाणि च ॥ अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ ॥२४॥ इति नानाप्रसंख्यानं तत्वानामृषिभिः कृतम् ॥ सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥२५॥ उद्धव उवाच ॥ प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ॥ अन्योऽन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः ॥ प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि ॥२६॥ एवं मे पुंडरीकाक्ष महांतं संशयं हृदि ॥ छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः ॥२७॥ त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः ॥ त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः ॥२८॥ श्रीभगवानुवाच ॥ प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ॥ एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥२९॥ ममांग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते ॥ वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥३०॥ दृग्रूपमार्कं वपुरत्र रंध्रे परस्परं सिध्यति यः स्वतः खे ॥ आत्मा यदेषामपरो य आद्यः स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः ॥ एवं त्वगादि श्रमणादि चक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ॥३१॥ योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः ॥ अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐंद्रियश्च ॥३२॥

स्पष्ट एव । प्रकृतिशब्देन स्थूल-सूक्ष्म-कारण-रूपो विकारवान् जडो देहसंघातो ज्ञातव्यः । पुरुषशब्देन निर्विकारी चैतन्यरूप आत्मा ज्ञातव्यः ॥२९॥ मे प्रकृतिरनेकधा भेदं तद्बुद्धीश्च गुणैर्विधत्ते । तत्र विकारवानयं सर्गः स्थूलदृष्ट्याधिभौतिकाध्यात्मिकाधिदैविकरूपेण त्रिविधः ॥३०॥ तद्दर्शयति । चक्षुरध्यात्मं । रूपमधिभूतम् । अस्मिन् चक्षुर्गोलके प्रविष्टः सूर्यांशोऽधिदैवम् । एतत्त्रयं परस्परसापेक्षतया सिद्ध्यति । यस्त्वाकाशे मंडलात्मा सूर्यो वर्तते स एषां प्रकाशकोऽपि एभ्यो भिन्नः स्वतःसिद्धप्रकाशः । एवमात्मा परस्परसापेक्षाणामध्यात्मादीनां प्रकाशकोऽपि तेभ्योऽन्यो निर्विकारी स्वप्रकाशोऽस्ति । एवं त्वगाद्यन्येष्विंद्रियेषु मनोबुद्ध्यहंकारचित्तेष्वपि ज्ञातव्यम् ॥३१॥ असौ गुणक्षोभकान्महत्तत्वादुत्पन्नोऽहंकार एव मोहमयस्य विकल्पस्य हेतुः ॥३२॥ ॥ ॥ ॥ ॥ ॥ ॥

आत्मा तु ज्ञानमयोऽस्ति । अतस्तज्ज्ञानेनाहंकारनिवृत्तिर्भेदनिवृत्तिश्च भवति । अयं भेदभ्रमो मिथ्याभूतोऽपि मत्तो बहिर्मुखानां नैवोपरमेत् । प्रत्युताहंकारकृतैः कर्मभिरुच्चनीचदेहेषु ते संसरंति ॥३३॥ उद्धव उवाच ॥ त्वत्तो बहिर्मुखाः पुरुषाः कर्मभिरुच्चावचान् देहान् कथं गृह्णंति त्यजंति च ॥३४॥ एतन्ममाख्याहि । यतस्त्वां विना एतज्ज्ञातारो जनाः प्रायशो लोके न संति॥३५॥ श्रीभगवानुवाच ॥ हे उद्धव, मनुष्याणां कर्ममयं मनो देहाद्देहांतरं गच्छति। तदा तेन सहैक्यं प्राप्त आत्मा अहमेव गतोऽस्मीत्यभिमन्यते ॥३६॥ तन्मनः कर्मोपस्थापितान् दृष्टान् वा श्रुतान् वा देहान् मरणसमये ध्यायत् सत् तेषु देहेषु प्रविशति । ततो जीवस्य पूर्वदेहस्मृतिर्नष्टा भवति ॥३७॥ नूतनदेहेऽहमित्यभिनिवेशपूर्वकं पूर्वदेहस्य ज्वरादिना केनचिन्निमित्तेन यद्विस्मरणं स एव मृत्युरित्युच्यते ॥३८॥ अन्यदेहस्य सर्वभावेन स्वीकारं जन्म प्राहुः ॥३९॥ यथा स्वप्नं पश्यन् पुरुषः प्राक्तनं शयानं देहं न स्मरति । किंतु तत्र भातमात्मानमपूर्वं जातं पश्यति तद्वत् ॥४०॥ एतावता मनसो देहांतराभिनिवेशेन या उत्पत्तिस्तया आत्मनीदमुत्तम-मध्यम-नीचत्वमसदेव स्वप्नवद्भाति । आत्मा तत्संबंधेन बाह्यान् शब्दादिविषयान् आंतरांश्च सुखादीन् भुंक्ते ॥४१॥ हे उद्धव, शरीराणां कालेन प्रतिक्षणमुत्पत्तिनाशौ भवतः । कालस्य सूक्ष्मत्वात्तन्न दृश्यते ॥४२॥ यथाग्नेर्ज्वालानां परिणामादिभिः प्रवाहानां गत्यादिभिरवस्थांतराणि भवंति तथा सर्वभूतानां प्रतिक्षणं वयोवस्था भवंति ॥४३॥ तथापि यथा सोऽयं दीपः तदिदं जलमिति बुद्धिर्भवति तथा सोऽयं पुमानिति मृषाबुद्धिरविवेकिनां भवति ॥४४॥ ॥ ॥ ॥ ॥ ॥

आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः ॥ व्यर्थोऽपि नैवोपरमेत पुंसां मत्तःपरावृत्तधियां स्वलोकात् ॥३३॥ उद्धव उवाच ॥ त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ॥ उच्चावचान्यथा देहान्गृह्णंति विसृजंति च ॥३४॥ तन्ममाख्याहि गोविंद दुर्विभाव्यमनात्मभिः ॥ नह्येतत्प्रायशो लोके विद्वांसः संति वंचिताः ॥३५॥ श्रीभगवानुवाच ॥ मनः कर्ममयं नृणामिंद्रियैः पंचभिर्युतम् ॥ लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥३६॥ ध्यायन्मनोऽनुविषयान्दृष्टान्वाऽनुश्रुतानथ ॥ उद्यत्सीदत्कर्मतंत्रं स्मृतिस्तदनुशाम्यति ॥३७॥ विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः ॥ जंतोर्वै कस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः ॥३८॥ जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ॥ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥३९॥ स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ ॥ तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति ॥४०॥ इंद्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि ॥ बहिरंतर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ॥४१॥ नित्यदा ह्यंग भूतानि भवंति न भवंति च ॥ कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥४२॥ यथार्चिषां स्रोतसां च फलानां वा वनस्पतेः ॥ तथैव सर्वभूतानां वयोऽवस्थादयः कृताः ॥४३॥ सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् ॥ सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ॥४४॥ ॥ ॥ ॥

१ व्यापकस्यात्मनो देहाद्देहांतरगमनं अकर्तुः कर्माणि नित्यस्य च जन्ममरणादीनि कथं भवंति ।

यथा महाभूतरूपोऽग्निः कल्पपर्यंतं स्थितोऽपि काष्ठसंयोगवियोगाभ्यां उत्पन्न इव नष्ट इव च भासते तथा जन्ममरणातीतोऽपि जीवात्मा देहसंयोगवियोगाभ्या भ्रांत्या जायत इव म्रियत इव च भासते ॥४५॥ जठरे प्रवेशः गर्भवृद्धिः जन्म बाल्यं कौमारं यौवनं वयोमध्यं जरा मृत्युश्चेति नवावस्था देहस्यैव संति नात्मनः ॥४६॥ एता देहस्यावस्थाः प्रकृत्यविवेकेन कश्चिद्गृह्णाति । कश्चित्परमेश्वरानुग्रहात्त्यजति ॥४७॥ पुत्रस्य जन्मदर्शनेन पितुश्च मरणदर्शनेनात्मनो जन्मनाशावनुमेयौ । तथापि जन्मनाशयोर्द्रष्टा जन्मनाशधर्मको न भवति ॥४८॥ यथा वृक्षस्य जन्मनाशद्रष्टा वृक्षाद्भिन्नस्तथा शरीरस्य जन्ममरणद्रष्टा शरीराद्भिन्नः॥४९॥ अज्ञः पुमान् देहाद्भिन्नमात्मानमज्ञात्वा विषयेषु सक्तः सन् संसारं प्राप्नोति ॥५०॥ जीवः सत्वसंगाद्देवत्वं ऋषित्वं रजसा दैत्यत्वं मनुष्यत्वं तमसा भूतत्वं तिर्यग्योनित्वं वा प्राप्नोति ॥५१॥ यथा नृत्यतो गायतो वा जनान् पश्यन् मनुष्यस्तद्ग-

मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् ॥ म्रियते वाऽमरोऽभ्रांत्या यथाऽग्निर्दारुसंयुतः ॥४५॥ निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ॥ वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥४६॥ एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ॥ गुणसंगादुपादत्ते क्वचित्कश्चिज्जहाति च ॥४७॥ आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥४८॥ तरोर्बीजविपाकाभ्यां यो विद्वान् जन्मसंयमौ ॥ तरोर्विलक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक् ॥४९॥ प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ॥ तत्त्वेन स्पर्शसंमूढः संसारं प्रतिपद्यते ॥५०॥ सत्वसंगादृषीन्देवान्रजसाऽसुरमानुषान् ॥ तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥५१॥ नृत्यतो गायतः पश्यन्यथैवानुकरोति तान् ॥ एवं बुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते ॥५२॥ यथांभसा प्रचलता तरवोऽपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥५३॥ यथा मनोरथधियो विषयानुभवो मृषा ॥ स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ॥५४॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥५५॥ तस्मादुद्धव मा भुंक्ष्व विषयानसदिंद्रियैः ॥ आत्माग्रहणनिर्भातं पश्य वैकल्पिकं भ्रमम् ॥५६॥ क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथवा ॥ ताडितः संनिबद्धो वा वृत्त्या वा परिहापितः ॥५७॥ ॥ ॥

तत्स्वरतालादिगतिं श्रृंगारकरुणादिरसं चानुकरोति एवमिच्छारहितोऽप्यात्मा बुद्धिगुणान् पश्यन् अनुकार्यते ॥५२॥ यथा तडागादीनां जलप्रचलनेन तटस्था वृक्षा धावंत इव दृश्यंते । एवं तादात्म्यादात्मा मनसो जन्ममरणाभ्यां जन्ममरणवानिवाभाति ॥५३॥ यथा पुरुषस्य स्वप्नदृष्टो विषयानुभवो मिथ्या तथाऽऽत्मनः संसारोऽपि मिथ्या ॥५४॥ यथा मिथ्याभूतोऽपि स्वप्नो जागरप्रयत्नं विना न निवर्तते तथा विषयचिंतकस्य पुंसः संसारोऽज्ञाननिवृत्तिप्रयत्नं विना न निवर्तते ॥५५॥ तस्मात् हे उद्धव, त्वमतृप्तैरिंद्रियैर्विषयान् मा भुंक्ष्व । आत्मस्वरूपस्याज्ञानेन भासितं संसारं भ्रममात्रं पश्य ॥५६॥ नीचैः पुरुषैराक्षिप्तोऽवमानितो निंदित उपहसितो मूत्रेणार्द्रीकृतस्ताडनादिना बहुधा दुःखं प्रापितोऽपि

१ जातकसंस्कारवेलायाम् । २ और्ध्वदैहिकसंस्कारवेलायाम् । ३ गुणैर्बलादित्यर्थः । अनेन दृष्टांतेन दृश्यधर्मो द्रष्टरि स्फुरतीति दर्शितम् ।

श्रेयस्कामः पुमानात्मनाऽऽत्मानमुद्धरेत् ॥५७॥५८॥ उद्धव उवाच ॥ हे कृष्ण, स्वस्मिन् दुष्टैः कृतमपराधं सोढुं दुःसहमहं मन्ये । अतो यथा सहनोपायमहं बुद्ध्येयं तथा वद ॥५९॥ हे विश्वात्मन्, यतस्त्वद्धर्मरतान् भागवतान् विना ज्ञानिनामपि स्वभावो वलवत्तरोऽस्ति ॥६०॥ इति श्रीमद्भा० चू० एका० द्वाविंशोऽध्यायः ॥२२॥ त्रयोविंशे तिरस्कारसहनोपाय ईर्यते । भिक्षुगीतप्रकारेण मनसः संयमो धिया ॥१॥ श्रीशुक उवाच ॥ स कृष्ण एवमुद्धवेन प्रार्थितः सन् तस्य वचः सत्कृत्य जगाद ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, अत्र लोके स साधुर्नास्ति । यो दुर्जनैः क्षोभं प्रापितं मनः शांतिं प्रापयितुं समर्थः स्यात् ॥२॥ यथा दुष्टानां मर्मभेदकैर्वाक्यैः पुमान् तप्यते तथा हृदि विद्धैर्बाणैरपि

निष्ठितो मूत्रितो वाङ्भिर्बहुधैवं प्रकंपितः ॥ श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ॥५८॥ उद्धव उवाच ॥ यथैवमनुबुद्ध्येयं वद नो वदतां वर ॥ सुदुःसहमिमं मन्य आत्मन्यसदतिक्रमम् ॥५९॥ विदुषामपि विश्वात्मन्प्रकृतिर्हि बलीयसी ॥ ऋते त्वद्धर्मनिरतान् शांतांस्ते चरणालयान् ॥६०॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे द्वाविंशोऽध्यायः ॥२२॥ बादरायणिरुवाच ॥ स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः ॥ स भाजयन्भृत्यवचो मुकुंदस्तमाबभाषे श्रवणीयवीर्यः ॥१॥ श्रीभगवानुवाच ॥ बार्हस्पत्य स वै नात्र साधुर्वै दुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥२॥ न तथा तप्यते विद्धः पुमान्बाणैः सुमर्मगैः ॥ यथा तुदंति मर्मस्था ह्यसतां परुषेषवः ॥३॥ कथयंति महत्पुण्यमितिहासमिहोद्धव ॥ तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥४॥ केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः ॥ स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥५॥ अवंतिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ॥ वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥६॥ ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः ॥ शून्यावसथ आत्माऽपि काले कामैरनर्चितः ॥७॥ दुःशीलस्य कदर्यस्य द्रुह्यंते पुत्रबांधवाः ॥ दारा दुहितरो भृत्या विषण्णा नाचरन्प्रियम् ॥८॥ तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ॥ धर्मकामविहीनस्य चुक्रुधुः पंचभागिनः ॥९॥ तदवध्यानविस्रस्तपुण्यस्कंधस्य भूरिद ॥ अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥१०॥ ॥

न तप्यते । तथापि मया वक्ष्यमाणैरुपायैः सर्वं सोढुं शक्यम् ॥३॥ अस्मिन्विषये दुर्जनैरुपद्रुतेन केनचिद्भिक्षुणा गीतं महापवित्रं इतिहासं कथयंति तं त्वं मत्तः शृणु ॥४॥५॥ हे उद्धव, मालवदेशेषु कश्चित्कदर्यो द्विजो धनाढ्यः कृषि-वाणिज्यादिवृत्तिकरो लोभी आसीत् ॥६॥ तेन कदर्येण बांधवा अतिथयश्च वाचापि न सत्कृताः । तथा स्वदेहोऽपि भोगादिभिर्न तोषितः ॥७॥ दुष्टस्वभावस्य तस्य स्त्रीपुत्रबांधवा द्रोहं चक्रुः । प्रियं नाचरन् ॥८॥ एवं धर्मरहितस्य केवलं द्रव्यरक्षकस्य तस्य पंचयज्ञदेवताश्चुक्रुधुः ॥९॥ ततः क्षीणपुण्यस्य तस्यातिश्रमेण संपादितं धनं नाशं प्राप ॥१०॥ ॥ ॥ ॥ ॥ ॥ ॥

१ आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् । देवताऽतिथि-भृत्यांश्च स कदर्य इति स्मृतः ॥ १ ॥

किंचिद्धनं ज्ञातयो जगृहुः । किंचिच्चौरा जगृहुः । किंचिद्गृहदाहादिना नष्टम् । किंचिद्राज्ञा नरैश्च हृतम् ॥११॥ एवं द्रव्ये नष्टे सति स्वजनैरुपेक्षितः स द्विजो महतीं चिंतां प्राप ॥१२॥ एवं द्रव्यनाशात्संतप्तस्य दीर्घं ध्यायतो गद्गदकंठस्य तस्य दैववशाद्वैराग्यपूर्वको विवेको जातः ॥१३॥ तदा स आह । अहो मया वृथा देहस्तापितः । यस्य मम संपादितं धनं धर्माय भोगाय च नोपयुक्तम् ॥१४॥ वहुधा कदर्याणां धनानि सुखाय न भवंति । किंतु तापाय अंते नरकप्राप्तये च भवंति ॥१५॥ यथा स्वल्पमपि श्वेतकुष्ठं रूपं हंति । तथा स्वल्पोऽपि लोभो यशस्विनां शुद्धं यशः सद्गुणांश्च हंति ॥१६॥ प्रथमं द्रव्यस्य साधने यत्नः । ततः संवर्धने रक्षणे च क्लेशः । भोगे चिंता नाशे मोहश्च भवति ॥१७॥ द्रव्य-

ज्ञातयो जगृहुः किंचित्किंचिद्दस्यव उद्धव ॥ दैवतः कालतः किंचिद्ब्रह्मबंधोर्नृपार्थिवात् ॥११॥ स एवं द्रविणे नष्टे धर्मकामविवर्जितः ॥ उपेक्षितश्च स्वजनैश्चिंतामाप दुरत्ययाम् ॥१२॥ तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः ॥ खिद्यतो बाष्पकंठस्य निर्वेदः सुमहानभूत् ॥१३॥ स चाहेदमहो कष्टं वृथाऽऽत्मा मेऽनुतापितः ॥ न धर्माय न कामाय यस्यार्थायास ईदृशः ॥१४॥ प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ॥ इह चात्मोपतापाय मृतस्य नरकाय च ॥१५॥ यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ॥ लोभः स्वल्पोऽपि तान्हंति श्वित्रो रूपमिवेप्सितम् ॥१६॥ अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये ॥ नाशोपभोग आयासस्त्रासश्चिंता भ्रमो नृणाम् ॥१७॥ स्तेयं हिंसाऽनृतं दंभः कामः क्रोधः स्मयो मदः ॥ भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥१८॥ एते पंचदशानर्था ह्यर्थमूला मता नृणाम् ॥ तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥१९॥ भिद्यंते भ्रातरो दाराः पितरः सुहृदस्तथा ॥ एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः ॥२०॥ अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः ॥ त्यजंत्याशु स्पृधो घ्नंति सहसोत्सृज्य सौहृदम् ॥२१॥ लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम् ॥ तदनादृत्य ये स्वार्थं घ्नंति यांत्यशुभां गतिम् ॥२२॥ स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ॥ द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥२३॥ देवर्षिपितृभूतानि ज्ञातीन्बंधूंश्च भागिनः ॥ असंविभज्य चात्मानं यक्षवित्तः पतत्यधः ॥२४॥ व्यर्थयाऽर्थेहया वित्तं प्रमत्तस्य वयो वलम् ॥ कुशला येन सिद्ध्यंति जरठः किं नु साधये ॥ २५ ॥ ॥ ॥ ॥ ॥

निमित्ताः—स्तेयं हिंसा अनृतं दंभः कामः क्रोधः गर्वः मदः भेदः वैरं अविश्वासः स्पर्धा स्त्री द्यूतं मद्यं चेत्येते पंचदशानर्था भवंति तस्माच्छ्रेयोऽर्थी द्रव्यं दूरतस्त्यजेत् ॥१८॥ ॥१९॥ किंच । स्त्री-पुत्र-भ्रातृ-सुहृदादयः सर्वेऽपि द्रव्यार्थं स्नेहं हित्वा सद्यः शत्रवो भवंति ॥२०॥ तथा मित्रा मित्रत्वं हित्वा परस्परं घ्नंति ॥२१॥ अतोऽस्मिन् लोके देवैरपि प्रार्थ्यं विप्रदेहं प्राप्य तमनादृत्य ये स्वार्थं घ्नंति ते दुर्गतिं यांति ॥२२॥ अतः स्वर्गमोक्षयोर्द्वारभूतं मनुष्यदेहं प्राप्य अनर्थकारके द्रव्ये क आसक्तिं कुर्यान्न कोऽपि ॥२३॥ तथा भागार्हान् देव-र्षि-पितृ-भूत-बंध्वादीन् योऽन्नादिकं न ददाति स नरके पतति ॥२४॥ व्यर्थया द्रव्येच्छया मत्तस्य मे वयोवलादिकं सर्वं व्यर्थं गतम् । अतः परं वृद्धोऽहं किं नु

साधये ॥२५॥ एवं जानन्नप्ययं लोको द्रव्येच्छया कस्मात्क्लिश्यते । यतोऽयं लोकः कस्यचिन्मायया नूनं मोहितोऽस्ति ॥२६॥ अपि च । मृत्युना ग्रस्यमानस्य पुंसो धनादिभिर्जन्मप्रदैः कर्मभिर्वा किं स्यात् ॥२७॥ मम त्वद्य भगवान् हरिस्तुष्टः । येनैवंप्रकारं संसारतारकं वैराग्यं प्रापितोऽस्मि ॥२८॥ सोऽहमवशिष्टेनायुष्येण स्वात्मन्येव तुष्टो धर्मादिसाधने सावधश्च सन् तपसा स्वांगं शोषयिष्ये ॥२९॥ तत्र देवा मामनुगृह्णंतु । यतः खट्वांगो मुहूर्तेन ब्रह्मलोकमसाधयत् ॥३०॥ श्रीभगवानुवाच ॥ स कदर्यो द्विज एवं मनसा निश्चित्य पुत्रादिषु ममतां हित्वा भिक्षुर्बभूव ॥३१॥ ततः स एतां महीं भिक्षार्थं नगरग्रामादिषु विचचार ॥३२॥ तं भिक्षुं दुर्जना बहुप्रकारैस्तिरस्कारैरवमेनिरे ॥३३॥ केचित्तस्य भिक्षोर्दंडं

कस्मात्संक्लिश्यते विद्वान्व्यर्थयाऽर्थेहयाऽसकृत् ॥ कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः ॥२६॥ किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत ॥ मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥२७॥ नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ॥ येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥२८॥ सोऽहं कालावशेषेण शोषयिष्येंऽगमात्मनः ॥ अप्रमत्तोऽखिलस्वार्थे यदि स्यात्सिद्ध आत्मनि ॥२९॥ तत्र मामनुमोदेरन्देवास्त्रिभुवनेश्वराः ॥ मुहूर्तेन ब्रह्मलोकं खट्वांगः समसाधयत् ॥३०॥ श्रीभगवानुवाच ॥ इत्यभिप्रेत्य मनसा ह्यावंत्यो द्विजसत्तमः ॥ उन्मुच्य हृदयग्रंथीन् शांतो भिक्षुरभून्मुनिः ॥३१॥ स चचार महीमेतां संयतात्मेंद्रियानिलः ॥ भिक्षार्थं नगरग्रामानसंगोऽलक्षितोऽविशत् ॥३२॥ तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ॥ दृष्ट्वा पर्यभवन्भद्र बह्वीभिः परिभूतिभिः ॥३३॥ केचित्त्रिवेणुं जगृहुरेके पात्रं कमंडलुम् ॥ पीठं चैकेऽक्षसूत्रं च कंथां चीराणि केचन ॥३४॥ प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ॥ अन्नं च भैक्ष्यसंपन्नं भुंजानस्य सरित्तटे ॥३५॥ मूत्रयंति च पापिष्ठाः ष्ठीवंत्यस्य च मूर्धनि ॥ यतवाचं वाचयंति ताडयंति न वक्ति चेत् ॥३६॥ तर्जयंत्यपरे वाग्भिः स्तेनोऽयमिति वादिनः ॥ बध्नंति रज्ज्वा तं केचिद्बध्यतां बध्यतामिति ॥३७॥ क्षिपंत्येकेऽवजानंत एष धर्मध्वजः शठः ॥ क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः ॥३८॥ अहो एष महासारो धृतिमान्गिरिराडिव ॥ मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः ॥३९॥ इत्येके विहसंत्येनमेके दुर्वातयंति च ॥ तं बबंधुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥४०॥ एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् ॥ भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ॥४१॥ ॥ ॥

जगृहुः । एके कमंडलुम् । केचन रुद्राक्षमालाम् । अपरे कंथां जगृहुः ॥३४॥ भो भगवन्, गृहाणेति दंडादीनि दर्शितानि संति दत्वा पुनश्चाददुः । ततो भिक्षान्नं नदीतीरे भुंजानस्य सतः ॥३५॥ ते पापिष्ठा अन्ने मूत्रयंति । मस्तके फूत्कारेण श्लेष्माणं प्रक्षिपंति । मौनं धरंतं भाषयंति । न वक्ति चेत्ताडयंति ॥३६॥ एके चौरोऽयमिति वदंतो भीषयंति । केचित्तं रज्ज्वा बध्नंति ॥३७॥ एके तं निंदंति । अहो एष धर्मध्वजो लोकवंचकः क्षीणवित्तः सन् इमां वृत्तिं जगृहे ॥३८॥ अहो एष महाबली धैर्यवान् सन् मौनेन बकवदर्थं साधयति॥३९॥एवं वदंत एके तदुपर्यधोवायुं मुंचंति । तं च केचिच्छृंखलैर्बबंधुः कारागृहादिषु रुरुधुश्च॥४०॥एवं स प्राप्तं प्राप्तं दुःखं एतद्दैवप्राप्तं भोक्तव्यमेवेत्यबुध्यत ॥४१॥

ततो दुर्जनैः स्वधर्मात्पातितोऽपि स्वधर्मस्थः सन् सात्विकीं धृतिं स्वीकृत्येमां गाथामगायत॥४२॥ द्विज उवाच ॥ मम सुखदुःखयोर्हेतुरयं जनो नहि। तथा देवताः देहः ग्रहाः कर्म कालश्च नहि। किंतु संसारचक्रप्रवर्तकं मन एव सुखदुःखकारणमस्ति॥४३॥ तन्मनो गुणान् सृजति। तेभ्यो गुणेभ्यः सात्विकानि तामसानि राजसानि च कर्माणि भवंति। तेभ्यः कर्मभ्यो देव-तिर्यङ्-मनुष्यादिगतयो भवंति ॥४४॥ अतः केवलं द्रष्टा संगरहितोऽप्यात्मा अविद्यया मनोऽध्यासेन जीवस्य जन्ममरणहेतुर्भवति न स्वतः। अतोऽविद्यायुक्तस्य जीवस्यैव बंधः नेश्वरस्य ॥४५॥ मनोनिग्रहे कृते सर्वं कृतं स्यादित्याह। दान-स्वधर्म-नियमादयः सर्वे उपाया मनोनिग्रहपर्यंता एव। मनोनिग्रह एव परमं ज्ञानम् ॥४६॥ यस्य मनः

परिभूत इमां गाथामगायत नराधमैः ॥ पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्विकीम् ॥४२॥ द्विज उवाच ॥ नायं जनो मे सुखदुःखहेतुर्न देवतात्मा ग्रहकर्मकालाः ॥ मनः परं कारणमामनंति संसारचक्रं परिवर्तयेद्यत् ॥४३॥ मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि ॥ शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवंति॥४४॥ अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे ॥ मनः स्वलिंगं परिगृह्य कामान् जुषन्निबद्धो गुणसंगतोऽसौ ॥४५॥ दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि ॥ सर्वे मनोनिग्रहलक्षणांताः परो हि योगो मनसः समाधिः ॥४६॥ समाहितं यस्य मनः प्रशांतं दानादिभिः किं वद तस्य कृत्यम् ॥ असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः॥४७॥ मनोवशेऽन्ये ह्यभवन् स्म देवा मनश्च नान्यस्य वशं समेति ॥ भीष्मो हि देवः सहसः सहीयान्युंज्याद्वशे तं स हि देवदेवः ॥४८॥ तं दुर्जयं शत्रुमसह्यवेगमरुंतुदं तन्न विजित्य केचित् ॥ कुर्वंत्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः ॥४९॥ देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यंधधियो मनुष्याः ॥ एषोऽहमन्योऽयमिति भ्रमेण दुरंतपारे तमसि भ्रमंति ॥५०॥ जनस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र ह भौमयोस्तत् ॥ जिह्वां क्वचित्संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ॥५१॥ दुःखस्य हेतुर्यदि देवताऽस्तु किमात्मनस्तत्र विकारयोस्तत् ॥ यदंगमंगेन निहन्यते क्वचित्क्रुध्येत कस्मै पुरुषः स्वदेहे ॥५२॥ ॥ ॥

शांतं तस्य दानादिभिः किं कृत्यमस्ति। तथा यस्य मनो निगृहीतं नास्ति तस्य दानादिभिः किं प्रयोजनं स्यात् न किमपि ॥४७॥ किंच। मनसि स्वाधीने सति इंद्रियाणि तद्देवताश्च स्वाधीना भवंति मनोऽन्यस्य वशं न याति। अतो यो मनो जयेत् स एव सर्वेंद्रियजेता ज्ञातव्यः ॥४८॥ तं मनोरूपं शत्रुमजित्वा केचिन्मनुष्यैः कलहं कुर्वंति ते मूढाः ॥४९॥ मनोमात्रमिमं देहं गृहीत्वा तत्र ममाहमिति ये बुद्धिं कुर्वंति ते संसारे भ्रमंति ॥५०॥ सुखदुःखयोर्हेतुर्जनश्चेत्तर्हि तत्सुखं दुःखं च स्थूलसूक्ष्मयोर्देहयोरेव भवेन्न त्वात्मनः। यथा क्वचित्स्वदंतैर्जिह्वां दशति तद्वेदनायां कस्मै कुप्येत ॥५१॥ दुःखस्य हेतुर्देवता यदि स्यात्तर्हि तद्दुःखं देहे विक्रियमाणयोरिंद्राग्न्यादिदेवतयोरेव भवेन्न त्वात्मनः। यदा हस्ता-

१ धृत्या यया धारयते मनःप्राणेंद्रियक्रियाः। योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥ १ ॥ २ हस्तेन मुखेऽभिहते मुखेन वा हस्ते दष्टे तदभिमानिनोरिंद्राग्न्योरेव तद्दुःखं न त्वविक्रियस्यानहंकारस्यात्मनः।

दिनैकेनांगेन यन्मुखांघ्यंगं हन्यते तदा कस्मै कुद्ध्येत ॥५२॥ यदि सुखदुःखयोर्हेतुरात्मा स्यात्तदाप्यन्यतः किम् । यतोऽयं निजस्वभावः । अत आत्मना विनान्यत्किमपि नास्ति । यद्यस्ति तर्हि तन्मृषा । अतः कस्मै कुद्ध्येत ॥५३॥ किंच । सुखदुःखयोर्हेतवो ग्रहाश्चेत्स्युस्तर्ह्यात्मनः किम् । यतोंऽतरिक्षगतैर्द्वादशाष्टमादिस्थानस्थैर्ग्रहैस्तल्लग्नोत्पन्नस्य देहस्यैव पीडा भवति । आत्मा तु ततो ग्रहेभ्यो देहाच्चान्यः। अतः कस्मै कुद्ध्येत ॥५४॥ सुखदुःखयोर्हेतुः कर्म चेत्तथाऽप्यात्मनः किम् । एकस्य जडाजडत्वे सति कर्म संभवति । तत्र देहो जडः । आत्मा च शुद्धज्ञानस्वरूपः । अतस्तयोः कर्मैव नास्ति । तस्मात्कस्मै कुद्ध्येत ॥५५॥ यदि सुखदुःखयोर्हेतुः कालस्तथाऽप्यात्मनः किम् । कालस्य ब्रह्मांशत्वात्स्वांशात्स्वस्य पीडा नास्ति । यथाऽग्नेस्तापो हिमस्य च शैत्यं न भवति तद्वत् ॥५६॥ किंच । यथाऽहंकारस्य सुखदुःखादिद्वंद्वसंबंधो भवति तथा प्रकृतेः परस्यात्मनो न भवति । एवं यो जानाति

आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ॥ नह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्कुद्ध्येत कस्मान्न सुखं न दुःखम् ॥५३॥ ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ॥ ग्रहैर्ग्रहस्यैव वदंति पीडां कुद्ध्येत कस्मै पुरुषस्ततोऽन्यः ॥५४॥ कर्मास्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि जडाजडत्वे ॥ देहस्त्वचित्पुरुषोऽयं सुपर्णः कुद्ध्येत कस्मै नहि कर्ममूलम् ॥५५॥ कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ ॥ नाग्नेर्हि तापो न हिमस्य तत्स्यात्कुद्ध्येत कस्मै न परस्य द्वंद्वम् ॥५६॥ न केनचित्क्वापि कथंचनास्य द्वंद्वोपरागः परतः परस्य ॥ यथाहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥५७॥ एतां स आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः॥ अहं तरिष्यामि दुरंतपारं तमो मुकुंदांघ्रिनिषेवयैव ॥५८॥ श्रीभगवानुवाच ॥ निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ॥ निराकृतोऽसद्भिरपि स्वधर्मादकंपितोऽमूं मुनिराह गाथाम् ॥५९॥ सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः ॥ मित्रोदासीनरिपवः संसारस्तमसः कृतः ॥६०॥ तस्मात्सर्वात्मना तात निगृहाण मनो धिया ॥ मय्यावेशितया युक्त एतावान्योगसंग्रहः ॥६१॥ य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः॥ धारयन् श्रावयन् शृण्वन्द्वंद्वैर्नैवाभिभूयते॥६२॥ इति श्रीम०महा०एका०भगवदुद्धवसंवादे भिक्षुगीता नाम त्रयोविंशोऽध्यायः॥२३॥

स भूतेभ्यो न बिभेति ॥५७॥ अत एतां पूर्वैर्ऋषिभिः सेवितामात्मनिष्ठां स्वीकृत्याहं मुकुंदचरणसेवयाऽज्ञानं तरिष्यामि ॥५८॥ श्रीभगवानुवाच ॥ हे उद्धव, एवं नष्टद्रव्यः स कदर्यो भूमिं पर्यटन् दुष्टैस्तिरस्कृतोऽपि स्वधर्मादचलितः सन्निमां गाथां जगौ ॥५९॥ पुरुषस्य सुखदुःखयोर्दाताऽन्यो नास्ति । तथा सति मित्रोदासीनशत्रवो न संति । सर्वोऽपि संसारोऽज्ञानतो मनोविभ्रममात्रकृतो न तात्विकोऽस्ति ॥६०॥ तस्मात् हे उद्धव, सर्वात्मना मनसो निग्रहं कृत्वा मयि बुद्धिं स्थापय । एतावानेव योगशास्त्रसिद्धांतोऽस्ति ॥६१॥ य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां धारयेत् श्रावयेत् शृणुयाद्वा स सुखदुःखादिभिः पराभवं न प्राप्नुयात् ॥६२॥ इति श्रीमद्भागवतचूर्णिकायां एकादशस्कंधे त्रयोविंशोऽध्यायः ॥२३॥

१ जडत्वाद्विकारित्वं अजडत्वाच्च हितानुसंधानतः प्रवृत्तिः ।

चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते । आत्मनः सर्वभावानामागमापायचिंतया ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, अथ ते पूर्वैर्निश्चितं सांख्यसिद्धांतं प्रवक्ष्यामि । यज्ज्ञात्वा पुमान् भेदनिमित्तं सुखदुःखादिरूपं भ्रमं जह्यात् ॥१॥ पूर्वं प्रलयावस्थायां, ततः कृतयुगे, यदा विवेकनिपुणाः पुरुषास्तदा च सर्वोऽपि द्रष्टृदृश्यात्मकः प्रपंचो ब्रह्मरूप आसीत् ॥२॥ तत्केवलं ब्रह्म सृष्ट्यारंभे मायाफलरूपेण द्विधा बभूव ॥३॥ तयोर्मध्ये दृश्यरूपो य एकोऽर्थः साकार्यकारणरूपिणी द्विप्रकारा प्रकृतिः योऽन्योऽर्थः स द्रष्टा पुरुष उच्यते॥४॥ ततः प्रकृतीक्षणरूपाया मे पुरुषावस्था तथा क्षोभं प्रापितायाः प्रकृतेस्तमो रजः सत्वमिति गुणा अभवन् ॥५॥ तेभ्यो गुणेभ्यः सूत्रं महत्तत्वं[3] च जातम् । ततो जीवमोहकः सात्विको राजसस्तामसश्चेति त्रिविधोऽहंकारो जातः ॥६॥७॥ तत्र तामसाहंकाराच्छब्दादिद्वारा पंच महाभूतानि राजसादिंद्रियाणि सात्विकाद्देवताश्चाभवन् ॥८॥ एते भावा

॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ॥ यद्विज्ञाय पुमान्सद्यो जह्याद्वैकल्पिकं भ्रमम् ॥१॥ आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम् ॥ यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥२॥ तन्मायाफलरूपेण केवलं निर्विकल्पितम् ॥ वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत् ॥३॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ॥ ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥४॥ तमो रजः सत्वमिति प्रकृतेरभवन्गुणाः ॥ मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥५॥ तेभ्यः समभवत्सूत्रं महान्सूत्रेण संयुतः ॥ ततो विकुर्वतो जातो योऽहं-कारो विमोहनः ॥६॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ॥ तन्मात्रेंद्रियमनसां कारणं चिदचिन्मयः ॥७॥ अर्थस्तन्मात्रिकाज्जज्ञे तामसा-दिंद्रियाणि च ॥ तैजसाद्देवता आसन्नेकादश च वैकृतात ॥८॥ मया संचोदिता भावाः सर्वे संहत्यकारिणः ॥ अंडमुत्पादयामासुर्ममायतन-मुत्तमम् ॥९॥ तस्मिन्नहं समभवमंडे सलिलसंस्थितौ ॥ मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चात्मभूः ॥१०॥ सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ॥ लोकान्सपालान्विश्वात्मा भूर्भुवःस्वरिति त्रिधा ॥११॥ देवानामोक आसीत्स्वर्भूतानां च भुवः पदम् ॥ मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात्परम् ॥१२॥ अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः ॥ त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥१३॥ ॥

मया प्रेरिताः संत एकत्र मिलित्वा ममायतनं ब्रह्मांडमुत्पादयामासुः ॥९॥ ततस्तस्मिन् जलस्थे ब्रह्मांडेऽहं स्थितः । ततो मम नाभ्यां कमलं जातम् । तत्र ब्रह्मा जातः ॥१०॥ स रजोगुणयुक्तः सन् मदनुग्रहात् सपालान् भूर्भुवःस्वरिति त्रीन् लोकान् ससर्ज ॥११॥ तत्र देवानां स्वर्गलोको निवासस्थानम् । भूतानामंतरिक्षलोकः । मनुष्याणां भूर्लोकः । सिद्धानां महर्लोकादिः ॥१२॥ भूमेरधःस्थितानां दैत्यादीनामतलादि स्थानम् । सर्वमेतद्ब्रह्मा ससर्ज । एवं त्रिगुणात्मकानां कर्मणां सर्वा गतयस्त्रिलोक्यामेव संति । योग-तपः-संन्यासानां गतयो महर्लोकादिषु संति । भक्तियोगस्य तु गतिर्वैकुंठः ॥१३॥ ॥ ॥ ॥ ॥ ॥

१ कपिलादिभिः । २ माया-दृश्यं, फलं तत्प्रकाशकश्चेति । ३ एकमेव तत्वं क्रियाज्ञानशक्तितया सूत्रमहत्तत्वशब्दाभ्यामुच्यत इत्यर्थः ।

॥१४॥ वैकुंठं विना सर्वा गतयश्चंचलाः । कालरूपेण मया प्रेरितमिदं जगत्संसारे उन्मज्जति ॥१५॥ अणुः महान् कृशः स्थूलो वा यो यो भावः स सर्वोऽपि प्रकृत्या पुरुषेण च युक्तोऽस्ति ॥१६॥ यस्य य आदिरंतश्च तस्य मध्यमपि स एव । यथा सुवर्णस्य कटककुंडलादयो मृदश्च घटशरावादयः पदार्था व्यवहारार्थं भिन्नाः संति वस्तुतस्ते सुवर्णरूपा मृद्रूपाश्चैवं सर्वापि सृष्टिर्लीलासिद्ध्यर्थमेवास्ति वस्तुतः सा ब्रह्मरूपैव ॥१७॥ कारणरूपो महदादिर्भावश्च यत्स्वीकृत्याहंकारादिकं कार्यं सृजति तदेव सत्यमिति श्रुत्योच्यते ॥१८॥ कार्यस्योपादानं माया । आधारः पुरुषः । गुणक्षोभेण प्राकट्यहेतुः कालः । एतत्त्रयं ब्रह्मरूपोऽहमेव ॥१९॥ अयं महान् सर्गो यावदीश्वरस्येक्षणं तावत्पितृपुत्रादिरूपेणाविच्छेदेन प्रवर्तते ॥२०॥ अथ प्रलयमाह । मया कालात्मना व्याप्यमानं ब्रह्मांडं भुवनैः सह प्रलयाय कल्पते ॥२१॥ तत्प्रकारमाह । शरीरमन्ने लीयते । अन्नं बीजेषु बीजानि भूमौ भूमिश्च

योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ॥ महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥१४॥ मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ॥ गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥१५॥ अणुर्बृहत्कृशः स्थूलो यो यो भावः प्रसिध्यति ॥ सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥१६॥ यस्तु यस्यादिरंतश्च स वै मध्यं च तस्य सन् ॥ विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥१७॥ यदुपादाय पूर्वस्तु भावो विकुरुते परम् ॥ आदिरंतो यदा यस्य तत्सत्यमभिधीयते ॥१८॥ प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ सतोऽभिव्यंजकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥१९॥ सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः ॥ महान्गुणविसर्गार्थः स्थित्यंतो यावदीक्षणम् ॥२०॥ विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ॥ पंचत्वाय विशेषाय कल्पते भुवनैः सह ॥२१॥ अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ॥ धाना भूमौ प्रलीयंते भूमिर्गंधे प्रलीयते ॥२२॥ अप्सु प्रलीयते गंध आपश्च स्वगुणे रसे ॥ लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥२३॥ रूपं वायौ स च स्पर्शे लीयते सोऽपि चांबरे ॥ अंबरं शब्दतन्मात्र इंद्रियाणि स्वयोनिषु ॥२४॥ योनिर्वैकारिके सौम्य लीयते मनसीश्वरे ॥ शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥२५॥ स लीयते महान्स्वेषु गुणेषु गुणवत्तमः ॥ तेऽव्यक्ते संप्रलीयंते तत्काले लीयतेऽव्यये ॥२६॥ कालो मायामये जीवे जीव आत्मनि मय्यजे ॥ आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥२७॥ एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ॥ मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥२८॥

गंधे लीयते ॥२२॥ गंधोऽप्सु । आपो रसे । रसा ज्योतिषि ज्योती रूपे लीयते ॥२३॥ रूपं वायौ । वायुः स्पर्शे । स्पर्श आकाशे । आकाशं शब्दे । इंद्रियाणि देवतासु ॥२४॥ देवता मनश्च सात्विकाहंकारे । शब्दस्तामसाहंकारे । त्रिविधोऽप्यहंकारो महत्तत्वे ॥२५॥ महत्तत्वं गुणेषु । गुणाः प्रकृतौ । प्रकृतिश्च कालेनैकीभूय तिष्ठति ॥२६॥ कालो मायाप्रवर्तके महापुरुषे । महापुरुषो मय्यात्मनि । आत्मा त्वात्मस्थ एव नान्यत्र लीयते ॥२७॥ एवं विचार्यमाणस्य पुंसो मनसि भ्रमः कथं भवेत् जातो वा कथं तिष्ठेन्नैव तिष्ठेत् । यथा व्योम्नि सूर्योदये जाते सति तमो न तिष्ठति तद्वत् ॥२८॥

॥ ॥ ॥ ॥ ॥

हे उद्धव, मया प्रतिलोमानुलोमत्वेन नृणां संशय-ग्रंथिभेदन एष सांख्यविधिः प्रोक्तः ॥२९॥ इति श्रीमद्भागवतचूर्णिकायामेकादशस्कंधे चतुर्विंशोऽध्यायः ॥२४॥ पंचविंशे स्वनैर्गुण्यप्रतिपत्त्यै निरूप्यते । चित्तप्रभवसत्वादिगुणवृत्तिरनेकधा ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, अमिश्राणां गुणानां मध्ये पुमान् येन गुणेन यादृशो भवेत् तन्मत्तो निबोध ॥१॥ तत्र शमः दमः विवेकः तपः सत्यं दया स्मृतिः संतोषः त्यागः इत्यादयः सत्वगुणवृत्तयो ज्ञातव्याः ॥२॥ अभिलाषः व्यापारः दर्पः गर्वः भेदबुद्धिः यशः प्रीतिरित्यादयो रजोगुणवृत्तयो ज्ञातव्याः ॥३॥ क्रोधः लोभः हिंसा याचना दंभः श्रमः कलहः शोको मोह इत्यादयस्तमोगुणवृत्तयो ज्ञातव्याः ॥४॥ अथ गुणानां संनिपातं शृणु ॥५॥ हे उद्धव, अहं ममेति या बुद्धिः स गुणानां सन्निपातो ज्ञेयः । किंच मनसा इंद्रियैः प्राणैश्च यो व्यवहारः सोऽपि सन्निपातः ॥६॥ असौ पुमान् धर्मेऽर्थे कामे च यदा स्थितो

एष सांख्यविधिः प्रोक्तः संशयग्रंथिभेदनः ॥ प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥२९॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे चतुर्विंशोऽध्यायः ॥२४॥ श्रीभगवानुवाच ॥ गुणानामसमिश्राणां पुमान्येन यथा भवेत् ॥ तन्मे पुरुषवर्येदमुपधारय शंसतः ॥१॥ शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ॥ तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः ॥२॥ काम ईहा मदस्तृष्णा स्तंभ आशीर्भिदा सुखम् ॥ मदोत्साहो यशः प्रीतिर्हास्यं वीर्यं बलोद्यमः ॥३॥ क्रोधो लोभोऽनृतं हिंसा याच्ञा दंभः क्लमः कलिः ॥ शोकमोहौ विषादार्ती निद्राशा भीरनुद्यमः ॥४॥ सत्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः ॥ वृत्तयो वर्णितप्रायाः संनिपातमथो शृणु ॥५॥ संनिपातस्त्वहमिति ममेत्युद्धव या मतिः ॥ व्यवहारः संनिपातो मनोमात्रेंद्रियासुभिः ॥६॥ धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ॥ गुणानां संनिकर्षोऽयं श्रद्धारतिधनावहः ॥७॥ प्रवृत्तिलक्षणे निष्ठा पुमान्यर्हि गृहाश्रमे ॥ स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥८॥ पुरुषं सत्वसंयुक्तमनुमीयाच्छमादिभिः ॥ कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम् ॥९॥ यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ॥ तं सत्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वा ॥१०॥ यदा आशिष आशास्य मां भजेत स्वकर्मभिः ॥ तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम् ॥११॥

भवति तदाऽयं सत्वरजस्तमोगुणनिष्ठारूपः सन्निपातो ज्ञेयः ॥७॥ यदा काम्यधर्मेषु पुरुषस्य निष्ठा भवति तथा पुरुषो गृहासक्तः सन् स्वधर्मे तिष्ठेत् सोऽपि सन्निपातः ॥८॥ शमादिभिः सत्वगुणयुक्तं पुरुषं जानीयात् । कामादिभी रजोगुणयुक्तं तथा क्रोधादिभिस्तमोगुणयुक्तं जानीयात् ॥९॥ पुमान् निरपेक्षः सन् यदा मां भक्त्या भजति तदा तं पुरुषं स्त्रियं वा सत्वगुणस्वभावां जानीयात् ॥ १० ॥ यदा कामेच्छया पुरुषो मां भजेत् तदा तं रजोगुणस्वभावं जानीयात् । यदा शत्रुमरणादिकमाशास्य मां भजेत्तदा तं तमोगुणस्वभावं जानीयात् ॥ ११ ॥

॥ ॥ ॥ ॥ ॥ ॥

१ संनिपातो मिश्रत्वम् । अहं शांतः, कामी, क्रोधीत्यादि । तथा मम शांतिरस्ति कामःक्रोध इत्यादि द्रष्टव्यम्

हे उद्धव, सत्वं रजस्तम इति त्रयो गुणा जीवस्यैव संति न मे। यतो जीवोपाधौचित्ते जाताः। अतस्तैर्विषयासक्तः स एव बद्ध्यते। अहं तु विषयानासक्तो नित्यमुक्तोऽस्मि ॥१२॥ यदा सत्वगुणो रजस्तमसी जयेत् तदा पुमान् सुखधर्मज्ञानादिभिर्युज्येत ॥१३॥ यदा रजोगुणः सत्वतमसी जयेत् तदा पुमान् कर्मयशःसंपत्त्यादिभिर्युज्येत ॥१४॥ यदा तमोगुणः सत्वरजसी जयेत् तदा पुमान् शोक-हिंसादिभिर्युज्येत ॥१५॥ यदा चित्तं प्रसन्नं इंद्रियाणां च संतोषो भवेत् तदोद्रिक्तं सत्वगुणं विद्धि ॥१६॥ यदा कर्मणा विकारं प्राप्नुवच्चित्तं चंचलं भ्रांतं च स्यात् इंद्रियाणां चास्वास्थ्यं भवति तदोत्कटं रजोगुणं जानीहि ॥१७॥ यदा चित्तं दुःखितं सलीयते खेदो ग्लानिर्वा भवेत्तदोत्कटं तमोगुणं जानीहि ॥१८॥ सत्वगुणाधिक्ये देवानां बलं वर्धते। रजआधिक्ये दैत्यानां तमआधिक्ये च रक्षसां बलं वर्धते ॥१९॥ सत्वाज्जंतोर्जागरणं जानीहि। रजसा स्वप्नं तमसा च

सत्वं रजस्तम इति गुणा जीवस्य नैव मे ॥ चित्तजा यैस्तु भूतानां सज्जमानो निबद्ध्यते ॥१२॥ यदेतरौ जयेत्सत्वं भास्वरं विशदं शिवम् ॥ तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥१३॥ यदा जयेत्तमः सत्वं रजःसंगं भिदा बलम् ॥ तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥१४॥ यदा जयेद्रजः सत्वं तमो मूढं लयं जडम् ॥ युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया ॥१५॥ यदा चित्तं प्रसीदेत इंद्रियाणां च निर्वृतिः ॥ देहेऽभयं मनोऽसंगं तत्सत्वं विद्धि मत्पदम् ॥१६॥ विकुर्वन्क्रियया चाधीरनिर्वृत्तिश्च चेतसाम् ॥ गात्रास्वास्थ्यं मनो भ्रांतं रज एतैर्निशामय ॥१७॥ सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम् ॥ मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥१८॥ एधमाने गुणे सत्वे देवानां बलमेधते ॥ असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥१९॥ सत्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ॥ प्रस्वापं तमसा जंतोस्तुरीयं त्रिषु संततम् ॥२०॥ उपर्युपरि गच्छंति सत्वेन ब्राह्मणा जनाः ॥ तमसाऽधोऽध आमुख्याद्रजसांतरचारिणः ॥२१॥ सत्वे प्रलीनाः स्वर्यांति नरलोकं रजोलयाः ॥ तमोलयास्तु निरयं यांति मामेव निर्गुणाः ॥२२॥ मदर्पणं निष्फलं वा सात्विकं निजकर्म तत् ॥ राजसं फलसंकल्पं हिंसाप्रायादि तामसम् ॥२३॥ कैवल्यं सात्विकं ज्ञानं रजो वैकल्पिकं च यत् ॥ प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥२४॥ वनं तु सात्विको वासो ग्रामो राजस उच्यते ॥ तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥२५॥ ॥ ॥

निद्रां जानीहि। त्रिष्ववस्थास्वेकं यत्तत्तुरीयमात्मतत्त्वं जानीहि ॥२०॥ वेदोक्तकर्मकारिणो ब्राह्मणाः सत्वेनोपर्युपरि गच्छंति। तमसा त्वधोऽधो गच्छंति। रजसा मनुष्या एव भवंति ॥२१॥ सत्वे वृद्धे सति मृताः स्वर्गं यांति। रजसि वृद्धे मृता मनुष्यलोकं तमसि च वृद्धे मृता नरकं यांति। निर्गुणास्तु मामेव यांति ॥२२॥ फलरहितं मत्प्रीत्युद्देशेन च कृतं कर्म सात्विकं ज्ञेयम्। फलेच्छया कृतं राजसं हिंसोद्देशेन च कृतं तामसं ज्ञेयम् ॥२३॥ देहादिव्यतिरिक्तात्मविषयं ज्ञानं सात्विकं भेदात्मकं राजसं बालमूकादिज्ञानतुल्यं ज्ञानं तामसं ज्ञेयम्। परमेश्वरनिष्ठं ज्ञानं निर्गुणम् ॥२४॥ वनेवासः सात्विकः ग्रामे राजसः द्यूतसदने तामसः मन्मंदिरे च वासो निर्गुणो ज्ञातव्यः ॥२५॥ ॥

अनासक्तः कर्ता सात्विकः क्रोधांधो राजसः अनुसंधानशून्यस्तामसो मदेकशरणश्च निर्गुणो ज्ञेयः ॥२६॥ आध्यात्मिकी श्रद्धा सात्विकी । कर्मश्रद्धा राजसी अधर्मे धर्मश्रद्धा तामसी । मत्सेवायां च श्रद्धा निर्गुणा ज्ञातव्या ॥२७॥ हितं शुद्धं च यद्भक्ष्यभोज्यादि तत्सात्विकं, कट्वम्ललवणादि राजसं, दुःखदमशुद्धं च तामसं, मन्निवेदितं च निर्गुणं ज्ञातव्यम् ॥२८॥ आत्मानात्मविचारोत्थं सुखं सात्विकं विषयोत्थं राजसं मोहदुःखोत्थं तामसं मदाश्रयं च निर्गुणं ज्ञेयम् ॥२९॥ द्रव्य-देश-फल-काल-ज्ञान-कर्मादयो दृष्टाः श्रुताश्च यावंतो भावास्ते सर्वेऽपि त्रिगुणात्मका एव ज्ञातव्याः ॥३०॥३१॥ एता गुणकर्मनिबंधनाः संसृतयो येन जीवेन निर्जिताः स भक्तियोगेन मन्निष्ठः सन् मोक्षाय योग्यो भवति

सात्विकः कारकोऽसंगी रागांधो राजसः स्मृतः ॥ तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥२६॥ सात्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ॥ तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥२७॥ पथ्यं पूतमनायस्तमाहार्यं सात्विकं स्मृतम् ॥ राजसं चेंद्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥२८॥ सात्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ॥ तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥२९॥ द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकाः ॥ श्रद्धाऽऽवस्था कृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥३०॥ सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः ॥ दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥३१॥ एताः संसृतयः पुंसो गुणकर्मनिबंधनाः ॥ येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ॥ भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥३२॥ तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवम् ॥ गुणसंगं विनिर्धूय मां भजंतु विचक्षणाः ॥३३॥ निःसंगो मां भजेद्विद्वानप्रमत्तो जितेंद्रियः ॥ रजस्तमश्चाभिजयेत्सत्वसंसेवया मुनिः ॥३४॥ सत्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शांतधीः ॥ संपद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् ॥३५॥ जीवो जीवविनिर्मुक्तो गुणैश्चाशयसंभवैः ॥ मयैव ब्रह्मणा पूर्णो न बहिर्नांतरश्चरेत् ॥३६॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे पंचविंशोऽध्यायः ॥२५॥ श्रीभगवानुवाच ॥ मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ॥ आनंदं परमात्मानमात्मस्थं समुपैति माम् ॥१॥ गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ॥ गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ॥ वर्तमानोऽपि न पुमान्युज्यतेऽवस्तुभिर्गुणैः ॥२॥ ॥ ॥ ॥ ॥

॥३२॥ तस्मान्नरदेहं लब्ध्वा विषयसंगं त्यक्त्वा ज्ञानिनो मां भजंतु ॥३३॥ निःसंगो भूत्वा विद्वान् मां भजेत् । तथा सत्वगुणसेवनेन रजस्तमसी जयेत् ॥३४॥ निरपेक्षत्वेन सत्वगुणं च जयेत् । एवंभूतो यः स लिंगशरीरं हित्वा मां प्राप्नोति । तथा मयैव ब्रह्मणा पूर्णः सन् बहिर्विषयभोगेन अंतश्च तत्स्मरणेन न चरेत् ॥३५॥३६॥ इति श्रीमद्भागवतचूर्णिकायां एकादशस्कंधे पंचविंशोऽध्यायः ॥२५॥ षड्विंशे योगनिष्ठाया विघातो दुष्टसंगतः । साधुसंगेन तन्निष्ठापराकाष्ठेति वर्ण्यते ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, नरदेहं लब्ध्वा भक्तिलक्षणे धर्मे स्थितः पुमान् आत्मस्थमानंदं मां प्राप्नोति ॥१॥ किंच । गुणमयी या जीवोपाधिस्तया निर्मुक्तः पुमान् मायिकत्वेन ज्ञातेषु गुणेषु वर्तमानोऽपि

तैर्विषयासक्तिं न प्राप्नोति ॥२॥ तथाप्यसतां संगं न कुर्यात् । यतोऽसत्संगेन नरके पतति । अंधमनुगच्छति योंऽधस्तद्वत् ॥३॥ अत्रेतिहासमाह । सार्वभौमो महाकीर्तिः पुरूरवा राजा प्रियाया उर्वश्या वियोगात्प्रथमं मुह्यन् पश्चात्कुरुक्षेत्रे तां समागम्य गंधर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकापगमे सति निर्विण्णः सन्निमां गाथामगायत ॥४॥ तस्य प्राक्तनीं मोहावस्थामाह । शय्यायामात्मानं त्यक्त्वा गच्छंतीं तामुर्वशीं, हे जाये, तिष्ठतिष्ठेति विह्वलो भूत्वा नग्न उन्मत्तवद्विलपन् तामन्वगात् ॥५॥ ततस्तया सह विषयान् सेवमानः सन् गतागता रात्रीर्न वेद । तत उर्वशीभोगानंतरं विरक्तः सन् इमां गाथामगायत ॥६॥ पुरूरवा उवाच ॥ अहो उर्वश्या गृहीतकंठस्य मे मोहविस्तारं पश्यत । यतो मया इमे अहोरात्ररूपा आयुःखंडा न स्मृताः ॥७॥ किंच । उर्वश्या वंचितः सन्नहं सूर्यास्तोदयौ न वेद ॥८॥ अहो मे आत्मसंमोहः । येन मोहेनायं सार्वभौमो

संगं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ॥ तस्यानुगस्तमस्यंधे पतत्यंधानुगांधवत् ॥३॥ ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ॥ उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥४॥ त्यक्त्वाऽऽत्मानं व्रजंतीं तां नग्न उन्मत्तवन्नृपः ॥ विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः ॥५॥ कामानतृप्तोऽनुजुषन्क्षुल्लकान्वर्षयामिनीः ॥ न वेद यांतीर्नायांतीरुर्वश्याकृष्टचेतनः ॥६॥ ऐल उवाच ॥ अहो मे मोहविस्तारः कामकश्मलचेतसः ॥ देव्या गृहीतकंठस्य नायुःखंडा इमे स्मृताः ॥७॥ नाहं वेदाभिनिर्मुक्तः सूर्यो वाऽभ्युदितोऽमुया ॥ मुषितो वर्षपूगानां बताहानि गतान्युत ॥८॥ अहो मे आत्मसंमोहो येनात्मा योषितां कृतः ॥ क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥९॥ सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ॥ यांतीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥१०॥ कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ॥ योऽन्वगच्छं स्त्रियं यांतीं खरवत्पादताडितः ॥११॥ किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ॥ किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥१२॥ स्वार्थस्याकोविदं धिङ् मां मूर्खं पंडितमानिनम् ॥ योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥१३॥ सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ॥ न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥१४॥ पुंश्चल्यापहृतं चित्तं कोऽन्वन्यो मोचितुं प्रभुः ॥ आत्मारामेश्वरमृते भगवंतमधोक्षजम् ॥१५॥ बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ॥ मनोगतो महामोहो नापयात्यजितात्मनः ॥१६॥ ॥ ॥ ॥

राजदेहः स्त्रियाः क्रीडामृगः कृतः ॥९॥ किंच । राज्यादिसहितं मां तृणमिव हित्वा यांतीं तां नग्न उन्मत्तवद्रुदन्नहं खरो यथा पादताडितोऽपि खरीमनुगच्छति तद्वदन्वगमम् । एवंविधस्य मे प्रभावस्तेजः स्वामित्वं वा कुतः स्यात् ॥१०॥११॥ यस्य मनः स्त्रीभिर्हृतं तस्य विद्या-तपः-संन्यास-मौनादिभिः किं फलम् ॥१२॥ योऽहमीश्वरतां प्राप्यापि स्त्रीभिर्गोखरवज्जितः । अतः स्वार्थस्याज्ञातारं मां धिक् ॥१३॥ अहो कष्टं । तस्या अधरामृतं सेवतो मम कामोऽद्यापि न तृप्यति ॥१४॥ जारिण्या हृतं चित्तं एकं भगवंतं विनाऽन्यो मोचितुं कः समर्थः । अतोऽहं परमेश्वरमेव भजेयम् ॥१५॥ परमेश्वरप्रसादं विना उर्वश्या यथार्थसूक्तवाक्येन बोधितस्यापि मे मनोगतो महामोहो न गच्छति ॥१६॥ ॥

अतः कामिनो मे उर्वश्या किमपराद्धं न किमपि । अजितेंद्रियोऽहमेवापराधी ॥१७॥ किंच । स्त्रिया दुर्गंधादियुक्तो मलिनो देहः क्व । तत्र सौकुमार्यसौगंध्यादयो गुणाः क्व । परंतु तत्र देहेऽविद्यया सौकुमार्याद्यध्यासो ममत्वं च कृतमस्ति ॥१८॥ अयं ममापि देहः मातापित्रोः किं अथवा भार्यायाः स्वामिनः अग्नेः श्वानगृध्रयोः मित्राणां वेति यो न निश्चीयते ॥१९॥ तस्मिन् कृमि-विष्ठा-भस्म-पर्यवसाने देहे जनाः स्त्रियाः मुखं सुमंगलं सुस्मितमिति मत्वा तस्यामासक्ता भवंति ॥२०॥ परंतु त्वङ्मांस-रक्त-स्नायु-मेदो-मज्जा-स्थि-विष्ठा-मूत्राणां समुदाये देहे रमतां पुंसां कृमीणां च कियदंतरमस्ति ॥२१॥ अतः स्त्रीषु स्त्रैणेषु च संगं न कुर्यात् । यतो विषयेंद्रियसंयोगान्मनः क्षुभ्यति । अन्यथा न क्षुभ्यति ॥२२॥ किंच । दृष्ट-श्रुतपदार्थाभ्यां विना मनःक्षोभो न जायते । अत इंद्रियाणि नियच्छतः पुंसो मनो निश्चलं सत् शाम्यति ॥२३॥ अतः स्त्रीषु स्त्रैणेषु च संगो न

किमेतया नोऽपकृतं रज्ज्वा वा सर्पचेतसः ॥ रज्जुस्वरूपाविदुषो योऽहं यदजितेंद्रियः ॥१७॥ क्वायं मलीमसः कायो दौर्गंध्याद्यात्मकोऽशुचिः ॥ क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥१८॥ पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ॥ किमात्मनः किं सुहृदामिति यो नावसीयते ॥१९॥ तस्मिन्कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते ॥ अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥२०॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ॥ विण्मूत्रपूये रमतां कृमीणां कियदंतरम् ॥२१॥ अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ॥ विषयेंद्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥२२॥ अदृष्टादश्रुताद्भावान्न भाव उपजायते ॥ असंप्रयुंजतः प्राणान् शाम्यति स्तिमितं मनः ॥२३॥ तस्मात्संगो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेंद्रियैः ॥ विदुषां चाप्यविश्रब्धः षड्वर्गः किमु मादृशाम् ॥२४॥ श्रीभगवानुवाच ॥ एवं प्रगायन्नृपदेवदेवः स उर्वशीलोकमथो विहाय ॥ आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥२५॥ ततो दुःसंगमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ॥ संत एतस्य छिंदंति मनोव्यासंगमुक्तिभिः ॥२६॥ संतोऽनपेक्षा मच्चित्ताः प्रशांताः समदर्शिनः ॥ निर्ममा निरहंकारा निर्द्वंद्वा निष्परिग्रहाः ॥२७॥ तेषु नित्यं महाभाग महाभागेषु मत्कथाः ॥ संभवंति हि ता नृणां जुषतां प्रपुनंत्यघम् ॥२८॥ ता ये शृण्वंति गायंति ह्यनुमोदंति चादृताः ॥ मत्पराः श्रद्दधानाश्च भक्तिं विंदंति ते मयि ॥२९॥ भक्तिं लब्धवतः साधो किमन्यदवशिष्यते ॥ मय्यनंतगुणे ब्रह्मण्यानंदानुभवात्मनि ॥३०॥

कार्यः । इंद्रियवर्गो ज्ञानिनामपि न विश्वसनीयः । तदा मत्सदृशानां न विश्वसनीय इति किं वक्तव्यम् ॥२४॥ श्रीभगवानुवाच ॥ एवं स पुरूरवा राजा गाथां गायन् सन् उर्वशीलोकं हित्वा आत्मन्येवात्मानं मां प्राप्य ज्ञानेन गतमोहः सन्नुपारमत् ॥२५॥ हे उद्धव, अतो दुःसंगं हित्वा सत्सु सज्जेत । संत एतस्य हितोपदेशैर्मनोव्यासंगं छिंदंति ॥२६॥ संतश्च मच्चित्ता इच्छारहिताः समदर्शिनो निरहंकारा ज्ञातव्याः ॥२७॥ तेषु साधुषु नित्यं मत्कथाः संभवंति । ताः कथा ये श्रद्धया शृण्वंति गायंति अनुमोदंति च ते मयि भक्तिं विंदंति ॥२८॥२९॥ आनंदानुभवरूपे मयि भक्तिं लब्धवतः साधोरन्यत् साध्यं किमवशिष्यते न किमपि ॥३०॥ ॥ ॥ ॥

यथाऽग्निं । सेवमानस्य पुंसः शीतं भयं अंधकारश्च नश्यंति तथा साधून् सेवतः पुंसः कर्मजाड्यमागामिसंसारभयं तन्मूलभूतमज्ञानं च नश्यंति ॥३१॥ अत्र घोरे भवसमुद्रे उच्च-नीचयोनीर्गच्छतां नृणां साधुरेव परमाश्रयोऽस्ति । अप्सु मज्जतां नौरिव ॥३२॥ यथा प्राणिनां जीवनमन्नं दुःखितानां रक्षणकर्ताऽहमीश्वरस्तथा संसाराद्बिभ्यतः पुंसः शरणं संत एव ॥३३॥ किंच । संतः सगुण-निर्गुणज्ञानानि दिशंति । अतः संत एव देवता इवाराध्याः । बांधवा इव सत्कारयोग्या आत्मेव प्रीतियोग्या ईश्वर इव पूज्याश्च ज्ञातव्याः ॥३४॥ हे उद्धव, एवं पुरूरवा उर्वश्या लोकनिःस्पृहः सन् मुक्तसंगो भूत्वा एतां महीं यथेष्टं चचार ॥३५॥ इति श्रीमद्भागवतचूर्णिकायां एकादशस्कंधे षड्विंशोऽध्यायः ॥२६॥ सप्तविंशे क्रियायोगः सद्यश्चित्तप्रसादकः । सर्वकामाप्तिहेतुश्च सांगः प्रोक्तः समासतः ॥१॥ उद्धव उवाच ॥ हे कृष्ण, भक्ताः कस्यां मूर्तौ केन प्रकारेण भवदाराधनरूपं पूजाविधिं

यथोपश्रयमाणस्य भगवंतं विभावसुम् ॥ शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥३१॥ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् ॥ संतो ब्रह्मविदः शांता नौर्दृढेवाप्सु मज्जताम् ॥३२॥ अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् ॥ धर्मो वित्तं नृणां प्रेत्य संतोऽर्वाग् बिभ्यतोऽरणम् ॥३३॥ संतो दिशंति चक्षूंषि बहिरर्कः समुत्थितः ॥ देवता बांधवाः संतः संत आत्माऽहमेव च ॥३४॥ वैतसेनस्ततोऽप्येवमुर्वश्या लोकनिस्पृहः ॥ मुक्तसंगो महीमेतामात्मारामश्चचार ह ॥३५॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे ऐलगीतं नाम षड्विंशोऽध्यायः ॥२६॥ उद्धव उवाच ॥ क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ॥ यस्मात्त्वां ये यथाऽर्चंति सात्वताः सात्वतर्षभ ॥१॥ एतद्वदंति मुनयो मुहुर्निःश्रेयसं नृणाम् ॥ नारदो भगवान्व्यास आचार्योऽंगिरसः सुतः ॥२॥ निःसृतं ते मुखांभोजाद्यदाह भगवानजः ॥ पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान्भवः ॥३॥ एतद्वै सर्ववर्णानामाश्रमाणां च संमतम् ॥ श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥४॥ एतत्कमलपत्राक्ष कर्मबंधविमोचनम् ॥ भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥५॥ श्रीभगवानुवाच ॥ नह्यंतोऽनंतपारस्य कर्मकांडस्य चोद्धव ॥ संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥६॥ वैदिकस्तांत्रिको मिश्र इति मे त्रिविधो मखः ॥ त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥७॥

कुर्वंति तं मे कथय ॥१॥ किंच । अयमेव मनुष्याणां कल्याणकर इति नारद-बृहस्पति-व्यासादयो वदंति ॥२॥ तथा त्वयापि ब्रह्मणे उपदिष्टम् । ब्रह्मा स्वपुत्रेभ्यो भृग्वादिभ्य आह । तथा शिवः पार्वत्यै प्राह ॥३॥ एतत्सर्ववर्णाश्रमाणां स्त्रीशूद्राणां चोत्तमं श्रेयःसाधनं मन्ये ॥४॥ अतो हे कमलपत्राक्ष, कर्मबंधविमोचनमिदं भक्ताय मे ब्रूहि ॥५॥ श्रीभगवानुवाच ॥ अनंतपारस्य मे आराधनरूपस्य कर्मकांडस्यांतो नास्ति । तथापि संक्षेपेणानुक्रमतो मे पूजाविधिं वर्णयिष्यामि ॥६॥ मे पूजाविधिर्वैदिक[1]स्तांत्रिको[2] मिश्र[3]श्चेति त्रिविधोऽस्ति । तन्मध्ये स्वस्येष्टेन विधिना भक्तो मां पूजयेत् ॥७॥

॥ ॥ ॥ ॥ ॥

१ पुरुषसूक्तादिमंत्रैः कृतः । २ पुराणोक्तमत्रैः कृतः । ३ अष्टाक्षरादिमंत्रैः कृतः ।

तदाह । पुरुषः स्ववेदेनोक्तं द्विजत्वं प्राप्य भक्त्या यथा मां पूजयेत्तथा श्रृणु ॥८॥ प्रतिमायां भूम्यग्नि-सूर्य-जल-हृदय-द्विजगुरुषु वा मामर्चयेत् ॥९॥ आदौ दंतान् संशोध्य वैदिक-तांत्रिकैर्मंत्रैर्भस्मगोमयमृत्तिकालेपनादिना स्नानं कुर्यात् ॥१०॥ ततो वेदेन प्रोक्तानि संध्योपासनादीनि कर्माणि कृत्वा ततः परमेश्वरप्रीतिसंकल्पयुक्तः सन् मां पूजयेत् ॥११॥ पाषाणमयी काष्ठमयी स्वर्णादिधातुमयी मृन्मयी चित्रलिखिता वालुकामयी मनोमयी मणिमयी चेत्यष्टविधा प्रतिमा स्यात् ॥१२॥ साऽपि स्थिरा अस्थिरा चेति द्विविधा ! तत्र स्थिरायामावाहनविसर्जने न स्तः ॥१३॥ अस्थिरायां विकल्पः । लेप्यायां लेख्यायां च मार्जनमन्यत्र स्नानम् ॥१४॥ प्रतिमादिषु सकामेन सुशोभनैर्द्रव्यैर्मत्पूजा कार्या निष्कामेन

यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ॥ यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥८॥ अर्चायां स्थंडिलेऽग्नौ वा सूर्ये वाऽप्सु हृदि द्विजे ॥ द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं माममायया ॥९॥ पूर्वं स्नानं प्रकुर्वीत धौतदंतोंऽगशुद्धये ॥ उभयैरपि च स्नानं मंत्रैर्मृद्ग्रहणादिना ॥१०॥ संध्योपास्त्यादिकर्माणि वेदेनाचोदितानि मे ॥ पूजां तैः कल्पयेत्सम्यक्संकल्पः कर्मपावनीम् ॥११॥ शैली दारुमयी लौही लेप्या लेख्या च सैकती ॥ मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥१२॥ चलाऽचलेति द्विविधा प्रतिष्ठा जीवमंदिरम् ॥ उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥१३॥ अस्थिरायां विकल्पः स्यात्स्थंडिले तु भवेद्द्वयम् ॥ स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥१४॥ द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः ॥ भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि ॥१५॥ स्नानालंकरणं प्रेष्ठमर्चायामेव तूद्धव ॥ स्थंडिले तत्वविन्यासो वह्नावाज्यप्लुतं हविः ॥१६॥ सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ॥ श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ॥१७॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ गंधो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥१८॥ शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः ॥ आसीनः प्रागुदग्वार्चेदर्चायामथ संमुखः ॥१९॥ कृतन्यासः कृतन्यासां मदर्चां पाणिना मृजेत् ॥ कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ॥२०॥ तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ॥ प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥२१॥ ॥ ॥ ॥

यथालब्धद्रव्यैः । यत्र चंदनादि सर्वथा न लभ्यते तदा मानसोपचारैर्मत्पूजा कार्या ॥१५॥ प्रतिमाया स्नानवस्त्रालंकारादिकरणं मे प्रियम् । भूमावंगप्रधानदेवानां तत्तन्मंत्रैः स्थापनादिना मत्पूजा । अग्नावाज्याद्यैर्हवनादिना ॥१६॥ सूर्ये उपस्थानार्घादिना । जले तर्पणादिना । श्रद्धया भक्तेन दत्तं जलमपि मे प्रियं भवति ॥१७॥ अभक्तदत्तं भूर्यपि मे संतोषाय न स्यात् ॥१८॥ कर्ता पूर्वं पूजासाधनानि संपाद्य शुचिर्भूतः प्राङ्मुख उदङ्मुखो वा स्थिरप्रतिमायां संमुखश्च कुशासन आसीनः सन् ॥१९॥ स्वस्मिन् कृतन्यासः कृतमूलमंत्रन्यासां प्रतिमां निर्माल्यापकर्षणादिना संशोध्य पूर्णकलशं प्रोक्षणीपात्रं च चंदनपुष्पादिभिः संस्कुर्यात् ॥२०॥ ततः प्रोक्षणी पात्रोदकैर्देवपूजास्थानं पूजाद्रव्याणि च

१ शालग्रामे न कुर्यात्सिकतं कुर्यादन्यत्र कुर्याद्वा न वेति ।

संप्रोक्ष्य पाद्यार्घ्याचमनीयार्थं कलशोदकपूरितं पात्रत्रयमासाद्य तेषु तानि तानि द्रव्याणि क्षिपेत् ॥२१॥ ततो हृदयशीर्षशिखामंत्रैः क्रमेणाभिमंत्र्य तानि सर्वाणि पात्राणि गायत्रीमंत्रेण प्रोक्षयेत् ॥२२॥ ततो भूतशुद्ध्यादि कृत्वा स्वदेहे हृदयकमले श्रीनारायणमूर्तिं ध्यायेत् ॥२३॥ तया देहे व्याप्ते सति तां मानसोपचारैः संपूज्य ततः प्रतिमादिषु स्थापनमुद्रयाऽऽवाह्य पूजयेत् ॥२४॥ पाद्यार्घ्याद्युपचारान् प्रकल्प्य धर्मादिभिर्नवभिः शक्तिभिश्च ममासनं कल्पयित्वा ॥२५॥ तत्र कर्णिकाकेसरस्थ-सूर्यादिमंडलैरुज्ज्वलेऽष्टदले कमले वैदिकतांत्रिकमार्गाभ्यां मां पूजयेत् ॥२६॥ सुदर्शनं शंखं गदां खड्गं धनुर्हलं मुसलं बाणान् कौस्तुभं मालां श्रीवत्सम् ॥२७॥ नंदं सुनंदं गरुडं प्रचंडं चंडं महाबलं बलं कुमुदं

पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि दैशिकः ॥ हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाभिमंत्रयेत् ॥२२॥ पिंडे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ॥ अण्वीं जीवकलां ध्यायेन्नादांते सिद्धभाविताम् ॥२३॥ तयाऽऽत्मभूतया पिंडे व्याप्ते संपूज्य तन्मयः ॥ आवाह्यार्चादिषु स्थाप्य न्यस्तांगं मां प्रपूजयेत् ॥२४॥ पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत् ॥ धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥२५॥ पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ॥ उभाभ्यां वेदतंत्राभ्यां मह्यं तूभयसिद्धये ॥२६॥ सुदर्शनं पांचजन्यं गदासीषुधनुर्हलान् ॥ मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥२७॥ नंदं सुनंदं गरुडं प्रचंडं चंडमेव च ॥ महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥२८॥ दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान् ॥ स्वे स्वे स्थाने त्वभिमुखान्पूजयेत्प्रोक्षणादिभिः ॥२९॥ चंदनोशीरकर्पूरकुंकुमागुरुवासितैः ॥ सलिलैः स्नापयेन्मंत्रैर्नित्यदा विभवे सति ॥३०॥ स्वर्णघर्मानुवाकेन महापुरुषविद्यया ॥ पौरुषेणापि सूक्तेन सामभी राजनादिभिः ॥३१॥ वस्त्रोपवीताभरणपत्रस्रग्गंधलेपनैः ॥ अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥३२॥ पाद्यमाचमनीयं च गंधं सुमनसोऽक्षतान् ॥ धूपदीपोपहार्याणि दद्यान्मे श्रद्धयार्चकः ॥३३॥ गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ॥ संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥३४॥ ॥ ॥

कुमुदेक्षणम् ॥२८॥ दुर्गां गणेशं व्यासं विष्वक्सेनं गुरून् लोकपालांश्च प्रतिमासंमुखान् स्वे स्वे स्थाने आवाह्य पूजयेत् ॥२९॥ ऐश्वर्यानुकूल्ये सति चंदन-कर्पूर-केसरादिसुवासितैर्जलैर्नित्यदा मां स्नापयेत् ॥३०॥ स्वर्णघर्मानुवाकेन महापुरुषविद्यया पुरुषसूक्तेन सामभिश्च मां स्नापयेत् ॥३१॥ तथा वस्त्रोपवीताभरण-स्रग्गंध-लेपनैर्मामलंकुर्वीत ॥३२॥ पाद्याचमन-गंध-पुष्पाक्षत-धूप-दीप-नैवेद्यादीनि मे दद्यात् ॥३३॥ ऐश्वर्ये सति गुड-पायस-घृत-शष्कुल्यपूप-मोदक-संयावदधिसूपयुक्तं नैवेद्यं दद्यात् ॥३४॥ ॥

१ पाद्ये श्यामाक-दूर्वा-ब्ज-विष्णुक्रांतादिरिष्यते ॥ गंध-पुष्पाक्षत-यव-कुशाग्र-तिल-सर्षपाः । दूर्वा चेति क्रमादर्घद्रव्याष्टकमुदीरितम् ॥ जाती-लवंग-कंकोलैर्मतमाचमनीयकमिति ॥ २ धर्म-ज्ञान-वैराग्यैश्वर्याण्यासनपर्यंकस्याग्नेयादिचतुष्कोणेषु पादाः । अधर्मादीनि पूर्वादिदिक्षु गात्राणि । त्रयो गुणाः पट्टिकाः । तत्र पूर्वादिक्रमेण मध्ये च विमलोत्कर्षणी ज्ञाना क्रिया योगा प्रह्वी सत्येशानाऽनुग्रहेति नव शक्तयः । एवं यथोपदेशमासनं कल्पयित्वा । ३ सुवर्णं घर्मं परिवेदवेनमित्यादिः स्वर्णघर्मानुवाकः । ४ जितं ते पुंडरीकाक्ष इत्यादिका महापुरुषविद्या । ५ इंद्रं नरो नेमधिताहवंत इत्यस्यामृचि गीतैः सामभिः ।

तथाऽभ्यंगोन्मर्दन-पंचामृताभिषेकादिकं गीतनृत्यादिकं च एकादश्याद्युत्सवे प्रत्यहं वा कुर्यात् ॥३५॥ अग्नावपि पूजाप्रकारमाह। स्वगृह्योक्तप्रकारेण मेखलादिभिरुपलक्षितं कुंडं निर्माय तत्राग्निं प्रतिष्ठाप्यान्वाधाय परिसमूहनादि कृत्वाऽग्नौ मां ध्यायेत् ॥३६॥३७॥ तप्तसुवर्णसदृशं शंख-चक्र-गदा-पद्म-युक्तैश्चतुर्भुजैः शोभितं पीतांबरम् ॥३८॥ स्फुरत्किरीट-कंकण-कटिसूत्रांगदैर्युक्तं कौस्तुभादिभिः शोभितम् ॥३९॥ एवंभूतं मां ध्यात्वा घृतप्लुतसमिधोऽग्नौ हुत्वाऽऽज्यभागावाघारौ च हुत्वा ॥४०॥ अष्टाक्षरेण मूलमंत्रेण पुरुषसूक्तेन च प्रत्यृचं हुत्वा धर्मादिभ्यश्च पूजाक्रमेणैव नाममंत्रैर्हुत्वा स्विष्टकृतं जुहुयात् ॥४१॥ ततोऽग्निस्थं मां संपूज्य नत्वा नंदादिपार्षदेभ्यो बलिं दत्वा देवस्य पुरत उपविश्य मूलमंत्रं

अभ्यंगोन्मर्दनादर्शदंतधावाभिषेचनम् ॥ अन्नाद्यगीतनृत्यादि पर्वणि स्युरुतान्वहम् ॥३५॥ विधिना विहिते कुंडे मेखलागर्तवेदिभिः ॥ अग्निमाधाय परितः समूहेत्पाणिनोदितम् ॥३६॥ परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ॥ प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम् ॥३७॥ तप्तजांबूनदप्रख्यं शंखचक्रगदांबुजैः ॥ लसच्चतुर्भुजं शांतं पद्मकिंजल्कवाससम् ॥३८॥ स्फुरत्किरीटकटककटिसूत्रवरांगदम् ॥ श्रीव-त्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥३९॥ ध्यायन्नभ्यर्च्य दारूणि हविषाऽभिघृतानि च ॥ प्रास्याज्यभागावाघारौ दत्वा चाज्यप्लुतं हविः ॥४०॥ जुहुयान्मूलमंत्रेण षोडशर्चावदानतः ॥ धर्मादिभ्यो यथान्यायं मंत्रैः स्विष्टकृतं बुधः ॥४१॥ अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ॥ मूलमंत्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम् ॥४२॥ दत्वाऽऽचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ॥ मुखवासं सुरभिमत्तांबूलाद्यमथार्हयेत् ॥४३॥ उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम ॥ मत्कथाः श्रावयन् शृण्वन्मुहूर्तं क्षणिको भवेत् ॥४४॥ स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ॥ स्तुत्वा प्रसीद भगवन्निति वंदेत दंडवत् ॥४५॥ शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ॥ प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥४६॥ इति शेषां मया दत्तां शिरस्याधाय सादरम् ॥ उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः ॥४७॥ अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् ॥ सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ॥४८॥ एवं क्रियायोगपथैः पुमान्वैदिकतांत्रिकैः ॥ अर्चन्नुभयतः सिद्धिं मत्तो विंदत्यभी-प्सिताम् ॥४९॥ मदर्चां संप्रतिष्ठाप्य मंदिरं कारयेद्दृढम् ॥ पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ॥५०॥ ॥ ॥

जपेत् ॥४२॥ तत आचमनं दत्वा शेषं विष्वक्सेनाय प्रकल्प्य तांबूलं दत्वा पुष्पांजलिं दद्यात् ॥४३॥ ततो मत्कर्माणि गायन् मत्कथाः श्रावयन् शृण्वंश्च मुहूर्तमेकाग्रचित्तो भवेत् ॥४४॥ ततः स्तोत्रैः स्तुत्वा हे भगवन्, प्रसीद इत्युक्त्वा दंडवद्वंदेत ॥४५॥ ततो दक्षिणसव्याभ्यां हस्ताभ्यां दक्षिणसव्यौ मत्पादौ गृहीत्वा मत्पादयोः शिरः कृत्वा हे ईश, मृत्युग्रहार्णवात् भीतं शरणागतं मां पाहि इत्युक्त्वा नमेत् ॥४६॥ ततो निर्माल्यं मस्तके धृत्वा प्रतिमायां यन्न्यस्तं तत्पुनरपि हृत्पद्मस्थात्मज्योतिष्युद्वास्य मूर्तिं देवमंदिरे करंडके वा स्थापयेत् ॥४७॥ किंच। पूर्वोक्तासु प्रतिमासु यदा यत्र श्रद्धा तदा तत्र मामर्चयेत्। यतः सर्वत्राहं स्थितः ॥४८॥ एवं यः पूजयेत्स इहामुत्र च सिद्धिं प्राप्नोति ॥४९॥ हे उद्धव, यो मे दृढं मंदिरं कारयित्वा

तत्र मन्मूर्तिं स्थापयित्वा ॥५०॥ मत्पूजा-यात्रोत्सवादीना संततानुवृत्त्यर्थं पुष्पोद्यानानि कारयति मह्यं च क्षेत्रापणपुरग्रामान् ददाति स मत्समानैश्वर्यं प्राप्नोति ॥५१॥ तत्र प्रतिष्ठया सार्वभौमं प्राप्नुयात् । दानेन भुवनत्रयं पूजादिना ब्रह्मलोकं त्रिभिश्च मम साम्यं प्राप्नुयात् ॥५२॥ एवं यो निष्कामेन पूजाविधिना मां पूजयेत्स भक्तियोगं लब्ध्वा मां विंदति ॥५३॥ यो देवब्राह्मणयोः स्वदत्तां परैर्दत्तां वा वृत्तिं हरेत्स दशकोटिवर्षपर्यंतं विष्ठाभोजी कृमिर्जायते ॥५४॥ किंच । कर्तुर्यत्फलं तत्साहाय्यकर्तुः प्रेरकस्यानुमोदितुश्च भवति ॥५५॥ इति श्रीमद्भागवतचूर्णिकायां एकादशस्कंधे सप्तविंशोऽध्यायः ॥२७॥ अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः । ज्ञानयोगः पुनश्चासौ समाहृत्य निरूप्यते ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव, विश्वमेकात्मकं पश्यन् परस्वभावकर्माणि न प्रशंसेन्न निंदेच्च ॥१॥ यः पुमान् परस्वभावकर्माणि स्तौति निंदति च स मिथ्याभूते द्वैतेऽभिनिवेशात् ज्ञान-

पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् ॥ क्षेत्रापणपुरग्रामान्दत्वा मत्सार्ष्टितामियात् ॥५१॥ प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ॥ पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥५२॥ मामेव नैरपेक्ष्येण भक्तियोगेन विंदति ॥ भक्तियोगं स लभत एवं यः पूजयेत माम् ॥५३॥ यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ॥ वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतम् ॥५४॥ कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ॥ कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥५५॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे सप्तविंशोऽध्यायः ॥२७॥ श्रीभगवानुवाच ॥ परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ॥ विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण च ॥१॥ परस्वभावकर्माणि यः प्रशंसति निंदति ॥ स आशु भ्रश्यते स्वार्थादसत्यभिनिवेशतः ॥२॥ तैजसे निद्रयाऽऽपन्ने पिंडस्थो नष्टचेतनः ॥ मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक् पुमान् ॥३॥ किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ॥ वाचोदितं तदनृतं मनसा ध्यातमेव च ॥४॥ छायाप्रत्याह्वयाभासा ह्यसंतोऽप्यर्थकारिणः ॥ एवं देहादयो भावा यच्छंत्यामृत्युतो भयम् ॥५॥ आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ॥ त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥६॥ तस्मान्नह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः ॥ निरूपितेऽयं त्रिविधा निर्मूला भातिरात्मनि ॥ इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥७॥

निष्ठालक्षणात्स्वार्थाद्भ्रश्यते ॥२॥ तदाह । इंद्रियसमूहे निद्रयाऽभिभूते सति, जीवो यथा केवलेन मनसा स्वरूपां मायां प्राप्नोति । मनसि च लीने सति नष्टचेतनः सन् मृत्युं मृत्युतुल्यां सुषुप्तिं वा प्राप्नोति । तथाऽनात्मसंपर्कादात्मनोऽपि स्वरूपभ्रंशो भवति ॥३॥ किंच । अवस्तुनो द्वैतस्य मध्ये कियद्भद्रं कियद्वा अभद्रं न कियदपि । यतो वाचोदितं मनसा ध्यातं च सर्वं मिथ्याभूतमस्ति ॥४॥ यथा प्रतिबिंबं प्रतिध्वनिः शुक्तिरजताद्याभासश्चैते मिथ्याभूता अपि भयादिहेतवो भवंति । एवं देहादिभावा मृत्युपर्यंतं भयं ददति ॥५॥ यत आत्मैव स्वरूपभूतमिदं विश्वं सृजति पालयति संहरति प्रयोज्यकर्त्रा चात्मनैवं सृज्यते पाल्यते ह्रियते च ॥६॥ तस्मादात्मनोऽन्यत्किमपि नास्ति । इदमाध्यात्मिकादि-

१ पूजा–प्रत्यहम् । यात्रा—विशिष्टे पर्वणि बहुजनसमागमः । उत्सवो–वसंतादिमहोत्सवः । २ यथा प्राज्ञसंपर्काद्विश्वस्य भोगक्षयलक्षणो भ्रंशो भवतीत्यर्थः ।

रूपं त्रिविधं गुणमयं दृश्यमात्मनि मायया कृतं विद्धि ॥७॥ एतत् ज्ञानविज्ञाननैपुणं जानन् पुरुषः कमपि न निंदति न च स्तौति । किंतु लोके सूर्यवत्समो भूत्वा विचरति ॥८॥ एतत्प्राप्त्युपायमाह । प्रत्यक्षेण घटादिकं अनुमानेन पृथिव्यादिकं निगमेनाकाशादिकं स्वानुभवेन च सर्वं यदाद्यंतवद्द्वैतं तदसदिति ज्ञात्वा निःसंगो विचरेत् ॥९॥ उद्धव उवाच ॥ हे ईश, आत्मा ज्ञानरूपोऽग्निवत्स्वप्रकाशः परप्रकाशकश्चास्ति । देहस्तु जडः काष्ठवत्प्रकाश्यश्चास्ति । अतोऽयं जन्ममरणरूपः संसार आत्मनो देहस्य च न संभवति । उपलभ्यते च । अतः कस्य स्यात्तद्वद ॥१०॥११॥ श्रीभगवानुवाच ॥ हे सखे, देहेंद्रियप्राणैः सह यावदात्मनः संबंधोऽस्ति तावन्मिथ्याभूतोऽपि संसारः सत्यवत् स्फुरति ॥१२॥ किंच । यथा मिथ्याभूतोऽपि स्वप्नगतो व्याघ्रादिर्द्रष्टुर्भयप्रदो भवति तथा विषयचिंतकस्य पुंसो मिथ्याभूतोपि संसारः सुखदुःखादिप्रदो भवति । न निवर्तते ॥१३॥ तथापि यथा बहु-

एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ॥ न निंदति न च स्तौति लोके चरति सूर्यवत् ॥८॥ प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ॥ आद्यंतवदसज्ज्ञात्वा निःसंगो विचरेदिह ॥९॥ उद्धव उवाच ॥ नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः ॥ अनात्मस्वदृशोरीश कस्य स्यादुपलभ्यते ॥१०॥ आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ॥ अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः ॥११॥ श्रीभगवानुवाच ॥ यावद्देहेंद्रियप्राणैरात्मनः संनिकर्षणम् ॥ संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ॥१२॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥१३॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥१४॥ शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥ अहंकारस्य दृश्यंते जन्ममृत्युश्च नात्मनः ॥१५॥ देहेंद्रियप्राणमनोभिमानो जीवोंऽतरात्मा गुणकर्ममूर्तिः ॥ सूत्रं महानित्युरुधेव गीतः संसार आधावति कालतंत्रः ॥१६॥ अमूलमेतद्बहुरूपरूपितं मनोवचःप्राणशरीरकर्म ॥ ज्ञानासिनोपासनया शितेन छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥१७॥ ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ॥ आद्यंतयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥१८॥

नर्थकरोऽपि स्वप्नः प्रबुद्धस्य मोहाय न कल्पते तथा ज्ञानिनः संसारोऽपि बंधाय न कल्पते ॥१४॥ शोक-हर्ष-भय-क्रोधादयो जन्म मृत्युश्चाहंकारसंबंधयुक्तस्य जीवस्यैव दृश्यंते नात्मनः ॥१५॥ देहेंद्रियप्राण-मनोबुद्धिष्वभिमानवानात्मैव जीवत्वं प्राप्य कालाधीनः सन् संसारे सर्वतो धावति ॥१६॥ एवमहंकारकृतं बंधमुपपाद्येदानीं ज्ञानेन तन्निवृत्तौ मुक्तिरित्याह । वस्तुतो मूलशून्यमज्ञानतो बहुधा प्रकाशितमहंकारबंधनं गुरोरुपासनया तीक्ष्णेन ज्ञानखड्गेन छित्वा तृष्णारहितः सन् मुनिर्विचरति ॥१७॥ तदेव ज्ञानं निरूपयति । यदस्य विश्वस्य कारणं प्रकाशकं च ब्रह्म तदात्मकमेवैतज्जगन्न ततः पृथगित्येवं निश्चयफलो यो विवेको वेद-स्वधर्म-स्वानुभव-गुरूपदेश-तर्कैर्जायते तदेव ज्ञानम् ॥१८॥ ॥

१ सुषुप्त्यादावप्यहं सुखीति यथैतन्यं सुखीति प्रतीत्यभावात् ।

अथ विश्वस्य कारणमात्रात्मकत्वं सदृष्टांतमाह । यथा कटककुंडलादिशब्दैर्मध्ये व्यवहार्यमाणमप्याद्यंतयोर्यत्सुवर्णमस्ति तदेव सत्यं तथाऽस्य विश्वस्य नानाव्यवहारकारणभूतोऽहमेव न तु मत्तः पृथग्विश्वम् ॥१९॥ किंच । जाग्रदाद्यवस्थात्रययुक्तं यन्मनः यच्च तदवस्थाकारणभूतं गुणत्रयं यच्च कारणं अध्यात्मं कार्यमधिभूतं कर्तृ अधिदैवमेतत्त्रिविधं जगद्येन तुर्येणानुगतं सत् प्रकाशते । व्यतिरेकतश्च समाध्यादौ यदस्ति तदेव सत्यं ब्रह्म ॥२०॥ यदुत्पत्तेः पूर्वं नाशादनंतरं च नास्ति तन्मध्येऽपि पृथक् नास्ति । यतो यदन्येन जातं प्रकाशितं च तत्तदेव स्यान्न पृथगिति मे निश्चयोऽस्ति ॥२१॥ प्रपंचस्य ब्रह्मणा अभेदमाह । पूर्वमविद्यमानो रजोद्वारेण ब्रह्मकार्यभूतो योऽयं सर्गोऽवभासते तद्ब्रह्मैव ॥२२॥ एवं स्फुटं यथा भवति तथा ब्रह्मविवेकहेतुभिः प्रत्यक्षादिभिः प्रमाणैर्देहादेरात्मत्वनिरासेन चात्मविषयं संदेहं छित्वा स्वानंदतुष्टः सन् सर्वकामुकेभ्यो निःसंगो भवेत् ॥२३॥ देहा-

यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ॥ तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥१९॥ विज्ञानमेतत्त्रियवस्थमंग गुणत्रयं कारणकार्यकर्तृ ॥ समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥२०॥ न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ॥ भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा ॥२१॥ अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः ॥ ब्रह्म स्वयंज्योतिरतो विभाति ब्रह्मेंद्रियार्थात्मविकारचित्रम् ॥२२॥ एवं स्फुटं ब्रह्मविवेकहेतुभिः परापवादेन विशारदेन ॥ छित्त्वाऽऽत्मसंदेहमुपारमेत स्वानंदतुष्टोऽखिलकामुकेभ्यः ॥२३॥ नात्मा वपुः पार्थिवमिंद्रियाणि देवा ह्यसुर्वायुजलं हुताशः ॥ मनोऽन्नमात्रं धिषणा च सत्वमहंकृतिः खं क्षितिरर्थसाम्यम् ॥२४॥ समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ॥ विक्षिप्यमाणैरुत किं नु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥२५॥ यथा नभो वाय्वनलांबुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते ॥ तथाऽक्षरं सत्वरजस्तमोमलैरहंमतेः संसृतिहेतुभिः परम् ॥२६॥ तथापि संगः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ॥ मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनः कषायः ॥२७॥ यथाऽऽमयोऽसाधु चिकित्सितो नृणां पुनः पुनः संतुदति प्ररोहन् ॥ एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसंगम् ॥२८॥ ॥ ॥

देरात्मत्वनिरासमाह । शरीरमात्मा न भवति । पृथ्वीविकारत्वाद्घटवत् । इंद्रियाणि देवाः प्राणो बुद्धिश्चित्तमहंकारश्चैते आत्मा न भवंति । अन्नपुष्टत्वात् । तथा पृथिव्यादीनि पंच भूतानि शब्दादयो विषयाः प्रकृतिश्चात्मा न भवंति । जडत्वाद्घटवत् ॥२४॥ एवं मम स्वरूपं सुष्ठु विवेचितवतः पुंसः समाहितैरिंद्रियैः को गुणो भवेत् । विक्षेपं प्राप्तैश्च किं दूषणं स्यान्न किमपि । यथा गतैरागतैर्वा मेघै रवेर्न किमपि तद्वत् ॥२५॥ यथा चाकाशं वाय्वग्नि-जलभूमीनां शोषण-दहन-क्लेदन-धूसरत्वादिभिर्गुणैर्ऋतूनां शीतोष्णादिभिश्च गुणैर्न सज्जते । तथाऽहंकारात्परमक्षरं ब्रह्म संसारहेतुभिः सत्व-रजस्तमोमलैर्न युज्यते ॥२६॥ तथापि यावद्भक्तियोगेन मनसो विषयासक्तिर्न निवर्तते तावन्मायिकेष्वपि विषयेषु संगो वर्जनीयः ॥२७॥ अत्र दृष्टांतः । यथा रोगः सम्यक् प्रतिक्रियारहितश्चेत्तर्हि पुनः पुनर्वर्धते । एवं पुत्रादिषु सज्जमानं मनोऽसम्यग्ज्ञानिनं भ्रंशयति ॥२८॥ ॥

ये असम्यक्ज्ञानिनस्ते वंधुशिष्यादिरूपैर्देवप्रेरितैर्विघ्नैर्विहता अपि पूर्वाभ्यासवलेन जन्मांतरे योगं युंजंति । न कर्मविस्तारम् ॥२९॥ विदुषोऽन्यो जंतुः संस्कारादिना प्रेरितः सन् मृत्युपर्यंतं कर्म कृत्वा हर्षशोकादिविकारं प्राप्नोति । विद्वांस्तु देहस्थितोऽपि निरभिमानत्वाद्धर्षविषादादिविकारं न प्राप्नोति ॥३०॥ आस्तां विकाराशंका । यतोऽसौ ज्ञानी तिष्ठंतं आसीनं शयानं मूत्रयंतं गमनादि कुर्वंतं च देहमपि न वेद ॥३१॥ यदि स कदाचिदिंद्रियाणां विषयान् पश्यति तथापि तान् अनुमानेन वाधितान् पश्यति न सत्यत्वेन ॥३२॥ पूर्वमिदं देहादिकं आत्माध्यासेनाविवेकेन स्वीकृतमासीत् । तदेव पुनर्ज्ञानेन निवर्तते । आत्मा तु केनापि रूपेण न गृह्यते नापि च त्यज्यते । अत आत्मनो विकारो नास्ति ॥३३॥ अत्र दृष्टांतः । यथा सूर्योदयोंऽधकारं हन्यात् न तु पूर्वमेव स्थितं घटादिकं पुनर्विधत्ते । एवं ममात्मविद्या पुरुषस्य वुद्धेरज्ञानं हन्यात् ॥३४॥ एष आत्मा निर्विकारः स्वयं-

कुयोगिनो ये विहतांतरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ॥ ते प्राक्तनाभ्यासबलेन भूयो युंजंति योगं न तु कर्मतंत्रम् ॥२९॥ करोति कर्म क्रियते च जंतुः केनाप्यसौ चोदित आनिपातात् ॥ न तत्र विद्वान्प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥३०॥ तिष्ठंतमासीनमुत व्रजंतं शयानमुक्षंतमदंतमन्नम् ॥ स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्न वेद॥३१॥यदि स्म पश्यत्यसदिंद्रियार्थं नानानुमानेन विरुद्धमन्यत् ॥ न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥३२॥ पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमंग ॥ निवर्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा॥३३॥ यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु सद्विधत्ते ॥ एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥३४॥ एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः ॥ एकोऽद्वितीयो वचसां विरामे येनेपिता वागसवश्चरंति ॥३५॥ एतावानात्मसंमोहो यद्विकल्पस्तु केवले ॥ आत्मनृते स्वमात्मानमवलंबो न यस्य हि ॥३६॥ यन्नामाकृतिभिर्ग्राह्यं पंचवर्णमवाधितम् ॥ व्यर्थे नाप्यर्थवादोऽयं द्वयं पंडितमानिनाम् ॥३७॥ योगिनोऽपक्वयोगस्य युंजतः काय उत्थितैः ॥ उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥३८॥ योगधारणया कांश्चिदासनैर्धारणान्वितैः ॥ तपोमंत्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत् ॥३९॥ कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः ॥ योगेश्वरानुवृत्त्या वा हन्यादशुभदान् शनैः ॥४०॥ ॥ ॥ ॥

ज्योतिरजश्च । येन प्रेरिता वाक्प्राणादयः स्वस्वव्यापारे प्रवर्तंते ॥३५॥ भेदरहिते आत्मनि यद्भेददर्शनं एतावानेव मनसो भ्रमोऽस्ति । यतः स्वस्यात्मानं विना भ्रमस्याश्रयो नास्ति ॥३६॥ यन्नामरूपोपलक्षितं पंचभूतात्मकं द्वैतं तत्सत्यमिति पंडितमानिनां दुराग्रहिणामेव व्यर्थं प्रतीतिर्भवति न तत्त्वज्ञानिनाम् ॥३७॥ एवं ज्ञानयोगं निरूप्याथ योगनिष्ठस्य विघ्नप्रतीकारमाह । योगं युंजतः पुंसो देहो यदि रोगाद्युपसर्गैरभिभूयते तर्हि तत्प्रतीकारं शृणु ॥३८॥ योगी कांश्चित्संतापशैत्यादीनुपसर्गान् सोम-सूर्यादिधारणया दहेत् । वातरोगादीन् वायुधारणान्वितैरासनैः, पाप-ग्रह-सर्पादिकृतान् तपोमंत्रौषधैः, कामादीन् मम ध्याननामसंकीर्तनादिभिः दंभमानादींश्च योगेश्वरसेवया हन्यात् ॥३९॥४०॥ ॥

केचित्तु एतैरन्यैश्चोपायैर्देहमेव सुकल्पं जरारोगरहितं कृत्वा परकायप्रवेशादिसिद्धये तत्तद्धारणारूपं योगं युंजंति तत्प्राज्ञैरादरणीयं नहि । यतस्तेषां श्रमो व्यर्थो भवति । देहस्य नश्वरत्वात् ॥४१॥४२॥ क्वचित्समाध्यंगत्वेनापि प्राणायामादियोगं सेवतः पुंसो देहो जरारोगरहितो दृश्यते । सत्यं । तथापि मत्परः समाधिमुत्सृज्य तां देहसिद्धिं न विश्वसेत् ॥४३॥ निःस्पृहो योगी इमां योगचर्यामाचरन् विघ्नैरविहतो भूत्वा स्वानंदपूर्णो भवति ॥४४॥ इति श्रीमद्भागवतचूर्णिकायां एकादशस्कंधे अष्टाविंशोऽध्यायः ॥२८॥ ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः । भक्तियोगस्तमेवाह स्वभक्ताय समासतः ॥१॥ उद्धव उवाच ॥ हे अच्युत, अवशीकृतचित्तस्य पुंस इमां योगचर्यां दुष्करामहं मन्ये । अतोऽनायासेन पुमान् येनेमां सिद्धिं प्राप्नुयात्तमुपायं मे ब्रूहि ॥१॥ हे कृष्ण, मनोनिग्रहं कुर्वतो योगिनो मनसोऽनिग्रहात् प्रायः क्लिश्यंति ॥२॥ अतो विवेकनिपुणास्तव चरणकम-

केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरम् ॥ विधाय विविधोपायैरथ युंजंति सिद्धये ॥४१॥ नहि तत्कुशलादृत्यं तदायासो ह्यपार्थकः ॥ अंतवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥४२॥ योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् ॥ तच्छ्रद्दध्यान्न मतिमान्योगमुत्सृज्य मत्परः ॥४३॥ योगचर्यामिमां योगी विचरन्मद्व्यपाश्रयः ॥ नांतरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥४४॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधेऽष्टाविंशोऽध्यायः ॥२८॥ उद्धव उवाच ॥ सुदुस्तरामिमां मन्ये योगचर्यामनात्मनः ॥ यथांजसा पुमान्सिद्ध्येत्तन्मे ब्रूह्यंजसाऽच्युत ॥१॥ प्रायशः पुंडरीकाक्ष युंजंतो योगिनो मनः ॥ विषीदंत्यसमाधानान्मनोनिग्रहकर्शिताः ॥२॥ अथात आनंददुघं पदांबुजं हंसाः श्रयेरन्नरविंदलोचन ॥ सुखं नु विश्वेश्वर योगकर्मभिस्त्वन्माययाऽमी विहता न मानिनः ॥३॥ किं चित्रमच्युत तवैतदशेषबंधो दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ॥ योऽरोचयत्सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ॥४॥ तं त्वाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत को नु ॥ को वा भजेत्किमपि विस्मृतयेऽनुभूत्यै किं वा भवेन्न तव पादरजोजुषां नः ॥५॥ नैवोपयंत्यपचितिं कवयस्तवेश ब्रह्मायुषापि कृतमृद्धमुदः स्मरंतः ॥ योऽतर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥६॥ श्रीशुक उवाच ॥ इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ॥ गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेममनोहरस्मितः ॥७॥ ॥ ॥

लमेव सुखेन सेवंते ॥३॥ हे अच्युत, अनन्यशरणेषु दासेषु तव यत्तदंकितत्वं तदाश्चर्यं न भवति । यतस्त्वं ब्रह्मादिदेवैर्वंद्योऽपि श्रीरामरूपेण वानरैः सहापि सख्यं कृतवान् ॥४॥ अतो बलिप्रह्लादादिषु त्वया कृतमनुग्रहं जानन् भक्तानां सर्वार्थदं जगदात्मानं सुसेव्यं त्वां को नु न भजेत् ॥५॥ हे कृष्ण, त्वत्कृतमुपकारं स्मरंतो ज्ञानिनो ब्रह्मायुषाऽपि तवानृण्यं न प्राप्नुवंति । यतस्त्वं बहिर्गुरुरूपेण अंतश्चांतर्यामिरूपेण नृणां विषयवासनां दूरीकुर्वन् निजं रूपं प्रकटयसि ॥६॥ श्रीशुक उवाच ॥ एवमुद्धवेन पृष्टः श्रीकृष्णः सप्रेममनोहरं स्मितं कृत्वा जगाद ॥७॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीभगवानुवाच ॥ हे उद्धव, तुभ्यं मम धर्मान् वक्ष्यामि । यान् श्रद्धया आचरन् मर्त्यो मृत्युं जयति ॥८॥ हे सखे, पुमान् मां स्मरन् मत्प्रीत्यर्थं सर्वाणि कर्माणि कुर्यात् ॥९॥ तथा पुण्यान् देशान् देवमनुष्यादिषु ये मद्भक्तास्तेषामाचरणानि चाश्रयेत ॥१०॥ किंच । मम पर्वयात्रामहोत्सवान् स्वयमन्यैर्वा कारयेत् ॥११॥ तथा सर्वभूतेष्वात्मनि च स्थितमात्मानमीश्वरं मामेवेक्षेत ॥१२॥ तथा ज्ञानदृष्टिमाश्रित्य सर्वभूतानि मद्भावेन संमानयेत् ॥१३॥ ब्राह्मणे पुल्कसे चेति जातितो वैषम्ये सति, तथा ब्रह्मस्वहारिणि ब्राह्मणेभ्यो दातरीति कर्मतः, सूर्ये विस्फुलिंगे चेति गुणतः, शांते क्रूरे चेति स्वभावतश्च वैषम्ये सति समं मामेव यः पश्यति स पंडितो मम मान्यः ॥१४॥ एवं मनुष्येष्वीश्वरदृष्टिं कुर्वतः

श्रीभगवानुवाच ॥ हंत ते कथयिष्यामि मम धर्मान्सुमंगलान् ॥ यान् श्रद्धयाऽऽचरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥८॥ कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ॥ मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥९॥ देशान्पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् ॥ देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥१०॥ पृथक् सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् ॥ कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥११॥ मामेव सर्वभूतेषु बहिरंतरपावृतम् ॥ ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥१२॥ इति सर्वाणि भूतानि मद्भावेन महाद्युते ॥ सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः ॥१३॥ ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिंगके ॥ अक्रूरे क्रूरके चैव समदृक्पंडितो मतः ॥१४॥ नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ॥ स्पर्धाऽसूयातिरस्काराः साहंकारा वियंति हि ॥१५॥ विसृज्य स्मयमानान् स्वान् दृशं व्रीडां च दैहिकीम् ॥ प्रणमेद्दंडवद्भूमावाश्वचांडालगोखरम् ॥१६॥ यावत्सर्वेषु भूतेषु मद्भावो नोपजायते ॥ तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥१७॥ सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ॥ परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः ॥१८॥ अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ॥ मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥१९॥ न ह्यंगोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि ॥ मया व्यवसितः सम्यङ् निर्गुणत्वादनाशिषः ॥२०॥ यो यो मयि परे धर्मः कल्पते निष्फलाय चेत् ॥ तदायासो निरर्थः स्याद्भयादेरिव सत्तम ॥२१॥ ॥ ॥ ॥

पुंसोऽहंकारसहिताः स्पर्धाऽसूयातिरस्कारा नश्यंति ॥१५॥ हसतः स्वान् सखीन् तथा देहस्थितामहमुत्तमः स तु नीच इति दृष्टिं लज्जां च त्यक्त्वा श्वचांडालपर्यंतं सर्वान् भूमौ दंडवत् प्रणमेत् ॥१६॥ यावत् सर्वभूतेषु मद्भावो नोपजायते तावदेवमुपासीत ॥१७॥ एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति ॥१८॥ हे उद्धव, सर्वोपायेष्वयमेव श्रेष्ठ उपायः । यः सर्वेषु मनोवाग्देहवृत्तिभिर्मद्भाव इति ॥१९॥ हे उद्धव, एवं निष्कामस्य धर्मस्यारंभे वैगुण्यादिभिरणुमात्रोऽपि दोषो नास्त्येव । यतो ममैव निर्गुणत्वादयं धर्मः सम्यक् निश्चितोऽस्ति ॥२०॥ किंच । लौकिकोऽपि यो यो व्यर्थ आयासः स मयि निष्कामतया समर्पितश्चेत्तर्हि धर्म एव स्यात् । किं पुनर्वक्तव्यं मद्धर्मस्य न ध्वंस इति ॥२१॥ ॥

१ यथा भयशोकादेर्हेतोः पलायनाक्रंदनादिः क्लेशः तद्वत् ।

असत्येन विनाशिना मनुष्यदेहेनेह सत्यं मां प्राप्नोतीति यत् स एव विवेकिनां विवेकश्चतुराणां च चातुर्यमिति ॥२२॥ हे उद्धव, एवं ब्रह्मविद्यायाः संक्षेपो विस्तरश्च मया ते कथितः ॥२३॥ स्पष्टयुक्तिसहितं ज्ञानं च ते वारंवारं कथितम् । एतद्विज्ञाय पुमान् गतसंशयः सन् मुच्यते ॥२४॥ एतज्ज्ञानं यो धारयेत्स परं ब्रह्म प्राप्नोति ॥२५॥ यश्चैतन्मद्भक्तेषु दद्यात्तस्य ज्ञानोपदेष्टुरहमात्मानं ददामि ॥२६॥ य एतदाख्यानमुच्चैः पठेत् स ज्ञानदीपेनाहरहर्मां पश्यन् शुद्धो भवेत् ॥२७॥ य एतच्छ्रद्धया नित्यं श्रृणुयात् स कर्मभिर्न बद्ध्यते ॥२८॥ हे सखे उद्धव, त्वया ब्रह्म सम्यगवधारितं किम् । तव मोहः मनोगतः शोकश्च गतः किम् ॥२९॥ हे सखे, एतत्त्वया दांभिकाय नास्तिकाय वंचकायाभक्ताय च न दीयताम् ॥३०॥ एतैर्दोषैर्हीनाय ब्राह्मणभक्ताय प्रियाय साधवे च ब्रूयात् । शूद्राणां योषितां च यदि भक्तिः स्यात्तर्हि ब्रूयात् ॥३१॥ इदं ज्ञात्वा जिज्ञासोर्ज्ञातव्यं नावशिष्ये ।

एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ॥ यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ॥२२॥ एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः ॥ समासव्यासविधिना देवानामपि दुर्गमः ॥२३॥ अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ॥ एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥२४॥ सुविविक्तं तव प्रश्नं मयैतदपि धारयेत् ॥ सनातनं ब्रह्म गुह्यं परं ब्रह्माधिगच्छति ॥२५॥ य एतन्मम भक्तेषु संप्रदद्यात्सुपुष्कलम् ॥ तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥२६॥ य एतत्समधीयीत पवित्रं परमं शुचि ॥ स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥२७॥ य एतच्छ्रद्धया नित्यमव्यग्रः श्रृणुयान्नरः ॥ मयि भक्तिं परां कुर्वन्कर्मभिर्न स बध्यते ॥२८॥ अप्युद्धव त्वया ब्रह्म सखे समवधारितम् ॥ अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥२९॥ नैतत्त्वया दांभिकाय नास्तिकाय शठाय च ॥ अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥३०॥ एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ॥ साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम् ॥३१॥ नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ॥ पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥३२॥ ज्ञाने कर्मणि योगे च वार्तायां दंडधारणे ॥ यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः ॥३३॥ मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ॥ तदाऽमृतत्वं प्रतिपद्यमानो मयाऽऽत्मभूयाय च कल्पते वै ॥३४॥ श्रीशुक उवाच ॥ स एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ॥ बद्धांजलिः प्रीत्युपरुद्धकंठो न किंचिदूचेऽश्रुपरिप्लुताक्षः ॥३५॥

यथा अमृतं पीत्वा पातव्यं नावशिष्यते तद्वत् ॥३२॥ हे उद्धव, ज्ञाने मोक्षः । विहिते कर्मणि धर्मः । स्वाभाविके तु कर्मणि कामः । कृष्यादिवार्तायामर्थः । एवं नृणां यावान् चतुर्विधोऽर्थोऽस्ति तावान् सर्वोऽपि तेऽहमेवास्मि ॥३३॥ यदा मनुष्यस्त्यक्तसर्वकर्मा सन् मे निवेदितात्मा भवति तदा स मम स्वसमानत्वं कर्तुमिष्टो भवति । ततो मोक्षं प्रतिपद्यमानः सन् मत्समानैश्वर्यप्राप्तये योग्यो भवति ॥३४॥ श्रीशुक उवाच ॥ हे राजन्, एवं श्रीकृष्णेन दर्शितयोगमार्गः स उद्धवः कृष्णवचः श्रुत्वा बद्धांजली रुद्धकंठोऽश्रुव्याप्तनेत्रः सन् न किंचिदूचे ॥३५॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततः प्रेम्णा क्षुब्धं चित्तं धैर्येण स्थिरं कृत्वा तच्चरणकमलं शीर्ष्णा स्पृशन् प्राह ॥३६॥ उद्धव उवाच ॥ हे कृष्ण, मया मोहांधकारो य आश्रित आसीत् स तव सन्निधानेनैव विद्रावितः। सूर्यसमीपं प्राप्तस्य पुंसः शीतमंधकारो भयं च पीडां कुर्वंति किं नैव कुर्वंति ॥३७॥ तथापि कृपालुना त्वया दासाय मे विज्ञानमयो दीपः समर्पितः। अतस्त्वया कृतमनुग्रहं जानन् को नाम पुमान् त्वदीयं चरणं हित्वाऽन्यच्छरणमाश्रयेत् ॥३८॥ किंच। यादवेषु त्वया यः स्वमायया स्नेहपाशः प्रसारितः स त्वयैव उपदिष्टात्मतत्त्वज्ञान-शस्त्रेण छिन्नः ॥३९॥ अतो हे महायोगिन्, तुभ्यं नमोऽस्तु। शरणागतं मां यथा त्वच्चरणकमले रतिः स्यात्तथा शिक्षय ॥४०॥ श्रीभगवानुवाच ॥ हे उद्धव, मया नियुक्तस्त्वं

विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन्बहुमन्यमानः ॥ कृतांजलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविंदम् ॥३६॥ उद्धव उवाच ॥ विद्रावितो मोहमहांधकारो य आश्रितो मे तव सन्निधानात् ॥ विभावसोः किं नु समीपगस्य शीतं तमो भीः प्रभवंत्यजाद्य ॥३७॥ प्रत्यर्पितो मे भवताऽनुकंपिना भृत्याय विज्ञानमयः प्रदीपः ॥ हित्वा कृतज्ञस्तव पादमूलं कोऽन्यत्समीयाच्छरणं त्वदीयम् ॥३८॥ वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यंधकसात्वतेषु ॥ प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥३९॥ नमोऽस्तु ते महायोगिन्प्रपन्नमनुशाधि माम् ॥ यथा त्वच्चरणांभोजे रतिः स्यादनपायिनी ॥४०॥ श्रीभगवानुवाच ॥ गच्छोद्धव मयाऽऽदिष्टो बदर्याख्यं ममाश्रमम्[1] ॥ तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥४१॥ ईक्षयाऽलकनंदाया विधूताशेषकल्मषः ॥ वसानो वल्कलान्यंग वन्यभुक्सुखनिःस्पृहः ॥४२॥ तितिक्षुर्द्वंद्वमात्राणां सुशीलः संयतेंद्रियः ॥ शांतः समाहितधिया ज्ञानविज्ञानसंयुतः ॥४३॥ मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन् ॥ मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ॥ अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥४४॥ श्रीशुक उवाच ॥ स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः ॥ शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिंचदद्वंद्वपरोऽप्यपक्रमे ॥४५॥ सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ॥ कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ॥४६॥ ॥ ॥

बदरिकाश्रमं गच्छ। तत्र मत्पादतीर्थे गंगाजले स्नानाचमनादिना ॥४१॥ निष्पापः सन् वल्कलवस्त्राणि धारयित्वा वन्यफलभोजनः ॥४२॥ शीतोष्णादिसहनशीलः शांतो ज्ञानविज्ञानयुक्तश्च सन् ॥४३॥ मत्तो यदनुशिक्षितं तदेकांते विचारयन् मयि वाक्चेतसी निधाय मद्धर्मरतो भव। ततस्त्रिगुणात्मिका गतीरतिक्रम्य मामेष्यसि ॥४४॥ श्रीशुक उवाच ॥ एवं श्रीकृष्णेनोक्त उद्धवस्तं प्रदक्षिणीकृत्य प्रणम्य च पादयोः शिरो निधाय सुखदुःखविनिर्मुक्तोऽपि निर्गमनसमयेऽश्रुकलाभिस्तौ पादौ न्यषिंचत् ॥४५॥ ततः श्रीकृष्णवियोगभीतोऽत एव तं परिहातुमशक्नुवन् अतिविह्वलः सन् कष्टं प्राप। तदा श्रीकृष्णेनैव कृपया दत्ते पादुके मूर्ध्नि धृत्वा पुनः पुनर्नत्वा ययौ ॥४६॥ ॥ ॥

१ अत्र च पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षम इत्यादि तृतीयस्कंधोपक्रमोक्तानुसारेण बदरिकाश्रमं गच्छन्नुद्धवो भगवतः प्रभासयात्रामुपश्रुत्य शनैः पृष्ठतो गतः सन्नुपसंहृतनिजकुलं भगवंतमेकांते दृष्ट्वा तत्कालंप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टतत्त्वमाकलय्य तदाज्ञातो ययाविति द्रष्टव्यम्।

ततः कृष्णं हृदि निधाय बदर्याश्रमं गत्वा तपः कृत्वा हरिणोक्तां गतिं प्राप ॥४७॥ य इदं श्रीकृष्णेन भक्तायोद्धवाय प्रोक्तं ज्ञानामृतमीषदपि सेवित्वा वर्तते स विमुच्यत इति किं वक्तव्यम् । तत्संगाज्जगदपि मुच्यते ॥४८॥ एवं कृतोपदेशं जगद्गुरुं प्रणमति । यः स्वभक्तानां संसारं जरारोगादिनिमित्तं भयं चापहंतुं वेदादेकं ज्ञानामृतं समुद्राच्चैकं पेयामृतमुद्धृतवान् । तच्चोभयममृतं यथायथं उद्धवादीन् इंद्रादींश्च सेवकवर्गान् पाययामास । तं श्रीकृष्णसंज्ञकं पुराणपुरुषमहं नतोऽस्मि ॥४९॥ इति श्रीमद्भा० चू० एका० एकोनत्रिंशोऽध्यायः ॥२९॥ त्रिंशे तु प्रागुपक्षिप्तमौसलच्छलतो हरिः । स्वधाम गंतुमन्विच्छन् संजहार निजं कुलम् ॥१॥ राजोवाच ॥ हे ब्रह्मन्, तत उद्धवे वनं गते सति भगवान् द्वारकायां किमकरोत् ॥१॥ किंच । ब्रह्मशापयुक्ते स्वकुले सति कृष्णः सर्वनेत्राणां प्रियां तनुं कथं तत्याज ॥२॥ यस्मिन् रूपे संलग्नं नेत्रं परावर्तयितुं गोप्यो न शेकुः । यच्च

ततस्तमंतर्हृदि संनिवेश्य गतो महाभागवतो विशालाम् ॥ यथोपदिष्टां जगदेकबंधुना तपः समास्थाय हरेरगाद्गतिम् ॥४७॥ य एतदानंदसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम् ॥ कृष्णेन योगेश्वरसेवितांघ्रिणा सच्छ्रद्धयाऽऽसेव्य जगद्विमुच्यते ॥४८॥ भवभयमपहंतुं ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृंगवद्वेदसारम् ॥ अमृतमुदधितश्चापाययद्भृत्यवर्गान्पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि ॥४९॥ इति श्रीम० महापुराणे एकादशस्कंधे एकोनत्रिंशोऽध्यायः ॥२९॥ राजोवाच ॥ ततो महाभागवत उद्धवे निर्गते वनम् ॥ द्वारवत्यां किमकरोद्भगवान्भूतभावनः ॥१॥ ब्रह्मशापापसंसृष्टे स्वकुले यादवर्षभः ॥ प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥२॥ प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नम् ॥ यच्छ्रीर्वाचां जनयति रतिं किंनु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः[1] ॥३॥ श्रीशुक उवाच ॥ दिवि भुव्यंतरिक्षे च महोत्पातान्समुत्थितान् ॥ दृष्ट्वाऽऽसीनान्सुधर्मायां कृष्णः प्राह यदूनिदम् ॥४॥ श्रीभगवानुवाच ॥ एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ॥ (शापश्च नः कुलस्यासीद्ब्राह्मणेभ्यो दुरत्ययः ॥) मुहूर्तमपि न स्थेयमत्र नो यदुपुंगवाः ॥५॥ स्त्रियो बालाश्च वृद्धाश्च शंखोद्धारं व्रजंत्वितः ॥ वयं प्रभासं यास्यामो यत्र प्रत्यक्सरस्वती ॥६॥ तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ॥ देवताः पूजयिष्यामः स्नपनालेपनार्हणैः ॥७॥

कर्णरंध्रेण प्रविष्टं सद्भक्तानां चित्ते लिखितचित्रमिव तिष्ठति । यच्चार्जुनरथे स्थितं दृष्ट्वा युद्धे ये मृतास्ते तत्सारूप्यं प्राप्ताः । तत्केन प्रकारेण तत्याज ॥३॥ श्रीशुक उवाच ॥ हे नृप, ततो दिवि भुवि अंतरिक्षे च सूर्यपरिवेष-भूकंप-दिग्दाहादीनुत्पातान् दृष्ट्वा सभायां कृष्णो यदूनाह ॥४॥ श्रीभगवानुवाच ॥ हे यदुश्रेष्ठाः, एते घोरा उत्पाता दृश्यंते । ( नः कुलस्य दुस्तरो ब्राह्मणशापश्चासीत् ) अतोऽस्माभिरत्र मुहूर्तमपि न स्थेयम् ॥५॥ तस्मात् स्त्रीबालवृद्धा इतः शंखोद्धारं यांतु । वयं तु यत्र पश्चिमवाहिनी सरस्वती नदी अस्ति । तत्प्रभासक्षेत्रं यास्यामः ॥६॥ तत्र स्नात्वोपोष्य शुद्धाः संतो देवताः स्नानलेपनादिभिः पूजयिष्यामः ॥७॥ ॥ ॥ ॥

१ अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परमित्येवमुक्तप्रकाराम् ।

ब्राह्मणांश्च गो-भू-हिरण्य-वस्त्रादिभिः पूजयिष्यामः ॥८॥ अयं विधिररिष्टनाशको मंगलकारकश्चास्ति ॥९॥ एवं कृष्णवचः श्रुत्वा यादवास्तथेत्युक्त्वा नौभिः समुद्रमुत्तीर्य रथैः प्रभासं ययुः ॥१०॥ तत्र गत्वा भगवदुक्तं सर्वं श्रेयःसाधनं चक्रुः ॥११॥ ततस्तत्र सुरसं मदिराविशेषं पीत्वा दैवेन भ्रष्टबुद्धयो बभूवुः ॥१२॥ ततो मद्यपानमत्तानां कृष्णमायया मूढानां तेषां कलहोऽभूत् ॥१३॥ ततस्ते समुद्रतीरे शस्त्रधारिणो भूत्वा धनुर्बाण-भल्ल-गदादिभिर्युयुधुः ॥१४॥ तदा रथकुंजरादिभिः कृतवाहनाः संतो मिथो मिलित्वा बाणैर्न्यघ्नन् । वने गजा दंतैरिव ॥१५॥ तत्र युद्धे प्रद्युम्नसांबौ अक्रूरभोजौ अनिरुद्धसात्यकी सुभद्रसंग्रामजितौ सुमित्रासुरथौ ॥ १६ ॥ अन्ये च ये निशठोल्मुकादयः शतजिद्भानु-

ब्राह्मणांस्तु महाभागान्कृतस्वस्त्ययना वयम् ॥ गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥८॥ विधिरेष ह्यरिष्टघ्नो मंगलायनमुत्तमम् ॥ देवद्विजगवां पूजा भूतेषु परमो भवः ॥९॥ इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ॥ तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥१०॥ तस्मिन्भगवताऽऽदिष्टं यदुदेवेन यादवाः ॥ चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥११॥ ततस्तस्मिन्महापानं पपुर्मैरेयकं मधु ॥ दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः ॥१२॥ महापानाभिमत्तानां वीराणां दृप्तचेतसाम् ॥ कृष्णमायाविमूढानां संघर्षः सुमहानभूत् ॥१३॥ युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ॥ धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥१४॥ [1]पतत्पताकै रथकुंजरादिभिः खरोष्ट्रगोभिर्महिषैर्नरैरपि ॥ मिथः समेत्याश्वतरैः सुदुर्मदा न्यहन् शरैर्दद्भिरिव द्विपा वने ॥१५॥ प्रद्युम्नसांबौ युधि रूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ॥ सुभद्रसंग्रामजितौ सुदारुणौ गदौ सुमित्रासुरथौ समीयतुः ॥१६॥ अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमुख्याः ॥ अन्योऽन्यमासाद्य मदांधकारिता जघ्नुर्मुकुंदेन विमोहिता भृशम् ॥१७॥ दाशार्हवृष्ण्यंधकभोजसात्वता मध्वर्बुदा माथुरशूरसेनाः ॥ विसर्जनाः कुकुराः कुंतयश्च मिथस्ततस्तेऽथ विसृज्य सौहृदम् ॥१८॥ पुत्रा अयुद्ध्यन्पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ॥ मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातींस्त्वहन् ज्ञातय एव मूढाः ॥१९॥ शरेषु क्षीयमाणेषु भज्यमानेषु धन्वसु ॥ शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः ॥२०॥ ता वज्रकल्पा ह्यभवन्परिघा मुष्टिना भृताः ॥ जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते ॥२१॥ प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ॥ हंतुं कृतधियो राजन्नापन्ना आततायिनः ॥२२॥

मुख्यास्तेऽन्योन्यं मिलित्वा जघ्नुः ॥१७॥ ततो दाशार्ह-वृष्ण्यंधकादयोऽर्बुद-शूरसेनादयश्च सौहृदं हित्वा मिथो जघ्नुः ॥१८॥ पुत्राः पितृभिः, भ्रातरो भ्रातृभिः, भ्रातृपुत्राः पितृव्यैः, भागिनेया मातुलैः, मित्राणि मित्रैः । एवं मूढाः सर्वे परस्परं हतवंतः ॥१९॥ एवं बाणेषु धनुःषु शस्त्रेषु च क्षीणेषु सत्सु मुष्टिभिरेरका जघ्नुः ॥२०॥ ता वज्रतुल्या अभवन् । ताभिरेरकाभिस्ते कृष्णेन वार्यमाणा अपि मोहिताः संतः कृष्णं बलरामं च प्रतिपक्षं मत्वा जघ्नुः ॥२१॥२२॥ ॥ ॥ ॥

[1] नचान्यथा अस्मिन् स्थाने मद्यपानमुचितमिति भावः ।

अथ तौ कृष्णरामावपि क्रुद्धौ भूत्वा एरकामुष्टिरूपौ परिघावुद्यम्य तान् जघ्नतुः ॥२३॥ एवं तेषां यादवानां स्पर्धानिमित्तो यः क्रोधो जातः स कुलं क्षयं निन्ये । यथा वेणुघर्षणजातोऽग्निर्वनं क्षयं नयति तद्वत् ॥२४॥ एवं सर्वेषु कुलेषु नष्टेषु कृष्णो भुवो भारो गत इति मेने ॥२५॥ ततो रामः समुद्रतीरे परमपुरुषध्यानलक्षणं योगमास्थायात्मन्यात्मानं संयोज्य स्वां मनुष्यरूपतां जहौ ॥२६॥ एवं रामनिर्याणं दृष्ट्वा कृष्णः पिप्पलमूले तूष्णीं निषसाद ॥२७॥ तदा स श्रीकृष्णः स्वकांत्या दिशः प्रकाशयन् चतुर्भुजं रूपं दधौ ॥२८॥ कथंभूतम् । श्रीवत्सलांछनं मेघश्यामं पीतांबरयुग्मेन युतम् ॥२९॥ नीलकुंतलमंडितं स्फुरन्मकरकुंडलम् ॥ ३० ॥ कटिसूत्र-ब्रह्मसूत्र-किरीटां-गद-हार-नूपुरकौस्तुभैर्विरा-

अथ तावपि संक्रुद्धावुद्यम्य कुरुनंदन ॥ एरकामुष्टिपरिघौ चरंतौ जघ्नतुर्युधि ॥२३॥ ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ॥ स्पर्धाक्रोधः क्षयं निन्ये वैष्णवोऽग्निर्यथा वनम् ॥२४॥ एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ॥ अवतारितो भुवो भार इति मेनेऽवशेषितः ॥२५॥ रामः समुद्रवेलायां योगमास्थाय पौरुषम् ॥ तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि ॥२६॥ रामनिर्याणमालोक्य भगवान् देवकीसुतः ॥ निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥२७॥ बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया ॥ दिशो वितिमिराः कुर्वन्विधूम इव पावकः ॥२८॥ श्रीवत्सांकं घनश्यामं तप्तहाटकवर्चसम् ॥ कौशेयांबरयुग्मेन परिवीतं सुमंगलम् ॥२९॥ सुंदरस्मितवक्त्राब्जं नीलकुंतलमंडितम् ॥ पुंडरीकाभिरामाक्षं स्फुरन्मकरकुंडलम् ॥३०॥ कटिसूत्रब्रह्मसूत्रकिरीटकटकांगदैः ॥ हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥३१॥ वनमालापरीतांगं मूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौ दक्षिणे पादमासीनं पंकजारुणम् ॥३२॥ मुसलावशेषायःखंडकृतेषुर्लुब्धको जरा ॥ मृगास्याकारं तच्चरणं विव्याध मृगशंकया ॥३३॥ चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ॥ भीतः पपात शिरसा पादयोरसुरद्विषः ॥३४॥ अजानता कृतमिदं पापेन मधुसूदन ॥ क्षंतुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥३५॥ यस्यानुस्मरणं नृणामज्ञानध्वांतनाशनम् ॥ वदंति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो ॥३६॥ तन्माऽऽशु जहि वैकुंठ पाप्मानं मृगलुब्धकम् ॥ यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥३७॥ यस्यात्मयोगरचितं न विदुर्विरिंचो रुद्रादयोऽस्य तनयाः पतयो गिरां ये ॥ त्वन्मायया पिहितदृष्टय एतदंजः किं तस्य ते वयमसद्गतयो गृणीमः ॥३८॥

जितम् ॥३१॥ वनमालया स्वायुधैश्च युतम् । एतादृशं रूपं धृत्वा दक्षिणे ऊरौ वामपादं कृत्वा श्रीकृष्ण उपविष्टः ॥३२॥ लोहमुसलस्य अवशेषं खंडं बाणाग्रे कृत्वा स्थितः कश्चिज्जरानामको लुब्धकः तदा कृष्णचरणं हरिणमुखसदृशं दृष्ट्वा तं तेन बाणेन मृगशंकया विव्याध ॥३३॥ ततः समीपमागत्य चतुर्भुजं तं श्रीकृष्णं दृष्ट्वा कृतापराधो भीतः सन् तच्चरणयोः पतित्वा जगाद ॥३४॥ हे कृष्ण, अजानता मयेदं कृतं तत्क्षंतुमर्हसि ॥३५॥ हे प्रभो, यस्य ते स्मरणं नृणां पापनाशकं भवति तस्य तव मयाऽपराधः कृतः ॥३६॥ अतः पाप्मानं मां जहि । एवं कृते पुनः सत्पुरुषाणामपराधमहं न कुर्याम् ॥३७॥ हे कृष्ण, यस्य ते मायाचरितं ब्रह्मादयो न विदुः । एवंभूतं त्वां पापिष्ठा वयं कथं वर्णयामः । अतो

मां जहि ॥३८॥ श्रीभगवानुवाच ॥ हे लुब्धक, त्वं माभैः । उत्तिष्ठ । इदं मदिच्छयैव त्वया कृतम् । अतो मदाज्ञया त्वं स्वर्गं याहि ॥३९॥ एवं श्रीकृष्णेनाज्ञापितः स लुब्धकः श्रीकृष्णं त्रिः परिक्रम्य नत्वा विमानेन स्वर्गं ययौ ॥४०॥ एतस्मिन्नेव समये दारुकः कृष्णमार्गमन्विच्छन् तुलसीगंधवायुं घ्रात्वा कृष्णसमीपं ययौ ॥४१॥ तत्र मूर्तिमद्भिरायुधैर्वेष्टितमश्वत्थमूले कृतासनं कृष्णं दृष्ट्वा स्नेहाश्रुपूर्णनयनः सन् स दारुको रथादुत्तीर्य तत्पादयोः पपात आह च॥४२॥ हे प्रभो, तव चरणमपश्यतो मे दृष्टिरंधकारं प्रविष्टा। अतो दिशो न जाने । शांतिं च न लभे ॥४३॥ एवं दारुके ब्रुवति सति साश्वध्वजो रथस्तस्य पश्यतः सतः आकाशमुत्पपात ॥४४॥ तदनु तदायुधानि जग्मुः । तेन विस्मितं दारुकं कृष्ण आह ॥४५॥ हे दारुक, त्वं द्वारकां गत्वा ज्ञातीनां परस्परं नाशं बलरामस्य योगमार्गेण निर्याणं मद्दशां च बंधुभ्यो ब्रूहि ॥४६॥ किंच । भवद्भिर्द्वारकायां न स्थेयम् । यतो मया

श्रीभगवानुवाच ॥ मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे ॥ याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥३९॥ इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ॥ त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥४०॥ दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम् ॥ वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥४१॥ तं तत्र तिग्मद्युभिरायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ॥ स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य स बाष्पलोचनः ॥४२॥ अपश्यतस्त्वच्चरणांबुजं प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा ॥ दिशो न जाने न लभे च शांतिं यथा निशायामुडुपे प्रनष्टे ॥४३॥ इति ब्रुवति सूते वै रथो गरुडलांछनः ॥ खमुत्पपात राजेंद्र साश्वध्वज उदीक्षतः ॥४४॥ तमन्वगच्छन्दिव्यानि विष्णुप्रहरणानि च ॥ तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥४५॥ गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः ॥ संकर्षणस्य निर्याणं बंधुभ्यो ब्रूहि मद्दशाम् ॥४६॥ द्वारकायां च न स्थेयं भवद्भिश्च स्वबंधुभिः ॥ मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥४७॥ स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ॥ अर्जुनेनाविताः सर्व इंद्रप्रस्थं गमिष्यथ ॥४८॥ त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ॥ मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥४९॥ इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ॥ तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥५०॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे यदुकुलसंक्षयो नाम त्रिंशोऽध्यायः॥३०॥ श्रीशुक उवाच ॥ अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः ॥ महेंद्रप्रमुखा देवा मुनयः सप्रजेश्वराः॥१॥

त्यक्तां द्वारकां समुद्रः प्लावयिष्यति ॥४७॥ ततः सर्वे स्वं स्वं परिग्रहं नः पितरौ च गृहीत्वा अर्जुनेन रक्ष्यमाणाः संतः इंद्रप्रस्थं गमिष्यथेति ब्रूहि ॥४८॥ हे दारुक, त्वं तु ज्ञाननिष्ठः सन् एतां मन्मायारचनां विज्ञाय शांतिं प्राप्नुहि । शोकं मा कुरु ॥४९॥ एवमुक्तो दारुकः श्रीकृष्णवचः श्रुत्वा तं परिक्रम्य पुनः पुनर्नमस्कृत्य कुलस्य नष्टत्वात्खिन्नचित्तः सन् द्वारकां ययौ ॥५०॥ इति श्रीमद्भा० चू० एका० त्रिंशोऽध्यायः ॥३०॥ एकत्रिंशे स्वकं धाम जगाम भगवानितः । तमेवानुययुः प्रीत्या वसुदेवादयस्ततः ॥१॥ श्रीशुक उवाच ॥ अथ तत्र ब्रह्मा, भवान्या सह शिवः, इंद्रादयो देवाः सनकादयो मुनयो मरीच्यादयः प्रजापतयश्च ॥१॥ ॥ ॥ ॥

तथा पितृ-गंधर्व-विद्याधरोरग-चारण-यक्ष-रक्षः-किंनराप्सरसो गरुडलोक-निवासिनः पक्षिणश्च ॥२॥ एते सर्वे भगवतो निर्याणं द्रष्टुकामाः संतस्तस्य जन्मकर्माणि गायंतस्तत्रागमन् ॥३॥ ते विमानपंक्तिभिराकाशं व्याप्तं कृत्वा भक्त्या पुष्पवृष्टिं चक्रुः ॥४॥ अथ कृष्णो ब्रह्माणमिंद्रादींश्च वीक्ष्यात्मन्यात्मानं संयोज्य समाधिमिव कुर्वन्नेत्रे न्यमीलयत् ॥५॥ किंच । लोकाभिरामां स्वतनुमाग्नेय्या योगधारणया अदग्ध्वा तनुसहित एव वैकुंठमगमत् ॥६॥ तदा दिवि दुंदुभयो नेदुः । आकाशात्पुष्पाणि पेतुः । ततः सत्य-धर्म-धृति-कीर्ति-श्रियो भूमेः सकाशात्तमनु ययुः ॥७॥ ततो ब्रह्मादयः स्वधामानि विशंतं श्रीकृष्णमदृष्ट्वा विस्मिता आसन् ॥८॥ यथा विद्युतो गतिर्मनुष्यैर्न लक्ष्यते तथा श्रीकृष्णस्य गतिर्देवैर्न

पितरः सिद्धगंधर्वा विद्याधरमहोरगाः ॥ चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥२॥ द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ॥ गायंतश्च गृणंतश्च शौरेः कर्माणि जन्म च ॥३॥ ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ॥ कुर्वंतः संकुलं राजन्भक्त्या परमया युताः ॥४॥ भगवान्पितामहं वीक्ष्य विभूतीरात्मनो विभुः ॥ संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥५॥ लोकाभिरामां स्वतनुं धारणाध्यानमंगलम् ॥ योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत्स्वकम् ॥६॥ दिवि दुंदुभयो नेदुः पेतुः सुमनसश्च खात् ॥ सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः ॥७॥ देवादयो ब्रह्ममुख्या न विशंतं स्वधामनि ॥ अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥८॥ सौदामन्या यथाऽऽकाशे यांत्या हित्वाऽभ्रमंडलम् ॥ गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥९॥ ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ॥ विस्मितास्तां प्रशंसंतः स्वं स्वं लोकं ययुस्तदा ॥१०॥ राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडंबनमवेहि यथा नटस्य ॥ सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चांते संहृत्य चात्ममहिम्नोपरतः स आस्ते॥११॥मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् ॥ जिग्येऽतकांतकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहम्॥१२॥तथाऽप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक्॥नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन् ॥१३॥

लक्षिता ॥९॥ ततो ब्रह्मादयो देवा हरेर्योगगतिं दृष्ट्वा तां प्रशंसंतः संतः स्वं स्वं लोकं ययुः ॥१०॥ हे नृप, भगवत इयं यादवादिष्वाविर्भावतिरोभावरूपा चेष्टा नटवन्मायाविडंबनं विद्धि । यः स्वयमविकार एवेदं विश्वं सृष्ट्वांतर्यामिरूपेण प्रविश्य क्रीडित्वांते संहृत्य च स्वमहिम्नोपरत आस्ते ॥११॥ किंच । यो मनुष्यशरीरेण यमलोकगतं गुरुसुतमानीतवान् । ब्रह्मास्त्रदग्धं त्वां ररक्ष । मृत्युंजयमपि शिवं बाणयुद्धे जितवान् । सदेहं लुब्धकं च स्वर्गं निन्ये । स स्वरक्षणेऽसमर्थः किम् ॥१२॥ तथापि यादवान् संहृत्य निजं वपुरत्र शेषितं कर्तुं नैच्छत् । किंत्वात्मनिष्ठानां दिव्यां गतिमेव प्रकृष्टां दर्शयन् तद्वपुर्वैकुंठमनयत् ॥१३॥ ॥ ॥ ॥ ॥

१ योगिनः स्वच्छंदमृत्यवः स्वां तनुमाग्नेय्या योगधारणया दग्ध्वा लोकांतरं प्रविशंति । भगवांस्तु न तथा । किंतु स्वां तनुमदग्ध्वा सशरीर एव वैकुंठं गत इत्यर्थः ।२ अन्यथा ते आत्मनिष्ठा अपि दिव्यां गतिमनादृत्य योगबलेन देहसिद्धिं विधायात्रैव रंतुं यतेरंस्तन्मा भूदित्येतदर्थमिति भावः ।

य एतां कृष्णपदवीं प्रातरुत्थाय भक्त्या कीर्तयेत् स तद्गतिं प्राप्नोति॥१४॥अथ दारुको द्वारकां गत्वा वसुदेवोग्रसेनयोः पादयोः पतित्वाऽश्रुपातैर्न्यषिंचत् ॥१५॥ ततो वृष्णीनां नाशं कृत्स्नशः कथयामास। तच्छ्रुत्वा जनाः शोकमूर्छिताः कृष्णवियोगेन विह्वला आननं घ्नंतः संतो यत्र ज्ञातयो मृत्वा पतितास्तत्र त्वरया जग्मुः ॥१६॥१७॥ ततो देवकी रोहिणी वसुदेव एते रामकृष्णौ पुत्रावपश्यंतः संतः शोकार्ता भूत्वा प्राणान् जहुः ॥१८॥ स्त्रियश्च स्वस्वपतीनालिंग्य चितामारुरुहुः॥१९॥ रामपत्न्यो रामदेहमालिंग्याग्निं विविशुः। वसुदेवपत्न्यस्तद्गात्रमालिंग्याग्निं विविशुः। हरेः स्नुषाश्च प्रद्युम्नादीनालिंग्य तथा कृष्णपत्न्यो रुक्मिण्याद्या अग्निं प्राविशन् ॥२०॥ ततोऽर्जुनः कृष्णवियोगातुरः सन्नात्मानं कृष्णोक्तैर्गीतावाक्यैः सांत्वयामास ॥२१॥ ततो हतानां नष्ट-

य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् ॥ प्रयतः कीर्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥१४॥ दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ॥ पतित्वा चरणावस्रैर्न्यषिंचत्कृष्णविच्युतः ॥१५॥ कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ॥ तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्छिताः ॥१६॥ तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ॥ व्यसवः शेरते यत्र ज्ञातयो घ्नंत आननम् ॥१७॥ देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ॥ कृष्णरामावपश्यंतः शोकार्ता विजहुः स्मृतिम् ॥१८॥ प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ॥ उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः ॥१९॥ रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ॥ वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन्हरेः स्नुषाः ॥ कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥२०॥ अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ॥ आत्मानं सांत्वयामास कृष्णगीतैः सदुक्तिभिः ॥२१॥ बंधूनां नष्टगोत्राणामर्जुनः सांपरायिकम् ॥ हतानां कारयामास यथावदनुपूर्वशः ॥२२॥ द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् ॥ वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥२३॥ नित्यं संनिहितस्तत्र भगवान्मधुसूदनः ॥ स्मृत्याऽशेषाशुभहरं सर्वमंगलमंगलम् ॥२४॥ स्त्रीबालवृद्धानादाय हतशेषान्धनंजयः ॥ इंद्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥२५॥ श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः ॥ त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥२६॥ य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च ॥ कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥२७॥ इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शंतमानि ॥ अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥२८॥ इति श्रीमद्भागवते महापुराणे एकादशस्कंधे एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ ॥

संततीनां बंधूनां और्ध्वदेहिकमनुक्रमेण कारयामास ॥२२॥ ततो हरिणा त्यक्तां द्वारकां समुद्रो भगवन्मंदिरं विना क्षणात् प्लावयामास ॥२३॥ भगवन्मंदिरे तु सर्वमंगलमंगलं श्रीकृष्णो नित्यं सन्निहितो वर्तते ॥२४॥ ततोऽर्जुनो हतशेषान् स्त्रीबालवृद्धान् गृहीत्वेंद्रप्रस्थं समावेश्य समुद्रप्लावनादवशिष्टायां द्वारकायां श्रीकृष्णप्रपौत्रं वज्रमभ्यषेचयत् ॥२५॥ हे राजन्, तव पितामहाः पांडवा अर्जुनात्सुहृत्क्षयं श्रुत्वा त्वां च वंशधरं कृत्वा सर्वे महाप्रस्थानेन स्वर्गं ययुः॥२६॥यः पुमान् विष्णोः कर्माणि जन्म च कीर्तयेत् स सर्वपापैः प्रमुच्यते॥२७॥इत्थं भगवतः कृष्णावतारस्य पराक्रमान् परममंगलानि बालचरितानि च यो मर्त्यः कीर्तयेत्स श्रीकृष्णे परां भक्तिं लभेत॥२८॥इति श्रीमद्भा० चूर्णिकायामेकादशस्कंधे एकत्रिंशोऽध्यायः॥३१॥ श्रीकृष्णार्पणमस्तु ॥

१ स वज्रो मुसलोत्पत्तिनिमित्तब्राह्मणशापाद्भगवताऽवशेषित इति पूर्वमेवोक्तम् ।

॥ श्रीगणेशाय नमः ॥ उक्तस्त्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः । अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः ॥१॥ तत्र तु प्रथमे भाविमागधान्वयभूमिपान् । कलिप्रभावतः प्राह संकरादिमलीमसान् ॥२॥ राजोवाच ॥ हे मुने, श्रीकृष्णे स्वधामानुगते सति पृथिव्यां कस्य वंशो बभूव तद्वद ॥१॥ श्रीशुक उवाच ॥ हे राजन्, बृहद्रथवंशे जाता जरासंधादयो रिपुंजयांता राजानो नवमस्कंधे निरूपिताः । तत्र योंऽत्यो रिपुंजयः स एव पुरंजयः । तस्य प्रधानः शुनकः स स्वामिनं पुरंजयं हत्वा ॥२॥ स्वसुतं प्रद्योतसंज्ञं राजानं करिष्यति । तस्य पालकः पुत्रः । तस्य विशाखयूपः । तस्य राजकः ॥३॥ तस्य नंदिवर्धनः । एते प्रद्योतसंज्ञाः पंच नृपाः अष्टत्रिंशदुत्तरं शतं १३८ वर्षाणि कलौ भूमिं भोक्ष्यंति ॥४॥ ततो भावी शिशुनागः । तस्य काकवर्णः तस्य क्षेमधर्मा । तस्य क्षेत्रज्ञः ॥५॥ तस्य विधिसारः । तस्याजातशत्रुः । तस्य दर्भकः । तस्याजयः ॥६॥ तस्य नंदिवर्धनः । तस्य महानंदी एते दश

॥ ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ स्वधामानुगते कृष्णे यदुवंशविभूषणे ॥ कस्य वंशोऽभवत्पृथ्व्यामेतदाचक्ष्व मे मुने ॥१॥ श्रीशुक उवाच ॥ योंऽत्यः पुरंजयो नाम भविष्यो बारहद्रथः ॥ तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम् ॥२॥ प्रद्योतसंज्ञं राजानं कर्ता यत्पालकः सुतः ॥ विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ॥३॥ नंदिवर्धनस्तत्पुत्रः पंच प्रद्योतना इमे ॥ अष्टत्रिंशोत्तरशतं भोक्ष्यंति पृथिवीं नृपाः ॥४॥ शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः ॥ क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥५॥ विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति ॥ दर्भकस्तत्सुतो भावी दर्भकस्याजयः स्मृतः ॥६॥ नंदिवर्धन आजेयो महानंदिः सुतस्ततः ॥ शिशुनागा दशैवैते षष्ठ्युत्तरशतत्रयम् ॥७॥ समा भोक्ष्यंति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः ॥ महानंदिसुतो राजन् शूद्रीगर्भोद्भवो बली ॥८॥ महापद्मपतिः कश्चिन्नंदः क्षत्रविनाशकृत् ॥ ततो नृपा भविष्यंति शूद्रप्रायास्त्वधार्मिकाः ॥९॥ स एकच्छत्रां पृथिवीमनुलंघितशासनः ॥ शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥१०॥ तस्य चाष्टौ भविष्यंति सुमाल्यप्रमुखाः सुताः ॥ य इमां भोक्ष्यंति महीं राजानः स्म शतं समाः ॥११॥ नव नंदान्द्विजः कश्चित्प्रपन्नानुद्धरिष्यति ॥ तेषामभावे जगतीं मौर्या भोक्ष्यंति वै कलौ ॥१२॥ स एव चंद्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ॥ तत्सुतो वारिसारस्तु ततश्चाशोकवर्धनः ॥१३॥ सुयशा भविता तस्य संगतः सुयशःसुतः ॥ शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥१४॥ ॥

नृपाः षष्ठ्युत्तरशतत्रयं ३६० वर्षाणि कलौ भुवं भोक्ष्यंति । ततो महानंदिसुतः शूद्रीगर्भोद्भवो नंदनामा महापद्मसंख्यस्य धनस्य पतिर्भविष्यति ॥७॥८॥ ततः शूद्रप्राया अधार्मिका नृपा भविष्यंति ॥९॥ स नंद एकच्छत्रां पृथ्वीं द्वितीयः परशुराम इव पालयिष्यति ॥१०॥ तस्य सुमाल्यप्रमुखा अष्टौ पुत्राः शतं १०० वर्षाणि महीं भोक्ष्यंति ॥११॥ तत एतान्नव नंदान् कश्चिच्चाणक्यो द्विजो नाशयिष्यति । ततस्तेषामभावे मौर्यसंज्ञा राजानो महीं भोक्ष्यंति ॥१२॥ स चाणक्यो द्विजो मौर्येषु प्रथमं चंद्रगुप्तं राज्येऽभिषेक्ष्यति । तस्य पुत्रो वारिसारः । तस्याशोकवर्धनः ॥१३॥ तस्य सुयशाः । तस्य संगतः । तस्य शालिशूकः । तस्य सोमशर्मा ॥१४॥ ॥ ॥ ॥

तस्य शतधन्वा । तस्य बृहद्रथः । एषु पंचमो दशरथश्चेत्येते दश मौर्याः सप्तत्रिंशदुत्तरं शतं १३७ वर्षाणि कलौ भूमिं भोक्ष्यंति । बृहद्रथस्य सेनापतिः पुष्पमित्रः स स्वामिनं हत्वा राज्यं करिष्यति स शुंगानां प्रथमः । तस्याग्निमित्रः पुत्रः । तस्य सुज्येष्ठः ॥१५॥१६॥ तस्य वसुमित्रः । तस्य भद्रकः । तस्य पुलिंदः । तस्य घोषः । तस्य वज्रमित्रः ॥१७॥ तस्य भागवतः । तस्य देवभूतिः । एते दश शुंगा द्वादशाधिकं शतं ११२ वर्षाणि भूमिं भोक्ष्यंति ॥१८॥ तत इयं भूमिः स्वल्पपराक्रमिणः कण्वान् यास्यति ॥१९॥ तदा प्रथमं परस्त्रीकामिनं देवभूतिनामकं शुंगं हत्वा तस्य प्रधानो वसुदेवनामा कण्वो राज्यं करिष्यति ॥२०॥ तस्य भूमित्रः पुत्रः । तस्य नारायणः ( तस्य सुशर्मा नाम पुत्रो भविता ) । एते चत्वारः काण्वायनाः पंचचत्वारिंशदधिकानि त्रीणि शतानि ३४५ वर्षाणि कलौ भूमिं भोक्ष्यंति ॥२१॥ ततः काण्वं सुशर्माणं हत्वा तत्सेवकोंऽध्रजातीयो वलीनामा शूद्रः

शतधन्वा ततस्तस्य भविता तद्बृहद्रथः ॥ मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् ॥१५॥ समा भोक्ष्यंति पृथिवीं कलौ कुरुकुलोद्वह ॥ अग्निमित्रस्ततस्तस्मात्सुज्येष्ठोऽथ भविष्यति ॥१६॥ वसुमित्रो भद्रकश्च पुलिंदो भविता ततः ॥ ततो घोषः सुतस्तस्माद्वज्रमित्रो भविष्यति ॥१७॥ ततो भागवतस्तस्माद्देवभूतिरिति श्रुतः ॥ शुंगा दशैते भोक्ष्यंति भूमिं वर्षशताधिकम् ॥१८॥ ततः कण्वानियं भूमिर्यास्यत्यल्पगुणान्नृप ॥१९॥ शुंगं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् ॥ स्वयं करिष्यते राज्यं वसुदेवो महामतिः ॥२०॥ तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः ॥ ( नारायणस्य भविता सुशर्मा नाम विश्रुतः ॥ ) काण्वायना इमे भूमिं चत्वारिंशच्च पंच च ॥ शतानि त्रीणि भोक्ष्यंति वर्षाणां च कलौ युगे ॥२१॥ हत्वा काण्वं सुशर्माणं तद्भृत्यो वृषलो बली ॥ गां भोक्ष्यत्यंध्रजातीयः कंचित्कालमसत्तमः ॥२२॥ कृष्णनामाथ तद्भ्राता भविता पृथिवीपतिः ॥ श्रीशांतकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥२३॥ लंबोदरस्तु तत्पुत्रस्तस्माच्चिविलको नृपः ॥ मेघस्वातिश्चिविलकादटमानस्तु तस्य च ॥२४॥ अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः ॥ पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनंदनः ॥२५॥ चकोरो बहवो यत्र शिवस्वातिररिंदमः ॥ तस्यापि गोमती पुत्रः पुरीमान्भविता ततः ॥२६॥ मेदशिराः शिवस्कंदो यज्ञश्रीस्तत्सुतस्ततः ॥ विजयस्तत्सुतो भाव्यश्चंद्रविज्ञः सलोमधिः ॥२७॥ एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च ॥ षट्पंचाशच्च पृथिवीं भोक्ष्यंति कुरुनंदन ॥२८॥ ॥

कतिचिद्वर्षाणि भूमिं भोक्ष्यति ॥२२॥ ततस्तद्भ्राता कृष्णनामा पृथ्वीपतिर्भविष्यति । तस्य पुत्रः श्रीशांतकर्णः । तस्य पौर्णमासः ॥२३॥ तस्य लंबोदरः । तस्य चिविलकः । तस्य मेघस्वातिः । तस्याटमानः ॥२४॥ तस्यानिष्टकर्मा । तस्य हालेयः । तस्य तलकः । तस्य पुरीषभीरुः । तस्य सुनंदनः ॥२५॥ तस्य चकोरः । तस्य नव पुत्राः तेषु चरमः शिवस्वातिः । तस्य गोमती । तस्य पुरीमान् ॥२६॥ तस्य भेदशिराः । तस्य शिवस्कंदः । तस्य यज्ञश्रीः । तस्य विजयः । तस्य चंद्रविज्ञः । तस्य लोमधिः ॥२७॥ एते त्रिंशद्राजानः षट्पंचाशदधिकानि चतुःशतानि ४५६ वर्षाणि भूमिं भोक्ष्यंति ॥२८॥ ॥ ॥ ॥ ॥ ॥

तत आभीरजातीयाः सप्त ७ नृपाः । ततो गर्दभिसंज्ञका दश १० नृपाः । ततः षोडश १६ कंका भविष्यंति ॥२९॥ ततोऽष्टौ ८ यवनाः । ततश्चतुर्दश पुल्कसाः । ततो दश १० गुरुंडाः ॥३०॥ एते सर्वे पंचषष्टिर्भूपा ६५ एकन्यूनान्येकादश शतानि १०९९ वर्षाणि भुवं भोक्ष्यंति ॥३१॥ तत एकादश ११ मौना नृपास्त्रीणि शतानि ३०० वर्षाणि भुवं भोक्ष्यंति । मौनेषु मृतेषु किलकिलायां पुर्यां भूतनंदो वंगिरिः ॥३२॥ शिशुनंदिः तद्भ्राता यशोनंदिः प्रवीरकश्चेत्येते राजानः षडधिकं शतं १०६ वर्षाणि महीं भोक्ष्यंति ॥३३॥ तेषां भूतनंदादीनां त्रयोदश पुत्रा बाह्लिकसंज्ञा राजानो भविष्यंति । ततः कश्चित्पुष्पमित्रो नृपो भविष्यति । तस्य दुर्मित्रः ॥३४॥ तथा सप्तांध्राः ७ सप्त कौशलाः ७ वैदूरपतयो निषधाश्चैते तत्तद्देशनामभिः प्रख्याता एककाला मांडलिका राजानो बाह्लिकेभ्य एव भविष्यंति ॥३५॥ ततो मागधानां राजा विश्वस्फूर्जिनामा भविष्यति । स ब्राह्मणा-

सप्ताभीरा आवभृत्या दश गर्दभिनो नृपाः ॥ कंकाः षोडश भूपाला भविष्यंत्यतिलोलुपाः ॥२९॥ ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्ककाः ॥ भूयो दश गुरुंडाश्च मौना एकादशैव तु ॥३०॥ एते भोक्ष्यंति पृथिवीं दशवर्षशतानि च ॥ नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥३१॥ भोक्ष्यंत्यब्दशतान्यंग त्रीणि तैः संस्थिते ततः ॥ किलिकिलायां नृपतयो भूतनंदोऽथ वंगिरिः ॥ ३२ ॥ शिशुनंदिश्च तद्भ्राता यशोनंदिः प्रवीरकः ॥ इत्येते वै वर्षशतं भविष्यंत्यधिकानि षट् ॥३३॥ तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः ॥ पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥३४॥ एककाला इमे भूपाः सप्तांध्राः सप्त कौशलाः ॥ विदूरपतयो भाव्या निषधास्तत एव हि ॥३५॥ मागधानां तु भविता विश्वस्फूर्जिः पुरंजयः ॥ करिष्यत्यपरो वर्णान्पुलिंदयदुमद्रकान् ॥३६॥ प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ॥ वीर्यवान्क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ॥ अनुगंगामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ॥३७॥ सौराष्ट्रावंत्याभीराश्च शूरा अर्बुदमालवाः ॥ व्रात्या द्विजा भविष्यंति शूद्रप्राया जनाधिपाः ॥३८॥ सिंधोस्तटं चंद्रभागां कौंतीं काश्मीरमंडलम् ॥ भोक्ष्यंति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ॥३९॥ तुल्यकाला इमे राजन्म्लेच्छप्रायाश्च भूभृतः ॥ एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥४०॥ स्त्रीबालगोद्विजघ्नाश्च परदारधनाहृताः ॥ उदितास्तमितप्राया अल्पसत्वाल्पकायुषः ॥४१॥ ॥ ॥ ॥ ॥

दीन् वर्णान् पुलिंद-यदु-मद्रक-संज्ञान् म्लेच्छप्रायान् करिष्यति ॥३६॥ स दुष्टो विश्वस्फूर्जिः शूद्रप्रायाः प्रजाः पालयिष्यति । स क्षत्रियकुलमुत्साद्य पद्मवत्यां नगर्यां वसन् गंगाद्वारमारभ्य प्रयागपर्यंतां भूमिं भोक्ष्यति ॥३७॥ ततः सौराष्ट्रा आवंत्या आभीराः शूद्रा अर्बुदा मालवा एतद्देशवासिनो द्विजा उपनयनरहिताः शूद्रप्राया राजानो भविष्यंति ॥३८॥ एते सर्वे एककाला वेदाचारशून्या नृपाः सिंधोस्तटं चंद्रभागां कौंतीं काश्मीरमंडलं च भोक्ष्यंति ॥३९॥ एते सर्वेऽधर्मतत्परा अल्पदातारस्तीव्रक्रोधाः ॥४०॥ स्त्री-बाल-गो-द्विज-घ्नाः परदार-धन-लंपटा अल्पायुष उदितास्तमितप्रायाः संस्कारहीना रजस्तमोव्याप्ताः संतः प्रजाः पीडयिष्यंति ॥४१॥ ॥ ॥

॥४२॥ तदा तद्देशवासिनो मनुष्या राजसदृशधर्मपरा अन्योन्यतो राजतश्च क्षयं यास्यंति ॥४३॥ इति श्री० चू० द्वा० प्रथमोऽध्यायः ॥१॥ द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः । अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥१॥ श्रीशुक उवाच ॥ ततो दिने दिने धर्मः सत्यं शौचं दया क्षमा आयुर्बलं स्मृतिश्च नश्यंति ॥१॥ अथ कलिधर्मानाह । कलौ वित्तमेव नृणां जन्माचार-गुणोदयः । धर्मन्याययोर्व्यवस्थायां बलमेव कारणम् ॥२॥ दांपत्येऽभिरुचिरेव हेतुर्न कुलगोत्रादिः । क्रयविक्रयादिव्यवहारे कपटम् । स्त्रीपुरुषयोः श्रेष्ठत्वे रतिकौशलमेव हेतुर्न कुलमाचारो वा । विप्रत्वे सूत्रधारणमेव ॥३॥ आश्रमाणां ज्ञाने दंडाजिनादिकमेव हेतुर्न त्वाचारः । मुद्रार्पणादिदानसामर्थ्याभावे न्याये पराजयः । पांडित्ये बहुभाषणं हेतुः ॥४॥ असाधुत्वेऽनाढ्यता । साधुत्वे दंभः । स्त्रीणां स्वीकार एव विवाहः । स्नानमेवालंकारः ॥५॥ दूरे यो जलाशयः स एव तीर्थम् । केशधारणमेव

असंस्कृताः क्रियाहीना रजसा तमसाऽऽवृताः ॥ प्रजास्ते भक्षयिष्यंति म्लेच्छा राजन्यरूपिणः ॥४२॥ तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ॥ अन्योन्यतो राजभिश्च क्षयं यास्यंति पीडिताः ॥४३॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे प्रथमोऽध्यायः ॥१॥ श्रीशुक उवाच ॥ ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ॥ कालेन बलिना राजन्नंक्ष्यत्यायुर्बलं स्मृतिः ॥१॥ वित्तमेव कलौ नृणां जन्माचारगुणोदयः ॥ धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥२॥ दांपत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ॥ स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥३॥ लिंगमेवाश्रमख्यातावन्योन्यापत्तिकारणम् ॥ अवृत्त्या न्यायदौर्बल्यं पांडित्ये चापलं वचः ॥४॥ अनाढ्यतैवासाधुत्वे साधुत्वे दंभ एव तु ॥ स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥५॥ दूरे वार्ययनं तीर्थं लावण्यं केशधारणम् ॥ उदरंभरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥६॥ दाक्ष्यं कुटुंबभरणं यशोऽर्थे धर्मसेवनम् ॥ एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमंडले ॥७॥ ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥ प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥८॥ आच्छिन्नदारद्रविणा यास्यंति गिरिकाननम् ॥ शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ॥९॥ अनावृष्ट्या विनंक्ष्यंति दुर्भिक्षकरपीडिताः ॥ शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः ॥१०॥ क्षुत्तृड्भ्यां व्याधिभिश्चैव संतापेन च चिंतया ॥ त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥ ११ ॥ क्षीयमाणेषु देहेषु देहिनां कलिदोषतः ॥ वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥

लावण्यम् । उदरभरणमेव पुरुषार्थः । धार्ष्ट्यमेव सत्यत्वम् ॥६॥ कुटुंबपोषणमेव पुरुषार्थः । कीर्त्यर्थमेव धर्मसेवनम् । एवं दुष्टाभिः प्रजाभिः क्षितिमंडले व्याप्ते सति ॥७॥ ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां मध्ये यो बली स नृपो भविष्यति । किंच । लुब्धैर्निर्लज्जैश्चौर्यतत्परैश्च राजभिः ॥८॥ अपहृत-दार-द्रव्याः प्रजा गिरिं वनं वा यास्यंति । शाक-मूल-मांस-मधु-फल-पुष्प-बीज-भोजनाः अनावृष्टि-दुर्भिक्ष-कर-शीत-वातोष्णादिभिः ॥९॥१०॥ क्षुत्तृड्-व्याधि-संताप-चिंताभिश्च पीडिताः सत्यो नंक्ष्यंति । कलौ विंशतिर्वा त्रिंशद्वा वर्षाणि नृणां परममायुः ॥११॥ एवं कलिदोषतो नृणां देहेषु अल्पप्रायेषु वर्णाश्रमिणां धर्मे वेदमार्गे च नष्टे सति ॥१२॥ ॥ ॥ ॥

पाखंडप्राये धर्मे चौरतुल्येषु राजसु चौर्यानृत-हिंसादिप्रायेषु मनुष्येषु ॥१३॥ शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु गृहप्रायेष्वाश्रमेषु यौवनप्रायेषु बंधुषु ॥१४॥ अणुप्रायास्वौ-षधीषु शमीप्रायेषु वृक्षेषु विद्युद्बहुलेषु मेघेषु धर्मादिरहितेषु गृहेषु सत्सु ॥१५॥ इत्थं कलौ समाप्तप्राये सति धर्मरक्षणाय सत्वगुणेन भगवान् ॥१६॥ साधूनां मोक्षाय शंभलग्रामे नाम्ना विष्णुयशसो ब्राह्मणस्य गृहे कल्किः प्रादुर्भविष्यति ॥१७॥१८॥ सोऽष्टैश्वर्यगुणान्वितः शीघ्रगामिनमश्वमारुह्य भूमौ विचरन् खड्गेन राजवेषच्छन्नान् दस्यून् कोटिशो हनिष्यति ॥१९॥२०॥ तदा वासुदेवस्यांगचंदनसुगंधवायुस्पर्शेन सर्वेषां पुरदेशवासिनां जनानां मनांसि स्वच्छानि भवंति ॥२१॥ वासुदेवे हृदि स्थिते सति प्रजोत्पत्तिश्च स्थूला

पाखंडप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥१३॥ शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ॥ गृहप्रायेष्वाश्र-मेषु यौनप्रायेषु बंधुषु ॥१४॥ अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु ॥ विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥१५॥ इत्थं कलौ गतप्राये जने तु खरधर्मिणि ॥ धर्मत्राणाय सत्वेन भगवानवतरिष्यति ॥१६॥ चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥१७॥ शंभलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ॥ भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥१८॥ अश्वमाशुगमारुह्य देव-दत्तं जगत्पतिः ॥ असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥१९॥ विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः ॥ नृपलिंगच्छदो दस्यून्कोटिशो निहनिष्यति ॥२०॥ अथ तेषां भविष्यंति मनांसि विशदानि वै ॥ वासुदेवांगरागातिपुण्यगंधानिलस्पृशाम् ॥ पौरजानपदानां वै हतेष्व-खिलदस्युषु ॥२१॥ तेषां प्रजाविसर्गश्च स्थविष्ठः संभविष्यति ॥ वासुदेवे भगवति सत्वमूर्तौ हृदि स्थिते ॥२२॥ यदाऽवतीर्णो भगवान्कल्कि-र्धर्मपतिर्हरिः ॥ कृतं भविष्यति तदा प्रजासूतिश्च सात्विकी ॥२३॥ यदा चंद्रश्च सूर्यश्च तथा तिष्यबृहस्पती ॥ एकराशौ समेष्यंति तदा भवति तत्कृतम् ॥२४॥ येऽतीता वर्तमाना ये भविष्यंति च पार्थिवाः ॥ ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः ॥२५॥ आरभ्य भवतो जन्म यावन्नंदाभिषेचनम् ॥ एतद्वर्षसहस्रं तु शतं पंचदशोत्तरम् ॥२६॥ ॥ ॥ ॥

भविष्यति ॥२२॥ यदा कल्क्यवतारो भविष्यति तदा कृतयुगं सात्विकी प्रजोत्पत्तिश्च भविष्यति ॥२३॥ किंच । यदा चंद्र-सूर्य-बृहस्पतीनां पुष्यनक्षत्रे एककाल एव प्रवेशो भवे-त्तदा कृतयुगप्रवृत्तिः स्यात् ॥२४॥ हे राजन्, ये गता वर्तमाना भविष्याश्च सोमसूर्यवंशीया राजानस्ते तव मया संक्षेपतः कथिताः ॥२५॥ तव जन्मारभ्य नंदाभिषेकावधि द्वाभ्यां न्यूनानि पंचदश शतानि १४९८ वर्षाणि भवंति ॥२६॥ ॥ ॥ ॥ ॥ ॥



१ प्रमाणतः क्षीरतश्चाजातुल्यासु । २ अणिमाद्यष्टैश्वर्याणि सत्यसंकल्पादयो गुणाश्च तैरन्वितः ।

हे राजन्, सप्तर्षीणां मध्ये यौ दक्षिणोत्तरौ पुलहक्रतुसंज्ञावृषी उदयसमये प्रथममुदितौ दृश्येते तयोर्दक्षिणोत्तररेखायां समदेशावस्थितं यदश्विन्याद्यन्यतमं नक्षत्रं निशि दृश्यते ॥२७॥ तेन युक्तास्ते सप्तर्षय एकस्मिन्नेकस्मिन्नक्षत्रे मनुष्याणां शतं शतं वर्षाणि तिष्ठंति । ते चाधुना त्वदीये काले द्विजा मघासु विचरंति ॥२८॥ यदा कृष्णो वैकुंठं गतस्तदा कलिर्लोकमाविशत् । यस्मिन् युगे जनः पापे रमते ॥२९॥ यावत्स भगवान् पृथिव्यां स्थितस्तावदिह प्रविष्टोऽपि कलिः पराक्रमं कर्तुं नाशकत् ॥३०॥ किंच । हे राजन्, यदा सप्तर्षयो मघासु विचरंति तदा दिव्यमानेन द्वादशाब्दशतात्मकः कलिः प्रवृत्तः ॥३१॥ यदा च मघाभ्यः पूर्वाषाढायां सप्तर्षयो यास्यंति तदा कलिर्वृद्धिं गमिष्यति ॥३२॥ किंच

सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि ॥ तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥२७॥ तेनैत ऋषयो युक्तास्तिष्ठंत्यब्दशतं नृणाम् ॥ ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः ॥२८॥ विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः ॥ तदाऽविशत्कलिर्लोकं पापे यद्रमते जनः ॥२९॥ यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ॥ तावत्कलिर्वै पृथिवीं पराक्रांतुं न चाशकत् ॥३०॥ यदा देवर्षयः सप्त मघासु विचरंति हि ॥ तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥३१॥ यदा मघाभ्यो यास्यंति पूर्वाषाढां महर्षयः ॥ तदा नंदात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥३२॥ यस्मिन्कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि ॥ प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥३३॥ दिव्याब्दानां सहस्रांते चतुर्थे तु पुनः कृतम् ॥ भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥३४॥ इत्येष मानवो वंशो यथा संख्यायते भुवि ॥ तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे ॥३५॥ एतेषां नामलिंगानां पुरुषाणां महात्मनाम् ॥ कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥३६॥ देवापिः शंतनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ॥ कलापग्राम आसाते महायोगबलान्वितौ ॥३७॥ ताविहेत्य कलेरंते वासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः ॥३८॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥३९॥

यस्मिन् दिने श्रीकृष्णो वैकुंठं यातस्तदैव प्रविष्टः कलिरिति पुराविदः प्राहुः ॥३३॥ अस्मिन् कलौ गते सति पुनः कृतयुगं भविष्यति । तदा मनुष्याणां मन आत्मप्रकाशकं भविष्यति ॥३४॥ एवं मनोर्वंशस्योच्चनीचावस्थाः कथिताः । तथा ब्राह्मण-वैश्य-शूद्रवंशानामपि ज्ञातव्याः ॥३५॥ एतेषां महात्मनां पुरुषाणां कीर्तिरेव भुवि स्थिता ॥३६॥ किंच। शंतनोर्भ्राता देवापिरिक्ष्वाकुवंशजो मरुश्च कलापग्रामे आसाते ॥३७॥ तौ भगवदाज्ञया कलेरंते इहागत्य वर्णाश्रमधर्मं पूर्ववत्प्रवर्तयिष्यतः ॥३८॥ एवं क्रमेण कृत-त्रेता-द्वापर-कलियुगानि भुवि प्राणिषु वर्तंते ॥३९॥

॥ ॥ ॥ ॥ ॥ ॥ ॥

१ प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमंडलम् । तत्र किंचिदुन्नतेषाग्रस्थानीयो मरीचिः । ततः पश्चादानम्रयुगकंधराकारो वसिष्टः सभार्यः । ततः पश्चादीषदुन्नतेषामूलस्थानीयोऽङ्गिराः । ततः पश्चाच्चतुरस्रताराचतुष्के ईशान्यामत्रिः । ततो दक्षिणतः पुलस्त्यः । पुलस्त्यात्पश्चिमतः पुलहः । तत उत्तरतः क्रतुरिति ।

हे राजन्, मया एते प्रोक्ता नृपास्तथाऽपरे च राजानो भूमौ ममत्वं कृत्वाऽते इमां भूमिं हित्वा नाशं प्राप्ताः ॥४०॥ किंच । राजदेहस्याप्यंते कृमिविड्भस्मसंज्ञा भविष्यति । अतस्तदर्थं यो भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद नैव वेद । यतो भूतद्रोहान्नरको भवति ॥४१॥ इयमखंडा भूमिर्मत्पूर्वजैर्धृता सेयं मत्पुत्रपौत्रादीनां कथं स्यादित्येवं ये चिंतयंति ॥४२॥ ते अज्ञा अंते महीं शरीरं च हित्वा निधनं गताः ॥४३॥ ये ये भूपतयः पराक्रमेण भुवं भुक्तवंतस्ते सर्वे कालेन कथामात्रावशेषिताः कृताः ॥४४॥ इति श्रीमद्भागवतचूर्णिकायां द्वादशस्कंधे द्वितीयोऽध्यायः ॥२॥ तृतीये भूमिगीतैश्च राज्यदोषादिवर्ण्यते । कलौ च दोषभूयिष्ठे दोषहंत्री हरेर्नुतिः ॥१॥ श्रीशुक उवाच ॥ स्वस्य जये उद्युक्तान् नृपान् दृष्ट्वा भूमिर्हसति । अहो एते मृत्योः क्रीडनका नृपा मां जेतुमिच्छंति ॥१॥ येन कामेन फेनतुल्ये देहे नृपा अतिविश्वासं प्रापितास्तेषां स कामो निष्फल एव भवति ॥२॥ तमेव

राजन्नेते मया प्रोक्ता नरदेवास्तथाऽपरे ॥ भूमौ ममत्वं कृत्वांऽते हित्वेमां निधनं गताः ॥४०॥ कृमिविड्भस्मसंज्ञांऽते राजनाम्नोऽपि यस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥४१॥ कथं सेयमखंडा भूः पूर्वैर्मे पुरुषैर्धृता ॥ मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य वा ॥४२॥ तेजोवन्नमयं कायं गृहीत्वाऽऽत्मतया बुधाः ॥ महीं ममतया चोभौ हित्वांऽतेऽदर्शनं गताः ॥४३॥ ये ये भूपतयो राजन्भुंजते भुवमोजसा ॥ कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥४४॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे द्वितीयोऽध्यायः ॥२॥ श्रीशुक उवाच ॥ दृष्ट्वाऽऽत्मनि जये व्यग्रान्नृपान्हसति भूरियम् ॥ अहो मां विजिगीषंति मृत्योः क्रीडनका नृपाः ॥१॥ काम एष नरेंद्राणां मोघः स्याद्विदुषामपि ॥ येन फेनोपमे पिंडे येऽतिविश्रंभिता नृपाः ॥२॥ पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमंत्रिणः ॥ ततः सचिवपौराप्तकरींद्रानस्य कंटकान् ॥३॥ एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ॥ इत्याशाबद्धहृदया न पश्यंत्यंतिकेंऽतकम् ॥४॥ समुद्रावरणां जित्वा मां विशंत्यब्धिमोजसा ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥५॥ यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह ॥ गता यथागतं युद्धे तां मां जेष्यंत्यबुद्धयः ॥६॥ मत्कृते पितृपुत्राणां भ्रातृणां चापि विग्रहः ॥ जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥७॥ ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः ॥ स्पर्धमाना मिथो घ्नंति म्रियंते मत्कृते नृपाः ॥८॥ पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः ॥ मांधाता सगरो रामः खट्वांगो धुंधुहा रघुः ॥९॥

काममाह । पूर्वं पंचेंद्रियाणि मनश्च जित्वाऽनंतरं राजमंत्रिणो वशीकरिष्यामः । ततः पुरादिवासिनो लोकान् जित्वा पृथ्वीं जेष्यामः ॥३॥ इत्याशाबद्धहृदयाः समीपे प्राप्तं मृत्युं न पश्यंति ॥४॥ एवमाशाबद्धाः केचिन्मां जित्वाऽप्यतितृष्णया द्वीपांतरराज्यं कर्तुं समुद्रं प्रविशंति ॥५॥ यां मां विसृज्य मनवस्तत्सुताश्च गतास्तां मां मूढा नृपा जेतुमिच्छंति ॥६॥ मदर्थमासक्तानां पितृपुत्राणां भ्रातृणां च कलहो भवति ॥७॥ किंच । इयं मही ममैव न तवेति वादिनो नृपाः परस्परं घ्नंति म्रियंते च ॥८॥ अहो पृथुः पुरूरवा गाधिः नहुषः भरतः अर्जुनः मांधाता सगरः रामः खट्वांगः धुंधुमारः रघुः ॥९॥ ॥ ॥ ॥ ॥

तृणविंदुः ययातिः शर्यातिः शंतनुः गयः भगीरथः कुवलयाश्वः ककुत्स्थः नैषधः नृगः ॥१०॥ हिरण्यकशिपुः वृत्रः रावणः नमुचिः शंवरः भौमः हिरण्याक्षः तारकः ॥११॥ एते अन्ये च सर्वविदः शूराः सर्वजितोऽपि ॥१२॥ ये मयि ममतां कृत्वा स्थिताः ते सर्वे कालेन कथावशेषाः कृताः ॥१३॥ हे राजन्, ज्ञानवैराग्ययोर्वक्तुमिच्छया यशस्विनां राज्ञामिमाः कथास्तुभ्यं कथिताः । एताः केवलं वाग्विलासमात्ररूपा न त्वयं ग्राह्यः परमार्थः ॥१४॥ कस्तर्हि ग्राह्यः परमार्थ इति चेत् तर्ह्यत्र कथासु मध्ये यः सर्वदोषनाशको भगवद्गुणानुवादस्तत्र तत्र वारंवारं गीयते तमेव कृष्णे भक्तिमिच्छन् पुरुषो नित्यं शृणुयात् ॥१५॥ राजोवाच हे भगवन्, जनाः कलिदोषान् केनोपायेन नाशयिष्यंति तन्मे ब्रूहि

तृणविंदुर्ययातिश्च शर्यातिः शंतनुर्गयः ॥ भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥१०॥ हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः ॥ नमुचिः शंवरो भौमो हिरण्याक्षोऽथ तारकः ॥११॥ अन्ये च बहवो दैत्या राजानो ये महेश्वराः ॥ सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥१२॥ ममतां मय्यवर्तंत कृत्वोच्चैर्मर्त्यधर्मिणः ॥ कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो ॥१३॥ कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ॥ विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥१४॥ यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममंगलघ्नः ॥ तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥१५॥ राजोवाच ॥ केनोपायेन भगवन्कलेर्दोषान्कलौ जनाः ॥ विधमिष्यंत्युपचितांस्तन्मे ब्रूहि यथा मुने ॥१६॥ युगानि युगधर्मांश्च मानं प्रलयकल्पयोः ॥ कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥१७॥ श्रीशुक उवाच ॥ कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः ॥ सत्यं दया तपो दानमिति पादा विभोर्नृप ॥१८॥ संतुष्टाः करुणा मैत्राः शांता दांतास्तितिक्षवः ॥ आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥१९॥ त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ॥ अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः ॥२०॥ तदा क्रियातपोनिष्ठा नातिहिंस्रा न लंपटाः ॥ त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥२१॥ तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे ॥ हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥२२॥ यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः ॥ आढ्याः कुटुंबिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥२३॥ कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ॥ एधमानैः क्षीयमाणो ह्यंते सोऽपि विनंक्ष्यति ॥२४॥ ॥

॥१६॥ तथा युगानि युगधर्मान् संहारस्थितिकालयोः प्रमाणं कालगतिं च वद ॥१७॥ श्रीशुक उवाच ॥ कृतयुगे चतुष्पाद्धर्मो वर्तते । सत्यं दया तपः दानमिति धर्मस्य चत्वारः पादाः ॥१८॥ कृतयुगे जनाः संतुष्टाः दयायुक्ताः शांता आत्मारामाः समदृशश्च भवंति ॥१९॥ त्रेतायां धर्मस्य पादानां चतुर्थांशोऽनृतहिंसाऽसंतोष-द्वेष-रूपैरधर्मपादैः शनैर्नष्टो भवति ॥२०॥ तदा क्रियातपोनिष्ठा नातिहिंस्रा न लंपटा ब्राह्मणादिकाः प्रजा भवंति ॥२१॥ द्वापरे हिंसाऽसंतोषानृत-द्वेष-रूपैरधर्मपादैर्धर्मस्य द्वौ पादौ नष्टौ भवतः ॥२२॥ तदा जना यशस्विनः स्वाध्यायाध्ययने रता हृष्टा आढ्याः क्षत्रियब्राह्मणप्रधाना भवंति ॥२३॥ कलौ तु धर्मस्य पादानां चतुर्थांशोऽवशिष्यते सोऽप्यंते नंक्ष्यति ॥२४॥ ॥

तदा प्रजा लुब्धा दुराचारा निर्दया भाग्यहीना अतितृष्णाः शूद्रकैवर्तादिप्रधाना भविष्यंति ॥२५॥ एवं युगवैषम्ये हेतुमाह । सत्वं रजस्तम इति पुरुषे गुणा दृश्यंते ते कालप्रेरिता मनसि वर्तंते ॥२६॥ यदा मनोवुद्धींद्रियाणि सत्वगुणे वर्तंते ज्ञाने तपसि च रुचिरुत्पद्यते तदा कृतयुगं प्रवृत्तं जानीयात् ॥२७॥ यदा च काम्यकर्मसु नृणां प्रीतिर्भवति तदा रजोगुणात्मकं त्रेतायुगं जानीयात् ॥२८॥ यदा लोभोऽसंतोषः काम्यकर्मसु प्रीतिश्च भवति तदा रजस्तमःप्रधानं द्वापरं जानीयात् ॥२९॥ यदा माया अनृतं आलस्यं निद्रा हिंसा दुःखं शोको मोहो भयं दीनत्वं च भवति तदा तामसः कलिर्ज्ञातव्यः ॥३०॥ कलिदोषान् प्रपंचयति । कलौ मनुष्या अल्पभाग्या मंदवुद्धयो वह्वाहारा निर्द्रव्याः स्त्रियश्च जारिण्यो

तस्मिँलुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ॥ दुर्भगा भूरितर्षाश्च शूद्रदाशोत्तराः प्रजाः ॥२५॥ सत्वं रजस्तम इति दृश्यंते पुरुषे गुणाः ॥ कालसंचोदितास्ते वै परिवर्तंत आत्मनि ॥२६॥ प्रभवंति यदा सत्वे मनोबुद्धींद्रियाणि च ॥ तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः ॥२७॥ यदा धर्मार्थकामेषु भक्तिर्भवति देहिनाम् ॥ तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ॥२८॥ यदा लोभस्त्वसंतोषो मानो दंभोऽथ मत्सरः ॥ कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥२९॥ यदा मायाऽनृतं तंद्रा निद्रा हिंसा विषादनम् ॥ शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥३०॥ यस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ॥ कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥३१॥ दस्यूत्कृष्टा जनपदा वेदाः पाखंडदूषिताः ॥ राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥३२॥ अव्रता बटवोऽशौचा भिक्षवश्च कुटुंबिनः ॥ तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥३३॥ ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ॥ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥३४॥ पणयिष्यंति वै क्षुद्राः किराटाः कूटकारिणः ॥ अनापद्यपि मंस्यंते वार्तां साधु जुगुप्सिताम् ॥३५॥ पतिं त्यक्ष्यंति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ॥ भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥३६॥ पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः ॥ ननांदृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥३७॥ शूद्राः प्रतिग्रहीष्यंति तपोवेषोपजीविनः ॥ धर्मं वक्ष्यंत्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥३८॥ ॥ ॥

भविष्यंति ॥३१॥ चौराधिका देशाः पाखंडदूषिता वेदाः प्रजाभक्षा नृपाः शिश्नोदरतत्परा ब्राह्मणाः ॥३२॥ आचारशून्या ब्रह्मचारिणो भिक्षाटनपरा गृहस्था ग्रामवासा वानप्रस्था द्रव्यलोभिनो यतयश्च भविष्यंति ॥३३॥ किंच स्त्रियो लघुदेहा वह्वाहारा वहुप्रजा गतलज्जाः कपट-साहसयुक्ताश्च भविष्यंति ॥३४॥ नीचा वैश्याः क्रयविक्रयादिव्यवहारं वर्तयिष्यंति । सर्वे जना निंदितां वृत्तिं साधु मंस्यंते ॥३५॥ भृत्या निर्द्रव्यं पतिं त्यक्ष्यंति । पतयश्च रोगव्याप्तं भृत्यं त्यक्ष्यंति । धनिनो वृद्धत्वेन दुग्धहीना गास्त्यक्ष्यंति ॥३६॥ स्त्रीलंपटा नराः पितृभ्रात्रादीन् हित्वा भार्याभगिनीभिः भार्याभ्रातृभिश्च सह गुप्तविचारं कुर्वंति ॥३७॥ शूद्रास्तपस्विवेषेण प्रतिग्रहं करिष्यंति । अधर्मज्ञा उच्चासनमारुह्य धर्मं वक्ष्यंति ॥३८॥

कलावन्नहीने भूतले सति अनावृष्टिभयातुराः स्नान-पान-शयन-वस्त्र-भूषणान्नरहिताः पिशाचसदृशाः प्रजा भविष्यंति ॥३९॥४०॥ किंच । कलौ विंशति-वराटकामात्रेऽप्यर्थे वैरं कृत्वा त्यक्तस्नेहाः प्राणानपि त्यक्ष्यंति ॥४१॥ पुत्रा वृद्धौ मातापितरौ न रक्षिष्यंति । पितरावपि गुणिनः पुत्रान्न रक्षिष्यंति ॥४२॥ हे राजन्, कलौ पाखंडमार्ग-विभिन्न-बुद्धयो मनुष्या बहुधा जगद्गुरुमच्युतं न यजंति ॥४३॥ अहो मरणोन्मुख आतुरो विवशोऽपि पुमान् यन्नाम गृणन् विमुक्तकर्मबंधनः सन् परमां गतिं प्राप्नोति। तं जनान यक्ष्यंति॥४४॥ अथ कलिदोपनाशोपायमाह। पुंसां चित्तस्थो भगवान् सर्वान् कलिकृतदोपान् हरति॥४५॥ किंच। श्रुतः कीर्तितो ध्यातः पूजित आदृतोऽपि वा भगवान् दशसहस्र-जन्मस्वपि कृतं पापं नाशयति

नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ॥ निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥३९॥ वासोऽन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाः पिशाचसंदर्शा भविष्यंति कलौ प्रजाः ॥४०॥ कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ॥ त्यक्ष्यंति च प्रियान्प्राणान्हनिष्यंति स्वकानपि ॥४१॥ न रक्षिष्यंति मनुजाः स्थविरौ पितरावपि ॥ पुत्रान्सर्वार्थकुशलान्क्षुद्राः शिश्नोदरंभराः ॥४२॥ कलौ न राजन् जगतां परं गुरुं त्रिलोकनाथानतपादपंकजम् ॥ प्रायेण मर्त्या भगवंतमच्युतं यक्ष्यंति पाखंडविभिन्नचेतसः ॥४३॥ यन्नामधेयं म्रियमाण आतुरः पतन्स्खलन्वा विवशो गृणन्पुमान् ॥ विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यंति न तं कलौ जनाः ॥४४॥ पुंसां कलिकृतान्दोषान्द्रव्यदेशात्मसंभवान् ॥ सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥४५॥ श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोऽपि वा ॥ नृणां धुनोति भगवान्हृत्स्थो जन्मायुताशुभम् ॥४६॥ यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हंति धातुजम् ॥ एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥४७॥ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ॥ नात्यंतशुद्धिं लभतेंऽतरात्मा यथा हृदिस्थे भगवत्यनंते ॥४८॥ तस्मात्सर्वात्मना राजन्हृदिस्थं कुरु केशवम् ॥ म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥४९॥ म्रियमाणैरपि ध्येयो भगवान्परमेश्वरः ॥ आत्मभावं नयत्यंग सर्वात्मा सर्वसंश्रयः ॥५०॥ कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ॥ कीर्तनादेव कृष्णस्य मुक्तसंगः परं व्रजेत् ॥५१॥ कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ॥ द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥५२॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे तृतीयोऽध्यायः ॥३॥ ॥ ॥

॥४६॥ यथा सुवर्णे स्थितोऽग्निस्ताम्रादिसंश्लेषजातं सुवर्णस्य दुर्वर्णं हंति । तथाऽऽत्मगतो विष्णुर्योगिनामपि पापवासनां हंति ॥४७॥ अपिच ॥ भगवति हृदि स्थिते सति अंतरात्मा यथा शुद्धिं लभते तथा विद्या-तपः-प्राणायाम-तीर्थयात्रा-व्रतादिभिर्न शुद्धिं लभते ॥४८॥ तस्मात्त्वं केशवं हृदिस्थं कुरु । ततः परां गतिं यास्यसि ॥४९॥ मरणोन्मुखैरपि ध्यातो भगवान् तान् स्वस्वरूपं प्रापयति ॥५०॥ किंच । हे नृप, दोषनिधेः कलेरेको महान् गुणोऽस्ति । यस्मिन् पुमान् कृष्णस्य कीर्तनादेव मुक्तबंधः सन् परमं पदं व्रजेत् ॥५१॥ कृतयुगे विष्णोर्ध्यानेन त्रेतायां यज्ञैर्द्वापरे हरिपूजया च जनो यत्फलं लभते तत्फलं हरिकीर्तनादेव कलौ लभते नान्यस्मिन् युगे ॥५२॥ इति श्रीमद्भागवतचू० द्वादशस्कंधे तृतीयोऽध्यायः ॥३॥

चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः । यत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥१॥ श्रीशुक उवाच ॥ हे नृप, परमाण्वादिर्द्विपदार्धांतः कालस्ते तृतीयस्कंधे कथितः । युगमानं च कथितम् । अथ कल्पलयौ शृणु ॥१॥ कृतादिचतुर्युगानां सहस्रं ब्रह्मणो दिनमुच्यते स कल्पः । यत्र चतुर्दश मनवो भवंति ॥२॥ लयस्तु चतुर्विधः । नैमित्तिकः प्राकृतिकः आत्यंतिको नित्यश्च । तत्र नैमित्तिकमाह । ब्रह्मणो दिवसावसाने दिनप्रमाणा रात्रिर्भवति । यत्र त्रयो लोका लयं प्राप्नुवंति ॥३॥ एष नैमित्तिकः प्रलयः । यत्र शेषासनो नारायणो विश्वं संहृत्य शेते ब्रह्मा च तस्मिन् शेते ॥४॥ प्राकृतिकं लयमाह । ब्रह्मणः शतवर्षात्मके आयुषि गते सति महदहंकार-पंचतन्मात्रारूपाः सप्त प्रकृतयः प्रलयाय कल्पंते

॥ श्रीशुक उवाच ॥ कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप ॥ कथितो युगमानं च शृणु कल्पलयावपि ॥१॥ चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते ॥ स कल्पो यत्र मनवश्चतुर्दश विशांपते ॥२॥ तदंते प्रलयस्तावान्ब्राह्मी रात्रिरुदाहृता ॥ त्रयो लोका इमे तत्र कल्पंते प्रलयाय हि ॥३॥ एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ॥ शेतेऽनंतासनो विश्वमात्मसात्कृत्य चात्मभूः ॥४॥ द्विपरार्धे त्वतिक्रांते ब्रह्मणः परमेष्ठिनः ॥ तदा प्रकृतयः सप्त कल्पंते प्रलयाय वै ॥५॥ एष प्राकृतिको राजन्प्रलयो यत्र लीयते ॥ आंडकोशस्तु संघातो विघात उपसादिते ॥६॥ पर्जन्यः शतवर्षाणि भूमौ राजन्न वर्षति ॥ तदा निरन्ने ह्यन्योऽन्यं भक्षमाणाः क्षुधार्दिताः ॥ क्षयं यास्यंति शनकैः कालेनोपद्रुताः प्रजाः ॥७॥ सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः ॥ रश्मिभिः पिबते घोरैः सर्वं नैव विमुंचति ॥८॥ ततः संवर्तको वह्निः संकर्षणमुखोत्थितः ॥ दहत्यनिलवेगोत्थः शून्यान्भूविवरानथ ॥९॥ उपर्यधः समंताच्च शिखाभिर्वह्निसूर्ययोः ॥ दह्यमानं विभात्यंडं दग्धगोमयपिंडवत् ॥१०॥ ततः प्रचंडपवनो वर्षाणामधिकं शतम् ॥ परः सावर्तको वाति धूम्रं खं रजसाऽऽवृतम् ॥११॥ ततो मेघकुलान्यंग चित्रवर्णान्यनेकशः ॥ शतं वर्षाणि वर्षंति नदंति रभसस्वनैः ॥१२॥ तत एकोदकं विश्वं ब्रह्मांडविवरांतरम् ॥१३॥ तदा भूमेर्गंधगुणं ग्रसंत्याप उदप्लवे ॥ ग्रस्तगंधा तु पृथिवी प्रलयत्वाय कल्पते ॥१४॥ अपां रसमथो तेजस्ता लीयंतेऽथ नीरसाः ॥ ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥१५॥ ॥

॥५॥ एष प्राकृतिकः प्रलयः । यत्र ब्रह्मांडकोशो लीयते ॥६॥ तदा पर्जन्यः शतवर्षाणि भूमौ न वर्षति । तेन निरन्ने भूमितले सति क्षुधार्दिताः प्रजा अन्योऽन्यं भक्षमाणाः सत्यः क्षयं यास्यंति ॥७॥ ततः प्रलयकालीनः सूर्यः सामुद्रं दैहिकं भौमं च सर्वं रसं स्वकिरणैराकर्षति । नैव मुंचति ॥८॥ ततः शेषमुखोत्पन्नोऽग्निः सप्त पातालानि दहति ॥९॥ तदोपर्यधः समंताच्चाग्निसूर्ययोर्ज्वालाभिर्दह्यमानं ब्रह्मांडं दग्धगोमयपिंडवद्विभाति ॥१०॥ ततः किंचिदधिकं वर्षाणां शतं प्रचंडो वायुर्वाति । तदा रजसा व्याप्तमाकाशं धूम्रं भवति ॥११॥ततो मेघकुलानि वर्षशतं वर्षंति । तत एकोदकं ब्रह्मांडं भवति॥१२॥१३॥तदा च भूमेर्गंधगुणमापो ग्रसंति । तदा ग्रस्तगंधा भूमिर्नश्यति ॥१४॥ ततोऽपां रसं तेजो ग्रसते । तदा

१ स कालः परमाणुर्वै इत्यादिना । २ चत्वारि त्रीणि द्वे चैकमित्यादिना । ३ ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो नैमित्तिक इत्यर्थः ।

ता आपस्तेजसि लीयंते । वायुस्तेजसो रूपं ग्रसते ॥१५॥ तत्तेजो वायौ लीयते । वायोर्गुणं स्पर्शमाकाशं ग्रसते । तदा वायुराकाशे लीयते ॥१६॥ तत आकाशस्य शब्दगुणं तामसाहंकारो ग्रसति । राजसाहंकार इंद्रियाणि ग्रसति । सात्विकाहंकारश्च देवान् ग्रसति ॥१७॥ तं त्रिविधमप्यहंकारं महत्तत्वं ग्रसति । महत्तत्वं त्रयो गुणा ग्रसंति । गुणान् अव्याकृतं ग्रसति ॥१८॥ तस्य तु लयो नास्ति । तत् आद्यंतहीनमव्यक्तं कारणं वदंति ॥१९॥ यत्र वाचो मनस्त्रयो गुणा महत्तत्वादयश्च न संति ॥२०॥ तथा जाग्रदाद्यवस्थाः पंच तत्वानि च न संति । तन्मूलभूतं पदं कथयंति ॥२१॥ एप प्राकृतिको लयः । यत्र ब्रह्मांडस्थाः सर्वाः शक्तयो लीयंते ॥२२॥ अथाऽऽत्यंतिकं लयमाह । आत्यंतिकलयो मोक्षः । स ब्रह्मज्ञानेन सर्वप्रपंचलयात्मको ज्ञातव्यः । तत्र बुद्धींद्रियार्थरूपेण तदाश्रयं ज्ञानमेव भाति न प्रपंचः ॥२३॥ यथा दीपः चक्षू रूपं चेति त्रीण्यपि तेजसः पृथक् न संति । तथा

लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ स वै विशति खं राजंस्ततश्च नभसो गुणम् ॥१६॥ शब्दं ग्रसति भूतादिर्नभस्तमनुलीयते ॥ तैजसश्चेंद्रियाण्यंग देवान्वैकारिको गुणैः ॥१७॥ महान्ग्रसत्यहंकारं गुणाः सत्वादयश्च तम् ॥ ग्रसतेऽव्याकृतं राजन्गुणान्कालेन चोदितम् ॥१८॥ न तस्य कालावयवैः परिणामादयो गुणाः ॥ अनाद्यनंतमव्यक्तं नित्यं कारणमव्ययम् ॥१९॥ न यत्र वाचो न मनो न सत्वं तमो रजो वा महदादयोऽमी ॥ न प्राणबुद्धींद्रियदेवता वा न संनिवेशः खलु लोककल्पः ॥२०॥ न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ॥ संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनंति ॥२१॥ लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ॥ शक्तयः संप्रलीयंते विवशाः कालविद्रुताः ॥२२॥ बुद्धींद्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ॥ दृश्यत्वाव्यतिरेकाभ्यामाद्यंतवदवस्तु यत् ॥२३॥ दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत् ॥ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥२४॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते ॥ मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि ॥२५॥ यथा जलधरा व्योम्नि भवंति न भवंति च ॥ ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥२६॥ सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह ॥ विनाऽर्थेन प्रतीयेरन्पटस्येवांग तंतवः ॥२७॥ यत्सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ॥ अन्योऽन्यापाश्रयात्सर्वमाद्यंतवदवस्तु यत् ॥२८॥

बुद्धिः इंद्रियाणि विपयाश्च ब्रह्मणः पृथक् न स्युः ॥२४॥ हे राजन्, जागरण-स्वप्न-सुपुप्त्यवस्था बुद्धेरुच्यंते तासामभिमानेन विश्वतैजसप्राज्ञरूपं नानात्वं प्रत्यगात्मनि मायामात्रमस्ति ॥२५॥ यथाऽऽकाशे मेघा उत्पद्यंते लयं च प्राप्नुवंति तथा ब्रह्मणि विश्वमुत्पद्यते लयं च प्राप्नोति ॥२६॥ हे राजन्, यथा पटस्यावयवास्तंतवः पटात्पृथक् प्रतीयंते तथा सर्वेपां मृत्तिकादीनां घटादयोऽवयवाः पृथक् प्रतीयंते तथापि मृत्तिकाद्येव सत्यं तथा भासित-सर्वावयवावधित्वाद्ब्रह्मैव सत्यम् ॥२७॥ यत्सामान्यविशेषाभ्यां परस्परापेक्षत्वेनोपलभ्यते स भ्रमः स्वप्नवन्मिथ्या । अतो यदाद्यंतवत्तत्सर्वमवस्त्विति ज्ञातव्यम् ॥२८॥ ॥ ॥ ॥ ॥

१ अचिंत्यशक्तिर्मायेषा ब्रह्मण्यव्याकृताभिधा । बुद्धिश्चेंद्रियाणि चार्थाश्चेत्येवं ग्राहककरणग्राह्यरूपेण । २ तेषामाश्रयभूतं ज्ञानं भाति । ३ दृश्यत्वात्कारणाव्यतिरेकादाद्यंतवत्त्वाच्च रज्जुसर्पादिवत् ।

प्रकाशमानोऽपि प्रपंचः प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि निरूपयितुं योग्यो नास्ति ॥२९॥ सत्यस्य नानात्वं नास्ति। अज्ञानी यदि नानात्वं मन्यते तर्हि तद्घटाकाशमहाकाशयोरिवोपाधिकृतमेव ॥३०॥ यथा सुवर्णं व्यवहारमार्गेषु कटक-कुंडलादिरूपेण बहुधा प्रतीयते । तथा भगवाँल्लौकिकवैदिकैर्वचोभिर्जनैर्बहुधा वर्णितो भवति ॥३१॥ यथा सूर्योत्पन्नः सूर्यप्रकाशितश्च मेघः सूर्यांशभूतस्य चक्षुषः सूर्यदर्शनप्रतिबंधको भवति । एवं ब्रह्मकार्यभूतो ब्रह्मप्रकाशितश्चाहंकारो ब्रह्मांशभूतस्य जीवस्य ब्रह्मस्वरूपदर्शनप्रतिबंधको भवति ॥३२॥ यदा च मेघो वायुना विदीर्यते तदा चक्षू रविमीक्षते । तथा यदाऽऽत्मनोऽहंकारो विचारेण नश्यति तदा जीवो ब्रह्माहमिति स्मरति ॥३३॥ हे राजन्, यदा एतेन ज्ञानशस्त्रेणाहंकारबंधनं छित्वाऽच्युतात्मानुभवोऽवतिष्ठते तदा तमात्यंतिकं प्रलयमाहुः ॥३४॥ अथ नित्यप्रलयमाह । हे नृप, सूक्ष्मज्ञाः पुरुषा ब्रह्मादिसर्वभूतानां नित्यमुत्पत्तिप्रलयौ प्रचक्षते ॥३५॥ यथा नदीप्रवाह-दीपज्वाला-दीनां नीचोच्चगत्याद्यवस्थाः स्पष्टतया न लक्ष्यंते यथा चाकाशे गच्छतां चंद्रादीनां गमनावस्थाविशेषा नैव लक्ष्यंते तथेश्वरमूर्तिना कालेन देहादेर्जन्माद्यवस्था भिन्ना नैव लक्ष्यंते ॥३६॥३७॥ एवं नित्यो नैमित्तिकः प्राकृतिक आत्यंतिक इति चतुर्विधः लयस्ते कथितः ॥३८॥ हे राजन्, एताः नारायणस्य लीलाकथाः संक्षेपेण ते कथिताः । ताः साकल्येन वक्तुं ब्रह्मापि न समर्थः ॥३९॥ किंच । दुस्तरं संसारसमुद्रं तर्तुमिच्छोः पुंसो भगवतो लीलाकथारससेवनं विनाऽन्यत् तरणसाधनं नास्ति ॥४०॥ ॥ ॥ ॥ ॥ ॥ ॥

विकारः ख्यायमानोऽपि प्रत्यगात्मानमंतरा ॥ न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥२९॥ नहि सत्यस्य नानात्वमविद्वान्यदि मन्यते ॥ नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥३०॥ यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ॥ एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥३१॥ यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ॥ एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबंधनः ॥३२॥ घनो यदाऽर्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा ॥ यदा ह्यहंकार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥३३॥ यदैवमेतेन विवेकहेतिना मायामयाहंकरणात्मबंधनम् ॥ छित्वाऽच्युतात्माऽनुभवोऽवतिष्ठते तमाहुरात्यंतिकमंग संप्लवम् ॥३४॥ नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप ॥ उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥३५॥ कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ॥ परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥३६॥ अनाद्यंतवताऽनेन कालेनेश्वरमूर्तिना ॥ अवस्था नैव दृश्यंते वियति ज्योतिषामिव ॥३७॥ नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ॥ आत्यंतिकश्च कथितः कालस्य गतिरीदृशी ॥३८॥ एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः ॥ लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥३९॥ संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ॥ लीलाकथारसनिषेवणमंतरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥४०॥ ॥ ॥

हे राजन्, एतां पुराणसंहितां नारायण ऋषिर्नारदाय प्राह । स व्यासाय जगाद ॥४१॥ स व्यास इमां वेदसंमितां संहितां मह्यं प्राह ॥४२॥ हे राजन्, एतां संहितामसौ सूतो नैमिषारण्ये शौनकादिभिः पृष्टः सन् तेभ्यो वक्ष्यति ॥४३॥ इति श्रीमद्भाग० चू० द्वादशस्कंधे चतुर्थोऽध्यायः ॥४॥ पंचमे तु समासेन परब्रह्मोपदेशतः । राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥१॥ श्रीशुक उवाच ॥ हे नृप, अत्र भागवते भगवान् हरिर्वारंवारं वर्ण्यते । यस्य रजोगुणवृत्तिरूपाद्धर्षाद्ब्रह्मा क्रोधाच्च रुद्रो जातः । एवंभूतं हरिं शृण्वतः कुतोऽन्यस्माद्भयशंका ॥१॥ हे राजन्, त्वं तु कृतार्थोऽसि । अतोऽहं मरिष्यामीत्यविवेकं त्यज । यतस्त्वं न नंक्ष्यसि । यथा देहः प्रागभूत एवाद्य जातो नंक्ष्यति । न चैवं त्वं पूर्वं नाभूः । न चाद्य जातोऽसि अतो न नंक्ष्यसि ॥२॥ हे राजन्, त्वं पुत्रपौत्रादिरूपवान् बीजांकुरवन्न भविष्यसि । यतस्त्वं देहात्काष्ठादग्निरिव भिन्नोऽसि । देहाद्देह एव जायते

पुराणसंहितामेतामृषिर्नारायणोऽव्ययः ॥ नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥४१॥ स वै मह्यं महाराज भगवान्बादरायणः ॥ इमां भागवतीं प्रीतः संहितां वेदसंमिताम् ॥४२॥ एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये ॥ दीर्घसत्रे कुरुश्रेष्ठ संपृष्टः शौनकादिभिः ॥४३॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे चतुर्थोऽध्यायः ॥४॥ श्रीशुक उवाच ॥ अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान्हरिः ॥ यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥१॥ त्वं तु राजन्मरिष्येति पशुबुद्धिमिमां जहि ॥ न जातः प्रागभूतोऽद्य देहवत्त्वं न नंक्ष्यसि ॥२॥ न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ॥ बीजांकुरवद्देहादेर्व्यतिरिक्तो यथाऽनलः ॥३॥ स्वप्ने यथा शिरश्छेदं पंचत्वाद्यात्मनः स्वयम् ॥ यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥४॥ घटे भिन्ने यथाकाश आकाशः स्याद्यथा पुरा ॥ एवं देहे मृते जीवो ब्रह्म संपद्यते पुनः ॥५॥ मनः सृजति वै देहान्गुणान्कर्माणि चात्मनः ॥ तन्मनः सृजते माया ततो जीवस्य संसृतिः ॥६॥ स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ॥ ततो दीपस्य दीपत्वमेवं देहकृतो भवः ॥ रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ॥७॥ न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः ॥ आकाश इव चाधारो ध्रुवोऽनंतोपमस्ततः ॥८॥ एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ॥ बुद्ध्याऽनुमानगर्भिण्या वासुदेवानुचिंतया ॥९॥

नात्मा ॥३॥ किंच । यथा स्वप्ने स्वशिरश्छेदं स्वयं पश्यति जागरणेऽपि पुत्रपित्रादेर्देहस्य जन्ममरणादिकं स्वयं पश्यति तद्वदेवात्मनः इदं भ्रममात्रम् । वस्तुतश्चात्माऽजोऽमरश्च ॥४॥ यथा घटे भिन्ने घटाकाशः पूर्ववन्महाकाशः स्यात् । एवं देहे तत्त्वज्ञानेन लीने सति जीवः पुनर्ब्रह्म संपद्यते ॥५॥ मनो देहादीन् सृजति । तच्च मनो माया सृजति । ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिर्न स्वतः ॥६॥ यथा स्नेहपात्र-वर्त्यग्नीनां संयोगो यावदस्ति तावद्दीपस्य ज्वालारूपः परिणामोऽस्ति तथा कर्म-मनो-देह-चैतन्याध्यासैर्देहनिबंधनः संसारो न त्वात्मनः ॥७॥ यथा दीपनाशेऽपि महाभूतरूपं तेजो न नश्यति तथा संसारनाशेऽपि स्वयंप्रकाशः स्थूलसूक्ष्मदेहयोरन्य आकाश इवाधारो निर्विकारोऽनंतो व्यापकश्चात्मा न नश्यति ॥८॥ हे प्रभो, एवमनुमानगर्भिण्या बुद्ध्या वासुदेवानुचिंतया देहाद्युपाधिस्थमात्मानमात्मनैव विचारय ॥९॥ ॥ ॥

एवं कृते द्विजप्रेरितस्तक्षकस्त्वां न धक्ष्यति । यतो मृत्युहेतवः कालाद्या मृत्यूनामपि मृत्युमीश्वरं न बाधंते ॥१०॥ अपिच । योऽहं स ब्रह्मैव यद्ब्रह्म तदहमेव । एवं समीक्षन्नि-रुपाधावात्मनि स्वात्मानं स्थापयित्वा ॥११॥ पादे दशंतं तक्षकं सर्पं स्वशरीरं विश्वं चात्मनः पृथक् न द्रक्ष्यसि ॥१२॥ हे तात, यथा त्वं हरेर्लीलां पृष्टवांस्तथा ते कथितम् । भूयः किं श्रोतुमिच्छसि ॥१३॥ इति श्रीमद्भागवतचूर्णिकायां द्वादशस्कंधे पंचमोऽध्यायः ॥५॥ षष्ठे परीक्षितो मोक्षः सर्पहोमादि तत्सुतात् । वेदशास्त्रविभागोक्तौ त्रि-वेदि-व्यासवर्ण-नम् ॥१॥ सूत उवाच ॥ एवं राजा परीक्षित् शुकोक्तं निशम्याऽवनतेन मूर्ध्ना तत्पादौ शिरसि निधाय बद्धांजलिः सन् तमिदमाह ॥१॥ राजोवाच ॥ हे मुने, करुणात्मना भव-ताऽहमनुगृहीतोऽस्मि । अतः कृतार्थोऽस्मि । यतो मे भवताऽनादिनिधनो हरिः श्रावितः । तत्प्राप्तिसाधनं च श्रावितम् ॥२॥ किंच । अज्ञेष्वनुग्रह इति यत्तन्महतां वोऽत्यद्भु-

चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ॥ मृत्यवो नोपधक्ष्यंति मृत्यूनां मृत्युमीश्वरम् ॥१०॥ अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥ एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥११॥ दशंतं तक्षकं पादे लेलिहानं विषाननैः ॥ न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥१२॥ एतत्ते कथितं तात यथाऽऽत्मा पृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥१३॥ इति श्रीम० महा० द्वाद० ब्रह्मोपदेशो नाम पंचमोऽध्यायः ॥५॥ सूत उवाच ॥ एतन्निशम्य मुनिनाऽभिहितं परीक्षिद्व्यासात्मजेन निखिलात्मदृशा समेन ॥ तत्पादमूलमुपसृत्य नतेन मूर्ध्ना बद्धांजलिस्तमिदमाह स विष्णुरातः ॥१॥ राजोवाच ॥ सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ॥ श्रावितो यच्च मे साक्षादनादिनि-धनो हरिः ॥२॥ नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम् ॥ अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥३॥ पुराणसंहितामेतामश्रौष्म भवतो वयम् ॥ यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥४॥ भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ॥ प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ॥५॥ अनुजानीहि मां ब्रह्मन्वाचं यच्छाम्यधोक्षजे ॥ मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥६॥ अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ॥ भवता दर्शितं क्षेमं परं भगवतः पदम् ॥७॥ सूत उवाच ॥ इत्युक्तस्तमनुज्ञाप्य भगवान्बादरायणिः ॥ जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥८॥ परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ॥ समाधाय परं दध्यावस्पंदासुर्यथा तरुः ॥९॥ ॥ ॥

तमहं न मन्ये ॥३॥ एतां पुराणसंहितां त्वत्तो वयं श्रुतवंतः । यस्यामुत्तमश्लोको भगवान् वर्ण्यते॥४॥हे भगवन्, त्वया दर्शितं ब्रह्माहं प्रविष्टोऽस्मि । अतस्तक्षकादिभ्यो मृत्युभ्यो न बिभेमि ॥५॥ हे ब्रह्मन्, अहं वाचमिंद्रियाणि च नियम्य मुक्तवासनं चित्तमधोक्षजे प्रवेश्य प्राणान् विसृजामि । मांप्रत्याज्ञां देहि ॥६॥ किंच । त्वया भगवतः क्षेमं पदं मे दर्शि-तमस्ति । अत एव मेऽज्ञानं तत्संस्काराश्च निरस्ताः॥७॥ सूत उवाच ॥ इत्याकर्ण्य शुकस्तमाज्ञाप्य राज्ञा पूजितः सन् भिक्षुभिः सह जगाम ॥८॥ परीक्षिदपि प्रत्यक्प्रकाशे आत्मनि बुद्ध्या मनः समाधाय परमात्मानं दध्यौ । तदा स ब्रह्मरूपो भूत्वा स्थाणुरिव लीनप्राणो बभूव ॥९॥ ॥ ॥ ॥

तदाह । गंगातटे पूर्वाग्रदर्भासने उदङ्मुख आसीनो निःसंगो गतसंशयो राजा ब्रह्मभूतो बभूव ॥१०॥ तदा हे विप्राः, क्रुद्धेन द्विजपुत्रेण प्रेरितस्तक्षको नृपं हंतुकामो विप्रवेषेण गच्छन् मार्गे कश्यपं विप्रं दृष्ट्वा प्राह ॥११॥ हे कश्यप, त्वं क्व गमिष्यसि । स आह । अहं द्रव्येच्छया परीक्षिद्राज्ञस्तक्षकस्य विषोत्तारणाय गच्छामि । तदा विप्र आह । अहमेव तक्षको मद्विषं त्वं दूरीकुर्वित्युक्त्वा समीपस्थं वटवृक्षं दंशनेन भस्मीचकार । कश्यपेन च मंत्रजपाद्विषमुत्तार्य वटवृक्षोऽङ्कुरोत्पादनादिना पूर्ववत्कृतः । तं वटं दृष्ट्वा परितुष्टस्तक्षको विषहारिणं तं कश्यपमिच्छितद्रव्यदानेन संतर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः सन् नृपमदशत् ॥१२॥ तदा ब्रह्मभूतस्य राज्ञो देहस्तक्षकविषाग्निना सद्यो भस्मसाद्बभूव ॥१३॥ तदा भुवि आकाशे दिक्षु च महान् हाहाकार आसीत् । सर्वे देवासुरनरादयो विस्मिता अभवन् ॥१४॥ तदा देवदुंदुभयो नेदुः गंधर्वाप्सरसो जगुः । देवाः पुष्पवृष्टिं

प्राक्कूले बर्हिष्यासीनो गंगाकूल उदङ्मुखः ॥ ब्रह्मभूतो महायोगी निःसंगश्छिन्नसंशयः ॥१०॥ तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना ॥ हंतुकामो नृपं गच्छन्ददर्श पथि कश्यपम् ॥११॥ तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ॥ द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥१२॥ ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ॥ बभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम् ॥१३॥ हाहाकारो महानासीद्भुवि खे दिक्षु सर्वतः ॥ विस्मिता ह्यभवन्सर्वे देवासुरनरादयः ॥१४॥ देवदुंदुभयो नेदुर्गंधर्वाप्सरसो जगुः ॥ ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥१५॥ जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ॥ यथा जुहाव संक्रुद्धो नागान्सत्रे सह द्विजैः ॥१६॥ सर्पसत्रे समिद्धाग्नौ दह्यमानान्महोरगान् ॥ दृष्ट्वेंद्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥१७॥ अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान् ॥ उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥१८॥ तं गोपायति राजेंद्र शक्रः शरणमागतम् ॥ तेन संस्तंभितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥१९॥ पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ॥ सहेंद्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥२०॥ तच्छ्रुत्वाऽऽजुहुवुर्विप्राः सहेंद्रं तक्षकं मखे ॥ तक्षकाशु पतस्वेह सहेंद्रेण मरुत्वता ॥२१॥ इति ब्रह्मोदिताक्षेपैः स्थानादिंद्रः प्रचालितः ॥ बभूव संभ्रांतमतिः सविमानः सतक्षकः ॥२२॥ तं पतंतं विमानेन सह तक्षकमंबरात् ॥ विलोक्यांगिरसः प्राह राजानं तं बृहस्पतिः ॥२३॥ ॥ ॥ ॥ ॥

चक्रुः ॥१५॥ अथ जनमेजयस्तक्षकभक्षितं स्वपितरं श्रुत्वा क्रुद्धो भूत्वा द्विजैः सह वर्तमानः सन् सर्पसत्रे सर्पान् जुहाव ॥१६॥ तस्मिन् सर्पसत्रे दह्यमानान् महोरगान् दृष्ट्वा भीतस्तक्षक इंद्रं शरणं ययौ ॥१७॥ तदा राजा तक्षकमपश्यन् द्विजानाह । हे द्विजाः सर्पेष्वधमस्तक्षकः कस्मान्न दह्यते ॥१८॥ ते ऊचुः । हे नृप, शरणागतं तमिंद्रो रक्षति । अतोऽग्नौ न पतति ॥१९॥ एवं श्रुत्वा नृपो ऋत्विज आह । हे विप्राः, इंद्रसहितस्तक्षकोऽग्नौ किमिति न पात्यते ॥२०॥ ततो विप्रा राजवचः श्रुत्वा यज्ञे इंद्रसहितस्य तक्षकस्याव्हानं कृतवंतः । तदाह । हे तक्षक, इंद्रेण सह इहाग्नावाशु पतस्व ॥२१॥ इति ब्राह्मणोक्तैः कठोरवाक्यैः सविमानः सतक्षक इंद्रः स्थानात् प्रचालितो बभूव ॥२२॥ तदाऽऽकाशात्पतंतमिंद्रं

विलोक्य बृहस्पती राजानमाह ॥२३॥ हे राजन्, अयं तक्षकस्त्वत्तो वधं नार्हति । यतोऽनेनामृतं पीतम् । अतोऽयमजरामरोऽस्ति ॥२४॥ किंच । हे राजन्, जंतोर्जीवितं मरणं परलोकगतिश्च स्वेन कर्मणैव भवति । अतः सुखदुःखयोः प्रदाताऽन्यस्यान्यो नास्ति ॥२५॥ सर्प-चौराग्नि-विद्यु-त्क्षुत्तृड्-व्याध्यादिभिर्जंतुर्मृत्युं प्राप्नोतीति यत् तत्प्रारब्धकर्मैव भुंक्ते ॥२६॥ अत इदं हिंसाफलं सत्रं समाप्यताम् । हे नृप, निरपराधाः सर्पा दग्धाः । इदमपि तेषां प्राचीनं कर्मातो नायं तवापराधः ॥२७॥ सूत उवाच । एवमुक्तो नृपः सर्पसत्रादुपरतः सन् बृहस्पतिं पूजयामास ॥२८॥ ननु कथं विदुषामप्येवं संमोहो यतो ब्रह्मकोपात्परीक्षितो मृत्युर्जनमेजयकोपात्सर्पाणां मृत्युरिति तत्राह । सैषा विष्णोर्महामाया । यया विष्णोरात्मभूताः प्राणिनो मोहं प्राप्य बाध्यबाधकतां व्रजंति ॥२९॥ कथं तर्हि मायातत्कार्यनिवृत्तिरित्याशंक्य श्रीविष्णुस्वरूपनिरूपणपूर्वकं तद्भजनात्सर्वानर्थनिवृत्तिं

नैष त्वया मनुष्येंद्र वधमर्हति सर्पराट् ॥ अनेन पीतममृतमथवा अजरामरः ॥२४॥ जीवितं मरणं जंतोर्गतिः स्वेनैव कर्मणा ॥ राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥२५॥ सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप ॥ पंचत्वमृच्छते जंतुर्भुंक्त आरब्धकर्म तत् ॥२६॥ तस्मात्सत्रमिदं राजन्संस्थीयेताभिचारिकम् ॥ सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥२७॥ सूत उवाच ॥ इत्युक्तः स तथेत्याह महर्षेर्मानयन्वचः ॥ सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥२८॥ सैषा विष्णोर्महामायाऽबाध्ययाऽलक्षणा यया ॥ मुह्यंत्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः ॥२९॥ न यत्र दंभीत्यभया विराजिता मायाऽऽत्मवादेऽसकृदात्मवादिभिः ॥ न यद्विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्ति यत् ॥३०॥ न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहम् ॥ तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन्विरमेत्स्वयं मुनिः ॥३१॥ परं पदं वैष्णवमामनंति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः ॥ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥३२॥ त एतदधिगच्छंति विष्णोर्यत्परमं पदम् ॥ अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥३३॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥३४॥ नमो भगवते तस्मै कृष्णायाकुंठमेधसे ॥ यत्पादांबुरुहध्यानात्संहितामध्यगामिमाम् ॥३५॥

कथयति । यत्र स्वरूपे आत्मवादिभिरात्मविचारे क्रियमाणे सति सा माया भीतेव स्वकार्यं स्नेहादिकमकुर्वती सती कथंचिद्वर्तते । यत्र मायाश्रितो विविधो वादो मनश्च नास्ति ॥३०॥ किंच । यत्र कर्तृ-कर्म-फलादिभिर्युक्तोऽहंकारात्मको जीवश्च नास्ति । तस्मिन्नात्मस्वरूपे मुनिरहंकारादीन्निषिध्य क्रीडेत् ॥३१॥ नेतिनेतीत्येवं जडनिरासं कुर्वंतः पुरुषा विद्वद्भिर्ध्यानादिना निश्चितं तदेव वैष्णवं पदं कथयंति ॥३२॥ येषामहं ममेति दौर्जन्यं नास्ति त एवैतत्पदं प्राप्नुवंति ॥३३॥ अस्य प्राप्त्युपायमाह । परैः कृतान्निंदादीन् अपवादान् सहेत । स्वयं कस्याप्यवमानं न कुर्यात् । इमं देहमाश्रित्य केनचिदपि वैरं न कुर्वीत ॥३४॥ सूतः शास्त्रसमाप्तौ गुरुं प्रणमति । यस्य चरणकमलध्यानात् इमां संहितामहं प्राप्तोऽस्मि तस्मै भगवते व्यासाय नमः ॥३५॥

॥ ॥ ॥ ॥ ॥ ॥

शौनक उवाच ॥ व्यासशिष्यैः पैलादिभिर्वेदाः कतिधा विभक्तास्तद्ब्रूहि ॥३६॥ सूत उवाच ॥ हे शौनक, आदौ ब्रह्मणो हृदयाकाशान्नादोऽभूत् । तस्मान्नादादकारोकारमकारात्मक ओंकारः स्वत एव प्रकटोऽभूत् । यो नादः श्रोत्रनिरोधेन सर्वैरनुभूयते ॥३७॥ यस्य च नादब्रह्मण उपासनेन योगिनोऽध्यात्मादिमलमपोह्य मोक्षं यांति ॥३८॥ ततो नादाद्धृदि स्वत एव प्रकाशमानः पूर्वोक्त ओंकारोऽभूत् । सुषुप्तौ श्रवणवृत्तिरहितेऽपि श्रोत्रेंद्रिये परैरुच्चारितं शब्दं श्रुत्वा यो भगवान् जीवं प्रबोधयति । तस्य भगवतो वाचकोऽयमोंकारः । तस्माद्वैखरी वाणी प्रकटा भवति । ओंकार एवोपनिषदां मंत्रादीनां च बीजम् ॥३९॥४०॥४१॥ तस्याकारोकार-मकारास्त्रयो वर्णा आसन् ॥४२॥ तेभ्य एव

॥ शौनक उवाच ॥ पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ॥ वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः ॥३६॥ सूत उवाच ॥ समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः ॥ हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥३७॥ यदुपासनया ब्रह्मन्योगिनो मलमात्मनः ॥ द्रव्यक्रियाकारकाख्यं धूत्वा यांत्यपुनर्भवम् ॥३८॥ ततोऽभूत्त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् ॥ यत्तल्लिंगं भगवतो ब्रह्मणः परमात्मनः ॥३९॥ शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ॥ येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥४०॥ स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ॥ स सर्वमंत्रोपनिषद्वेदबीजं सनातनम् ॥४१॥ तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ॥ धार्यंते यैस्त्रयो भावा गुणानामार्थवृत्तयः ॥४२॥ ततोऽक्षरसमाम्नायमसृजद्भगवानजः ॥ अंतस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥४३॥ तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ॥ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ॥४४॥ पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान् ॥ ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥४५॥ ते परंपरया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥४६॥ क्षीणायुषः क्षीणसत्वान्दुर्मेधान्वीक्ष्य कालतः ॥ वेदान् ब्रह्मर्षयो व्यस्यन्हृदिस्थाच्युतचोदिताः ॥४७॥ अस्मिन्नप्यंतरे ब्रह्मन्भगवाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥४८॥ पराशरात्सत्यवत्यामंशांशकलया विभुः ॥ अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥४९॥ ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ॥ चतस्रः संहिताश्चक्रे मंत्रैर्मणिगणा इव ॥५०॥ तासां स चतुरः शिष्यानुपाहूय महामतिः ॥ एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥५१॥ ॥

भगवानक्षरसमुदायमसृजत् ॥४३॥ तेनाक्षरसमुदायेन ब्रह्मा चतुर्भिर्मुखैश्चतुरो वेदानसृजत् ॥४४॥ तांश्च वेदान् स्वपुत्रान् मरीच्यादीन् प्रत्यध्यापयामास । ते च मरीच्यादयः स्वपुत्रेभ्यः समादिशन् ॥४५॥ एवं वेदाश्चतुर्युगेषु तत्तच्छिष्यैः परंपरया प्राप्ताः । अथ द्वापरादौ मंदबुद्धीन् जनान् वीक्ष्य ते वेदा ईश्वरप्रेरितैर्महर्षिभिर्विभक्ताः ॥४६॥४७॥ अस्मिन् वैवस्वते मन्वंतरेऽपि धर्मरक्षणार्थं ब्रह्मशिवादिभिः प्रार्थितो भगवान् ॥४८॥ पराशरात्सत्यवत्यामंशेनावतीर्णः सन् वेदं चतुर्विधं चक्रे ॥४९॥ चातुर्विध्यमेवाह । ऋग्यजुःसामाथर्वाणां मंत्राणां राशीन् तत्तत्प्रकरणभेदैरुद्धृत्य तैर्मंत्रैरृगादयश्चतस्रः संहिताश्चक्रे ॥५०॥ ततस्तांश्चतुरः शिष्यानाहूय तेभ्य एकैकां संहितां ददौ ॥५१॥ ॥

पैलाय प्रथमामृग्वेदसंहितां ददौ । वैशंपायनाय द्वितीयां यजुर्वेदसंहिताम् ॥५२॥ जैमिनये तृतीयां सामवेदसंहितां सुमंतवे च चतुर्थीमथर्ववेदसंहितां ददौ ॥५३॥ तत्र पैलः स्वसंहितां द्वेधा विभज्येंद्रप्रमितये वाष्कलाय चोचे । स वाष्कलः स्वां संहितां चतुर्धा व्यस्य बोध्य-याज्ञवल्क्य-पराशरा-ग्निमित्रेभ्यश्चतुर्भ्यः प्राह ॥५४॥५५॥ इंद्रप्रमितिः स्वां संहितां स्वसुतं मांडूकेयमध्यापयामास । मांडूकेयस्य शिष्यो देवमित्रः स सौभर्यादिभ्य ऊचिवान् ॥५६॥ मांडूकेयसुतः शाकल्यस्तां संहितां पंचधा व्यस्य वात्स्य-मुद्गल-शालीय-गोखल्य-शिशिरान्प्रत्यध्यापयामास ॥५७॥ शाकल्यशिष्यो जातूकर्ण्यः स्वसंहितां त्रिधा विभज्य निरुक्तं च चतुर्थं कृत्वा बलाक-पैज-वैताल-विरजेभ्यो ददौ ॥५८॥ पूर्वोक्तस्य वाष्क-

पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ॥ वैशंपायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥५२॥ साम्नां जैमिनये प्राह तथा छंदोगसंहिताम् ॥ अथार्वांगिरसीं नाम स्वशिष्याय सुमंतवे ॥५३॥ पैलः स्वसंहितामूच इंद्रप्रमितये मुनिः ॥ बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥५४॥ चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ॥ पराशरायाग्निमित्रे इंद्रप्रमितिरात्मवान् ॥५५॥ अध्यापयत्संहितां स्वां मांडूकेयमृषिं कविम् ॥ तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥५६॥ शाकल्यस्तत्सुतः स्वां तु पंचधा व्यस्य संहिताम् ॥ वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥५७॥ जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ॥ बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥५८॥ बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ॥ चक्रे बालायनिर्भज्यः कासारश्चैव तां दधुः ॥५९॥ बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैतच्छंदसां व्यासं सर्वपापैः प्रमुच्यते ॥६०॥ वैशंपायनशिष्या वै चरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांऽहःक्षपणं स्वगुरोर्व्रतम् ॥६१॥ याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत् ॥ चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥६२॥ इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ॥ विप्रावमंत्रा शिष्येण मदधीतं त्यजाश्विति ॥६३॥ ॥ ॥ ॥ ॥

लस्य पुत्रो वाष्कलिः स सर्वशाखाभ्यो वालखिल्यनामकां संहितां चक्रे । तां संहितां बालायनिर्भज्यः कासारश्चाधीतवंतः ॥५९॥ एता बह्वृचाः संहिताः एभिर्ऋषिभिर्धृताः । एषां छंदसां विभागं श्रुत्वा सर्वपापैः प्रमुच्यते ॥६० अथ यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रसंगमाह । वैशंपायनस्य चरकाध्वर्यवो नाम शिष्या आसन् । ये स्वगुरोर्ब्रह्महत्यानाशकं ब्रह्मचर्यव्रतं चेरुः ॥६१॥ याज्ञवल्क्यश्च वैशंपायनशिष्यः स तदा गुरुमाह । हे गुरो, अल्पधैर्याणामेतेषामाचरणेन कियत्फलम् । अहं सुदुश्चरं व्रतमाचरिष्यामि ॥६२॥ इत्याकर्ण्य कुपितो वैशंपायन आह । हे याज्ञवल्क्य, ब्राह्मणावमानकर्त्रा त्वया शिष्येनालम् । अतस्त्वं मदधीतं शीघ्रं त्यक्त्वा याहि ॥६३॥ ॥ ॥ ॥

१ एवं ह्यत्र कथा ब्रह्मांडे—एकदा मेरुपृष्ठे देवयज्ञे मिलिता ऋषयोऽन्येषामृषीणां तत्रागमनार्थं दारुणं समयं चक्रुः । यो ऋषिरत्र सप्तदिनमध्ये नागच्छेत्स ब्रह्महत्यादोषं प्राप्नुयात् । तच्छ्रुत्वा वैशंपायनवर्जिताः सर्वे ऋषयस्तत्रागताः । वैशंपायनश्च नागतः । तेन कारणेन स ब्रह्महत्यादोषं प्राप्तः । स शिष्यानाह । यूयं मद्ब्रह्महत्यानाशकं व्रतं चरध्वम् । ततस्ते तद्व्रतं चेरुरिति ।

ततो याज्ञवल्क्यो यजुर्गणं छर्दित्वा गतः ॥६४॥ तं छर्दितं यजुर्गुणं दृष्ट्वा मुनयस्तित्तिरपक्षिणो भूत्वा तद्भक्षणं चक्रुः । ततो हेतोस्तास्तैत्तिरीयनामका यजुःशाखा आसन् ॥६५॥
अथ काण्वमाध्यंदिनादिशाखाप्रसंगमाह । याज्ञवल्क्यो गुरौ अविद्यमानान्यधिकानि छंदांसि मृगयन् सूर्यमुपतस्थे ॥६६॥ याज्ञवल्क्य उवाच ॥ हे भगवन्, तुभ्यमादित्याय नमो नमः । किंच । ब्रह्मादितृणपर्यंतानां जगतामात्मस्वरूपेणांतर्हृदयेषु कालरूपेण बहिरपि च वर्तमानो यो भवानेक एव इमां लोकस्थितिं प्रवर्तयति॥६७॥ हे देवश्रेष्ठ, प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानामखिलदुःखनाशकं तव मंडलं ध्यायेम ॥६८॥ किंच । यो भवान् स्थावरजंगमानां जीवानां मनइंद्रियप्राणान् स्वयमंतर्यामी प्रवर्तयति ॥६९॥

देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ॥ ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥६४॥ यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ॥ तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः ॥६५॥ याज्ञवल्क्यस्ततो ब्रह्मंश्छंदांस्यधिगवेषयन् ॥ गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥६६॥ याज्ञवल्क्य उवाच ॥ ॐनमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तंबपर्यंतानामंतर्हृदयेषु बहिरपि चाकाश इवोपाधिना व्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥६७॥ यदुह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपनमंडलम् ॥६८॥ य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइंद्रियासुगणाननात्मनः स्वयमात्मांतर्यामी प्रचोदयति ॥६९॥ य एवेमं लोकमतिकरालवदनांधकारसंज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकंपया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥७०॥ परित आशापालैस्तत्र तत्र कमलकोशांजलिभिरुपहृतार्हणः ॥७१॥ अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वंदितमहमयातयामयजुःकाम उपसरामीति ॥७२॥ सूत उवाच ॥ एवं स्तुतः स भगवान्वाजिरूपधरो हरिः ॥ यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥७३॥ यजुर्भिरकरोच्छाखा दशपंच शतैर्विभुः ॥ जगृहुर्वाजसन्यस्ताः काण्वमाध्यंदिनादयः ॥७४॥ ॥ ॥ ॥

य एक एव परमकारुणिको भगवान् अंधकाररूपेणाजगरेण गिलितं लोकं दृष्ट्वा कृपया स्वोदयेन तं लोकं स्वधर्माचरणरूपे श्रेयसि प्रवर्तयति ॥७०॥ तदा भवानिंद्रादिलोकपालैः कमल-कोरक-सदृशैरंजलिभिः समर्पितपूजो भवति ॥७१॥ हे भगवन्, ब्रह्मादिभिर्वंदितं तव चरणकमलद्वयमहमयातयामयजुष्कामो भजामि ॥७२॥ सूत उवाच ॥ एवं स्तुतः सूर्योऽश्वरूपधरः सन् याज्ञवल्क्यायायातयामानि यजूंषि प्रादात् ॥७३॥ ततो याज्ञवल्क्यस्तैर्यजुर्भिः पंचदश शाखा अकरोत् । रविणाऽश्वरूपेण स्वकेशेभ्यो वेगेन त्यक्तास्ता वाजस-

१ छर्दितस्यादानं विप्ररूपेणानुचितमिति मत्वेत्यर्थः ।  २ नूतनानि ।

नीसंज्ञकाः शाखाः काण्वमाध्यंदिनादयो जगृहुः ॥७४॥ अथ सामवेदशाखाविभागमाह । जैमिनेः सुतः सुमंतुस्तस्य सुतः सुन्वान् । ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां संहितां जैमिनिः प्राह ॥७५॥ जैमिनिशिष्यः सुकर्माऽपि सामवेदस्य सहस्रं संहिताभेदं चक्रे ॥७६॥ तस्य सुकर्मणस्त्रयः शिष्याः– हिरण्यनाभः पौष्यंजिः आवंत्यश्चेति । ते ताः संहिता जगृहुः ॥७७॥ तेषां त्रयाणां शिष्याः प्रत्येकं पंचशतान्यासन् । ते तावतीः शाखा यथाविभागं जगृहुः ॥७८॥ अन्येऽपि पौष्यंजिशिष्याः पंचासन्– लौगाक्षिः मांगलिः कुल्यः कुशीदः कुक्षिश्चेति । ते प्रत्येकं शतं शतं संहिता जगृहुः ॥७९॥ हिरण्यनाभस्यान्यः कृतनामा शिष्यः स चतुर्विंशतिं संहिताः स्वशिष्येभ्य ऊचे । आवंत्यश्च शेषाः संहिताः शिष्येभ्यः प्राह ॥८०॥ इति श्रीमद्भागवतचूर्णिकायां द्वादशस्कंधे षष्ठोऽध्यायः ॥६॥ सप्तमेऽथर्वविस्तारः पुराणव्यसनं ततः ॥ पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥१॥ सूत

जैमिनेः सामगस्यासीत्सुमंतुस्तनयो मुनिः ॥ सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥७५॥ सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ॥ सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विजः ॥७६॥ हिरण्यनाभः कौशल्यः पौष्यंजिश्च सुकर्मणः ॥ शिष्यौ जगृहतुश्चान्य आवंत्यो ब्रह्मवित्तमः ॥७७॥ उदीच्याः सामगाः शिष्या आसन्पंचशतानि वै ॥ पौष्यंज्यावंत्ययोश्चापि तांश्च प्राच्यान्प्रचक्षते ॥७८॥ लौगाक्षिर्मांगलिः कुल्यः कुशीदः कुक्षिरेव च ॥ पौष्यंजिशिष्या जगृहुः संहितास्ते शतं शतम् ॥७९॥ कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ॥ शिष्य ऊचे स्वशिष्येभ्यः शेषा आवंत्य आत्मवान् ॥८०॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे वेदशाखाप्रणयनं नाम षष्ठोऽध्यायः ॥६॥ ॥ सूत उवाच ॥ अथर्ववित्सुमंतुश्च शिष्यमध्यापयत्स्वकाम् ॥ संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥१॥ शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ॥ वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ॥ कुमुदः शुनको ब्रह्मन्जाजलिश्चाप्यथर्ववित् ॥२॥ बभ्रुः शिष्योऽथांगिरसः सैंधवायन एव च ॥ अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथाऽपरे ॥३॥ नक्षत्रकल्पः शांतिश्च कश्यपांगिरसादयः ॥ एते आथर्वणाचार्याः शृणु पौराणिकान्मुने ॥४॥ त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ॥ वैशंपायनहारीतौ षड्वै पौराणिका इमे ॥५॥ ॥ ॥

उवाच ॥ अथर्ववेत्ता सुमंतुस्तु कबंधनामानं स्वशिष्यंप्रति स्वसंहितां प्राह । सोऽपि तां द्वेधा विभज्य पथ्याय वेददर्शाय चोक्तवान् ॥१॥ वेददर्शस्य चत्वारः शिष्याः । ते च— शौक्लायनिः ब्रह्मबलिः मोदोषः पिप्पलायनिश्चेति । तेभ्यो वेददर्शश्चतस्रः संहिता ददौ । पथ्यश्च स्वसंहितां त्रेधा विभज्य कुमुद-शुनक-जाजलिभ्यः शिष्येभ्यः प्रादात् ॥२॥ शुनकः स्वशिष्याभ्यां बभ्रुसैंधवायनाभ्यां द्वे संहिते प्राह । तौ ते सावर्ण्यादिभ्य ऊचतुः ॥३॥ नक्षत्रकल्प-शांति-कश्यपांगिरसादयोऽथर्वणवेदस्याचार्या आसन् । अथ पौराणिकान् शृणु ॥४॥ प्रथमं व्यासः षट् पुराणसंहिताः कृत्वा मत्पित्रे रोमहर्षणाय ददौ । तन्मुखात् त्रय्यारुणिः कश्यपः सावर्णिः अकृतव्रणः वैशंपायनः हारीतश्चेतीमे षट् पौराणिका एकैकां सहि-

१ शाखाविभागं कृत्वा प्रवर्तकाः ।

तामधीयंत । एषां षण्णां शिष्योऽहं ताः सर्वा अधीतवान् ॥५॥६॥ कश्यपः अहं सावर्णिः अकृतव्रणः एते चत्वारो वयं रोमहर्षणाच्चतस्रोऽन्याः पुराणस्य मूलसंहिता अधीमहि ॥७॥ हे शौनक, अथ ब्रह्मर्षिभिर्निरूपितं पुराणलक्षणं शृणु ॥८॥ सर्गः विसर्गः वृत्तिः रक्षा मन्वंतराणि वंशः वंश्यानुचरितं मुक्तिः ऊतयः आश्रयश्च ॥९॥ एभिर्दशलक्षणैर्युक्तं महापुराणं विदुः । सर्गः विसर्गः वंशः मन्वंतराणि वंश्यानुचरितं चेति पंचलक्षणैर्युक्तमल्पं पुराणं केचिदाहुः ॥१०॥ एषां दश लक्षणानामर्थमाह । महदहंकार-भूतसूक्ष्मेंद्रियार्थादीनां संभवः सर्ग उच्यते ॥११॥ चराचरप्राणिनां संभवः स विसर्ग उच्यते ॥१२॥ ईश्वरेण भूतानां स्थापिता या जीविका सा वृत्तिः ॥१३॥ भगवतो याऽवतारलीला सा

अधीयंत व्यासशिष्यात्संहितां मत्पितुर्मुखात् ॥ एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥६॥ कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ॥ अधीमहि व्यासशिष्याच्चतस्रो मूलसंहिताः ॥७॥ पुराणलक्षणं ब्रह्मन्ब्रह्मर्षिभिर्निरूपितम् ॥ शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥८॥ सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षांतराणि च ॥ वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः ॥९॥ दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ॥ केचित्पंचविधं ब्रह्मन्महदल्पव्यवस्थया ॥१०॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ॥ भूतमात्रेंद्रियार्थानां संभवः सर्ग उच्यते ॥११॥ पुरुषानुगृहीतानामेतेषां वासनामयः ॥ विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ॥१२॥ वृत्तिर्भूतानि भूतानां चराणामचराणि च ॥ कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ॥१३॥ रक्षाऽच्युतावतारेहा विश्वस्यानुयुगे युगे ॥ तिर्यङ्मर्त्यर्षिदेवेषु हन्यंते यैस्त्रयीद्विषः ॥१४॥ मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥१५॥ राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ॥ वंश्यानुचरितं तेषां वृत्तं वंशधराश्च ये ॥१६॥ नैमित्तिकः प्राकृतिको नित्य आत्यंतिको लयः ॥ संस्थेति कविभिः प्रोक्ता चतुर्धास्य स्वभावतः ॥१७॥ हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः ॥ यं चानुशयिनं प्राहुरव्याकृतमुतापरे ॥१८॥ व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु ॥ मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥१९॥ पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु ॥ बीजादिपंचतान्तासु ह्यवस्थासु युतायुतम् ॥२०॥ ॥

रक्षा ॥१४॥ मनुः देवाः मनुपुत्राः इंद्रः ऋषयः हरेरवतारश्चेति षड्विधं मन्वंतरम् ॥१५॥ शुद्धराजानां प्रसूतिर्वंशः । तद्वंशजानां वृत्तांतो वंश्यानुचरितम् ॥१६॥ चतुर्विधः प्रलयः । तत्रात्यंतिकः प्रलयो मुक्तिरुक्ता ॥१७॥ अस्य जगतः सर्गादेर्निमित्तं यो जीवस्तस्य कर्मवासना ऊतयो ज्ञेयाः ॥१८॥ जाग्रदाद्यवस्थासु यस्यान्वयव्यतिरेकौ स्तस्तद्ब्रह्माश्रय इत्युच्यते ॥१९॥ यथा नामरूपात्मकेषु घटादिष्वादिमध्यावसानेषु सत्तामात्रं मृत्तिकादिद्रव्यमेवाश्रयस्तथा गर्भाधानादिमरणांतासु देहावस्थास्वधिष्ठानत्वेन स्थितं ब्रह्मैवाश्रयः ॥ २० ॥

१ एतेनान्या अपि पुराणसंहिता आसन्निति सूचितम् ।  २ जीवस्य कर्मवासनाः ।  ३ शब्दस्पर्शरूपरसगंधा भूतसूक्ष्माणि ।

यदा सर्गादीनां मायामयत्वानुसंधानेन स्वयमेव चित्तं विरमेत् तदा जीव आत्मानं ब्रह्मणा सहाभेदेन ज्ञात्वा मुक्तो भवति ॥२१॥ एवं लक्षणैर्लक्षितानि पुराणानि मुनयोऽष्टादश प्राहुः॥२२॥ तानि च–ब्राह्मं पाद्मं वैष्णवं लैंगं शैवं गारुडं नारदीयं श्रीमद्भागवतं आग्नेयं स्कांदम् ॥२३॥ भविष्यं ब्रह्मवैवर्तं मार्कंडेयं वामनं वाराहं मात्स्यं कौर्मं ब्रह्मांडमिति ॥२४॥ हे शौनक, इदं शाखाप्रणयनं मया ते कथितम् । इदं यः शृणोति तस्य ब्रह्मतेजो वर्धते ॥२५॥ इति श्रीमद्भागवतचूर्णिकायां द्वादशस्कंधे सप्तमोऽध्यायः ॥७॥ अष्टमे तु तपश्चर्या मार्कंडेयस्य मोहकः । कामादिभिरसंमोहो नरनारायणस्तुतिः ॥१॥ शौनक उवाच ॥ हे सूत, त्वं चिरं जीव । यतः संसारे भ्रमतां नृणां त्वं संसारनिवर्तकोऽसि ॥१॥ पुराणविभागप्रसंगेन पुराणकर्तुर्मार्कंडेयस्य चरितं पृच्छति । शौनक उवाच ॥ सर्वे जना मार्कंडेयं दीर्घायुषमाहुः । यो मार्कंडेयस्त्रैलोक्यनाशकेऽपि कल्पांतेऽवशेषितः ॥२॥

विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम् ॥ योगेन वा तदाऽऽत्मानं वेदेहाया निवर्तते ॥२१॥ एवंलक्षणलक्ष्याणि पुराणानि पुराविदः ॥ मुनयोऽष्टादश प्राहुः क्षुल्लकानि महांति च ॥२२॥ ब्राह्मं पाद्मं वैष्णवं च शैवं लैंगं सगारुडम् ॥ नारदीयं भागवतमाग्नेयं स्कांदसंज्ञितम् ॥२३॥ भविष्यं ब्रह्मवैवर्तं मार्कंडेयं सवामनम् ॥ वाराहं मात्स्यं कौर्मं च ब्रह्मांडाख्यमिति त्रिषट् ॥२४॥ ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः ॥ शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् ॥२५॥ इति श्री० म० द्वादशस्कंधे सप्तमोऽध्यायः ॥७॥ शौनक उवाच ॥ सूत जीव चिरं साधो वद नो वदतांवर ॥ तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥१॥ आहुश्चिरायुषमृषिं मृकंडतनयं जनाः ॥ यः कल्पांते उर्वरितो येन ग्रस्तमिदं जगत् ॥२॥ स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन्भार्गवर्षभः ॥ नैवाधुनापि भूतानां संप्लवः कोऽपि जायते ॥३॥ एक एवार्णवे भ्राम्यन्ददर्श पुरुषं किल ॥ वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥४॥ एष नः संशयो भूयान्सूत कौतूहलं यतः ॥ तं नश्छिंधि महायोगिन्पुराणेष्वपि संमतः ॥५॥ सूत उवाच ॥ प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः ॥ नारायणकथा यत्र गीता कलिमलापहा ॥६॥ प्राप्तद्विजातिसंस्कारो मार्कंडेयः पितुः क्रमात् ॥ छंदांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥७॥ बृहद्व्रतधरः शांतो जटिलो वल्कलांबरः ॥ बिभ्रत्कमंडलुं दंडमुपवीतं समेखलम् ॥८॥

किंच । अधुना भूतानां कोऽपि प्रलयो[1] नास्ति । एवं सत्यस्मिन् कल्पे सोऽस्मत्कुलोत्पन्नो मार्कंडेयः ॥३॥ एक एव समुद्रे भ्राम्यन् सन् वटपत्रपुटे शयानं बालकं ददर्श । इदं च कथं घटितम् ॥४॥ एतद्विषये नः संशयोऽस्ति तं छिंधि ॥५॥ सूत उवाच ॥ हे शौनक, अयं लोकभ्रमनाशकः प्रश्नस्त्वया समीचीनः कृतोऽस्ति । यतोऽस्य प्रश्नस्योत्तरत्वेन नारायणकथा गीयते ॥६॥ अथ मार्कंडेयेनैव सप्तकल्पा दृष्टा नान्यैरिति वक्तुमादितस्तस्य चरितमाह । जातोपनयनो मार्कंडेयो वेदानधीत्य तपःस्वाध्यायसंयुतः ॥७॥ नैष्ठिकब्रह्मचारी जटिलो वल्कलांबरः कमंडलुदंडादीनि धारयन् अग्निसूर्यगुर्वादिषु च श्रीहरिमर्चयन् ॥८॥ ॥ ॥ ॥ ॥

१ प्राकृतिको नैमित्तिको वा ।

॥९॥ सायंप्रातर्भिक्षामाहृत्य गुरवे निवेद्य गुरोराज्ञया स्वयं सकृद्भुंजन् अन्यथोपोषितः सन् दशकोटिवर्षाणि हरिमाराध्य दुर्जयं मृत्युं जिग्ये ॥१०॥११॥ तस्य तपसा ब्रह्मभृगु-शिवदक्षादयो विस्मिता आसन् ॥१२॥ इत्थं स योगी तपआदिभिरधोक्षजं दध्यौ ॥१३॥ एवं योगेन चित्तं युंजतस्तस्य षण्मन्वंतरात्मकः कालो गतः ॥१४॥ एतज्ज्ञात्वेंद्रः सप्तमेऽस्मिन् मन्वंतरे मत्पदं ग्रहीष्यतीति शंकितः सन् तत्तपोनाशाय ॥१५॥ गंधर्वाप्सरसः कामं वसंतं मलयवायुं लोभं मदं च मुनिसमीपे प्रेषयामास ॥१६॥ ते सर्वे हिमाचलस्योत्तरे पार्श्वे पुष्पभद्रानदीतीरे चित्रानामकशिलासन्निधौ तदाश्रमं जग्मुः ॥१७॥ कथंभूतमाश्रमम् । पुण्यद्रुमलताभिः शोभितम् । अतिनिर्मलजलाशयं मत्तभ्रमरसंगीतं मत्तको-

कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्धये ॥ अग्न्यर्कगुरुविप्रात्मस्वर्चयन्संध्ययोर्हरिम् ॥९॥ सायंप्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः ॥ बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥१०॥ एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् ॥ आराधयन्हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥११॥ ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च ये परे ॥ नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥१२॥ इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः ॥ दध्यावधोक्षजं योगी ध्वस्तक्लेशांतरात्मना ॥१३॥ तस्यैवं युंजतश्चित्तं महायोगेन योगिनः ॥ व्यतीयाय महान्कालो मन्वंतरषडात्मकः ॥१४॥ एतत्पुरंदरो ज्ञात्वा सप्तमेऽस्मिन्किलांतरे ॥ तपोविशंकितो ब्रह्मन्नारेभे तद्विघातनम् ॥१५॥ गंधर्वाप्सरसः कामं वसंतमलयानिलौ ॥ मुनये प्रेषयामास रजस्तोकमदौ तथा ॥१६॥ ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ॥ पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो ॥१७॥ तदाश्रमपदं पुण्यं पुण्यद्रुमलतांचितम् ॥ पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥१८॥ मत्तभ्रमरसंगीतं मत्तकोकिलकूजितम् ॥ मत्तबर्हिनटाटोपं मत्त-द्विजकुलाकुलम् ॥१९॥ वायुः प्रविष्ट आदाय हिमनिर्झरशीकरान् ॥ सुमनोभिः परिष्वक्तो ववावुत्तंभयन्स्मरम् ॥२०॥ उद्यच्चंद्रनिशावक्रः प्रवालस्तवकालिभिः ॥ गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः ॥२१॥ अन्वीयमानो गंधर्वैर्गीतवादित्रयूथकैः ॥ अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥२२॥ हुत्वाऽग्निं समुपासीनं ददृशुः शक्रकिंकराः ॥ मीलिताक्षं दुराधर्षं मूर्तिमंतमिवानलम् ॥२३॥ ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ॥ मृदंगवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥२४॥ संदधेऽस्त्रं स्वधनुषि कामः पंचमुखं तदा ॥ मधुर्मनोरजस्तोक इंद्रभृत्या व्यकंपयन् ॥२५॥

किलकूजितं पक्षिसमूहैर्व्याप्तम् ॥१८॥१९॥ एवंभूतमाश्रमं प्रविष्टो वायुः कामं प्रदीपयन् ववौ ॥२०॥ तत्र वसंतः पल्लव-पुष्प-गुच्छादिभिः प्रकटो बभूव ॥२१॥ तत्र कामश्च धनुर्बाणौ गृहीत्वा गीतवाद्ययुक्तैर्गंधर्वैरप्सरोभिश्च सहादृश्यत ॥२२॥ एवं ते इंद्रकिंकरा अग्निं हुत्वाऽऽसीनं मीलिताक्षं मूर्तिमंतमग्निमिव दुर्धर्षं तमृषिं ददृशुः ॥२३॥ तस्य पुरतस्त्रियो ननृतुः । गंधर्वा जगुः ॥२४॥ कामो धनुषि पंचमुखं बाणं संदधे । वसंतो लोभोऽन्ये चेंद्रभृत्यास्तस्य मुनेर्मनो व्यकंपयन् ॥२५॥ ॥ ॥

---

१ शोषण-दीपन-संमोहन-तापनो-न्मादनाख्यानि पंच मुखानि यस्य तम् ।

तदैव कंदुकैः क्रीडंत्याः कंदुकमनु भ्रमद्दृष्टेरितस्ततश्चलंत्याः पुंजिकस्थल्या अप्सरसः सूक्ष्मं वस्त्रं वायुर्जहार ॥२६॥२७॥ तदा कामो मुनिं स्वजितं मत्वा बाणं विससर्ज । तस्मिन् ऋषौ तेषां कामादीनां सर्वं कर्म निष्फलमभवत् ॥२८॥ ततो ऋषितेजसा दह्यमानाः कामाद्या निववृतुः ॥२९॥ एवमिंद्रानुचरैर्धर्षितोऽपि महामुनिरहंकारस्य विकारं न प्राप ॥३०॥ तत इंद्रः सगणं कामं म्लानवदनं दृष्ट्वा ऋषेरनुभावं श्रुत्वा विस्मयं प्राप ॥३१॥ एवं तपःस्वाध्यायसंयमैश्चित्तं युंजतस्तस्यानुग्रहाय नरनारायणावृषी आविरास्ताम् ॥३२॥ तौ श्वेतकृष्णवर्णौ चतुर्भुजौ कमलनेत्रौ कृष्णाजिनवल्कलांबरौ उपवीतदंडकमंडलुधरौ ॥३३॥ रुद्राक्षमालां दर्भमुष्टिं च दधानौ साक्षात्तपोरूपिणाविंद्रादिभिः पूजितौ ॥३४॥

क्रीडंत्याः पुंजिकस्थल्याः कंदुकैः स्तनगौरवात् ॥ भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥२६॥ इतस्ततो भ्रमद्दृष्टेश्चलंत्या अनुकंदुकम् ॥ वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥२७॥ विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः ॥ सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥२८॥ त इत्थमपकुर्वंतो मुनेस्तत्तेजसा मुने ॥ दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥२९॥ इतींद्रानुचरैर्ब्रह्मन्धर्षितोऽपि महामुनिः ॥ यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥३०॥ दृष्ट्वा निस्तेजसं कामं सगणं भगवान्स्वराट् ॥ श्रुत्वाऽनुभावं ब्रह्मर्षेर्विस्मयं समगात्परम् ॥३१॥ तस्यैवं युंजतश्चित्तं तपःस्वाध्यायसंयमैः ॥ अनुग्रहायाविरासीन्नरनारायणो हरिः ॥३२॥ तौ शुक्लकृष्णौ नवकंजलोचनौ चतुर्भुजौ रौरववल्कलांबरौ ॥ पवित्रपाणी उपवीतकं त्रिवृत्कमंडलुं दंडमृजुं च वैणवम् ॥३३॥ पद्माक्षमालामुत जंतुमार्जनं वेदं च साक्षात्तप एव रूपिणौ ॥ तपत्तडिद्वर्णपिशंगरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥३४॥ ते वै भगवतो रूपे नरनारायणावृषी ॥ दृष्ट्वोत्थायादरेणोच्चैर्ननामांगेन दंडवत् ॥३५॥ स तत्संदर्शनानंदनिर्वृतात्मेंद्रियाशयः ॥ हृष्टरोमाश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥३६॥ उत्थाय प्रांजलिः प्रह्व औत्सुक्यादाश्लिषन्निव ॥ नमो नम इतीशानौ बभाषे गद्गदाक्षरः ॥३७॥ तयोरासनमादाय पादयोरवनिज्य च ॥ अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥३८॥ सुखमासनमासीनौ प्रसादाभिमुखौ मुनी ॥ पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥३९॥ मार्कंडेय उवाच ॥ किं वर्णये तव विभो यदुदीरितोऽसुः संस्पंदते तमनु वाङ्मन इंद्रियाणि ॥ स्पंदंति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबंधुः ॥४०॥ ॥ ॥

नरनारायणावृषी दृष्ट्वोत्थाय तौप्रति दंडवन्ननाम ॥३५॥ तद्दर्शनात्प्रहृष्टरोमा ऋषिरश्रुपूर्णाक्षः सन् तावीक्षितुं नाशक्नोत् ॥३६॥ तत उत्थाय प्रांजलिर्गद्गदाक्षरस्तौ नमो नम इति बभाषे ॥३७॥ ततस्तयोरासनं दत्वा पादौ प्रक्षाल्य गंधपुष्पादिभिः पूजयामास ॥३८॥ पुनः सुखमासीनौ तौ प्रणम्य जगाद ॥३९॥ मार्कंडेय उवाच ॥ हे विभो, तव स्तुतिः कथं कार्या । यतस्त्वयैव प्रेरिताः प्राणेंद्रियादयश्चरंति । अतो न कस्यापि स्वातंत्र्यम् । तथापि दारुयंत्रवत्त्वत्प्रवर्तितैरपि वागादिभिर्भजतां पुंसां त्वमात्मप्रदोऽसि ॥४०॥

हे भगवन्, त्वमिमे मूर्ती तथा मत्स्यकूर्मादिमूर्तींश्च त्रिलोक्याः पालनाय दुःखनिवृत्त्यै मोक्षाय च बिभर्षि । त्वमूर्णनाभिरिवेदं जगत्सृष्ट्वा पुनर्ग्रससि ॥४१॥ किंच । मुनयो ब्रह्मप्राप्तयेऽभीक्ष्णं यत् स्तुवंति नमंति यजंति च तत्तव चरणमूलं भजामि ॥४२॥ हे मोक्षमूर्ते, तव चरणकमलं विना जनस्यान्यत् क्षेमं न विद्मः । ब्रह्मापि तव भ्रुकुटिचालनरूपात्कालाद्बिभेति । अपरे किमुत ॥४३॥ हे भगवन्, अतस्तुच्छं देहादिभजनं त्यक्त्वा सत्यज्ञानस्वरूपस्य तव पादमूलं भजामि ॥४४॥ हे ईश, यद्यपि त्वयैव मायया सत्वरजस्तमोगुणैरवतारा धृतास्तथापि या तव सत्वमयी मूर्तिः सैव मोक्षाय भवति नान्ये मूर्ती ॥४५॥ हे भगवन्, ज्ञानिनस्तव नरनारायणाख्यां तनुं मोक्षप्राप्तये भजंति । यतो भक्ताः

मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ॥ नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥४१॥ तस्यावितुः स्थिरचरेशितुरंघ्रिमूलं यत्स्थं न कर्मगुणकालरजः स्पृशंति ॥ यद्वै स्तुवंति निनमंति यजंत्यभीक्ष्णं ध्यायंति वेदहृदया मुनयस्तदाप्त्यै ॥४२॥ नान्यं तवांघ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितोभिय ईश विद्मः ॥ ब्रह्मा बिभेत्यलमतो द्विपरार्धधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम् ॥४३॥ तद्वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चात्मगुरोः परस्य ॥ देहाद्यपार्थमसदंत्यमभिज्ञमात्रं विंदेत ते तर्हि सर्वमनीषितार्थम् ॥४४॥ सत्वं रजस्तम इतीश तवात्मबंधो मायामयाः स्थितिलयोदयहेतवोऽस्य ॥ लीला धृता यदपि सत्वमयी प्रशांत्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥४५॥ तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजंति ॥ यत्सात्वताः पुरुषरूपमुशंति सत्वं लोको यतोऽभयमुतात्मसुखं न चान्यत् ॥४६॥ तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै ॥ नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥४७॥ यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः संतं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ॥ तन्माययाऽऽवृतमतिः स उ एव साक्षादाद्यस्तवाखिलगुरोरुपसाद्य वेदम् ॥४८॥ यद्दर्शनं निगम आत्मरहःप्रकाशं मुह्यंति यत्र कवयोऽजपरा यतंतः ॥ तं सर्ववादविषयप्रतिरूपशीलं वंदे महापुरुषमात्मनिगूढबोधम् ॥४९॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधेऽष्टमोऽध्यायः ॥८॥ सूत उवाच ॥ संस्तुतो भगवानित्थं मार्कंडेयेन धीमता ॥ नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥१॥

सत्वमेव पुरुषस्वरूपं मन्यंते । न रजस्तमश्च ॥४६॥ अतो हे ईश, पुरुषाय विश्वगुरवे नारायणाय नरोत्तमाय शुद्धाय वेदमार्गप्रवर्तकाय तुभ्यं नमोऽस्तु ॥४७॥ किंच । कपटेंद्रियमार्गैर्विक्षिप्तबुद्धिः पुमान् स्वकीयेंद्रियादिषु नियंतृत्वेन स्थितमपि त्वां न वेद ॥४८॥ तव ज्ञानं वेदे भवति । अन्यथा सांख्ययोगादिभिर्यत्नं कुर्वंतो ब्रह्मादयोऽपि त्वयि मुह्यंति । एवंविधं महापुरुषं त्वामहं वंदे ॥४९॥ इति श्रीमद्भा० चू० द्वाद० अष्टमोऽध्यायः ॥८॥ नवमे भगवन्मायादिदृक्षोर्दर्शनं मुहुः । मायाशिशोर्लयाब्धौ च मुनेर्निर्वेशनिर्गमैः ॥१॥ सूत उवाच ॥ इत्थं मार्कंडेयेन संस्तुतो नरसखो नारायणः प्रीतः सन् तमृषिमाह ॥१॥ ॥ ॥ ॥ ॥

॥ श्रीभगवानुवाच ॥ भो भो ब्रह्मर्षिवर्य, त्वं तपःस्वाध्यायसंयमैर्मयि भक्त्या च सिद्धोऽसि ॥२॥ वयं तव तुष्टाः स्मः । तव भद्रमस्तु । त्वमीप्सितं वरं गृहाण ॥३॥ मार्कंडेय उवाच ॥ हे अच्युत, यद्भवान् दृष्टोऽसि । एतावतैव वरेणालम् ॥४॥ यस्य तव चरणकमलदर्शनं मनसापि प्राप्य ब्रह्मादयः कृतार्था भवंति स भवान् मेऽक्षगोचरो जातः ॥५॥ अथापि हे कमलनेत्र, त्वन्मायामहं द्रष्टुमिच्छामि ॥६॥ सूत उवाच ॥ ईश्वरस्तथेत्युक्त्वा ऋषिणा पूजितः सन् बदर्याश्रममगात् ॥७॥ तत ऋषिस्तमेव मायादर्शनरूपमर्थं चिंतयन् स्वाश्रम एव वसन् ॥८॥ भूमिवाय्वादिषु हरिं ध्यायन् मनोमयैर्द्रव्यैरपूजयत् । कदाचित् प्रेमोद्रेकं प्राप्तः सन् पूजां विसस्मार ॥९॥ हे शौनक, एकदा पुष्पभद्रानदीतीरे

॥ श्रीभगवानुवाच ॥ भो भो ब्रह्मर्षिवर्यासि सिद्ध आत्मसमाधिना ॥ मयि भक्त्याऽनपायिन्या तपःस्वाध्यायसंयमैः ॥२॥ वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ॥ वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥३॥ ऋषिरुवाच ॥ जितं ते देवदेवेश प्रपन्नार्तिहराच्युत ॥ वरेणैतावताऽलं नो यद्भवान्समदृश्यत ॥४॥ गृहीत्वाऽजादयो यस्य श्रीमत्पादाब्जदर्शनम् ॥ मनसा योगपक्वेन स भवान्मेऽक्षगोचरः ॥५॥ अथाप्यंबुजपत्राक्ष पुण्यश्लोकशिखामणे ॥ द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम् ॥६॥ सूत उवाच ॥ इतीडितोऽर्चितः काममृषिणा भगवान्मुने ॥ तथेति स स्मयन्प्रागाद्बदर्याश्रममीश्वरः ॥७॥ तमेव चिंतयन्नर्थमृषिः स्वाश्रम एव सः ॥ वसन्नग्न्यर्कसोमांबुभूवायुवियदात्मसु ॥८॥ ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत् ॥ क्वचित्पूजां विसस्मार प्रेमप्रसरसंप्लुतः ॥९॥ तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुनेः ॥ उपासीनस्य संध्यायां ब्रह्मन्वायुरभून्महान् ॥१०॥ तं चंडशब्दं समुदीरयंतं बलाहका अन्वभवन्करालाः ॥ अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनंत उच्चैरभिवर्षधाराः ॥११॥ ततो व्यदृश्यंत चतुःसमुद्राः समंततः क्ष्मातलमाग्रसंतः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः ॥१२॥ अंतर्बहिश्चाद्भिरतिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत् ॥ चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥१३॥ तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभंजनाघूर्णितवार्महार्णवः ॥ आपूर्यमाणो वरषद्भिरंबुदैः क्ष्मामप्यधाद्द्वीपवर्षाद्रिभिः समम् ॥१४॥ सक्ष्मांऽतरिक्षं सदिवं सभागणं त्रैलोक्यमासीत्सह दिग्भिराप्लुतम् ॥ स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडांधवत् ॥१५॥ ॥ ॥

संध्याकाले स्थितस्य तस्य सतः संध्यायां महान् वायुरभूत् ॥१०॥ तमनु मेघा विद्युद्भिः सहिता उच्चैर्गर्जंतो रथस्याक्षवत्स्थूला वर्षधारा मुमुचुः ॥११॥ तत उग्रग्राहा भयंकरावर्ता गंभीरशब्दाश्च चतुःसमुद्रा लहरीभिर्भूतलं ग्रसंतो व्यदृश्यंत ॥१२॥ तत आत्मना सह चतुर्विधं जगदंतर्बहिश्च भीतं तथा जलाप्लुतां भूमिं च वीक्ष्य मुनिर्भयं प्राप्तः ॥१३॥ तदा वायुना प्रकंपितजलो भयंकरः समुद्रो द्वीपवर्षाद्रिभिः सह भूमिमाच्छादयामास ॥१४॥ ततस्त्रैलोक्यं सर्वं जलनिमग्नमासीत् । स मुनिरेक एवोर्वरितो जटा विकीर्य जडांधवद्-

भ्राम ॥१५॥ अपारे तमसि पतितो मत्स्यमकरादिभिरुपद्रुतश्च स ऋषिराकाशं भूमिं स्वर्गं दिशश्च न वेद ॥१६॥ क्वचिज्जलावर्ते प्राप्तः । क्वचिल्लहरीभिस्ताडितः । क्वचित्तद्भक्षणाय परस्परं युद्ध्यद्भिर्जलचरैर्भक्षितः ॥१७॥ क्वचिच्छोकं क्वचिन्मोहं क्वचित्सुखं दुःखं मृत्युं च प्राप्नोति ॥१८॥ एवं तस्य भ्रमतः सतोऽयुतायुतवर्षाणि गतानि ॥१९॥ स कदाचित्तत्र भ्रमन् पृथिव्या उच्चप्रदेशे कोमलं वटवृक्षं ददर्श ॥२०॥ तस्येशानदिक्शाखायां पत्रपुटे शयानं स्वप्रभया तमो ग्रसंतम् ॥२१॥ श्यामं कंबुग्रीवं विशालवक्षसं सुनासं सुंदरभ्रुवम् ॥२२॥ कर्णयोर्दाडिमपुष्पधारिणं रक्ताधरोष्ठकांत्या किंचिदारक्तस्मितयुक्तम् ॥२३॥ ईषदरुणकटाक्षं हृद्यहासावलोकनं निम्ननाभिम् ॥२४॥ हस्ताभ्यां चरणांगुष्ठं मुखे

क्षुत्तृट्परीतो मकरैस्तिमिंगिलैरुपद्रुतो वीचिनभस्वता हतः ॥ तमस्यपारे पतितो भ्रमन्दिशो न वेद खं गां च परिश्रमेषितः ॥१६॥ क्वचिद्गतो महावर्ते तरलैस्ताडितः क्वचित् ॥ यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ॥१७॥ क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम् ॥ क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥१८॥ अयुतायुतवर्षाणां सहस्राणि शतानि च ॥ व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः ॥१९॥ स कदाचिद्भ्रमंस्तस्मिन्पृथिव्याः ककुदि द्विजः ॥ न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥२०॥ प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् ॥ शयानं पर्णपुटके ग्रसंतं प्रभया तमः ॥२१॥ महामरकतश्यामं श्रीमद्वदनपंकजम् ॥ कंबुग्रीवं महोरस्कं सुनासं सुंदरभ्रुवम् ॥२२॥ श्वासैजदलकाभातं कंबुश्रीकर्णदाडिमम् ॥ विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥२३॥ पद्मगर्भारुणापांगं हृद्यहासावलोकनम् ॥ श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥२४॥ चार्वंगुलिभ्यां पाणिभ्यामुन्नीय चरणांबुजम् ॥ मुखे निधाय विप्रेंद्रो धयंतं वीक्ष्य विस्मितः ॥२५॥ तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनांबुजः ॥ प्रहृष्टरोमाद्भुतभावशंकितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥२६॥ तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तःशरीरं मशको यथाऽविशत् ॥ तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥२७॥ खं रोदसी भगणानद्रिसागरान्द्वीपान्सवर्षान्ककुभः सुरासुरान् ॥ वनानि देशान्सरितः पुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः ॥२८॥ महांति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम् ॥ यत्किंचिदन्यद्व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥२९॥ हिमालयं पुष्पवहां च तां नदीं निजाश्रमं तत्र ऋषीनपश्यत् ॥ विश्वं विपश्यन् श्वसिताच्छिशोर्वै वहिर्निरस्तो न्यपतल्लयाब्धौ ॥३०॥ ॥ ॥

निधाय चुंवंतं वालं मुकुंदं वीक्ष्य ॥२५॥ तद्दर्शनाद्गतश्रमः प्रहृष्टरोमा मार्कंडेयस्तं वालं प्रष्टुमग्रतो जगाम ॥२६॥ तावच्छिशोः श्वसितेन मशक इव तदंतरमाविशत् । तदा तदुदरेऽपि इदं जगत्पूर्ववद्दृष्ट्वा विस्मितः सन्नमुह्यत ॥२७॥ तत्राकाश-भूमि-नक्षत्रगण-पर्वत-समुद्र-द्वीप-भूत-भौतिक-कालादि सर्वं जगत्सत्यमिवावभासितं दृष्ट्वा ॥२८॥२९॥ हिमालयं पुष्पभद्रां नदीं निजाश्रमं ऋषींश्च दृष्ट्वा विस्मित आस । तदैव शिशोः श्वासाद्बहिर्निर्गतः सन् प्रलयसमुद्रे पपात ॥३०॥ ॥ ॥ ॥

पुनः पृथिव्या उन्नतप्रदेशे वटं तत्पत्रपुटे शयानं बालं मुकुंदं च दृष्ट्वा तेन बालेन निरीक्षितः सन् ॥३१॥ तद्बालकरूपं हृदि ध्यात्वा तमालिंगितुमभ्यगात् ॥३२॥ तदालिंगनलाभात्पूर्वमेव स सर्वगुहाशयो भगवानंतर्दधे ॥३३॥ तत्पश्चाद्वटः सलिलं लोकप्रलयश्च सद्योऽतर्धानं प्राप्तः । मुनिश्च स्वाश्रमे पूर्ववत्स्थितः ॥३४॥ इति श्रीम० चू० द्वा० नवमोऽध्यायः ॥९॥ दशमे शिव आगत्य मुनेस्तुष्टो वरानदात् । तेन साकमतिप्रीत्या समाभाष्य सभाजयत् ॥१॥ सूत उवाच ॥ स मार्कंडेय एवं नारायणनिर्मितं योगमायावैभवं दृष्ट्वा तमेव शरणं ययौ ॥१॥ मार्कंडेय उवाच ॥ हे हरे, शरणागतानामभयंकरं ते चरणमूलमहं शरणं गतोऽस्मि । यस्य मायया ज्ञानिनोऽपि मुह्यंति ॥२॥ सूत उवाच ॥ एवं

तस्मिन्पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम् ॥ तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपांगनिरीक्षणेन ॥ ३१ ॥ अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि ॥ अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥३२॥ तावत्स भगवान्साक्षाद्योगाधीशो गुहाशयः ॥ अंतर्दध ऋषेः सद्यो यथेहानीशनिर्मिता ॥३३॥ तमन्वथ वटो ब्रह्मन्सलिलं लोकसंप्लवः ॥ तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः ॥३४॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे मायादर्शनं नाम नवमोऽध्यायः ॥९॥ सूत उवाच ॥ स एवमनुभूयेदं नारायणविनिर्मितम् ॥ वैभवं योगमायायास्तमेव शरणं ययौ ॥१॥ मार्कंडेय उवाच ॥ प्रपन्नोऽस्म्यंघ्रिमूलं ते प्रपन्नाभयदं हरे ॥ यन्माययापि विबुधा मुह्यंति ज्ञानकाशया ॥२॥ सूत उवाच ॥ तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ॥ रुद्राण्या भगवान्रुद्रो ददर्श स्वगणैर्वृतः ॥३॥ अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ॥ पश्येमं भगवन्विप्रं निभृतात्मेंद्रियाशयम् ॥४॥ निभृतोदझषव्रातं वातापाये यथार्णवम् ॥ कुर्वस्य तपसः साक्षात्संसिद्धिं सिद्धिदो भवान् ॥५॥ श्रीभगवानुवाच ॥ नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिं परां भगवति लब्धवान्पुरुषेऽव्यये ॥६॥ अथापि संवदिष्यामो भवान्येतेन साधुना ॥ अयं हि परमो लाभो नृणां साधुसमागमः ॥७॥ सूत उवाच ॥ इत्युक्त्वा तमुपेयाय भगवान्स सतां गतिः ॥ ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥८॥ तयोरागमनं साक्षादीशयोर्जगदात्मनोः ॥ न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥९॥ भगवांस्तदभिज्ञाय गिरिशो योगमायया ॥ आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥१०॥ ॥ ॥

समाहितचित्तं तं मार्कंडेयं, गणैर्वृतः पार्वत्या सह वृषभमारुह्य पर्यटन् रुद्रो ददर्श ॥३॥ तदा पार्वती तं मार्कंडेयं वीक्ष्य शिवमभाषत, हे शिव, समाहितमनसमेनं मार्कंडेयमृषिं पश्य पश्य ॥४॥ त्वं सिद्धिदोऽसि । अतोऽस्य तपसः सिद्धिं प्रकटीकुरु ॥५॥ श्रीशिव उवाच ॥ हे देवि, अयं मार्कंडेयो भगवति परां भक्तिं प्राप्तोऽस्ति । अत आशिषो मोक्षमपि नेच्छति ॥६॥ तथापि साधुसमागमः परमो लाभोऽस्ति । अत एतेन सह संवादं करिष्यामः ॥७॥ सूत उवाच ॥ इत्युक्त्वा सर्वविद्यानामीश्वरः शिवस्तत्समीपं ययौ ॥८॥ तदा ऋषिः समाधिस्थः सन् तयोरागमनं न वेद ॥९॥ तज्ज्ञात्वा शिवस्तद्धृदयाकाशं वायुश्छिद्रमिवाविशत् ॥१०॥ ॥ ॥ ॥

तदा मुनिर्मनसि प्राप्तं त्रिनेत्रं दशभुजं पिंगजटाधरम् ॥ ११ ॥ व्याघ्रचर्मांबर-शूल-धनुर्बाण-खड्ग-चर्माक्षमाला-डमरु-कपाल-परशून् दधानं शिवं वीक्ष्य विस्मितोऽभवत् । इत इदं किं कुत एवेति समाधेर्विरतः सन् ॥१२॥१३॥ नेत्रे उन्मील्य उमया गणैश्च युतं शिवं दृष्ट्वा शिरसा ननाम । तत उमागणसहिताय तस्मै स्वागतासनपाद्यादिभिः पूजां समर्पितवान् ॥१४॥१५॥ आह च । पूर्णकामस्य ते वयं किं करवाम ॥१६॥ सत्वरजस्तमोगुणधारिणे तुभ्यं शांताय शिवाय नमः ॥१७॥ सूत उवाच ॥ एवं स्तुतः शिवस्तुष्टः सन् प्रहस्य तं प्राह ॥१८॥ श्रीशिव उवाच ॥ हे ऋषे, त्वमीप्सितं वरं वृणीष्व । वयं ब्रह्म-विष्णु-महेश्वरास्त्रयोऽपि सफलदर्शना वरदातारः स्मः ॥१९॥ हे मुने, ये साधवो ब्राह्मणा अस्मा-

आत्मन्यपि शिवं प्राप्तं तडित्पिंगजटाधरम् ॥ त्र्यक्षं दशभुजं प्रांशुमुद्यंतमिव भास्करम् ॥११॥ व्याघ्रचर्मांबरं शूलधनुरिष्वसिचर्मभिः ॥ अक्षमालाडमरुककपालपरशुं सह ॥१२॥ बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः ॥ किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥१३॥ नेत्रे उन्मील्य ददृशे सगणं सोमयाऽऽगतम् ॥ रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥१४॥ तस्मै सपर्यां व्यदधात्सगणाय सहोमया ॥ स्वागतासनपाद्यार्घगंधस्रग्धूपदीपकैः ॥१५॥ आह चात्मानुभावेन पूर्णकामस्य ते विभो ॥ करवाम किमीशान येनेदं निर्वृतं जगत् ॥१६॥ नमः शिवाय शांताय सत्वाय प्रमृडाय च ॥ रजोजुषेऽप्यघोराय नमस्तुभ्यं तमोजुषे ॥१७॥ सूत उवाच ॥ एवं स्तुतः स भगवानादिदेवः सतां गतिः ॥ परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥१८॥ श्रीभगवानुवाच ॥ वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ॥ अमोघं दर्शनं येषां मर्त्यो यद्विंदतेऽमृतम् ॥१९॥ ब्राह्मणाः साधवः शांता निःसंगा भूतवत्सलाः ॥ एकांतभक्ता अस्मासु निर्वैराः समदर्शिनः ॥२०॥ सलोका लोकपालास्तान्वंदंत्यर्चंत्युपासते ॥ अहं च भगवान्ब्रह्मा स्वयं च हरिरीश्वरः ॥२१॥ न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ॥ नात्मनश्च जनस्यापि तद्युष्मान्वयमीमहि ॥२२॥ नह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः ॥ ते पुनंत्युरुकालेन यूयं दर्शनमात्रतः ॥२३॥ ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ॥ बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥२४॥ श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि वः ॥ शुद्ध्येरन्नंत्यजाश्चापि किमु संभाषणादिभिः ॥२५॥ सूत उवाच ॥ इति चंद्रललामस्य धर्मगुह्योपबृंहितम् ॥ वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन् ॥२६॥

स्वेकांतभक्ता निर्वैराश्च संति । तानिंद्रादिलोकपाला अहं ब्रह्मा हरिश्चैते वंदंतेऽर्चंत्युपासते च ॥२०॥२१॥ एवंभूता ये साधवस्ते मय्यच्युतेऽजे चाणुमात्रमपि भेदं न पश्यंति । अतो युष्मान् वयं भजेम ॥२२॥ देवास्तीर्थानि च कालेन पुनंति । यूयं तु दर्शनमात्रतः पुनंतः स्थ ॥२३॥ अतएव ब्राह्मणेभ्यो वयं नमस्यामः । ये तपआदिभिरस्मद्रूपं धारयंति ॥२४॥ येषां श्रवणाद्दर्शनान्महापातकिनोऽपि शुद्ध्यंति तेषां संभाषणादिभिः शुद्ध्यंतीति किमु वक्तव्यम् ॥२५॥ सूत उवाच ॥ एवं शिववचः शृण्वन्नपि स मार्कंडेयो नातृप्यत ॥२६॥

स विष्णोर्मायया चिरं क्लेशितोऽपि शिवभाषणामृतेन क्लेशहीनः सन् तमाह ॥२७॥ मार्कंडेय उवाच ॥ अहो, ईश्वराणां चर्या अतर्कितास्ति । यत ईश्वरा अपि स्वनियम्यानि भूतानि नमंति स्तुवंति च ॥२८॥ ते तत् देहिनां ग्राहयितुं स्वयमाचरंति ॥२९॥ एतावता लोकसंग्रहमात्रेण भगवतस्तव सामर्थ्यं न्यूनं न भवति ॥३०॥ यो भवान् मनसेदं विश्वं सृष्ट्वा गुणैः प्रविष्ट इवाभाति ॥३१॥ तस्मै तुभ्यं त्रिगुणाय ब्रह्ममूर्तये गुरवे नमोऽस्तु ॥३२॥ किंच । हे भगवन्, वरदर्शनात्त्वत्तः कमन्यं वरं वृणे । यस्य तवावलोकनात्पुरुषः कृतकृत्यो भवति ॥३३॥ तथापि भगवति साधुषु त्वयि चाचलां भक्तिं वृणे ॥३४॥ सूत उवाच ॥ एवं मार्कंडेयेन स्तुतः शिवस्तमाह ॥३५॥ हे मार्कंडेय, यत-

स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम् ॥ शिववागमृतध्वस्तक्लेशपुंजस्तमब्रवीत् ॥२७॥ ऋषिरुवाच ॥ अहो ईश्वरलीलेयं दुर्विभाव्या शरीरिणाम् ॥ यन्नमंतीशितव्यानि स्तुवंति जगदीश्वराः ॥२८॥ धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ॥ आचरंत्यनुमोदंते क्रियमाणं स्तुवंति च ॥२९॥ नैतावता भगवतः स्वमायामयवृत्तिभिः ॥ न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ॥३०॥ सृष्ट्वेदं मनसा विश्वमात्मनाऽनुप्रविश्य यः ॥ गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग्यथा ॥३१॥ तस्मै नमो भगवते त्रिगुणाय गुणात्मने ॥ केवलायाद्वितीयाय गुरवे ब्रह्ममूर्तये ॥३२॥ कं वृणे नु परं भूमन्वरं त्वद्वरदर्शनात् ॥ यद्दर्शनात्पूर्णकामः सत्यकामः पुमान्भवेत् ॥३३॥ वरमेकं वृणेऽथापि पूर्णात्कामाभिवर्षणात् ॥ भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि ॥३४॥ सूत उवाच ॥ इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा ॥ तमाह भगवान् शर्वः शर्वया चाभिनंदितः ॥३५॥ कामो महर्षे सर्वोऽयं भक्तिमांस्त्वमधोऽक्षजे ॥ आकल्पांताद्यशः पुण्यमजरामरता तथा ॥३६॥ ज्ञानं त्रैकालिकं ब्रह्मन्विज्ञानं च विरक्तिमत् ॥ ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यताऽस्तु ते ॥३७॥ सूत उवाच ॥ एवं वरान्स मुनये दत्वाऽगात्त्र्यक्ष ईश्वरः ॥ देव्यै तत्कर्म कथयन्ननुभूतं पुराऽमुना ॥३८॥ सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः ॥ विचरत्यधुनाऽप्यद्धा हरावेकांततां गतः ॥३९॥ अनुवर्णितमेतत्ते मार्कंडेयस्य धीमतः ॥ अनुभूतं भगवतो मायावैभवमद्भुतम् ॥ ४० ॥ एतत्केचिदविद्वांसो मायासंसृतिमात्मनः ॥ अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते ॥४१॥ ॥ ॥ ॥ ॥ ॥

स्त्वमधोक्षजे भक्तिमानसि । अतोऽयं ते मनोरथः पूर्णो भवतु । अन्यच्च कल्पपर्यंतं ते यशः अजरामरता त्रैकालिकं ज्ञानं वैराग्यं विज्ञानं पुराणाचार्यता च तेऽस्तु ॥३६॥ ॥३७॥ सूत उवाच ॥ हे शौनक, एवं वरान् दत्वा तस्य प्रतापं पार्वत्यै कथयन् शिवोऽगात् ॥३८॥ स मार्कंडेयोऽधुनापि हरावेकांततां गतः सन् भूमौ विचरति ॥३९॥ हे शौनक, एतन्मार्कंडेयस्य चरितं तेनानुभूतं भगवतो मायावैभवं च ते कथितम् ॥४०॥ एतन्मार्कंडेयेनानुभूतं नानाकल्परूपं भगवन्मायावैभवमीश्वरेच्छया तस्यैवाकस्मात्क्षणमात्रेण प्राप्तमपि केचिदज्ञा एतत्प्रतिकल्पे भवतीति वदंति ॥४१॥ ॥ ॥ ॥ ॥ ॥

एतदाख्यानं यः शृणुयात् श्रावयेद्वा तयोः संसृतिर्न भवेत् ॥४२॥ इति श्रीमद्भागवतचूर्णिकायां द्वाद० दशमोऽध्यायः ॥१०॥ एकादशे तु पूजार्थं महापुरुषवर्णनम् । रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक् पृथक् ॥१॥ येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोत्तमः । तं पृच्छति क्रियायोगं सांगोपांगादिकल्पितम् ॥२॥ शौनक उवाच ॥ हे सूत, त्वं समस्ततंत्रसिद्धांते तत्त्ववेत्ताऽसि अतस्त्वामिममर्थं पृच्छामः॥१॥ तंत्रविदः पुरुषाश्चैतन्यघनस्य विष्णोरुपासनायां विषये तस्यांगान्युपांगानि आयुधानि भूषणानि च यैस्तत्वैः कल्पयंति ॥२॥ तन्नो वर्णय । तव भद्रमस्तु । येन पूजायोगेन मर्त्यो मोक्षं प्राप्नोति ॥३॥ सूत उवाच ॥ हे शौनक, गुरुं नमस्कृत्य वेदतंत्रोक्ता विष्णोर्विराड्देहाद्या विभूतीर्वक्ष्ये ॥४॥

य एवमेतद्भृगुवर्य वर्णितं रथांगपाणेरनुभावभावितम् ॥ संश्रावयेत्संशृणुयादु तावुभौ तयोर्न कर्माशयसंसृतिर्भवेत् ॥४२॥ इति श्रीमद्भा० महापु० द्वादशस्कंधे दशमोऽध्यायः ॥१०॥ शौनक उवाच ॥ अथेममर्थं पृच्छामो भवंतं बहुवित्तमम् ॥ समस्ततंत्रराद्धांते भवान्भागवततत्त्ववित् ॥१॥ तांत्रिकाः परिचर्यायां केवलस्य श्रियः पतेः॥ अंगोपांगायुधाकल्पं कल्पयंति यथा च यैः॥२॥ तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् ॥ येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ॥३॥ सूत उवाच ॥ नमस्कृत्य गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि॥ याः प्रोक्ता वेदतंत्राभ्यामाचार्यैः पद्मजादिभिः ॥४॥ मायाद्यैर्नवभिस्तत्वैः स विकारमयो विराट् ॥ निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥५॥ एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः ॥ नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ॥६॥ प्रजापतिः प्रजननमपानो मृत्युरीशितुः ॥ तद्बाहवो लोकपाला मनश्चंद्रो भ्रुवौ यमः ॥७॥ लज्जोत्तरोऽधरो लोभो दंता ज्योत्स्ना स्मयो भ्रमः ॥ रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः ॥८॥ यावानयं वै पुरुषो यावत्या संस्थया मितः ॥ तावानसावपि महापुरुषो लोकसंस्थया ॥९॥ कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभा व्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः ॥१०॥ स्वमायां वनमालाख्यां नानागुणमयीं दधत् ॥ वासश्छंदोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥११॥ बिभर्ति सांख्यं योगं च देवो मकरकुंडले ॥ मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरम् ॥१२॥ ॥ ॥

मायाद्यैर्नवभिस्तत्वैर्भगवता षोडशविकारात्मको विराड्देहो निर्मितोऽस्ति । यत्रेदं त्रिभुवनं दृश्यते ॥५॥ अस्यांगकल्पनामाह । भूः पादौ । स्वर्गः शिरः । नभो नाभिः । सूर्योऽक्षिणी । वायुर्नासे । दिशः कर्णौ ॥६॥ उपस्थं प्रजापतिः । मृत्युर्गुदम् । लोकपाला बाहवः । चंद्रो मनः । यमो भ्रुवौ ॥७॥ लज्जा ऊर्ध्वोष्ठः । लोभोऽधरोष्ठः । कांतिर्दंताः । भ्रमो हास्यम् । वृक्षा रोमाणि । मेघाः केशाः ॥८॥ यावानयं व्यष्टिः पुरुषः स्वमानेन सप्तवितस्तिमितस्तावानसौ भगवान् महापुरुषोऽपि प्रोक्तः ॥९॥ तस्य भूषणादीन्याह । भगवान् कौस्तुभमणिमिषेण शुद्धचैतन्यं बिभर्ति । कौस्तुभप्रभां श्रीवत्सं बिभर्ति ॥१०॥ स्वमायां वनमालां, वेदमयं पीतांबरं, प्रणवरूपं यज्ञोपवीतं च बिभर्ति ॥११॥ सांख्ययोगौ मकरकुंडले, ब्रह्म-

१ पादादीनि । २ गरुडादीनि । ३ सुदर्शनादीनि । ४ कौस्तुभादीनि । ५ प्रकृति-सूत्र-महदहंकार-पंचतन्मात्रैः । ६ एकादशेंद्रियाणि पंच महाभूतानीति षोडश ।

लोकं मुकुटं च विभर्ति ॥१२॥ प्रधानं शेषाख्यमासनं, सत्वगुणं तदासनभूतं कमलं च विभर्ति ॥१३॥ प्राणतत्वं गदां, जलतत्वं शंखं, तेजस्तत्वं सुदर्शनं च विभर्ति ॥१४॥ आकाशतत्वं खड्गं, अंधकारमयं चर्म, कालरूपं धनुः, कर्ममयं तूणीरं च विभर्ति ॥१५॥ इंद्रियाणि बाणान्, मनः रथं, शब्दस्पर्शादीन् रथबाह्यभागांश्च विभर्ति ॥१६॥ देवपूजास्थानं सूर्यमंडलं, गुरुदत्तां मंत्रदीक्षां—आत्मनः पूजायोग्यतां च विभर्ति ॥१७॥ षड्गुणैश्वर्यं लीलाकमलं, धर्मयशसी चामरव्यजने च विभर्ति ॥१८॥ वैकुंठं गृहं, वेदत्रयरूपं गरुडं च विभर्ति ॥१९॥ अविनाशिनीं चैतन्यशक्तिं लक्ष्मीं, पंचरात्राद्यागमरूपं विष्वक्सेनं पार्षदं, अणिमाद्यष्टैश्वर्याणि नंदादीन् द्वारपालांश्च विभर्ति ॥२०॥ उपासनार्थं

अव्याकृतमनंताख्यमासनं यदधिष्ठितः ॥ धर्मज्ञानादिभिर्युक्तं सत्वं पद्ममिहोच्यते ॥१३॥ ओजःसहोबलयुतं मुख्यतत्वं गदां दधत् ॥ अपां तत्वं दरवरं तेजस्तत्वं सुदर्शनम् ॥१४॥ नभोनिभं नभस्तत्वमसिं चर्म तमोमयम् ॥ कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥१५॥ इंद्रियाणि शरानाहुराकूतीरस्य स्यंदनम् ॥ तन्मात्राण्यस्याभिव्यक्तिं मुद्रयाऽर्थक्रियात्मताम् ॥१६॥ मंडलं देवयजनं दीक्षासंस्कार आत्मनः ॥ परिचर्या भगवत आत्मनो दुरितक्षयः॥१७॥ भगवान्भगशब्दार्थं लीलाकमलमुद्वहन् ॥ धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥१८॥ आतपत्रं तु वैकुंठं द्विजा धामाकुतोभयम् ॥ त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥१९॥ अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः ॥ विष्वक्सेनस्तंत्रमूर्तिर्विदितः पार्षदाधिपः ॥ नंदादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥२०॥ वासुदेवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम् ॥ अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभिधीयते ॥२१॥ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ॥ अर्थेंद्रियाशयज्ञानैर्भगवान्परिभाव्यते ॥२२॥ अंगोपांगायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ॥ बिभर्ति स्म चतुर्मूर्तिर्भगवान्हरिरीश्वरः ॥२३॥ द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो मायया च स्वयैतत् ॥ सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः ॥२४॥ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंद गोपवनिताव्रजभृत्यगीत तीर्थश्रवः श्रवणमंगल पाहि भृत्यान् ॥२५॥ य इदं कल्य उत्थाय महापुरुषलक्षणम् ॥ तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥२६॥ ॥ ॥ ॥

भगवतो वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्ध इति चतुर्विधो मूर्तिभेदो ज्ञातव्यः ॥२१॥ स एव चतुर्मूर्तिरीश्वरो विश्वस्तैजसः प्राज्ञस्तुरीय इति चतुर्भिर्वृत्तिभिः परिज्ञायते ॥२२॥ अंगोपांगायुध-भूषणैरुपलक्षणैरुपलक्षितो भगवान् वासुदेवादिचतुर्मूर्तिरूपः सन् विश्वादिचतुष्टयं विभर्ति ॥२३॥ एवंभूतो हरिः स्वमाययेदं विश्वं सृजति पाति हरति च ॥२४॥ यस्येदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते । हे कृष्ण, हे अर्जुनसख, हे अवनिद्रोहकर्तॄणां राज्ञां वंशदाहक, हे श्रवणमंगल, त्वं भृत्यान् पाहि ॥२५॥ इदं यः प्रातःकाले शुचिः सन् पठेत् स हृदिस्थं ब्रह्म पश्यति ॥२६॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ शौनक उवाच ॥ शुकः परीक्षिते पंचमस्कंधे सूर्यसंबंधी ऋषिगंधर्वादीनां सप्तानां यं गणं मासि मासि प्राह ॥२७॥ तेषां नामानि कर्माणि च नो ब्रूहि ॥२८॥ सूत उवाच ॥ हे शौनक, विष्णोर्मायया योऽयं सूर्यो लोकयात्राप्रवर्तको वर्तते ॥२९॥ स सृष्टिकर्ता हरिरेव । स सर्वासां वेदोक्तक्रियाणां मूलमस्ति । स एव ऋषिभिर्बहुधा वर्णितः ॥३०॥ तदेवाह । कालः प्रातरादिः । देशः समादिः । क्रियाऽनुष्ठानम् । कर्ता ब्राह्मणादिः । कार्यं यागादि । आगमो मंत्रादिः । द्रव्यं व्रीह्यादि । फलं स्वर्गादि । एवं नव प्रकारेण वर्णितः ॥३१॥ स कालस्वरूपधारी भगवान् चैत्रादिमासेषु लोकयात्रानिर्वाहाय द्वादशभिर्गणैश्चरति ॥३२॥ तदेवाह । धाता सूर्यः । कृतस्थली अप्सरा । हेती राक्षसः । वासुकिर्नागः । रथकृद्यक्षः । पुलस्त्य ऋषिः । तुंबुरुर्गंधर्वः । एते चैत्रमासमनुवर्तयंति ॥३३॥ अर्यमा सूर्यः । पुंजिकस्थली अप्सरा । प्रहेती राक्षसः । कच्छनीरो नागः । अथौजा

शौनक उवाच ॥ शुको यदाह भगवान्विष्णुराताय शृण्वते ॥ सौरो गणो मासि मासि नाना वसति सप्तकः ॥२७॥ तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः ॥ ब्रूहि नः श्रद्धधानानां व्यूहं सूर्यात्मनो हरेः ॥२८॥ सूत उवाच ॥ अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ॥ निर्मितो लोकतंत्रोऽयं लोकेषु परिवर्तते ॥२९॥ एक एव हि लोकानां सूर्य आत्माऽऽदिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥३०॥ कालो देशः क्रिया कर्ता करणं कार्यमागमः ॥ द्रव्यं फलमिति ब्रह्मन्नवधोक्तोऽजया हरिः ॥३१॥ मध्वादिषु द्वादशसु भगवान्कालरूपधृक् ॥ लोकतंत्राय चरति पृथग्द्वादशभिर्गणैः ॥३२॥ धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने ॥ पुलस्त्यस्तुंबुरुरिति मधुमासं नयंत्यमी ॥३३॥ अर्यमा पुलहोऽथौजाः प्रहेतिः पुंजिकस्थली ॥ नारदः कच्छनीरश्च नयंत्येते स्म माधवम् ॥३४॥ मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हाहाः ॥ रथस्वन इति ह्येते शुक्रमासं नयंत्यमी ॥३५॥ वसिष्ठो वरुणो रंभा सहजन्यस्तथा हूहूः ॥ शुक्रश्चित्रस्वनश्चैव शुचिमासं नयंत्यमी ॥३६॥ इंद्रो विश्वावसुः श्रोता एलापत्रस्तथांगिराः ॥ प्रम्लोचा राक्षसो वर्यो नभोमासं नयंत्यमी ॥३७॥ विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ॥ अनुम्लोचा शंखपालो नभस्याख्यं नयंत्यमी॥३८॥ पूषा धनंजयो वातः सुषेणः सुरुचिस्तथा ॥ घृताची गौतमश्चेति तपोमासं नयंत्यमी ॥३९॥

यक्षः । पुलह ऋषिः । नारदो गंधर्वः । एते वैशाखमासं वर्तयंति ॥३४॥ मित्रः सू० । मेनका अ० । पौरुषेयो रा० । तक्षको ना० । रथसेनो य० । अत्रि ऋषिः । हाहा गं० । एते ज्येष्ठमासं नयंति ॥३५॥ वरुणः सू० । रंभा अ० । चित्रस्वनो रा० । शुक्रो ना० । सहजन्यो य० । वसिष्ठ ऋ० । हूहूर्गंधर्वः । एते चाषाढमासं नयंति ॥३६॥ इंद्रः सूर्यः । प्रम्लोचा अ० । वर्यो रा० । एलापत्रो नागः । श्रोता य० । अंगिरा ऋ० । विश्वावसुर्गं० । एते श्रावणमासं नयंति ॥३७॥ विवस्वान् सू० । अनुम्लोचा अ० । व्याघ्रो रा० । शंखपालो ना० । आसारणो य० । भृगुर्ऋ० । उग्रसेनो गंधर्वः । एते भाद्रपदमासं नयंति ॥३८॥ पूषा सू० । घृताच्यप्सराः । वातो रा० । धनंजयो ना० । सुरुचिर्य० । गौतम ऋ० । सुषेणो गं० एते माघमासं नयंति ॥३९॥ ॥ ॥ ॥ ॥ ॥ ॥

पर्जन्यः सू॰ । सेनजिदप्स॰ । वर्चा रा॰ । ऐरावतो ना॰ । क्रतुर्य॰ । भरद्वाज ऋ॰ । विश्वो गंधर्वः । एते फाल्गुनमासं नयंति ॥४०॥ अंशुः सू॰ । उर्वशी अ॰ । विद्युच्छत्रु रा॰ । महाशंखो ना॰ । तार्क्ष्यो य॰ । कश्यप ऋषिः । ऋतसेनो गं॰ एते मार्गशीर्षं वर्तयंति ॥४१॥ भगः सू॰ । पूर्वचित्तिरप्स॰ । स्फूर्जो रा॰ । कर्कोटको ना॰ । ऊर्णो य॰ । आयुर्ऋ॰ । अरिष्टनेमिर्गंधर्वः । एते पौषं वर्तयंति ॥४२॥ त्वष्टा सू॰ । तिलोत्तमा अ॰ । ब्राह्मापेतो रा॰ । कंबलो नागः । शतजिद्यक्षः । जमदग्निर्ऋ॰ । धृतराष्ट्रो गं॰ । एते आश्विनमासं वर्तयंति ॥४३॥ विष्णुः सू॰ । रंभा अ॰ । मखापेतो रा॰ । अश्वतरो ना॰ । सत्यजिद्यक्षः । विश्वामित्र ऋषिः सूर्यवर्चा गं॰ । एते कार्तिकमनुवर्तयंति ॥४४॥ भगवत आदित्यस्यैता विभूतयः संध्ययोः स्मरतां नृणां पापं हरंति ॥४५॥ एतेषां पृथक्कर्माण्याह । असौ सूर्यो द्वादशेषु मासेषु चरन् जनस्य शुभां मतिं विस्तारयति ॥४६॥

क्रतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा ॥ विश्व ऐरावतश्चैव तपस्याख्यं नयंत्यमी ॥४०॥ अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी ॥ विद्युच्छत्रुर्महाशंखः सहोमासं नयंत्यमी ॥४१॥ भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पंचमः ॥ कर्कोटकः पूर्वचित्तिः पुष्यमासं नयंत्यमी ॥४२॥ त्वष्टा ऋचीकतनयः कंबलश्च तिलोत्तमा ॥ ब्रह्मापेतोऽथ शतजिद्धृतराष्ट्र इषंभराः ॥४३॥ विष्णुरश्वतरो रंभा सूर्यवर्चाश्च सत्यजित् ॥ विश्वामित्रो मखापेत ऊर्जमासं नयंत्यमी ॥४४॥ एता भगवतो विष्णोरादित्यस्य विभूतयः ॥ स्मरतां संध्ययोर्नृणां हरंत्यंहो दिने दिने ॥४५॥ द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ॥ चरन्समंतात्तनुते परत्रेह च सन्मतिम् ॥४६॥ सामर्ग्यजुर्भिस्तल्लिंगैरृषयः संस्तुवंत्यमुम् ॥ गंधर्वास्तं प्रगायंति नृत्यंत्यप्सरसोऽग्रतः ॥४७॥ उन्नह्यंति रथं नागा ग्रामण्यो रथयोजकाः॥ चोदयंति रथं पृष्ठे नैर्ऋता बलशालिनः ॥४८॥ वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः॥ पुरतोऽभिमुखं यांति स्तुवंति स्तुतिभिर्विभुम् ॥४९॥ एवं ह्यनादिनिधनो भगवान्हरिरीश्वरः ॥ कल्पे कल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः ॥५०॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे आदित्यव्यूहविवरणं नामैकादशोऽध्यायः ॥११॥

॥ सूत उवाच ॥ नमो धर्माय महते नमः कृष्णाय वेधसे ॥ ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्ये सनातनान् ॥१॥ एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ॥ भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥२॥ ॥ ॥ ॥

ऋषय एनं सूर्यं त्रिभिर्वेदैः स्तुवंति । गंधर्वास्तं गायंति । अप्सरसोऽग्रतो नृत्यंति ॥४७॥ नागा रथबंधनरज्जवो भवंति । यक्षा रथं योजयंति । राक्षसाः पृष्ठतो रथं प्रेरयंति ॥४८॥ अंगुष्ठपर्वप्रमाणा वालखिल्याः षष्टिसहस्राणि ऋषयः पुरतोऽभिमुखं स्तुवंति ॥४९॥ हे शौनक, एवमनादिनिधनो हरिः कल्पे कल्पे स्वमात्मानं विभज्य लोकान् पालयति ॥५०॥ ॥ इति श्रीमद्भागवतचूर्णिकायां द्वादशस्कंधे एकादशोऽध्यायः ॥११॥ द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः । प्रथमस्कंधमारभ्य प्राधान्येन समासतः ॥१॥ सूत उवाच ॥ हे शौनक, भक्तिलक्षणाय धर्माय श्रीकृष्णाय ब्राह्मणेभ्यश्च नमस्कृत्य अनादिधर्मान् पुराणोक्तान् विषयांश्च वक्ष्ये ॥१॥ हे द्विजाः, भवद्भिर्यत्पृष्टं तदेतद्विष्णोः श्रवणयोग्यं चरित्रं

कथितम् ॥२॥ अत्र पुराणे सर्वपापहरो नारायणो हरिः कीर्तितः ॥३॥ तथा परं ब्रह्म अपरोक्षं ज्ञानं तत्साधनं च कथितम् ॥४॥ तथा भक्तियोगो वैराग्यं चोक्तम् । अत्र भागवते प्रथमस्कंधे–पारीक्षितमाख्यानं नारदाख्यानं च कथितम् ॥५॥ राजर्षेर्विप्रशापाद्गंगायां प्रायोपवेशः । तस्य राज्ञः शुकस्य च संवादः ॥६॥ द्वितीयस्कंधे– योगधारणया अर्चिरादिगतिः । ब्रह्मनारदयोः संवादः । अवतारानुवर्णनम् । महत्तत्वादिक्रमेण विराड्रूपोत्पत्तिः ॥७॥ तृतीयस्कंधे– विदुरोद्धवसंवादः । विदुरमैत्रेयसंवादः । पुराणसंहिताप्रश्नः । महापुरुषस्य प्रलये तूष्णीमवस्थानम् ॥८॥ प्राकृतिको वैकृतिकश्च सर्गः । ब्रह्मांडसमुद्भवः ॥९॥ कालस्य स्वरूपम् । कमलोत्पत्तिः । वराहावतारः । पृथिव्या उद्धरणे हिरण्या-

अत्र संकीर्तितः साक्षात्सर्वपापहरो हरिः ॥ नारायणो हृषीकेशो भगवान्सात्वतां पतिः ॥३॥ अत्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम् ॥ ज्ञानं च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥४॥ भक्तियोगः समाख्यातो वैराग्यं च तदाश्रयम् ॥ पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥५॥ प्रायोपवेशो राजर्षेर्विप्रशापात्परीक्षितः ॥ शुकस्य ब्रह्मर्षभस्य संवादश्च परीक्षितः ॥६॥ योगधारणयोत्क्रांतिः संवादो नारदाजयोः ॥ अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः ॥७॥ विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः ॥ पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥८॥ ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये ॥ ततो ब्रह्मांडसंभूतिर्वैराजः पुरुषो यतः ॥९॥ कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः ॥ भुव उद्धरणेऽम्भोधेर्हिरण्याक्षवधो यथा ॥१०॥ ऊर्ध्वतिर्यगवाक्सर्गो रुद्रसर्गस्तथैव च ॥ अर्धनारीनरस्याथ यतः स्वायंभुवो मनुः ॥११॥ शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा ॥ संतानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥१२॥ अवतारो भगवतः कपिलस्य महात्मनः ॥ देवहूत्याश्च संवादः कपिलेन च धीमता ॥१३॥ नव ब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ॥ ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनवर्हिषः ॥१४॥ नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः ॥ नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥१५॥ द्वीपवर्षसमुद्राणां गिरिनद्युपवर्णनम् ॥ ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥१६॥ दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च संततिः ॥ यतो देवासुरनरास्तिर्यङ्नगखगादयः ॥१७॥ त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः ॥ दैत्येश्वरस्य चरितं प्रह्रादस्य महात्मनः ॥१८॥ ॥ ॥ ॥ ॥

क्षवधः ॥१०॥ ऊर्ध्वतिर्यगवाक्सर्गाः । रुद्रसर्गः । स्वायंभुवमनोः शतरूपायाश्चोत्पत्तिः ॥११॥ कर्दमस्य चरितम् । कपिलावतारः । कपिलदेवहूत्योः संवादः ॥१२॥१३॥ चतुर्थस्कंधे– मरीच्यादिनवप्रजापतीनामुत्पत्तिः । धर्मपत्नीनां वंशः । दक्षयज्ञनाशः । ध्रुवस्य पृथोः प्राचीनवर्हिषश्च चरितानि । प्राचीनवर्हिर्नारदयोः संवादः ॥१४॥ पंचमस्कंधे– प्रियव्रतस्याख्यानम् । नाभेः ऋषभस्य भरतस्य च चरितानि ॥१५॥ द्वीप-खंड-समुद्र-गिरि-नद्यादिवर्णनम् । ज्योतिश्चक्र-पाताल-नरकाणां वर्णनम् ॥१६॥ षष्ठस्कंधे– अजामिलोपाख्यानम् । प्रचेतोभ्यो दक्षस्य जन्म । तत्कन्यानां वंशः । यतो देवासुर-मनुष्य-तिर्यक्पक्ष्यादयो जाताः ॥१७॥ वृत्रासुरस्य जन्म मरणं च । सप्तमस्कंधे– प्रह्लादस्य चरि-

तम् । नृसिंहावतारः । हिरण्यकशिपोर्वधः । वर्णाश्रमधर्मानुवर्णनम् ॥१८॥ अष्टमस्कंधे– मन्वंतरानुचरितम् । गजेंद्रमोक्षणम् । मन्वंतरावतारः ॥१९॥ क्षीरसमुद्रमंथनम् । कूर्म-वामन-मत्स्यावताराः ॥२०॥ देवासुरसंग्रामः । नवमस्कंधे– राजवंशानुकीर्तनम् । इक्ष्वाकोजन्म वंशश्च । इलोपाख्यानम् । तारोपाख्यानम् । सूर्यवंशकथनम् ॥२१॥२२॥ सुकन्याख्यानम् । शर्यातेः ककुत्स्थस्य खट्वांगस्य मांधातुः सौभरेः सगरस्य च चरितानि ॥२३॥ श्रीरामस्य चरितम् । निमेर्देहत्यागः । जनकानां संभवः ॥२४॥ परशुरामचरितम् । सोमवंशे ऐलस्य ययातेः दौष्यंतेर्भरतस्य शंतनोर्भीष्मस्य च चरितानि । यदुवंशवर्णनम् ॥२५॥२६॥ यत्र कृष्णाख्यो भगवानवतीर्णः । दशमस्कंधे–श्रीकृष्णस्य वसुदेवगृहे जन्म ।

मन्वंतरानुकथनं गजेंद्रस्य विमोक्षणम् ॥ मन्वंतरावताराश्च विष्णोर्हयशिरादयः ॥१९॥ कौर्मं धान्वंतरं मात्स्यं वामनं च जगत्पतेः ॥ क्षीरोदमथनं तद्वदमृतार्थे दिवौकसाम् ॥२०॥ देवासुरमहायुद्धं राजवंशानुकीर्तनम् ॥ इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः ॥२१॥ इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ॥ सूर्यवंशानुकथनं शशादाद्या नृगादयः ॥२२॥ सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः ॥ खट्वांगस्य च मांधातुः सौभरेः सगरस्य च ॥२३॥ रामस्य कोशलेंद्रस्य चरितं किल्बिषापहम् ॥ निमेरंगपरित्यागो जनकानां च संभवः ॥२४॥ रामस्य भार्गवेंद्रस्य निःक्षत्रकरणं भुवः ॥ ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ॥२५॥ दौष्यंतेर्भरतस्यापि शंतनोस्तत्सुतस्य च ॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः ॥२६॥ यत्रावतीर्णो भगवान्कृष्णाख्यो जगदीश्वरः ॥ वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले ॥२७॥ तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः ॥ पूतनासुपयःपानं शकटोच्चाटनं शिशोः ॥२८॥ तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः ॥ धेनुकस्य सहभ्रातुः प्रलंबस्य च संक्षयः ॥२९॥ ( अघासुरवधो धात्रा वत्सपालावगूहनम् ॥ ) गोपानां च परित्राणं दावाग्नेः परिसर्पतः ॥ दमनं कालियस्याहेर्महाहेर्नंदमोक्षणम् ॥३०॥ व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः ॥ प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥३१॥ गोवर्धनोद्धारणं च शक्रस्य सुरभेरथ ॥ यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥३२॥ शंखचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः ॥ अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः ॥३३॥ व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः ॥ गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥३४॥

ततो गोकुले वृद्धिः ॥२७॥ पूतनायाः पयसः प्राणैः सह पानम् । शकटासुरोच्चाटनम् ॥२८॥ तृणावर्तवधः । वत्स-वक-धेनुक-प्रलंबानां वधः ॥२९॥ ( अघासुरवधः ब्रह्मणा वत्साना पालानां चान्यत्र नयनम् ) दावाग्नेर्गोपानां रक्षणम् । कालियदमनम् । आजगरसर्पान्नंदमोक्षणम् ॥३०॥ कात्यायनीव्रतम् । यज्ञपत्नीष्वनुग्रहः । विप्राणामनुतापः । इंद्रयागभंगः । गोवर्धनोद्धारणम् । इंद्रकृता सुरभिकृता च स्तुतिः । श्रीकृष्णस्याभिषेकः । रात्रिषु स्त्रीभिः सह रासक्रीडा ॥३१॥३२॥ शंखचूड-वृषभासुर-केशिनां वधः । अक्रूरागमनम् । रामकृष्णयोः प्रस्थानम् ॥३३॥ गोपीनां विलापः । मथुरावलोकनम् । गज-मुष्टिक-चाणूर-कंसादीनां वधः ॥३४॥ ॥ ॥ ॥ ॥

सांदीपनेर्गुरोर्मृतपुत्रानयनम् । यदुकुलस्य प्रियकरणम् । गोकुले उद्धवगमनम् । तस्य गोपीभिः सह संवादः ॥३५॥ जरासंधसैन्यस्य वधः । कालयवनघातनम् । द्वारकाया निर्माणं प्रवेशश्च ॥३६॥ पारिजातकस्य सुधर्मासभायाश्च स्वर्गादानयनम् । रुक्मिण्या हरणम् ॥३७॥ शिवस्य जृंभणम् । वाणासुरस्य भुजच्छेदनम् । भौमासुरं हत्वा षोडशसहस्र-कन्यानामानयनम् ॥३८॥ शिशुपाल-पौंड्रक-शाल्व-दंतवक्र-शंबर-द्विविद-पीठ-मुर-पंचजनादीनां प्रभावो वधश्च ॥३९॥ वाराणसीदाहनम् । पांडवान् निमित्तीकृत्य भूभारहरणम् ॥४०॥ एकादशस्कंधे—विप्रशापनिमित्तेन स्वकुलसंहारः । भगवदुद्धवसंवादः ॥४१॥ यत्र सर्वा आत्मविद्या कथिता । श्रीकृष्णस्य मनुष्यत्वांतर्धानम् ॥४२॥ द्वादशस्कंधे—

मृतस्यानयनं सूनोः पुनः सांदीपनेर्गुरोः ॥ मथुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥ कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥३५॥ जरासंधसमानीतसैन्यस्य वहुशो वधः ॥ घातनं यवनेंद्रस्य कुशस्थल्या निवेशनम् ॥३६॥ आदानं पारिजातस्य सुधर्मायाः सुरालयात् ॥ रुक्मिण्या हरणं युद्धे प्रमथ्य द्विपतो हरेः ॥३७॥ हरस्य जृंभणं युद्धे वाणस्य भुजकृंतनम् ॥ प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत् ॥३८॥ चैद्यपौंड्रकशाल्वानां दंतवक्रस्य दुर्मतेः ॥ शंबरो द्विविदः पीठो मुरः पंचजनादयः ॥३९॥ माहात्म्यं च वधस्तेषां वाराणस्याश्च दाह-नम् ॥ भारावतरणं भूमेर्निमित्तीकृत्य पांडवान् ॥४०॥ विप्रशापापदेशेन संहारः स्वकुलस्य च ॥ उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ॥४१॥ यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः ॥ ततो मर्त्यपरित्याग आत्मयोगानुभावतः ॥४२॥ युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ॥ चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥४३॥ देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः ॥ शाखाप्रणयनमृषेर्मार्कंडेयस्य सत्कथा ॥ महापुरुष-विन्यासः सूर्यस्य जगदात्मनः ॥४४॥ इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः ॥ लीलावतारकर्माणि कीर्तितानीह सर्वशः ॥४५॥ पतितः स्खलितश्चार्तः क्षुत्त्वा वा विवशोऽब्रुवन् ॥ हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥४६॥ संकीर्त्यमानो भगवाननंतः श्रुतानुभावो व्यसनं हि पुंसाम् ॥ प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥४७॥ मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भग-वानधोक्षजः ॥ तदेव सत्यं तदुहैव मंगलं तदेव पुण्यं भगवद्गुणोदयम् ॥४८॥ ॥ ॥ ॥

भविष्यद्राजानां वर्णनम् । युगलक्षणकथनम् । युगानुरूपा वृत्तिः । चतुर्विधः प्रलयः ॥४३॥ राजर्षेः परीक्षितो देहत्यागः । वेदानां शाखाविभागवर्णनम् । मार्कंडेयाख्यानम् । महापुरुषस्यांगोपांगादिवर्णनम् । सूर्यस्य गणैः सह प्रतिमासं भ्रमणप्रकारः ॥४४॥ हे विप्राः, युष्माभिर्यत्पृष्टं तदेवं कथितम् । किंच । हरेर्लीलावतारकर्माणि कीर्तितानि ॥४५॥ अस्य फलमाह । कूपादिषु पतितः । सोपानादिषु स्खलितः दुःखित आतुरोऽपि क्षुतं कृत्वा विवशोऽपि हरये नम इत्युच्चैर्ब्रुवन् सर्वपातकान्मुच्यते ॥४६॥ एवं कीर्त्यमानो भगवान् पुंसां चित्तं प्रविश्य निःशेषं दुःखं नाशयति ॥४७॥ यासु वाणीषु भगवत्कथा न गीता ता वाण्यो मिथ्याभूता ज्ञातव्याः ॥४८॥ ॥ ॥ ॥

किंच । यद्भगवद्यशोऽनुगीयते तदेव सत्यं मंगलं पुण्यं रम्यं रुचिप्रदं नृणां शोकार्णवशोषणं च ॥४९॥ अपि च । यद्वचो हरेर्जगत्पवित्रं यशो नोच्चारयेत् तत्काकतुल्यानां नराणां रतिस्थानं न तु ज्ञानिभिः सेवितम् ॥५०॥ किंच । स एव वर्णनप्रकार उत्तमः । यस्मिन् प्रतिश्लोकं साधवोऽनंतस्य यशोंऽकितानि नामानि शृण्वंति गायंति गृणंति च ॥५१॥ किंच । ब्रह्मप्रकाशकं यज्ज्ञानं तदपि भक्तिहीनं चेन्न शोभते । कुतः पुनरीश्वरेऽनार्पितं कर्म शोभेत ॥५२॥ वर्णाश्रमाचारतपःशास्त्रादिषु परिश्रमेण केवलं कीर्तिः संपत्तिश्च भवति । भगवद्गुणानुवादादिभिस्तु श्रीकृष्णचरणकमलयोः स्मरणं भवति ॥५३॥ कृष्णचरणकमलयोः स्मरणममंगलानि नाशयति चित्तशुद्धिं भक्तिं वैराग्यमपरोक्षं ज्ञानं च तनोति ॥५४॥

तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् ॥ तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥४९॥ न तद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद्ध्वांक्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥५०॥ स वाग्विसर्गो जनताऽघसंप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्य यशोंऽकितानि यच्छृण्वंति गायंति गृणंति साधवः ॥५१॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म यदप्यनुत्तमम् ॥५२॥ यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ॥५३॥ अविस्मृतिः कृष्णपदारविंदयोः क्षिणोत्यभद्राणि शमं तनोति च ॥ सत्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥५४॥ यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम् ॥ नारायणं देवमदेवमीशमजस्रभावा भजताविवेश्य ॥५५॥ अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् ॥ प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥५६॥ एतद्वः कथितं विप्राः कथनीयोरुकर्मणः ॥ माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥५७॥ य एवं श्रावयेन्नित्यं यामं क्षणमनन्यधीः ॥ ( श्लोकमेकं तदर्धं वा पादं पादार्धमेव वा ॥ ) श्रद्धावान्योऽनुशृणुयात्पुनात्यात्मानमेव सः ॥५८॥ द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान्भवेत् ॥ पठत्यनश्नन्प्रयतस्ततो भवत्यपातकी ॥५९॥ पुष्करे मथुरायां च द्वारवत्यां यतात्मवान् उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥६०॥ देवता मुनयः सिद्धाः पितरो मनवो नृपाः ॥ यच्छंति कामान्गृणतः शृण्वतो यत्र कीर्तनात् ॥६१॥

हे द्विजश्रेष्ठाः, यूयं महाभाग्यवंतः स्थ । यतो मनसि हरिं स्थापयित्वा तं भजथ ॥५५॥ अहमपि धन्योऽस्मि । यतो युष्माभिः पुरा शुकमुखाच्छ्रुतमात्मतत्त्वं स्मारितः ॥५६॥ हे विप्राः, इदं पापनाशकं वासुदेवमाहात्म्यं वः कथितम् ॥५७॥ यः श्रद्धावान् पुरुष इदं यामं क्षणमात्रं वा ( अस्य श्लोकं श्लोकार्धं पादं पादार्धं वा ) शृणुयात् श्रावयेद्वा स आत्मानमेव पुनाति ॥५८॥ एकादश्यां द्वादश्यां वा शृण्वन् दीर्घायुः स्यात् । अनश्नन् पठेत् स निष्पापः स्यात् ॥५९॥ पुष्करे मथुरायां द्वारकायां वोपोष्य इमां संहितां पठित्वा भयान्मुच्यते ॥६०॥ इदं शृण्वतो गृणतश्च पुंसो मनोरथान् देव-मुनि-सिद्ध-पित्रादयः पूरयंति ॥६१॥ ॥ ॥ ॥ ॥

ऋचो यजूंषि सामानि चाधीत्य मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलं प्राप्नोति तत्सर्वं फलमेतस्य पाठात्प्राप्नोति ॥६२॥ किंच । इमा पुराणसंहितामधीत्य नरो भगवत्पदं व्रजेत् ॥६३॥ ब्राह्मण एतामधीत्य ज्ञानं प्राप्नुयात् । राजा आसमुद्रां पृथ्वीं प्राप्नुयात् । वैश्यो निधिपतित्वं प्राप्नुयात् । शूद्रश्च पातकान्मुच्येत ॥६४॥ कलिमलनाशको हरिरन्यपुराणादिषु निरंतरं न गीयते । अस्मिन् पुराणे तु वारंवारं पठितोऽस्ति ॥६५॥ ब्रह्मरुद्रेंद्रादिभिरज्ञातस्तत्वं तमनंतमच्युतमहं नतोऽस्मि ॥६६॥ किंच । प्रकृत्यादिभिर्नवभिः शक्तिभिरात्मन्येव जगद्रचयते देवश्रेष्ठाय सनातनाय हरये नमोऽस्तु ॥६७॥ श्रीगुरुं प्रणमति । स्वानंदेनैव पूर्णचित्तो यः शुकः श्रीकृष्णलीलया आकृष्टचित्तः सन् इदं परमार्थप्रकाशकं श्रीमद्भागवतं पुराणं कथितवान् । तं सर्वदुःखनाशकं श्रीशुकमहं नतोऽस्मि ॥६८॥ इति श्रीमद्भा० चू० द्वा० द्वादशस्कंधार्थनिरूपणं नाम द्वादशोऽध्यायः ॥१२॥ त्रयोदशे

ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविंदते ॥ मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम् ॥६२॥ पुराणसंहितामेतामधीत्य प्रयतो द्विजाः ॥ प्रोक्तं भगवता यत्तु तत्पदं परमं व्रजेत् ॥६३॥ विप्रोऽधीत्याप्नुयात्प्रज्ञां राजन्यो दधिमेखलाम् ॥ वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकात् ॥६४॥ कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् ॥ इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसंगैः ॥६५॥ तमहमजमनंतमात्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिम् ॥ द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि ॥६६॥ उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजंगमालयाय ॥ भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय ॥६७॥ स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ॥ व्यतनुत कृपया यस्तत्त्वदीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥६८॥ इति श्रीम० महा० द्वा० द्वादशस्कंधार्थनिरूपणं नाम द्वादशोऽध्यायः ॥१२॥ सूत उवाच ॥ यं ब्रह्मा वरुणेंद्ररुद्रमरुतः स्तुन्वंति दिव्यैः स्तवैर्वेदैः सांगपदक्रमोपनिषदैर्गायंति यं सामगाः ॥ ध्यानावस्थिततद्गतेन मनसा पश्यंति यं योगिनो यस्यांतं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥१॥ पृष्ठे भ्राम्यदमंदमंदरगिरिग्रावाग्रकंडूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पांतु वः ॥ यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनांभसां यातायातमतंद्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥२॥ पुराणसंख्यासंभूतिमस्य वाच्यप्रयोजने ॥ दानं दानस्य माहात्म्यं पाठादेश्च विबोधत ॥३॥

पुराणानां संख्यामाह यथाक्रमम् । दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥१॥ सूत उवाच ॥ ब्रह्मा वरुणेंद्ररुद्रमरुतो दिव्यैः स्तोत्रैर्यं स्तुवंति । सामगाः सांग-पद-क्रमोपनिषदैर्यं गायंति । योगिनो ध्याने तद्गतेन मनसा यं पश्यंति । देवादयो यस्यांतं न विदुस्तस्मै देवाय नमः ॥१॥ हे शौनक, समुद्रमंथनसमये पृष्ठे भ्रमतो मंदराचलस्य पाषाणाग्रघर्षणरूपकंडूयनान्निद्राशीलस्य कूर्मरूपिणो भगवतः श्वासवायवो वः पांतु । येषां श्वासवायूनां संस्कारलेशानुवशेन समुद्रस्य जलानां यातायातमद्यापि न विश्राम्यति ॥२॥ अथ पुराणसंख्यासमूहं श्रीमद्भागवतस्य विषयं प्रयोजनं दानं दानमाहात्म्यं पाठादेर्माहात्म्यं च श्रृणुत ॥३॥ ॥ ॥ ॥ ॥

ब्रह्मपुराणं १०००० दशसहस्रसंख्यं, पद्मपुराणं ५५००० पंचपंचाशत्सहस्रसंख्यं, विष्णुपु० २३००० त्रयोविंशतिसहस्रसंख्यं, शिवपु० २४००० चतुर्विंशतिसहस्रसंख्यम् ॥४॥ श्रीमद्भागवतपु० १८००० अष्टादशसहस्रसंख्यं, नारदपु० २५००० पंचविंशतिसहस्रसंख्यं मार्कंडेयपुराणं ९००० नवसहस्रसंख्यं, अग्निपु० १५४०० चतुःशताधिकपंचदशसहस्रसंख्यम् ॥५॥ भविष्योत्तरपु० १४५०० पंचशताधिक-चतुर्दशसहस्रसंख्यं, ब्रह्मवैवर्तपु० १८००० अष्टादशसहस्रसंख्यं, लिंगपुराणं ११००० एकादशसहस्रसंख्यम् ॥६॥ वराहपु० २४००० चतुर्विंशतिसहस्रसंख्यं, स्कंदपु० ८११०० एकशताधिकैकाशीतिसहस्रसंख्यं, वामनपु० १०००० दशसहस्रसंख्यम् ॥७॥ कूर्मपु० १७००० सप्तदशसहस्रसंख्यं, मत्स्यपुराणं १४००० चतुर्दशसहस्रसंख्यं, गरुडपुराणं १९००० एकोनविंशतिसहस्रसंख्यं, ब्रह्मांडपुराणं च १२००० द्वादशसहस्रसंख्यमस्ति ॥८॥ एवमष्टादशमहापुराणसमूहः ४००००० 



ब्राह्मं दशसहस्राणि पाद्मं पंचोनषष्टि च ॥ श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥४॥ दशाष्टौ श्रीभागवतं नारदं पंचविंशतिः ॥ मार्कंडेयं नव वाह्नं च दशपंच चतुःशतम् ॥५॥ चतुर्दश भविष्यं स्यात्तथा पंचशतानि च ॥ दशाष्टौ ब्रह्मवैवर्तं लिंगमेकादशैव तु ॥६॥ चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ स्कांदं शतं तथा चैकं वामनं दश कीर्तितम् ॥७॥ कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ॥ एकोनविंशत्सौपर्णं ब्रह्मांडं द्वादशैव तु ॥८॥ एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ॥ तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥९॥ इदं भगवता पूर्वं ब्रह्मणे नाभिपंकजे ॥ स्थिताय भवभीताय कारुण्यात्संप्रकाशितम् ॥१०॥ आदिमध्यावसानेषु वैराग्याख्यानसंयुतम् ॥ हरिलीलाकथाव्राताामृतानंदितसत्सुरम् ॥११॥ सर्ववेदांतसारं यद्ब्रह्मात्मैकत्वलक्षणम् ॥ वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥१२॥ प्रोष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ॥ ददाति यो भागवतं स याति परमां गतिम् ॥१३॥ राजंते तावदन्यानि पुराणानि सतां गणे ॥ यावन्न दृश्यते साक्षाच्छ्रीमद्भागवतं परम् ॥१४॥ सर्ववेदांतसारं हि श्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥१५॥ ॥

चतुर्लक्षसंख्याकोऽस्ति । तत्र १८००० अष्टादशसहस्रसंख्यं श्रीमद्भागवतमस्ति ॥९॥ इदं पुरा नाभिकमले स्थिताय ब्रह्मणे भगवता कृपया प्रकाशितम् ॥१०॥ इदमादिमध्यावसानेषु वैराग्याख्यानयुक्तं सर्ववेदांतसारं ब्रह्मात्मैकत्वलक्षणं मोक्षैकप्रयोजनं चास्ति ॥११॥१२॥ इदं भागवतं भाद्रपदशुद्धपूर्णिमायां सुवर्णसिंहासने संस्थाप्य यो ददाति स परमां गतिं याति ॥१३॥ साधुसभायां यावद्भागवतं नैव श्रूयते तावदन्यानि पुराणानि शोभंते ॥१४॥ अस्य रसेन तृप्तस्य पुरुषस्यान्यत्र प्रीतिर्न स्यात् ॥१५॥ ॥

---

१ ब्रह्मकल्पोद्भवम् । २ पद्मकल्पोद्भ० । ३ वराहकल्पोद्भ० । ४ श्वेतकल्पोद्भवम् । ५ सारस्वतकल्पो० । ६ बृहत्कल्पो० । ७ श्वेतवाराहकल्पो० । ८ ईशानकल्पो० । ९ अघोरकल्पोद्भ० । १० रथंतरकल्पो० ११ कल्पांतकल्पोद्भवम् । १२ मनुकल्पो० । १३ तत्पुरुषकल्पो० । १४ शिवक० । १५ लक्ष्मीकल्पोद्भवम् । १६ सप्तकल्पकल्पोद्भवम् । १७ गरुडकल्पोद्भवम् । १८ भविष्यकल्पोद्भवम् । १९ अष्टादशोपपुराणानि च संति । तानि च–१ सनत्कुमारं २ नारसिंहं ३ बृहन्नारदीयं ४ शिवरहस्यं ५ दुर्वाससं ६ कापिलं ७ वामनं ८ भार्गवं ९ वरुणं १० कालिकाह्वयं ११ सांबं १२ नंदिकृतं १३ सूर्यपुराणं १४ पाराशरं १५ वासिष्ठं १६ देवीभागवतं १७ गणेशपुराणं १८ हंसपुराणं चेति । एवमष्टादश लघुपुराणान्यपि—मुद्गल-रेणुका-विष्णुधर्मोत्तरशिवधर्मोत्तरादीनि संति । महाभारतं लितिहासः । रामायणादीनि च ऋषिप्रोक्तानि काव्यानीति चतुर्लक्षसंख्य एव महापुराणग्रंथ इति ।

नदीनां यथा गंगा श्रेष्ठा । देवानां यथा विष्णुः श्रेष्ठः विष्णुभक्तानां च यथा शिवः श्रेष्ठः ॥१६॥ क्षेत्राणां यथा काशी श्रेष्ठ तथा पुराणेष्विदं श्रेष्ठमस्ति ॥१७॥ अस्मिन् पुराणे परमहंसैः प्राप्यं ज्ञानं गीयते । एतद्भक्त्या शृण्वन् पठन् विचारणपरो वा पुरुषो मुक्तिं प्राप्नुयात् ॥१८॥ ग्रंथांते मंगलमाचरति । अयं श्रीमद्भागवतरूपो ज्ञानप्रदीपः पूर्वं कल्पादौ ब्रह्मणे येन प्रकाशितः । ब्रह्मरूपेण नारदाय नारदरूपेण व्यासाय व्यासरूपेण शुकाय शुकरूपेण परीक्षिते च येन प्रकाशितः । तं परं सत्यं शोकरहितं श्रीनारायणं वयं धीमहि ॥१९॥ य इदं भागवतं ब्रह्मणे व्याख्यातवान् तस्मै भगवते वासुदेवाय नमः ॥२०॥ किंच । यः संसारसर्पात्परीक्षितममूमुचत् तस्मै ब्रह्मरूपिणे योगींद्राय शुकाय नमः

निम्नगानां यथा गंगा देवानामच्युतो यथा ॥ वैष्णवानां यथा शंभुः पुराणानामिदं तथा ॥१६॥ क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ॥ तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥१७॥ श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते ॥ तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्विपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥१८॥ कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ॥ योगींद्राय तदात्मनाऽथ भगवद्राताय कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥१९॥ नमस्तस्मै भगवते वासुदेवाय साक्षिणे ॥ य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥२०॥ योगींद्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे ॥ संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥२१॥ भवे भवे यथा भक्तिः पादयोस्तव जायते ॥ तथा कुरुष्व देवेश नाथस्त्वं नो यतः प्रभो ॥२२॥ नामसंकीर्तनं यस्य सर्वपापप्रणाशनम् ॥ प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥२३॥ इति श्रीम० महापुराणेऽष्टादशसाहस्र्यां पारमहंस्यां संहितायां वैयासिक्यां द्वा०त्रयोदशोऽध्यायः ॥१३॥

॥२१॥ हे नाथ, हे देवेश, मम जन्मजन्मनि तव पादयोर्यथा भक्तिरुत्पद्येत तथा कुरुष्व ॥२२॥ यस्य नामसंकीर्तनं सर्वपापनाशकं भवति । प्रणामश्च दुःखनाशको भवति तं हरिं नमामि ॥२३॥ ॥ इति श्रीमद्भागवतचूर्णिकायां द्वादशस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ शुभं भवतु ॥ ॥ ॥

अलेखि विठ्ठलेनेयं श्रीभागवतचूर्णिका । अनया प्रीयतां कृष्णो भगवान् भक्तवत्सलः ॥ १ ॥
श्रीमद्भागवतार्थसारकथने या साधनं चूर्णिका गोरोपाभिधविठ्ठलेन लिखिता चैत्रे सिते भूतिथौ ॥
वेदाक्ष्यष्टकुयुक्शके भुवनपस्तुष्यात्तया श्रीहरिर्यंत्रे ह्यंकयितुः स्फुटं स च तुकारामस्य देयात्सुखम् ॥ २ ॥
शोधयित्वा चूर्णिकेयं स्वे यंत्रे पुनरंकिता ॥ तुकारामेण कीतक्यां क्ष्यग्न्यष्टाब्जयुते शके ॥ ३ ॥

अन्वयः—वेदाक्ष्य[1]ष्टकुयुक्शके भू[2]तिथौ गोरोपाभिधविठ्ठलेन श्रीमद्भागवतार्थसारकथने साधनं या चूर्णिका लिखिता तया भुवन[3]पः श्रीहरिस्तुष्यात् । स च[4] यंत्रे स्फुटं हि अंकयितुः तुकारामस्य सुखं देयात् ॥ २ ॥ तुकारामेण इयं चूर्णिका शोधयित्वा स्वे यंत्रे क्ष्यग्न्यष्टाब्जयुते[5] शके कार्तिक्या[6] पुनरंकिता ॥ ३ ॥ ॥ ॥

१. १८२४ मिते शके । २ प्रतिपत्तिथौ । ३ जगत्पालकः । ४ स च श्रीहरिः । ५ । द्विः २ अग्नयः ३ अष्ट ८ अब्जः १ एतेषामंकाना वामतो गत्या युते १८३२ शालिवाहनशके इत्यर्थः । ६ कार्तिक्यां पूर्णिमायाम् ।

मुंबय्यां सचूर्णिकश्रीमद्भागवतस्येयं द्वितीयावृत्तिर्निर्णयसागराख्यमुद्रणयंत्रालयाधिपतिना तुकाराम जावजी
इत्यनेन बाळकृष्ण रामचंद्र घाणेकरद्वारा मुद्रयित्वा प्राकाश्यं नीता । कोलभाटरथ्या नं. २३

एतत्पुस्तकं १८६७ सप्तषष्ठ्युत्तराष्टादशशततमाब्दिक २५ पंचविंशतितमराजनियमानुसारतः
पुनर्मुद्रणाद्यधिकारेषु प्रकाशयित्रा स्वायत्तीकृतमस्ति ।

शकाब्दाः १८३२—सनाब्दाः १९१०.

1832

Published by Tukaram Javaji, Proprietor N. S. Press, 23, Kolbhat Lane, Bombay.

Printed by B. R. Ghanekar at the N. S. Press, 23, Kolbhat Lane, Bombay.